ORIENTAL RESEARCH INSTITUTE, SANSKRIT SERIES 104

GENERAL EDITOR

H. DEVEERAPPA, M.A.,

*Director*

# ĀPASTAMBA ŚRAUTASŪTRAM

## Vol. III

(PRAŚNAS 9–10)

WITH

DHŪRTASWĀMI BHĀṢYA, RĀMĀGNICIDVṚTTI AND RUDRADATTA VṚTTI

EDITOR

GHANAPĀṬHI, VIDWAN A. SRINIVASARAGHAVACHARYA

*Research Assistant*




ORIENTAL RESEARCH INSTITUTE

UNIVERSITY OF MYSORE

MYSORE

1960

प्राच्यविद्यासंशोधनालयसंस्कृतग्रन्थमाला १०४

प्रधानसम्पादकः

एच्. देवीरप्प, एम्.ए.,

डैरेक्टर्

# आपस्तम्बीयं श्रौतसूत्रम्

(तृतीयसम्पुटम् ९-१० प्रश्नौ)

## धूर्तस्वामिभाष्य-रामाग्निचिद्वृत्ति-रुद्रदत्तवृत्तिभिर्युतम्

सम्पादकः

घनपाठी, विद्वान् आ. श्रीनिवासराघवाचार्यः

रिसर्च् असिस्टेंट्




प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः

मैसूरु

१९६०

॥ श्रीः ॥

नमो यज्ञाय विष्णवे

# उपोद्घातः

---

सारः साम्नामुद्गारः सरसतम ऋचामृद्धिरन्तर्धिदूरा
भद्रावष्टम्भयष्टिः विधिनिधियजुषां भाग्यमाथर्वणानाम् ।
अङ्गानां तुङ्गश्शृङ्गं लगतु मम तुरङ्गोत्तमाङ्गोऽन्तरङ्गे
दार्शंदार्शं प्रजानां कुशलमविकलं विश्वविद्याप्रसूतिः ॥ १ ॥

श्रियःपतिर्वैनतेयो यज्ञैः पूज्यस्सुदर्शनः ।
धर्मो विग्रहवान् रामो जयत्यार्तभयप्रदः ॥ २ ॥

बोधायनो यं भगवान् मुख्यशिष्यमचीकरत् ।
विपश्चिद्द्वाशतान्मेधामापस्तम्बस्स मे मुनिः ॥ ३ ॥

सन्तः तत्सूत्रगम्भीरव्याख्याप्रख्यातवैभवाः ।
कपर्दिधूर्तस्वाम्याद्या जेजीयन्तां विमत्सराः ॥ ४ ॥

स खलु भगवान् वाचस्पतिः सकलहेयप्रत्यनीककल्याणैकतानस्वरूपः परमपुरुषः परमकारुणिकः—

"यो ब्रह्माणं विधदाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै"

"हर्तुं तमः सदसतीव विवेक्तुमीशो
मानं प्रदीपमिव कारुणिको ददाति"

इत्युक्तरीत्या स्वस्वरूपगुणविभूतिस्वाराधनतत्फलादिप्रतिपादकं नित्यमपौरुषेयं वेदाख्यं प्रमाणं ऐहिकपारलौकिकसकलश्रेयस्साधनतया निश्चितं निखिलचेतनोज्जिजीविषया चतुराननादिपरम्परया प्रवर्तयामास। स च—

"शिक्षा कल्पो व्याकरणं निरुक्तं ज्यौतिषं तथा ।
छन्दसां लक्षणं चेति षडङ्गानि विदुर्बुधाः ॥"

इत्युक्तदिशा षडङ्गः।

### अक्ष्युतवेदाध्ययनाऽऽवश्यकता

अस्य च 'तस्मात्स्वाध्यायोऽध्येतव्यः' 'अष्टवर्षं ब्राह्मणमुपनयीत। तमध्यापयीत' 'तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते' 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इत्याकारकश्रुतिसूत्राभियुक्तोक्तिभिरवश्यमध्ययनं व्यधायि।

### तत्र नियमाः

आद्यन्तप्रणवौ तस्य स्यातामङ्गानि वै ततः ।
स्रवत्यादावनुक्ते च तस्यान्ते तु विशीर्यते ॥

इत्यादिनाऽऽद्यन्तयोः प्रणवयोरनुच्चारणपूर्वकमस्याध्ययने बाधकस्य जागरूकत्वेन—

हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ।
ऋग्यजुस्सामभिः पूतो ब्रह्मलोके महीयते ॥

कनिष्ठाऽनामिकामध्यातर्जनीपूत्तमे करे ।
नीचस्वारधृतोदात्तानङ्गुष्ठाग्रेण निर्दिशेत् ॥

आद्यन्तमध्यामध्यासु तद्रेखासु च तान् क्रमात् ।

इत्यादिभिः हस्तस्वरविन्यासपूर्वकत्वस्यापि सेत्स्यमानतया हस्तस्वरविन्यासकुशलगुरुमुखोच्चारणानूच्चारणपूर्वकं आदावन्ते च सविसर्गहरिपदविशिष्टविवृत्तिविशिष्टचातुर्मात्रिकत्रिमात्रिकप्रणवमुच्चार्यैव वेदो नित्यमध्येतव्य इत्यवधारयामः ।

### तत्र प्रमाणानि

आद्यन्तप्रणवौ नित्यौ यथा हरिपदं तथा ।
सविसर्गं हरिपदं प्रणवात्पूर्वमिष्यते ॥

हरिपदे विसर्गस्य न सन्धिः प्रणवोत्तरे ।
विसर्गस्यार्धमात्रत्वं विरामो मात्रिकः स्मृतः ॥

वत्सानुसृतिसंज्ञा च विवृत्तेरिष्यते बुधैः ।
तस्मात्परश्चतुर्मात्रः त्रिमात्रः प्रणवः क्रमात् ॥

आदौ हरिपदं सर्वमुदात्तं चेष्यते बुधैः ।
अन्ते रिशब्दः स्वारः स्यात् विसर्गः प्रचयः स्मृतः ॥

ओमो नित्यमुदात्तत्वं सर्वत्र प्रोच्यते बुधैः ।
प्रमाणं लक्षणं यद्वत् प्राज्ञपाठस्तथैव हि ॥

प्रणववैविध्यं, तेषां कालनिष्कर्षश्च

सामान्यतः स प्रणवो वेदस्थतदन्यभेदात् षड्विध इति वैदिकाः शिक्षयन्ति। यत्रयत्र प्रणवस्य यावान् कालो विधित्सितः तन्निश्चायकप्रमाणानीमानि अत्र प्रसक्तानुप्रसक्तया सर्वेषां सुखबोधाय संग्रथ्यन्ते। तथाहि—

अध्यायादौ प्रणवे स्वरस्त्रिमात्रो म एकमात्रः स्यात् ।
अनुवाकाध्यायान्ते कर्मादौ च त्रिमात्रिकः प्रणवे ॥

सार्धद्विमात्र ओत्स्यात्, तस्यान्त्यो मोऽर्धमात्रिको ज्ञेयः ।
वेदस्थे तु प्रणवे समकारेऽध्यर्धमात्र ओकारः ॥

मश्चार्धमात्रिकः स्यात् आहत्यायं द्विमात्रिकः प्रणवः ।
तस्मिन्नेव प्रणवे पादन्यूनद्विमात्र ओकारः ॥

मः संयुक्ताऽऽद्यश्चाणुमात्रिकः सर्वसंमतेनोक्तः ।
प्रणवे वेदस्थे मश्चाऽऽदेशवशादिहाऽन्यथाभूतः ॥

अणुमात्रिकः स ओश्च द्विमात्र, ओमध्यणुद्विमात्रः स्यात् ।
स्वाध्यायपाठमध्ये लौकिकयुक्तिः यदा तदाऽऽद्यन्ते ॥

प्रणवो विहितस्तत्र द्विमात्र ओदन्य एकमात्रः स्यात् ।
एवं वेदस्थस्य प्रणवस्येह त्रिधा विभेदः स्यात् ॥

वेदविषयोऽयमेवं प्रणवः षोढा विभिद्यते निखिलः ।

यज्ञे ऋगाद्यन्तसन्धीयमानप्रणवस्य कालः

यज्ञर्गन्तप्रणवस्य च सन्धानेऽनुवाकवत्कालः ॥
अस्यैव त्ववसाने सार्धतृतीयस्वरोऽर्धमात्रो मः ।

ध्यानाद्यन्तयोर्विशेषः

ध्यानादौ तु प्रणवे स्वरो द्विमात्रो म एकमात्रः स्यात् ॥
ध्यानान्तप्रणवे तु स्वरो द्विमात्रोऽर्धमात्रिको मश्च ।
प्रणवस्वरूपमेवं बुध्वोपदिशेद्य एष आचार्यः ।
इह चामुत्र च लोके प्राज्ञपरिष्वक्त एधते भित्यम् ॥

इति व्यासशिक्षाव्याख्यातारः श्रीमन्तो राजघनपाठिनः ।

कल्पसूत्रपदयोः निर्वचनादिकम्

'कल्पौ हस्तोऽथ पठ्यते', 'कल्पान् गाथाः' इति श्रुतिप्रमुख-परिपठितकल्पपदेन 'कल्पयन्तीति कल्पाः' इति व्युत्पत्त्या प्रयोग-प्रतिपादका आपस्तम्बीयबोधायनीयसत्याषाढीयादिग्रन्था विवक्षिताः। सूचयन्तीति सूत्राणीति व्युत्पत्त्या 'ऋचं पादग्रहण' इत्यादि संज्ञापरिभाषादिरूपेण प्रयोगविशेषोन्नायकलक्षणप्रतिपादकानि आपस्तम्बाऽऽश्वलायनकात्यायनादिकृतानि सूत्राणि विवक्षितानि ।

बोधायनो व्याससूत्रवृत्तिविरचयिता

स च बोधायनः व्याससूत्राणामादौ विशिष्टाद्वैतमतावलम्बिनीं विपुलां वृत्तिमन्वगृह्णादिति "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाऽऽचार्याः संचिक्षिपुः। तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते" (श्रीभाष्यं 1-1-1) इत्याकारकश्रीभगवद्रामानुजमुनिविरचितश्रीभाष्यश्रीसूक्तिपरिशीलनेनावधारयामः ।

तदीयषष्टिसहस्रशिष्येषु आपस्तम्बस्य मुख्यत्वादिकम्

तस्य षष्टिसहस्रान्तेवासिषु अध्ययनसमय एव श्रौतस्मार्तगार्ह्यसूत्रप्रणयनादिना अयमापस्तम्बो ह्यत्यर्थप्रियः प्रधानशिष्यः। अस्य "इदꣳ शकेयं यदिदं करोमि । आत्मा करोत्वात्मने" इत्याकारकचतुर्थप्रश्नचतुर्थखण्डीयसूत्रे परिशीलिते सति स्वाचार्यमतमाश्रित्यैवारचयत् सूत्रजालमिति प्रतिभाति। 'आत्मने—ब्रह्मणे आत्मा—करोतु इति विज्ञानमपि कर्तव्यम्' इत्यादिविवरणेन सूत्रकृतो निगूढं भावमेव भाष्यकारवृत्तिकाराः प्रकटीचक्रुः। इत्थं च 'य आत्मनि

तिष्ठन्' इत्युक्तदिशा चिदीश्वरयोः शरीरशरीरिभावादिकमङ्गीकृत्य आत्मज्ञानं यज्ञाधिकारहेतुरिति जोघुष्यमाणाः सूत्रभाष्यवृत्त्यादिकर्तारः विशिष्टाद्वैतसंप्रदायस्था इत्यत्र विशयलेशस्याप्यनवसरः।

### तृतीयसंपुटे प्रतिपाद्यविषयाः

प्रथमसंपुटे रुद्रदत्तग्रथिता सूत्रवृत्तिः तत्रतत्र संयोजिता। अत्र समग्रतयेति विवेकः। संपुटोऽयं नवमदशमप्रश्नद्वयात्मकः। नवमप्रश्ने दर्शादिचातुर्मास्यान्तानां आदितोऽष्टभिः प्रश्नैः विहितानां प्रायश्चित्तानि विहितानि। दशमप्रश्ने अग्निष्टोमीयप्रातस्सवनोपयुक्तक्रियाकलापः उपपादि; कुतः; दशमैकादशद्वादशप्रश्नैः प्रातस्सवनस्य समापनीयत्वात्।

### प्रायश्चित्तपदसिद्धिक्रमः, तदर्थो वैविध्यादिकं च

किं पुनस्तत्प्रायश्चित्तम्? प्रायशब्दस्य विनाशपर्यायस्य अकारान्ततया चित्तचित्तिशब्दयोः सुडागमेन प्रायश्चित्तमिति रूपसिद्धिः। 'चिती-संज्ञाने' इति धातोश्चित्तम्। धातूनामनेकार्थत्वात् चित्तं—सन्धानं, इत्युच्यते। इत्थं च विनष्टस्य कर्मणः सन्धानमेव प्रायश्चित्तमिति फलति। तच्च जपः, होमः, इज्या चेति त्रिविधम्। एकनिमित्तकानेकप्रायश्चित्तानां अभिमन्त्रणानशनोपसर्गादीनां समुच्चय एव, प्रयोजनभेदात्। तथा हि अन्यत्प्रयोजनमभिमन्त्रणेन, अन्यच्चानशनेन, अन्यदुपसर्गेण। यथा लोके नेत्ररोगे एको दोषोऽञ्जनेन हन्यते, अन्योऽनशनेन, अन्यो निवातशयनेनेति भाष्यकृदादीनां निगूढाभिप्रायः। एषां प्रयोजनं तु वैकल्यापनय एवेति निश्चिनुमः, अन्यस्य दुर्वचत्वात्। सौत्राणि प्रायश्चित्तानि तु भाष्यवृत्त्यादिषु सुविशदं विवृतानीति तदुपपादनं चर्वितचर्वणमिव भवतीति विरम्याग्निष्टोममीमांसा प्रस्तूयते।

### ज्योतिष्टोमपदार्थनिर्वचनादिकम्

एतावता प्रबन्धेन इष्टिपशुसोमरूपत्रिविधयागे इष्टिपशू निरूपितौ। सोमस्तु शिष्यते। स च त्रिविधः। एकाहाहीनसत्रभेदात्। एकस्मिन्नेवाहनि प्रातर्माध्यन्दिनतृतीयसवनैर्निष्पाद्य

एकाहः। द्विरात्रमारभ्यैकादशरात्रपर्यन्ता अहीनाः। त्रयोदशरात्रप्रभृति सहस्रसंवत्सरपर्यन्तानि सत्राणि। द्वादशाहस्तु द्विरूपः। स चाहीनरूपेण द्विरात्रादीनां प्रकृतिः, सत्ररूपेण त्रयोदशरात्रादीनाम्। तस्य च द्वादशाहस्यैकाहरूपो ज्योतिष्टोमः प्रकृतिः। इष्टिपशुसोमादीनां प्रकृतिविकृतिभावस्तु तत्रतत्र श्रुतार्थवादबलादेव जैमिनिना निश्चितोऽष्टमेऽध्याये।

ज्योतिष्टोमस्य प्रथमयज्ञत्वे निदानादिकम्

'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' 'अग्निष्टोमः प्रथमयज्ञः' 'य एवं विद्वानग्निष्टोमेन यजते प्राजाताः प्रजा जनयति परि प्रजाता गृह्णाति तस्मादाहुः ज्येष्ठयज्ञ इति प्रजापतिर्वाव ज्येष्ठः स ह्येतेनाग्रेऽयजत' इत्यादिश्रुत्यादिभिरस्य प्राथम्यं सुविशदमुपापादि। यद्यपि सप्तसंस्थो ज्योतिष्टोमः 'अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामो वाजपेयश्चेति; तथाऽप्यग्निष्टोमे सकलाङ्गानामुपदिष्टत्वेन स एवेतरेषां प्रकृतिरिति निष्कर्षः। 'स्वर्गकामो ज्योतिष्टोमेन' इति सूत्रघटकज्योतिष्टोमपदस्य 'त्रिवृत्पञ्चदशस्सप्तदश एकविꣳशः। एतानि वाव तानि ज्योतीꣳषि। य एतस्य स्तोमाः। स ज्योतिष्टोमः' इत्यार्थवादिकश्रुतिवाक्यानुसारेण त्रिवृदादिस्तोमचतुष्टयविशिष्टः सोमयाग इति वाच्योऽर्थः पर्यवस्यति। अयमर्थो जैमिनिना चतुर्थचतुर्थे निरधारि।

तस्य नित्यत्वादिकम्

'वसन्ते वसन्ते ज्योतिष्टोमेन यजेत' इत्यादिभिस्तस्य नित्यत्वमवगम्यते। नित्यनैमित्तिकयोरकरणे प्रत्यवायजनकत्वतौल्येऽपि यथाश्रुते नियतनिमित्तकत्वानियतनिमित्तकत्वाभ्यामेवोभयोर्वैलक्षण्यं सुवचम्, अन्यस्य दुर्वचत्वात्। 'स्वर्गकामो ज्योतिष्टोमेन यजेत' इत्येवासूत्रयदापस्तम्बः। मीमांसकादयस्सर्वेऽपि 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येवानुवदन्ति, तत्र न किञ्चिदपि विनिगमकमुचितमुत्पश्यामः। 'सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयान्' इति दशमादिमसूत्रप्रयुक्तब्राह्मणशब्दो ह्यनृत्विजामपि चमसाध्वर्यूणां ब्राह्मणानामेव वरणनिष्पादकः।

'स त्रयाणां वर्णानाम्' इत्यादिना सर्वं वैदिकं कर्म त्रैवर्णिकाऽऽधिकारिकमित्युक्तम्। तत्राऽऽर्त्विज्येऽपि त्रैवर्णिकानामधिकारः, आहोस्वित् ब्राह्मणानामेव, इति संशये 'एते वै देवा अहुतादो यद्ब्राह्मणाः, यदन्वाहार्यमाहरन्ति तानेव तेन प्रीणाति' इत्याद्यर्थवादे अन्वाहार्यादिदक्षिणायां ब्राह्मणानामेवाधिकारसङ्कीर्तनात्तदनुसारेण वैदिकेषु कर्मसु ब्राह्मणानामेवाऽऽर्त्विज्येऽधिकार इत्युक्तं द्वादशाध्यायान्ते (जै. सू. १२–४–१४)। अत्र ज्योतिष्टोमसम्बन्धिनोऽनेके विषयाः अग्रिमसंपुटे प्रकटीकरिष्यन्ते। 'श्रौतसूत्रपारिभाषिकपदार्थसङ्ग्रहः' इति नाम्ना 'श्रौतसूत्रकोशो'ऽप्यनुपदमेव प्रकाशयिष्यते। ग्रन्थकर्तृसमयनिर्णयादिकं सर्वं प्रथमसंपुटपरिचये सुविशदं प्रतिपादितम्।

### एतद्ग्रन्थपरिशीलनप्रयोजकसामग्री

अत्राऽऽदौ प्रेक्षावतां सुखबोधाय विषयानुक्रमणिका समयोजि। अन्ते चाद्सीयसूत्राणामकारादिसूचनी न्यवेशि।

### तृतीयसंपुटमुद्रणोपयुक्ततालपत्रादिकम्

सूत्रपाठस्य—C 1442, A 429 सङ्ख्याङ्कितौ काकलमयौ कोशौ.

धूर्तस्वामिभाष्यस्य—B 11, B 12, C 1369 सङ्ख्याङ्किताः काकलमयाः कोशाः.

2701, 2328, 2690 सङ्ख्याङ्कितास्ताल कोशाः.

रामाग्निचिद्वृत्तेः—C 1371, A 562 सङ्ख्याङ्कितौ काकलमयौ कोशौ.

2690, 3640, 4346, 1131, सङ्ख्याङ्किताः तालकोशाः.

रुद्रदत्तवृत्तेः—C 1370 सङ्ख्याङ्कितकाकलकोशः.

## उपसंहारः

इत्थमुपरितनपुस्तकसहायेन तृतीयसंपुटमुद्रणं संसाधितम्। सीसकाक्षरसंयोगवियोगादिजन्याः प्रामादिका दोषाः यज्ञानुष्ठानवैरल्यादचुम्बितविषयविमर्शनजनिता ज्ञाताज्ञाता दोषाश्च सहृदयैर्विपश्चिद्भिः क्षन्तव्याः। श्रीमत्परमाचार्यवेदान्ताचार्याणां श्रीसूक्तिं लोककल्याणार्थमनुसंधाय प्रकृताद्विरमामः।

श्रीगरुडपञ्चाशदि ५१ श्लोकः

यत्पक्षस्था त्रिवेदी त्रिगुणजलनिधिर्लङ्घ्यते यद्गुणज्ञैः
वर्गस्त्रैवर्गिकाणां गतिमिह लभते नाथवद्यत्सनाथः।
त्रैकाल्योपस्थितात्स त्रियुगनिधिरघादायतात्त्रायतां नः
त्राताऽनेकस्त्रिधाम्नस्त्रिदशरिपुचमूमोहनो वाहनेन्द्रः॥

इत्थं संशील्य बुद्ध्या सविवृति महितं श्रौतसूत्रं सभाष्यं
श्रीवासो राघवार्यो व्यलिखमिममुपोद्घातमेतत्प्रसक्तम्।
तार्तीये संपुटेऽस्मिन्नवसरपतितः क्षम्यतां दोषभूमे-
त्येवं संप्रार्थ्य सत्सु प्रकृतकृतिमिमामार्पये यज्ञधाम्नि॥

ता. १५-९-१९५९
मैसूरु

इति विपश्चिदपश्चिमवशंवदः, घनपाठी,
आस्थान विद्वान्,
आ. श्रीनिवासराघवाचार्यः,
प्राच्यविद्यासंशोधनालये,
रिसर्च् असिस्टेंट्

# आपस्तम्बश्रौतसूत्र-धूर्तस्वामिभाष्य-तद्वृत्ति-रुद्रदत्त-वृत्तिविषयसूचनी

---

## नवमः प्रश्नः

### प्रथमः पटलः—प्रथमा खण्डिका

| विषयाः | पृष्ठसंख्या |
|---|---|

इति प्रथमः पटलः

## सप्तमी खण्डिका

इति द्वितीयः पटलः

---

## अथ तृतीयः पटलः—नवमी खण्डिका

## दशमी खण्डिका

## एकादशी खण्डिका

## द्वादशी खण्डिका



## त्रयोदशी खण्डिका

## चतुर्दशी खण्डिका

## पञ्चदशी खण्डिका

## षोडशी खण्डिका

## एकोनविंशी खण्डिका

## विंशी खण्डिका



इति पञ्चमः पटलः

इति नवम प्रश्नः

विषया: पृष्ठसङ्ख्या

## अथ दशमः प्रश्नः

### प्रथमः पटलः—प्रथमा खण्डिका

## द्वितीया खण्डिका

## तृतीया खण्डिका

## चतुर्थी खण्डिका

| विषयाः | पृष्ठसंख्या |
|---|---|
| (भा) एकेषां मते दीक्षणीयाप्रायणीयाऽऽतिथ्याग्नीषोमीयादिषु सोपपत्तिकं स्वरभेदविवरणम् . | 398 |
| ,, तैत्तिरीयप्रातिशाख्योक्तानां उपांशूपब्दिमन्निमदध्वानानां लक्षणानामनुवादः. | 400 |
| (वृ) 'तथोच्चैरग्नीषोमीये' इत्यादिभाष्यतात्पर्यविशदीकरणम् .... | 401 |
| (भा) बहिस्तन्त्रवर्तिपञ्चपशुसौत्रामण्यादिषु अग्न्यन्वाधानादीना-मनुष्ठेयत्वोक्तिपूर्वकमत्राननुष्ठेयत्वे तेषामुपपत्त्यादिविशदी-करणम् . | 402 |
| (वृ) 'प्रकृतीनां' इत्यस्योत्तरत्र सम्बन्धे नैष्फल्यम् .... | 403 |
| ,, 'यानि सोमाग्नौ क्रियन्ते' इति भाष्यवाक्योपष्टम्भकयुक्त्युप-पादनम् . | 404 |
| ,, अशननिवृत्तौ हेतुः, पक्षविशेषेऽशनविधिः, प्राप्तजागरणादि-निवृत्तिश्च. | 404 |
| (भा) सोमान्यूनानतिरिक्तदेवताकदीक्षणीयायामप्राप्तयोरग्न्यन्वाधा-नपत्नीसंनहनयोर्विधानम् . | 407 |
| (वृ) उपदेशन्यायमतोन्नेयविशेषांशाः .... .... | 408 |
| (भा) अर्वाक्प्रायणीयाया यूपाहुतेर्वैकल्पिकत्वम् .... | 409 |
| ,, यूपगतैकानेकत्वयोर्युक्तिप्रमाणाद्युपपादनम् ... | 409 |
| (वृ) आदित्योपस्थानान्ते यूपविधिः .... .... | 410 |
| ,, सोपपत्तिकं सौमिकपशुसामान्यस्याप्येकयूपत्वमुपवर्ण्याऽभि-षेचनीयादावावृत्तिसत्त्वेऽपि यूपान्तरोत्पत्तिनिषेधकथनम्. | 411 |
| ,, उपदेशमतोन्नेयोंऽशः .... .... | 411 |
| ,, ऐकादशिनेषु यूपान्तरनिषेधकयुक्त्युपपादनम् .... | 412 |
| ,, विशेषानुक्तेस्तुल्यविध्योर्वैकल्पिकत्वम् .... .... | 412 |
| ,, शङ्कासमाधानाभ्यां सोमे यूपैकादशिनीनिषेधसमर्थनम् .... | 412 |

इति दशमे प्रथमः पटलः

---

## सप्तमी खण्डिका



इति दशमे द्वितीयः पटलः

---

# अथ तृतीयः पटलः

## अष्टमी खण्डिका

## नवमी खण्डिका



## दशमी खण्डिका

### एकादशी खण्डिका



इति दशमे तृतीयः पटलः

---

## अथ चतुर्थः पटलः

### द्वादशी खण्डिका

## त्रयोदशी खण्डिका



## चतुर्दशी खण्डिका



## पञ्चदशी खण्डिका

---

## अथ पञ्चमः पटलः

### षोडशी खण्डिका



### सप्तदशी खण्डिका

## एकविंशी खण्डिका

## अथ अष्टमः पटलः

### द्वाविंशी खण्डिका



### त्रयोविंशी खण्डिका



### चतुर्विंशी खण्डिका

---

## अथ नवमः पटलः

### पञ्चविंशी खण्डिका



### षड्विंशी खण्डिका

विषयानुक्रमणिकामित्थं सम्पादकोऽलिखत् ।
कर्मणाऽनेन भगवान् प्रीयतां पार्थसारथिः ॥

इति सविनयं विज्ञापयिता
सलक्षणघनान्तकृष्णयजुर्वेद, वेदभाष्य,
नवीनन्यायशास्त्र, विशिष्टाद्वैतवेदान्तविद्वान्,

आ. श्रीनिवासराघवाचार्यः.

# सूत्रभाष्यवृत्त्यादिपाठशोधनं

| पृष्ठे | पङ्क्तौ | पाठ्यम् |
|---|---|---|
| 14 | 3 | काला |
| 61 | 11 | प्रहरति |
| 62 | 1 | ३ |
| 63 | 1 | ३ |
| 64 | 1 | ३ |
| 75 | 7 | यां व्रात |
| 77 | 15 | विपृङ्क्ताम्नया |
| 79 | 21 | मित्तसन्नि |
| 81 | 14 | स्थापनम् |
| 83 | 15 | तिपत्तौ |
| 86 | 7 | यङ्काम |
| 86 | 22 | पत्त्यर्थः |
| 93 | 5 | स्याषाढः |
| 100 | 10 | से हविषि, चन्द्रदर्शने सति |
| 124 | 11 | द्रव्यस्य |
| 132 | 12 | च्छ्वस |
| 138 | 16 | मत्तमंस्त्वा |
| 245 | 3 | वैचित्यपक्षा |
| 266 | 15 | ससङ्ख्याक |
| 269 | 11 | विवरणम् |
| 305 | 5 | च भूमौ |
| 333 | 7 | नीयसोम |
| 347 | 20 | न्वैकैकशः |

| पुटे | पङ्क्तौ | पाठ्यम् |
|---|---|---|
| 348 | 14 | एकैकशः |
| 349 | 12 | एकैकम् |
| 349 | 19 | एकैकशः |
| 349 | 21 | एकैकशः |
| 350 | 2 | एवेत्येकः |
| 350 | 3 | एकैकशः |
| 351 | 7 | एकैकशः |
| 429 | 15 | भुङ्क्ते |
| 436 | 4 | एकत्रिंश |
| 450 | 2 | णान्तं वा |
| 463 | 14 | हृदयमात्र |
| 464 | 3 | सम्बन्ध |
| 478 | 4 | चार्थं |
| 478 | 12 | जादीन्ना |
| 479 | 15 | अवच |
| 492 | 5 | चाश्वा |
| 522 | 17 | पदेशोऽङ्ग |
| 533 | 15 | धकत्वम |
| 541 | 18 | षड्ढोत्रा |
| 574 | 7 | रणं |

———

# आपस्तम्बश्रौतसूत्रतृतीयसंपुटनिर्दिष्टानां ग्रन्थकाराणां सूचनी

श्रीः

॥ श्रीमते लक्ष्मीहयग्रीवाय नमः ॥

श्रीरामाग्निचिद्वृत्तिसहितधूर्तस्वामिभाष्यभूषितं
रुद्रदत्तवृत्तिभूषितञ्च

# आपस्तम्बश्रौतसूत्रम्

अथ नवमः प्रश्नः

हरिः ओ(४)म्

(सूत्रम्) श्रुतिलक्षणं प्रायश्चित्तं विध्यपराधे विधीयते ॥
॥ ९ ॥ १ ॥ १ ॥ २२१० ॥

## धूर्तस्वामिभाष्यम्

[[1]अवसरसङ्गत्या सूत्रावतरणम्]

उक्ता हविर्यज्ञाः, [2]तेषु प्रायश्चित्तमवश्यम्भावि दैवात्प्रमादाद्वा पुरुषस्य भवति । न च शास्त्रप्रत्यये कर्मण्यशास्त्रीयं कर्म शक्यते कर्तुम् । [3]ततः प्रायश्चित्तानि च शास्त्रलक्षणान्युपदिश्यन्ते—श्रुतिलक्षणं प्रायश्चित्तमिति ॥

[श्रुतिलक्षणपदार्थः]

श्रूयते नित्यकालं न केन चित्कृतेति श्रुतिर्वेदः । येन लक्ष्यते ज्ञायते तल्लक्षणम् । श्रुतौ लक्षणमस्य [4]तदिदं श्रुतिलक्षणम् ॥

---

[1] ‘ अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वमवसर इति ’ तल्लक्षणम्.
[2] तेषु तेषु—**च.** [3] अतः—**ग. घ. च.** [4] तदिष्टम्—**ख. ग.**

[प्रायश्चित्तपदनिरुक्तिः]

किं पुनस्तत्प्रायश्चित्तम्? प्रायः—विनाशः। कथम्? प्रायमुप-[1]विष्टः विनाशं कर्तुमात्मन उपविष्ट इति ज्ञायते। 'चिती संज्ञाने' इति धातोश्चित्तम्, अनेकार्थत्वाद्धातोः संधानं चित्तमित्युच्यते। प्रायश्चित्तं-विनष्टस्य कर्मणस्सन्धानं प्रायश्चित्तमित्युच्यते। प्रायस्य चित्तिचित्तयोस्सुडागमे लक्षणात्कृतः॥

[योगविभागेन प्रथमखण्डार्थः प्रायश्चित्ते श्रुति-लक्षणत्वोपपत्तिश्च]

श्रुतौ लक्षणं प्रायश्चित्त[2]स्योक्तमिति सम्पिण्डितार्थः॥

तत्र चोदयति;—सर्वकर्मसु श्रुतिलक्षणेषु प्रायश्चित्तं श्रुति-लक्षणमिति न वक्तव्यमिति। तत्र परिहारः—अन्यानि कर्माणि श्रुति-लक्षणानि न भवन्ति, प्रायश्चित्तमेव श्रुतिलक्षणमिति? नैवमुपदिश्यते। कस्तर्ह्यर्थः? श्रुतौ लक्षणमात्रं प्रायश्चित्तस्योपदिश्यते चिह्नमात्रम्, यथा-यस्य पुरोडाशः क्षायतीति। क्षामः—दाहः, तल्लक्षणं प्रायश्चित्तस्य। अतो द्वयोर्बहूनां च क्षामत्वे प्रायश्चित्तमुक्तम्। इतरथा पुरोडाश इत्येकवचनचोदितत्वादेकस्यैव क्षामत्वे प्रायश्चित्तं स्यात्। यथा 'रक्षाꣳसि वा एतत्पशुꣳ सचन्ते यदेकदेवत्य आलब्धो भूयान् भवति' इति लिङ्ग[3]सङ्ख्ययोरविवक्षितत्वात्। लक्षणचोदनासु गर्भिणी-प्रायश्चित्तं द्वादशपद्यां षोडशपद्यां च [4]भवति॥

[सौत्रोत्तरखण्डार्थः]

**विध्यपराधे विधीयत** इति। कर्म-विधिः, अपराधः-अन्यथा क्रिया। विधेरपराधो विध्यपराधः। तस्मिन् विध्यपराधे—कर्मान्यथाभावे

---

[1] विष्ट इति लोके दर्शनात् विनाशं—ग. [2] स्योपदिष्टमिति—ग. ङ. च.
[3] इति पशुमिति लिङ्ग—क. ग. घ. च. [4] भवतीति—च.

प्रायश्चित्तं विधीयते। यथा 'यस्यानो वा रथो वाऽन्तराग्नी याति' इति अविधानेनान्तरा रथादीनां गमने प्रायश्चित्तम्। यत्र [1]विधानं न तत्र प्रायश्चित्तम्। यथा रथे वा अनसि वा दक्षिणाभूते नीयमाने॥

[योगविभागमनङ्गीकृत्यार्थभेदवर्णनम्]

अथवा श्रुतिलक्षणं प्रायश्चित्तं विध्यपराधे विधीयते [2]इत्येकं सूत्रं, अर्थविशेषश्चान्यः। विधीयते ब्राह्मणेनेति कर्म विधिः, तस्यापराधे अन्यथाक्रियायां श्रुतिलक्षणं विधीयते, न स्मृतिलक्षणम्, विधानसामर्थ्यात्। [3]यत्र ह्युभयस्य प्राप्तिः कर्ममध्येऽपि स्मृतिलक्षणं[4] प्रमाणं तत्र ब्राह्मौदनिकम्। यदा सर्व औपासन आहितोऽनुगच्छति तदौपासना[5]नुगतिप्रायश्चित्तं च प्राप्नोति, यदि प्रयायादनु वा गच्छेदिति॥

[विधिपुरुषापराधयोः प्रायश्चित्तप्रमाणव्यवस्था]

विध्यपराधे श्रुतिलक्षणमेव विधीयत इति नियमात् ब्राह्मौदनिकमेव भवतीति। अग्न्युत्पत्तिस्तु योक्तौपासनस्य सैव भवति यावन्न समारोप्यते, विध्यपराध इति वचनात्। यथा पर्याहितादीनामेककार्याणां यूपादीनां विकल्पो दृष्टः, इहाप्येकनिमित्तानां विकल्पस्स्यादत इदमुच्यते। पुरुषापराधे तु—स्मार्तं श्रौतं चोभयं भवति प्रायश्चित्तम्॥

---

## अथ रामाग्निचिद्विरचिता भाष्यवृत्तिः

**उक्ता—ज्ञाः**—पूर्वं हविर्यज्ञा उक्ताः, सौत्रामण्यपि पशुबन्धरूपत्वादुक्तप्रायेति हविर्यज्ञा इत्यविशेषोक्तिः॥

---

[1] विधिः—ग. घ. च. [2] इत्येतदेकं—घ. [3] त्राप्युभयस्य—च. [4] णं तत्र ब्राह्मौ—च.
[5] नुगमनप्राय—ङ. च.

**दैवात्प्र–भवति**—दैवात्–अज्ञानात् । ज्ञानेऽपि प्रमादाद्वा पुरुषाशक्त्या वा पुरुषस्यानुतिष्ठतो भ्रेषः प्रायेण भवति ॥

**नच शास्त्र–तुम्**—शास्त्रीयकर्मणि[1] भ्रेषे तत्परिहारः शास्त्रीयेणैव कर्मणा भवति, न प्रमाणान्तरगम्येन, अदृष्टरूपत्वात् ॥

**श्रूयते–लम्**—सर्वेषामाचार्योच्चारणपूर्विकैव प्रथमावगतिः ॥

**न के–र्वेदः**—न केनचित्पुरुषेण स्वातन्त्र्येण प्रथमग्रन्थरचना महाभारतादिवत्कृतेति श्रुतिर्वेदः । तस्यैवंविधत्वात् ॥

**येन लक्ष्यते–णम्**—श्रुताविति सप्तमीनिर्देशः, श्रुतौ किंचिदुक्तं, न कृत्स्नोक्तिरिति । इतरथा श्रुतिर्लक्षणमित्येवं स्यात् ॥

[प्रायश्चित्तशब्दसिद्धिक्रमः]

**किं पुनस्तत्प्रायश्चित्तम्–लक्षणात्कृतः**–प्रायशब्दस्य विनाशपर्यायस्याकारान्तत्वात् चित्तिचित्तशब्दयोस्सुडागमेन प्रायश्चित्तमिति रूपसिद्धिः । लक्षणाच्च सुडागमः । गणसूत्रवृत्तिकारेण प्रायस्य चित्तिचित्तयोस्सुट् अस्कारो वा इति पठितत्वात् ॥

[आलब्धपशोः गर्भबहुत्वेऽपि प्रायश्चित्तम् ]

**लक्षणचो–भवतीति**—अस्यार्थः—यद्यष्टापदीत्यनुबुध्येतेत्यष्टापदीमात्रनिर्देशेऽपि 'यदेकदेवत्य आलब्धो भूयान् भवति' इत्येकस्मिन् उपाकृते प्रमादादनेकपशुसंभवः प्रायश्चित्तस्य निमित्तमिति [2]गर्भबहुत्वेऽपि प्रायश्चित्तम् ॥

एतदुक्तं भवति—श्रुतौ निमित्तविशेषणानामविवक्षितत्वात् सामान्यमात्रे नैमित्तिकं भवतीति ॥

**अथवा श्रुति–न्यः**—पूर्वं सूत्रभेदमाश्रित्य पूर्वसूत्रेण श्रुतौ लक्षणमात्रमुक्तम्, न यावदपेक्षितमुक्तमित्युक्तम्; द्वितीयेन सूत्रेण

---

[1] कर्मभ्रेषे–**क.** [2] गर्भद्वित्वे बहुत्वेऽपि–**ग. घ.**

विहितस्य पुरुषप्रकृत्यांऽपराधे प्रायश्चित्तम् ; न विधानान्तरेण विहित-स्यान्यथाभावे भवतीति । इदानीमेकसूत्रत्वमाश्रित्योच्यते ॥

**यत्र ह्यु–माणम्**—आचमनादिवत् कर्माङ्गत्वेन वेदमूलस्मृति-दर्शनात् ॥

**विध्य–वतीति**—नोपवासादि ॥

**अग्न्युत्प–प्यते**—ब्राह्मौदनिकाग्नेरुत्पत्त्यन्तरानुपदेशात् ॥

**यथा–दृष्टः**—खदिरपलाशादीनाम् ॥

---

## अथ रुद्रदत्तविरचिता सूत्रवृत्तिः

### [ससङ्गति सूत्रप्रथमखण्डार्थनिरूपणम्]

उक्तानि सोमादर्वाञ्चि नित्यानि कर्माणि । यानीह हविर्यज्ञ-प्रकृतीन्याचख्युराचार्याः । तेषामिदानीं प्रायश्चित्तप्रवचनमारभ्यते ॥

श्रुतिर्लक्षणं यस्य तच्छ्रुतिलक्षणम् । दोषनिर्हरणार्थं कर्म प्रायश्चित्तमित्याख्यायते। विधीयत इति विधिः कर्म । तस्य च पुरुषप्रमादादिप्रभवो दोषोऽपराधः । स च कर्मणो वैगुण्यं, कार्यशक्ति-वैकल्यमिति यावत् । तदयमर्थः—कर्मदोषे निमित्ते श्रुतिप्रमितं प्रायश्चित्तमुपदिश्यत इति ॥

### [सौत्रप्रायश्चित्तलक्षणस्य कर्मापराधमात्र-विषयकत्वव्यवस्था]

ननु सर्वस्याप्युक्तवक्ष्यमाणस्य श्रुतिलक्षणत्वे केन विशेषेणोक्तं श्रुतिलक्षणं प्रायश्चित्तमिति । सत्यम् । उक्तवक्ष्य-माणेभ्यो नास्ति विशेषः । तथापि पुरुषार्थेभ्यः प्रायश्चित्तेभ्यः

क्रत्वर्थानां विशेषमनेन दर्शयित्वाऽऽदरविशेषार्थं पुरुषापराधे महापातकादा स्मृतिलक्षणमेव प्रायश्चित्तम् । कर्मापराधे तु साक्षाच्छ्रुतिलक्षणमिति ।

[उक्तार्थस्य सौत्रत्वपक्षः]

अथ वा यत्पुरुषापराधप्रायश्चित्तं स्मृतिलक्षणं तद्धर्मेषु विधास्यते ; कर्मापराधप्रायश्चित्तं त्विदानीं श्रुतिलक्षणत्वाद्विधीयत इत्यर्थः ॥ १ ॥

(सू) **एकस्मिन् दोषे श्रूयमाणानि प्रायश्चित्तानि समभ्युच्चीयेरन्नर्थान्तरत्वात् ॥ ९ ॥ १ ॥ २ ॥ २२११ ॥**

[एकनिमित्तकानेकप्रायश्चित्तानां समुच्चयो दृष्टान्तश्च]

(भा) एकस्मिन् दोषे एकस्मिन् निमित्ते यानि श्रूयन्ते प्रायश्चित्तानि यथाऽग्निहोत्रस्कन्दने 'अस्कान् द्यौः' इत्यभिमन्त्रणम्, 'उन्नम्भय' इत्युपसर्गः, अनशनं 'आहोतोस्सायं नाश्नीयात्' इति, ए[1]तेषां समुच्चय एव भवति । किं कारणम्? अर्थान्तरत्वात् । अर्थादन्यत् अर्थान्तरम्, अर्थान्तरस्य भावोऽर्थान्तरत्वम्, तस्मादर्थान्तरत्वात् । अर्थः प्रयोजनं प्रयोजनान्यत्वादित्यर्थः । अन्यत्प्रयोजनमभिमन्त्रणेन, अन्यदुपसर्गेण, अन्यच्चानशनेन, अतः समुच्चयः यथा; लोके अक्ष्यामये अन्यो दोषोऽञ्जनेन हन्यते, अन्योऽनशनेन, अन्यो निवातशयनेन, अतो दोषनिर्घातार्थत्वात्समुच्चयः ॥

[समुच्चयविकल्पयोः विषयभेदकल्पकः उपदेशपक्षः]

उपदेशस्तु—यत्रार्थवादेनार्थान्तरभावो न भवतीत्येकार्थतैव तत्र विकल्प एव भवति, न समुच्चयः । यथा पाथिकृतः[2] स्वर्गप्रतिपत्त्यर्थः एवं वैश्वानरोऽपि स्वर्गपथप्रतिपत्त्यर्थ एव । अतस्तयोर्विकल्प

[1] प्रातस्सायं. [2] तो यागः स्वर्गपथप्राप्त्यर्थः—ख. ग. घ.

एव भवतीति समुच्चयोऽन्याय्यः । अदृष्टदोष उभयोरुपदेशादुभाभ्यामेव हन्यते । यस्तु शाखान्तरस्थो विधिरेकेषामित्युच्यते स विकल्प एव, अधिकविधेर[1]नियतत्वात् । यथा 'देवाञ्जनमगन्यज्ञ' इत्येकेषां समुच्चयसंभवेऽपि तत्र विकल्प एव ॥

[सर्वत्र समुच्चये युक्त्युपपादनम्]

(वृ) अर्थः प्र–समुच्चयः—यद्यपि दोषनिर्घातः प्रयोजनमेकं; तथाप्येकस्मिन्निमित्ते अनेकप्रायश्चित्तोपदेशात्, विकल्पस्य चान्याय्यत्वात्, दोषनिर्घातार्थत्वेऽपि चात्रान्तर[2]प्रकारभेदेन साधनतया-समुच्चयोपपत्तेः पाक्षिकत्वमन्याय्यमिति समुच्चयः ॥

यथा लोकेऽक्ष्या–यनेन—रोगपरिहारप्रयोजनैक्येऽप्यवान्तरकार्यभेदो यथा तद्वद्दोषनिर्घातार्थत्वेऽपि समुच्चयः ॥

[उपदेशपक्षस्याप्यौचित्यम्]

उपदेश–च्चयः—साक्षाद्व्रीहियवादिवदेककार्यतया श्रवणाभावेऽपि अर्थवादादेकप्रयोजनता यत्रावगम्यते, तत्र विकल्पो युक्तः ॥

अतो ह–न्यते—अवान्तरकार्यभेदादिति [3]पूर्वमेवोक्तम् ॥

[एकेषामिति पदप्रयोगोन्नेयोंऽशः]

यस्तु–तत्त्वात्—एकशाखीयप्रयोगोपदेशे शाखान्तरीयाङ्गोपसंहारे एकेषामिति[2] वक्तव्यम् । अतो यत्रैकेषामिति निर्देशः तत्र विधीयमानप्रयोगादधिकधर्मोपदेश इत्यवगमादनित्यत्वम् ॥

यथा देवा–न्तेषां—[4]तत्राप्यदृष्टकार्यत्वात् ॥

समुच्च–एव—मतान्तरत्वेनोपन्यासात् ॥

[1]रनित्यत्वात्-घ. [2]रकार्यभेदेन–ग. घ. [3]प्रागेवोक्तम्–ग. घ. [4]अत्राप्य–घ.

[सूत्रस्यैव समुच्चयविकल्पविषयव्यवस्थापकता
मतभेददृष्टान्ताद्युपपादनेन
तन्निरूपणं च]

(रु) यत्रैकस्मिन्निमित्तेऽनेकानि प्रायश्चित्तान्याम्नायन्ते, यथा दर्शपूर्णमासातिपत्तौ पाथिकृती वैश्वानरी चेत्यादि तानि तत्र समुच्चीयन्ते, न तु विकल्प्यन्ते। कुतः? अर्थान्तरत्वात् प्रयोजनान्यत्वात्। व्रीहियववदेकार्थानि विकल्प्यन्ते। न तु व्रीह्याज्यादिवद्भिन्नार्थानि॥

ननु दोषनिर्घातमेषामर्थं वक्ष्यति, 'दोषानिर्घातार्थानि भवन्ति' इति। स चैक एव सर्वेषामैकार्थ्याद्विकल्प एव शोभते। अत्र वदामः—स्थितमिदं तावन्न्यायविदां यन्निमित्ते कर्माङ्गानि प्रायश्चित्तानीति॥

तत्र चैकस्मिन्निमित्तेऽनेकेषामुपदेशात्तेषां चामीषां युगपदेकप्रयोगविधिपरिग्रहाद्दोषनिर्घातस्य चादृष्टरूपत्वेन व्रीहियवादिवदेकैकस्य तत्साधनसामर्थ्ये प्रमाणाभावाच्च। पानलेपविरेकैरिव पाप्मानमपन्नाद्भिरकार्यभेदेन समुच्चितैरेव सर्वैर्दोषो निर्हण्यत इति गम्यते। तस्मात्सूक्तमर्थान्तरत्वात्समुच्चीयन्त इति॥

स्यान्मतं वाक्यतस्तेषामेकैकस्य नैरपेक्ष्यावगमान्न समुच्चयसिद्धिरिति॥

तदपि मन्दम्। 'अश्वेन याति' 'दीपिकया याति' इत्यादिवत्स्वसाध्यांशनैरपेक्ष्येणापि तदुपपत्तेः। इतरथा 'अजया क्रीणाति, हिरण्येन क्रीणाति, धेन्वा क्रीणाति' इत्यत्र क्रयद्रव्याणामपि समुच्चयासिद्धेश्च। तस्मान्न काचित्समुच्चयानुपपत्तिः॥

यानि तु शाखान्तरत्वेनोपन्यस्तानि सूत्रकृता तत्र विकल्प एव, यथा 'देवाञ्जनमगन्यज्ञ' इत्येकेषामित्यादौ॥

यत्र तु सामान्यविशेषभावेनोपदेशस्तत्र पुनर्बाध एव सामान्यस्य, यथा; 'अस्कान् द्यौः' इति स्कन्नाभिमन्त्रणस्य 'यदद्य दुग्धम्' इत्यभिमन्त्रणेनेत्यादि ॥

(सू) जपो होम इज्या च ॥९॥१॥३॥ ॥२२१२॥

[प्रायश्चित्तस्य त्रैविध्यम्]

(भा) तत्र त्रिविधं प्रायश्चित्तम्, जपो होम इज्या च । जपोऽनाज्ञातस्य, होमस्तस्यैव । अन्येषां तु 'त्वं नो अग्ने, स त्वं नो अग्ने' इत्येवंप्रकाराणां इज्या–पुनः क्रिया; यथा; 'अन्यां दुग्ध्वा पुनर्होतव्यम्, अथोत्तरस्मै हविषे वत्सानपाकुर्यात्' इति ॥

(रु) समुच्चीयन्तां कामं प्रायश्चित्तानि तान्येव तावद्व्याख्यायन्तामिमानिनामामूनीति, तत्राह—**जप इति** । चः प्रकारवचनः । अन्यान्यप्यनुमन्त्रणोपस्थानोपसमिन्धनपुनराधानादीनि सङ्गृह्णाति, तेषामपि प्रायश्चित्तत्वेन वक्ष्यमाणत्वात् ॥

त्रितयोदाहरणं तु तेषां प्राधान्यख्यापनार्थं बाहुल्याभिप्रायं चेति द्रष्टव्यम् ॥ ३ ॥

(सू) दोषनिर्घातार्थानि भवन्ति ॥९॥२॥४॥ ॥२२१३॥

(भा) एतानि त्रिविधान्यपि प्रायश्चित्तानि, यो विध्यपराधे दोषस्तस्य निर्घातार्थानि भवन्ति ॥

[स्थलविशेषे विशेषकथनम्, मीमांसकमतानुवादश्च]

त्रिविधस्यानुक्रमणात् 'यदुत्पूतं चित्रं देयं, इत्यत्र दानं केवलं दोषनिर्घातार्थं न भवति । [1]तत्र होमो वा सर्वप्रायश्चित्तस्य, जपो

[1] अत्र–ङ. च.

वाऽनाज्ञातत्रयस्य कार्य एव । कर्माङ्गप्रायश्चित्तं दोषनिर्घातं च करोति, गृहदाहादौ फलवदिति मीमांसकाः ॥

(वृ) त्रिविध--र्य एव—त्रिविधोपदेशस्य नियमार्थत्वात् । नैमित्तिकान्तरोपदेशेऽप्येषामन्यतमः कार्यः । न च त्रयाणां समुच्चयः; व्यस्तनिर्देशात् ॥

[ कर्माङ्गप्रायश्चित्तस्य अवश्यकर्तव्यत्वम् ]

**कर्माङ्ग–करोति**—प्रकरणात्कर्माङ्गत्वेऽपि विहितशेषे सति प्रायश्चित्तस्योपदेशाद्दोषनिर्घातार्थतया कर्मवैगुण्यसमाधानद्वारेणाङ्गत्वादवश्यकर्तव्यानि ॥

[ मीमांसकाभिप्रायविवरणम् ]

**गृहदा–काः**—अत्र कर्माङ्गभूतनैमित्तिकानां आहिताग्नेगृहदाह, हिरण्यनाश, व्रतलोपादिषु विहितानां स्वर्गफलार्थत्वं कल्प्यमित्याचार्याणां दर्शनम् ॥

(रु) सन्त्वेतानि प्रायश्चित्तानि, समुच्चीयन्तां च अर्थान्यत्वात् । कस्मै पुनरर्थाय तानि क्रियन्ते । अत आह—**दोषेति** दोषः कर्मणो वैगुण्यमित्युक्तम् । तन्निर्घातेन कर्मण उपकुर्वन्ति, कार्यशक्तिमविकलां कुर्वन्तीत्यर्थः । कथं पुनरेतेषां तादर्थ्यमिति चेदेतस्मिन्वैगुण्ये एतत्कर्तव्यमित्युक्ते तत्समाधानस्यापेक्षितत्वाद्वैगुण्यपरिहारार्थमेव तदवसीयत इति भावः ॥ ४ ॥

(सू) अनन्तरं दोषात्कर्तव्यानि ॥ ९ ॥ १ ॥ ५ ॥
॥ २२१४ ॥

(भा) तच्च दोषादनन्तरं कर्तव्यम् । न पर्वापेक्षणमिष्टीनामपि ॥

(वृ) **तच्च–व्यम्**—नैमित्तिकाधिकारत्वात् निमित्ते सत्यधिकारे संपन्ने नैमित्तिकेनावश्यं भवितव्यम् ॥

[प्रायश्चित्ताधाने, आधानोत्कर्षे च कालनिर्णयः मतभेदश्च]

**न पर्वा–मपि**–तथा प्रायश्चित्ताधाने पर्वनक्षत्राद्यपेक्षा न भवति। उत्सृष्टाग्नेश्च संवत्सरादूर्ध्वमाधानोत्कर्षे [1] यदैव संभवस्तदैवाधानम् ॥

केचिदागामिन्यृतुनक्षत्र इत्याहुः ॥

[याज्ञिकपक्षानुवादः]

आशौचमध्ये नैमित्तिकं कर्तव्यमिति केचिद्याज्ञिकाः। तच्चिन्त्यम् ॥

(रु) अस्त्वेषां दोषनिर्घातः फलं कालोऽप्येषां व्याकरणीयः किं कर्मकाल एव कर्तव्यानि, उतापवृक्ते कर्मणि, आहोस्विदिष्ट्यादेः पर्वाद्यपेक्षत्वात्तस्य कालः प्रतीक्षणीय इति ॥ तत्राह—**अनन्तरमिति**।

[सदृष्टान्तं सूत्रार्थवर्णनम्]

क्षतादिचिकित्सावदनन्तरं दोषादेतान्यनुष्ठितान्येव दोषं निर्हण्युः नान्यथेति भावः। एतेन प्रायश्चित्ताधानस्याप्यृतुनक्षत्राद्यनपेक्षत्वं व्याख्यातम् ॥ ५ ॥

[परिहृतांशिकदोषस्य कर्मणः पुनरविकलत्वसिद्धेः सदृष्टान्तमुपपादनम्]

(सू) **निर्हृते दोषे पुनः कृत्स्नं कर्म ॥ ९ ॥ २ ॥ ६ ॥**

॥ २२१५ ॥

(भा) निर्हृते दोषे—अपनीते दोषे प्रायश्चित्तेन पुनस्तत्कर्म कृत्स्नं भवति—सकलं भवति ॥

यथा लोके छिन्नो हस्तो न पुनर्जायते, क्षतसंरोपणमेव क्रियते भेषजेन। इह पुनः सकलं जायते कर्म प्रायश्चित्तेन फलदाने समर्थं, श्रुतिप्रत्ययात् ॥

---

[1] यदा सं–घ.

(वृ) **निर्हृते-भवति**—प्रायश्चित्तेन दोषनिर्हरणे कर्म वैगुण्यपरिहारात् फलदाने समर्थं भवतीति ।

**यथा यात्**--श्रुत्या दोषपरिहारार्थतया विहितत्वादपनीते दोषे सकलं भवतीति ॥ ६ ॥

(रु) एवं प्रायश्चित्तेन निर्हृते दोषे ततः कर्मशेषः कार्य इत्यर्थः ॥

[कृत्स्नपदप्रयोजनादिवर्णनम्]

यदप्यकृतमयथाकृतं वा सत् कृते प्रायश्चित्ते अङ्गं प्रधानं वा तदपि यथा क्रियेतेत्युक्तं कृत्स्नमिति । तत्राङ्गमपवृत्ते कर्मणि न क्रियते प्रधानानुपकारात् । द्रव्यसंस्कारस्तु परतो द्रव्योपयोगान्न क्रियते, तदर्थत्वात्। प्रधानमप्यपवृत्तकालं न क्रियते, अकाले कृतस्याकृतत्वात् । गौणकाले तु क्रियत एव, मुख्याभावे गौणस्यापि प्राप्तत्वात् । तेनार्वाक्परपर्वणः क्रियैव दर्शपूर्णमासयोः । तच्च परस्ताद्दर्शयिष्यामः ॥

[व्याख्यान्तरम्]

केचित्तु व्याचक्षते-निर्हृते दोषे पुनः कर्म कृत्स्नं भवति सकलं भवति फलदानसमर्थं भवतीति ॥ ६ ॥

[कर्मसु दोषसम्बन्धमात्रस्य पुनः प्रयोगपर्यवसायि शक्तिवैकल्याहेतुत्वम्]

(भा) ननु निर्हृतदोषमपि कर्म दोषागमविकलशक्तिकं सत् कथं कार्याय कल्पयिष्यते। नहि शल्यप्रवेधात् पादेन खञ्जस्सन्नुत्खातशल्योऽपि पन्थानं प्रतिपद्यते। तेन प्रयुक्तस्य कर्मणोऽपार्थकत्वात्पुनः प्रयोगेण भवितव्यम्। अत आह—

(सू) **तस्य नावचनात्पुनः प्रयोगः ॥९॥१॥७॥**
**॥२२१५॥**

(भा) तस्य कर्मणोऽपनीतदोषस्य वचनादृते पुनः प्रयोगो न भवति। सकृत्प्रयोगस्त्वन्तरेणापि वचनं भवति। यथा कालातिपत्तौ कृत्वा पाथिकृतं वैश्वानरं च पूर्णमासो दर्शो वा क्रियते।

[उपदेशपक्षः]

यथाऽन्यस्य पर्वणो न कालो विरुध्यत इत्युपदेशः।

[तत्र प्रमाणान्तरोपन्यासः]

एवमुपदिष्टं निदानकारेण—सर्वमहः प्रातराहुतेः स्थानं सर्वा रात्रिस्सायमाहुतेः। आपूर्यमाणपक्षो दर्शस्य [1] कृष्णः। पूर्णमास[2]स्य तथा पशुरपूर्णे संवत्सरे सोमश्च। व्यवाये तु प्रायश्चित्तमेव क्रियते, उत्तरेज्याधिकारार्थम्। अकाले कृतमकृतमिति न क्रियते तत्कर्म। अन्येनान्यस्य कर्मणः कालोऽवरुद्ध इति। तथाङ्गमपरिसमाप्ते प्रधाने क्रियते, परिसमाप्ते तु न कर्तव्यम्। तदुपकारकत्वात्। द्रव्यसंस्कारस्तूपयुक्ते द्रव्ये लुप्यते, तदुपकारत्वात्। अन्तरितप्रायश्चित्तं तु हूयते संस्कारलोपात्। संस्थिते प्रधाने यदङ्गं लुप्तं [3] तस्यार्थेऽपि। यत्र तु वचनं तत्र पुनः प्रयोगोऽपि भवति। यथा; 'अन्यां दुग्ध्वा पुनर्होतव्यम्, अथान्यामिष्टिमनुल्बणां तन्वीत' इति॥ ६॥

(वृ) **तस्य कर्मणो–न भवति**—यथा 'अन्यां दुग्ध्वा पुनर्होतव्यम्' इत्यादिवचनं यत्र नास्ति तत्र न पुनः प्रयोगः।

[सकृदित्यादिभाष्यभावः]

**सकृत्प्र–भवति**—गौणकालेऽप्यनुष्ठितस्य कर्मणः फलसाधनत्वासंभवात् प्रायश्चित्तस्य तु क्रियमाणकर्मवैगुण्यसमाधानमात्रत्वात्। तावता फलसिद्ध्यनुपपत्तेः सकृदनुष्ठानं कर्तव्यमेव।

---

[1] कृत्स्नः—च. [2] स्यापि—च. [3] तस्यार्थे—तस्याप्यर्थे—ङ.

[दृष्टान्ताशयः]

**यथा कला-पदेशः**--पूर्वस्य कर्मणः [1]स्वकालेऽननुष्ठाने तस्योत्तरकर्मकालानुष्ठाने तस्यापि कालावरोधादुत्तरकर्मणोऽपि काल-बाधप्रसङ्गात्। अतः परकर्मकालात्प्रागेव पूर्वस्य कर्मणोनुष्ठानमिति स्वपक्षोऽप्ययमेव। परकर्मकालात्प्राक् पूर्वकर्मणोऽनुष्ठानसम्भवे कर्तव्य-मेवेति युक्तम्॥

['सर्वमहः' इत्यादिभाष्यार्थवर्णनम]

तत्र प्रमाणान्तरमुपन्यस्यति--एवमपीति।

**सर्वमहः—मश्च**—अस्यार्थः—नित्यानां कर्मणां पुनः पुनः कर्तव्यानां मुख्यकालातिपत्तौ वा आगामिकर्मकालात्प्राक् स्वरूपेणानुष्ठानं कर्तव्यमिति। अयमर्थो निदानकारेणाप्युक्तः 'सर्वमहः प्रातराहुतेः' इत्यादिना। न चेदं वचनं सर्वमहरित्यादीनां मुख्य-कालत्वेन विधानार्थम्, 'आपदि हुतमित्येव प्रतीयात्' इति सूत्रकारे-णोक्तत्वात्, तेन समानार्थत्वस्य युक्तत्वात्।

**पशुर-रे**— संवत्सरे संवत्सरे सकृत्करणपक्षे।

**सोमश्च**—वसन्ते वसन्तेऽभ्यासपक्षे।

एवं चातुर्मास्यपर्वणामपि परपर्वणः प्रागनुष्ठानम्। भरद्वाज-वचनाच्च आग्रयणस्यापि परकालात्प्राक्। पिण्डपितृयज्ञस्यापि केषाञ्चि-दुपादानं तुल्यन्यायानां प्रदर्शनार्थम्। अन्ये तु अत्रोपात्तानामेवायं कालोपदेश इति। केचित्तु सर्वमहरित्येतान्यपि मुख्यकालोपदेशपरा-णीति व्याचक्षते। तच्चिन्त्यम्॥

एवं मुख्यकालातिपत्तौ प्रायश्चित्तं कृत्वा एतेषु गौणकालेष्वनु-ष्ठानम्। सप्तहोता पिण्डपितृयज्ञस्य, दर्शपूर्णमासतद्विकाराणां पथिकृद्वै-

---

[1] स्वकालाननुष्ठाने—ग. घ.

श्वानरौ, सोमस्य सप्तदशोऽग्निष्टुत् । अग्निहोत्रस्य तु 'आपदि हुतमित्येव प्रतीयात्' इति वचनान्न प्रायश्चित्तम् ।

**व्यवा-यते**—अस्यार्थः—व्यवाये मुख्ये गौणे च काले अननुष्ठाने, प्रायश्चित्तमेव कर्तव्यम्; न तत्कर्मस्वरूपानुष्ठानम् । तत्र प्रायश्चित्तेनैव तत्कार्यसिद्धिः कल्प्यते ।

**[आन्तरालिकप्रायश्चित्तस्याप्युत्तरकर्माधिकारप्रयोजकत्वव्यवस्थापनम्]**

**उत्तरेज्याधिकारार्थम्**—यावज्जीवाभ्यसनेन नियतपूर्वापरवर्तिनां कर्मणामागते कालेऽधिकारप्राप्तेः क्रमवर्तित्वात्पूर्वाधि[1]कारकार्यसिद्धावुत्तरकालमुत्तराधि[2]कारकालप्राप्तिः । यद्यपि 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इतिवदधिकारक्रमपरं वचनं नास्ति, तथाऽपि सामर्थ्यप्राप्तक्रमस्यापि विधिनानुज्ञातत्वात्, पूर्वकाले तत्कालवर्तिपूर्वकर्माधिकारे प्राप्ते तत्साधनानुष्ठानस्यावश्यंभावित्वात्तत्कार्यसिद्धावुत्तराधिकारावतारः । तथा माणवकहोमाधिकरण उक्तम् 'स्नातको हि दाराधिगमेऽधिक्रियते' इति । अतः प्रायश्चित्तेनापि पूर्वाधिकारसाधनकार्ये संपन्न उत्तराधिकारप्राप्तिरित्यभिप्रायेणोत्तरेज्याधिकारार्थमित्युक्तम् ॥

कथं पुनः प्रायश्चित्तमेवोच्यते ? यावतो[3]त्तरकर्मकालेऽपि पूर्वकर्मानुष्ठानं कृत्वोत्तरमनुष्ठेयम्; अत आह;—**अकाले**—**तत्कर्म**—कालस्यानुपयोगतयाऽधिकारसङ्कोचत्वात् शास्त्राङ्गीकृतमुख्यगौणकालद्वयाभावेऽधिकाराभावात्तत्कर्म न कर्तव्यम् । कथं पुनरा[4]गामिकालस्य गौणकालत्वं संभवतीति चेत्—**अन्येन-द्ध इति** । उत्तरकर्मणा स कालोऽवरुद्ध इति, अत उत्तरस्य काले प्राप्ते प्रायश्चित्तमेव पूर्वस्य ॥

[1] कारसि—घ. [2] कारप्रा-ग. [3] त्तरकालेऽपि—ग. घ. [4] गामिकालस्य—घ.

[व्युत्क्रमकरणेनाङ्गवैकल्यसम्भवे प्रधानस्य समाप्तावसमाप्तौ च कर्तव्योऽशः]

**तथाङ्गे—रार्थत्वात्**—अङ्गस्य प्रधानोप[1]कारार्थत्वात् प्रधानप्रयोगसमाप्तेः पूर्वं व्युत्क्रमेऽन्तरितप्रायश्चित्तं कृत्वा कर्तव्यम्। परिसमाप्ते तु प्रयोगे विस्मृतमङ्गं [2] न कर्तव्यम्, बहिः प्रयोगे क्रियमाणस्यानुपकारकत्वात्। तथा सति विकलमेव कर्म कृष्णानुस्मरणादिभिः कथञ्चित्समाधेयमिति।

**द्रव्यसं–र्थत्वात्**—द्रव्यसंस्कारः—व्रीहिप्रोक्षणादिः। तदर्थत्वात्—प्रयोजनार्थत्वात्संस्कारस्य निवृत्ते प्रयोजने निवृत्तिः।

[विस्मरणादिनाऽननुष्ठानप्रयुक्ताङ्गाङ्गिमुख्यकालग्रहचमसाद्यन्यतमवैकल्ये प्रधानस्य समाप्तावसमाप्तौ च प्रायश्चित्तानि]

**अन्तरितं–र्थेऽपि**—अन्तरितप्रायश्चित्तं कृत्वा कर्तव्यम्। प्रधानात्पूर्वभाविनां प्रयाजादीनां स्वकाले विस्मरणेऽन्तरितप्रायश्चित्तं कृत्वा प्राक्प्रयोगसमाप्तेरनुष्ठानम्, प्रधानादुत्तरेषामपि विस्मरण एवम्। 'यजुरन्तरयेऽन्वाहारं धानञ्जय्यः, उपेक्षणं शाण्डिल्यः' इति छन्दोगसूत्रकारवचनादकरणमन्त्रस्य लोपेऽन्तरितप्रायश्चित्तं कृत्वा तस्य मन्त्रस्य जपः। करणमन्त्रस्य लोपेऽन्तरितप्रायश्चित्तमेव। मन्त्रस्य चोपेक्षणम्। अनेकप्रधानेष्वन्यतमस्य लोपे समाप्तेऽपि प्रयोगे 'तत्साङ्गं पुनः कर्तव्यम्। मुख्याकालातिपत्तौ पथिकृन्मुखादिकल्पेन ऐन्द्रवायवादिग्रहाणामन्यतमस्य लोपे प्रातस्सवनान्त्यचमसगणात्प्राक् स्मृते अन्तरितप्रायश्चित्तं अग्निं नरादि वा कृत्वाऽऽधवनीयात्सोममादाय पवित्रे धारां कृत्वा गृहीत्वा यागः; तद्योगित्वाद्धाराग्रहाणाम्।

[1] कारकत्वात्—ग. घ. [2] न कर्तव्यं बहिः। तथा सति—घ.

चमसलोपेऽन्तरितं कृत्वा तस्योन्नयनादि कृत्वा यागः। सवनान्तरग्रहलोपेऽप्येवम्। अन्त्यचमसयागोत्तरकालं स्मरणेऽन्तरितप्रायश्चित्तं कृत्वा तत्सवनीयादृजीषादभिषवादिकल्पेन सोमरसमुत्पाद्य गृहीत्वा यागः। प्रागवभृथादिति केचित्। अन्ये त्वाग्रयणाद्ग्रहणमिच्छन्ति। अपरे तु 'द्रोणकलशात् सर्वग्रहाणां स्कन्नानामुपदस्तानां च इति' स्कन्नोपदस्तग्रहणस्य प्रदर्शनार्थत्वादिति। अवभृथोत्तरकालं [1] प्राग्यज्ञशंचमादतिपन्नग्रहस्मरणे प्रायश्चित्तं कृत्वा सोममुपादाय सवनीया अप उत्पाद्याधिषवणफलके समन्त्रकमुपादायाधिषवणचर्मग्रावादिसोमसंस्कारान् अभिषवादीन् कृत्वा ग्रहणादिभक्षणान्ते समाप्ते पश्चात्स्मरणे यज्ञश्रेषक्रतुः। केचित्कतिपयसोमयागाभ्यासलोपेऽपि सोमयागस्य कृतत्वान्न पुनः करणमित्याहु। तच्चिन्त्यम्।

चातुर्मास्येष्वन्यतमकरणलोपे आगामिपर्वकालात्प्राक् पथिकृन्मुखादिकल्पेनानुष्ठानमित्याद्यू[2]ह्यम्। सकृत्प्रयोगस्त्वन्तरेणापि वचनं भवतीति व्याख्यातम्।

**यत्र तु वचनं–तन्वीतेति**– प्रक्रान्तकर्मणोऽपि कृतप्रयोगो नैमित्तिकः पश्चात्स्वरूपेण पुनरनुष्ठानमिति ॥ ७ ॥

**[अदृष्टप्रयोजनककर्माज्ञेयशक्त्यशक्त्योः सदृष्टान्तं व्यवस्थापनम्]**

(रु) **तस्य सकृत्प्रयुक्तस्य कर्मणो नर्ते वचनात्पुनः प्रयोगो भवति। भवत्येव तु वचनात् 'अथाऽन्यां दुग्ध्वा पुनर्होतव्यम्' 'अथान्यामिष्टिमनुल्बणां तन्वीत' इत्यादौ। को ह्यदृष्टार्थस्य कर्मणः कार्याकार्यते शक्त्यशक्ती वा जानीयात्। नो खल्वन्धो रूपविशेषान्पश्यति ॥**

---

[1] प्राग्यज्ञशंचमादिति—'यज्ञशंचम उपचमे' इति मन्त्रजपात् पूर्वमित्यर्थः.
[2] हनीयम्–ग. घ.

तस्माद्यस्य शास्त्रमेव पुनः प्रयोगं शास्ति, कामं तत्र प्रयोक्ष्यते। प्रत्येष्यते च तस्य पङ्गोरिव कार्याशक्तिः। यत्र तु न शास्त्रमस्ति कुतः तत्र पुनः प्रयोगः। प्रत्येष्यते तु तत्र प्रयुक्तस्यैव कर्मणश्चिकित्सितपटलस्येव चक्षुषः कार्यशक्तिरित्यलं प्रसङ्गेन ॥ ७ ॥

**(सू) तुभ्यं ता अङ्गिरस्तमेत्यन्वाहिताग्निः प्रयास्यञ्जुहुयात् ॥ ९ ॥ १ ॥ ८ ॥ २२१६ ॥**

(भा) अन्वाहिताग्निः—यः कृताग्न्यन्वाधानः, [1] तस्यावश्यं भावि दैवाद्गमनं भवति[2] स गमिष्यामीति[3] जुहोति 'तुभ्यं ता' इति वास्तोष्पतीयप्रत्याम्नायः ॥ ८ ॥

(वृ) **गमिष्यामीति**—गमिष्यामीति सङ्कल्प्य यानेषु भाण्डान्यारोप्य वास्तोष्पतीयस्थाने 'तुभ्यं ता' इति जुहोति। अग्निः कामो देवता ॥ ८ ॥

(रु) यद्यन्वाहिताग्निर्देशविप्लवाद्यावश्यकनिमित्तवशात्सगृहः प्रयास्यन् स्यात्तदा तुभ्यमित्यनयाऽऽहावनीये जुहुयात्। वास्तोष्पतीयप्रत्याम्नायः ॥ ८ ॥

**(सू) पृथगरणीष्वग्नीन् समारोप्य प्रयाति ॥ ९ ॥ ॥ १ ॥ ९ ॥ २२१७ ॥**

(भा) अधा[4]र्याणामपि समारोपणं, अन्वाहितत्वात् पृथगरणीष्वित्यात्मसमारोपणमपि लभ्येतेत्युपदेशः ॥ ९ ॥

(वृ) **अधार्या -त्वात्**—नित्यधार्यत्वाभावेऽप्याहवनीयादीनामिष्ट्यर्थं पृथक्कृतत्वात्सर्वेषां पृथक् समारोपणम्।

---

[1] तस्य यदावश्यं—घ. ङ. च. [2] ति सग्रहस्य—ग. घ. [3] मीत्याहुतिं जु.—च.
[4] अथ धार्यम्—ङ. आहार्याणामपि—च.

आत्म–भ्येत––सगृहप्रयाण उभयप्रकारस्य दृष्टत्वात् । पृथगरणीष्विति प्राप्तानुवादः इति ।

इत्युपदेशः––समारोप्य प्रयातीत्येतावति वक्तव्ये पृथगरणीष्विति विशेषवचनात् ॥ ९ ॥

(रु) अरणिवचनान्नात्मनि समारोप्याः ॥ ९ ॥

(सू) **यत्र वसेत्तद्देतामिष्टिं संस्थापयेत् ॥ ९ ॥ १ ॥ ॥ १० ॥ २२१८ ॥**

(भा) यत्र वसतिरस्य भवति निर्भये तत्रेष्टिसंस्था कृतान्तात् ॥ १० ॥

(वृ) यत्रव–न्तात्––पूर्वं यावत्कृतं तत ऊर्ध्वं कुर्यात् । यजनीयातिपत्तौ पथिकृद्गुणोऽग्निः प्रकृतः । निर्वापोत्तरकालं प्रयाणे पाथिकृति संयाज्ये । एवं विकृतिष्वपि । सोमे तु भये जात इति वक्ष्यति । प्रातस्सवनात्प्राक् प्रयाणे एतदेव । तस्यां वेद्यां देशान्तरे वा वेद्यादिमन्त्रैस्तूष्णीं वा कर्तव्यम् । अग्निचित्याया अपि तु भाविमानमिति वक्ष्यमाणन्यायेन ॥ १० ॥

(रु) यत्र वत्स्यति तत्रावसितहोमान्तं कृत्वा कृतान्तात्प्रक्रम्येष्टिस्संस्थाप्या ॥ १० ॥

[आहवनीयानुगतौ कर्तव्योंऽशः]

(सू) **यद्यन्वाहिताग्नेराहवनीयोऽनुगच्छेत् 'अन्वग्निरुषसामग्रमख्यत्' इत्यन्यं प्रणीय भूरित्युपस्थाय 'यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृडय स्वाहा' इति पूर्णं स्रुवं सर्वप्रायश्चित्तं हुत्वा 'इदं विष्णुर्विचक्रमे' इत्याहुतिं जुहुयात् ॥ ९ ॥ १ ॥ ११ ॥ २२१९ ॥**

(भा) अन्वाहिताग्नेरनुगमने प्रायश्चित्तं भूरित्युपस्थानं मनसा। स्रुवेण सर्वप्रायश्चित्तम्। समुच्चयेनापि न हूयते सर्वप्रायश्चित्तमिति।

केचित्त्वाहुः-पूर्णं[1] च स्रुवं हुत्वा सर्वप्रायश्चि[2]त्तं चास्य नियतं जुहोतीति ॥ ११ ॥

(वृ) **अन्वाहि–मनसा**—'मनसोपतिष्ठेत मनो वै प्रजापतिः' इति श्रुतेः।

**स्रुवेण स-त्तमिति**—सर्वत्र समभ्युच्चयस्स्यादित्येतदपि न भवति, स्रुवहोमे सर्वप्रायश्चित्तनिर्देशात् ॥ ११ ॥

**केचित्वा–तीति**—पूर्णं स्रुवं हुत्वा सर्वप्रायश्चित्तं हुत्वेति सर्वप्रायश्चित्तशब्दनिरूढिबलात्। अग्निः पावको देवता। इदं विष्णुः' इति स्रुचा यस्याग्नेरुत्पत्तिस्तत्रैतौ होमौ कर्तव्यौ। कुत इति चेत्।

[अग्न्युत्पादनवैविध्यम्]

दृष्टादृष्टरूपोग्निः। तस्य प्रणयनमन्थनादिना दृष्टरूपोत्पत्तिः। होमानुगतेष्ट्यादिनाऽदृष्टरूपोत्पत्तिः। तदेतन्मीमांसकैरुक्तम्; [3]ज्योतिष्मतीष्टेरुद्धातोऽ[4]ग्निर्निमित्तम्, इति। गार्हपत्यस्य मन्थनेनोत्पत्तिरन्येषां स्वयोनितः ॥

(रु) सर्वप्रायश्चित्तमिति पूर्णस्रुवस्यैव प्रशंसार्थो वादः। वैष्णवीं तु जुह्वा जुहुयाद्यद्यव्यापृता भवति ॥ ११ ॥

(सू) **जपेदित्येके ॥ ९ ॥ १ ॥ ॥ १२ ॥ २२० ॥**

(रु) वैष्णवीमिति शेषः आनन्तर्यात् ॥ १२ ॥

---

[1] र्णस्रु–ख. ग. घ. [2] त्तं चात्र–क. ग. घ. च. [3] शाबरभाष्ये 'अग्निरसौ उद्धतोऽहुतेऽग्निहोत्रे उद्वातः एतावच्च निमित्तं ज्योतिष्मत्याः' इति दृश्यते 'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेत्, यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत्' इत्यादि श्रुतिवाक्यमत्र विनिगमकम्. [4] ग्निनि–घ.

(सू.) मनसा व्रतोपायनीयं यजुर्जपेत् ॥ ९ ॥
॥ १ ॥ १३ ॥ २२२१ ॥

(भा) व्रतोपायने भवं यजुर्व्रतोपायनीयं [1]अग्ने व्रतपत इति चत्वारि यजूंषि। यावद्वा यस्योक्तं तदेव केवलं मनसा जपति ; यजमानार्थत्वाद्याजमानं यजुः ; चरिष्यामीति लिङ्गात्। "योऽग्नीनन्वाधाय व्रतमुपैति, स यदुद्वायति, विच्छित्तिरेवास्य सा" इत्यनुगते व्रतविच्छेदाद्यजुषा तस्य सन्धानम्। उपदेशस्तु[2] पूर्वं सर्वं व्रतोपायनीयं पुनर्यजमानस्येति। केचित्तु व्रतोपायनीयं यजुरध्वर्युर्जपतीत्याहुः। यजमान इत्यवचनात् ॥

(वृ) व्रतो–त इति—एकवचनं जात्यभिप्रायं प्रथमं वा सर्वेषाम्।

यावद्वा–जपति—ब्राह्मणस्य प्रथमं वा सर्वाणि वा ; राजन्यवैश्ययोः द्वितीयादित्रिकम।

यजमा–ङ्गात्—अस्मदर्थनिर्देशाद्याजमानत्वं व्रतस्य। किञ्च ;

योऽग्नीन–धानम्—व्रतस्य याजमानत्वे सति तद्विच्छेदसमाधानार्थं यजुरपि याजमानम्। अतो यजमानस्य जपः।

उपदे–स्येति—यजुश्चतुष्टयं, त्रैवर्णिकानामपि पुनः प्रयोगः।

केचित्तु–चनात्—आध्वर्यवकर्मानन्तरमुपदेशाद्यजमान इत्यवचनाच्च ॥ १३ ॥

(रु) यजमान इति शेषः, व्रतोपायनीयमिति वचनात् व्रतं चरिष्यामीति च मन्त्रलिङ्गात्, 'सन्ततिर्वा एषा यज्ञस्येत्यादिना विच्छिन्नव्रतसन्तानार्थत्वस्तवनाच्च ॥

व्रतोपायनीयमिति स्वस्य यद्व्रतोपायनार्थं यजुस्तज्जपेदित्यर्थः ॥ १३ ॥

---

[1] यनीयं अग्ने व्रतपत इति यजूंषि—ख. ग. [2] स्तु सर्वं व्र–घ. च.

[अन्यतरानुगतौ प्रायश्चित्तव्यवस्थापनम् मतभेदश्च]

(सू) यःकश्चनानुगच्छेदेतदेव प्रणयनवर्जमावर्तेत ॥ ॥ ९ ॥ १ ॥ १४ ॥ २२२२ ॥

(भा) यः कश्चनानुगच्छेदिति नान्वाहितप्रायश्चित्तं सभ्यावसथ्ययोः, किंतु सर्वप्रायश्चित्तमेव, या प्रकृतिरितरेषामित्यवचनात् द्वयोरेव चानुक्रमणात्। निरवशेष[1]वादात् सोमेऽपि दीक्षणीयोत्तरकालमन्वाहितप्रायश्चित्तमेव त्रयाणामपि । प्रणीते त्वौत्तरवेदिके 'यद्गार्हपत्य उद्वायेत्। अत एव पुनर्मन्थेत्, इति शालामुखीयस्य स्यात्। औत्तरवेदिकस्यतु अन्वाहितप्रायश्चित्तमेव, यावन्नाग्नी[2]प्रप्रणयनम्। 'एतदेव प्रणयनवर्जमावर्तेत' इति वचनाद्यस्मिन् कस्मिंश्चिदग्नावुपस्थानहोमान्तं क्रियते। इतरथा होमा आहवनीय एव हूयेरन् । केचित्तु होमा आहवनीय एव, अपरिहार्योऽयमिति ॥

(वृ) यः कश्च—त्तमेव —नयोरनुगतौ। यद्यपीह यःकश्चनेत्यविशेषेणोक्तम्; या प्रकृ-णात्—प्रायश्चित्तस्य। सभ्यावसथ्यौ योनित उत्पाद्य सर्वप्रायश्चित्तमाहवनीये । तथाऽपि एतदेव प्रणयनमात्रवर्जमित्यर्थः।

**निरवशे–णामपि** —अन्वाहिताग्निः प्रयास्यन्निति प्रकृतेऽपि पुनरन्वाहिताग्निग्रहणं दर्शपूर्णमासव्यतिरिक्तविषयेऽपि प्राप्त्यर्थम्। तथा एतदेवेत्यवधारणाच्च सर्वत्रान्वाहितप्रायश्चित्तमितरप्रायश्चित्तापवादः । सोमेऽपि उत्तरवेदिप्रणयनात्प्रागेतदेव। त्रयाणामपीति सभ्यावसथ्ययोरपि प्रदर्शनार्थम् ।

**प्रणीते त्वौ–स्य स्यात्** —उत्पत्तिः । उत्तरवेदिप्रणयनादूर्ध्वं सोमार्थगार्हपत्यार्थत्वात्। अत एव पुनर्मन्थेत्' इत्यवक्षाणमन्थनादिवर-

---

[1] वादात्तु–ख. ग. च. [2] ग्नीयप्रण–ङ.

दानान्तमाग्नीध्रप्रणयनात्प्रागपि । केचित्तु आग्नीध्रप्रणयनात्पूर्वं, 'यदि गार्हपत्य आहवनीयो वानुगच्छेत्' इत्यादिना अग्निमुत्पाद्यान्वाहितप्रायश्चित्तमेव ।

**औत्तरवे-णयनम्**-'अन्वग्निरुषसाम्' इति प्रणयनादि । अत्र भाष्यकारेण "अत एव पुनर्मन्थेदिति शालामुखीयस्य स्यात्" इत्युक्त्या औत्तरवेदिकस्यान्वाहितप्रायश्चित्तमेवेति निर्देशात् तस्मिन्नपि काले 'यद्गार्हपत्य उद्वायेदत एव पुनर्मन्थेत्' इत्येतद्भवतीति गम्यते । तस्मादौत्तरवेदिकप्रणयनादूर्ध्वं शालामुखीयस्योत्पत्तिरेषैवेति । आग्नीध्रप्रणयनादूर्ध्वं, 'येषां दीक्षितानां' इत्यादित्रयाणां भवति सर्वप्रायश्चित्तम् ।

[अग्न्युत्पादकमन्थनहरणादीनां सर्वप्रायश्चित्तान्वाहितप्रायश्चित्तयोश्च देशकालादिव्यवस्थापनम्]

शालामुखीयस्याग्न्युत्पत्तिसमर्थावक्षाणाभावे भस्मस्पृष्टलौकिकारणिमन्थनमेव, सूत्रान्तरवचनात् । अस्माकमपि यदि गार्हपत्य आहवनीयो वाऽनुगच्छेदित्यविशेषनिर्देशात् । अत एव 'पुनर्मन्थेत्' इति मन्थनोत्पत्तिनियमपरमिति । न चाधानम् ; प्राजहिताहवनीययोर्विद्यमानत्वात् उभयोत्पादकत्वाच्चाधानस्य । प्रागतिमुक्तिहोमादौत्तरवेदिकानुगमने पुनः प्रणयनं केचिदिच्छन्ति । अन्येत्ववक्षाणादिमन्थनमन्वाहितप्रायश्चित्तं च । ततश्शेषस्य समाप्तिः[1] । प्राजहितस्य मन्थनं प्रधानारणिभ्याम् । चतुर्होतृसंभारयजुस्सारस्वत[2]होमादीनां चाहवनीयानुगमने इष्टिपश्वादिषु च प्रागन्वाधानादनुगमने यदि गार्हपत्य आहवनीयो वाऽनुगच्छेदिति मन्थनमनुगतेष्टिश्च । तथा गार्हपत्याहवनीययोरेकदेशानां प्रवृञ्जनोखाश्रयणशामित्रादीनां चानुगमने सर्वप्रायश्चित्तं

[1] प्तिः चतुर्होतृ—ख. ग. घ. [2] होमसावित्रहोमा—क. घ.

कृत्वा स्वयोनितो हरणम् । तथा धिष्ण्यादीनां प्राग्व्याघारणादनुगमने उरूयनाशे 'यस्याग्निरुरूय उद्वायेत्' इति प्राक्सन्निवपनात् दक्षिणाग्नि-सभ्यावसथ्यानामनुगमने सर्वप्रायश्चित्तम् । स्वयोनितो विहरणं चाग्नि-होत्रवर्जम् । अग्निहोत्रे तु वक्ष्यति । अन्वाहितानां सर्वेषां अन्वाहित-प्रायश्चित्तमेव । पैतृयज्ञकस्यावेदिमध्यस्थस्य प्रागन्वाधानादनुगमने सर्वप्रायश्चित्तं दक्षिणाग्निविहरणम् । अन्वाहितस्यानुगमने दक्षिणाग्नि-वत् केचिदाहवनीयकार्यापत्तेस्तद्वदिच्छन्ति । त्रैयम्बकस्यानुगमने सर्व-प्रायश्चित्तं योनितो विहरणं प्रवत्स्यदुपस्थानार्थम् ॥

[अन्वाहितप्रायश्चित्तस्य सर्वापवादकत्वं प्राबल्यं च, तत्र हेतुश्च]

प्रणीताहवनीयानुगमनेऽप्यवक्षाणमन्थनादि मित्रादिहोमा इष्टिर्वा । दक्षिणाग्न्यनुगमने सर्वप्रायश्चित्तं पुनर्विहरणम् । कुण्डपायिनामयने मासमाग्निहोत्रहोममध्येऽप्यनुगमनेऽन्वाहितप्रायश्चित्तमेव । अन्वाहिता-ग्निषूभयानुगमने अभिनिम्रुक्ताभ्युदयेऽपि पुनराधानं न भवति । अन्वा-हितप्रायाश्चित्तस्य सर्वापवादत्वात् । अत एव भाष्यकारोऽन्वाधानस्ये-ष्ट्यङ्गत्वेऽपि दीक्षणीयोत्तरकालं सोमार्थाहवनीयाद्यनुगमनेऽप्यन्वाधान-संस्कृता अग्नय इति कृत्वा तेन हेतुना अन्वाहितप्रायश्चित्तमुक्तवान्, अतोऽन्वाहितप्रायश्चित्तं बलवत् । आधाने तु मथितेऽग्नौ निर्वर्तमान-जपात्प्राग्विनष्टे न प्रायश्चित्तम् । विष्फुलिङ्गतुल्यतया पुनर्मन्थनम् । अत एव 'बलवति जातौ इति भाष्यकारेण तत्रोक्तम्, निर्वर्तमानजपादूर्ध्वं संभारेषु निधानात्प्राग्विनष्टे तं प्रयोगमुत्सृज्य कालान्तर आदधीत ॥

[त्रेताग्न्यर्थमुद्धृतस्य संभारनिधानादितः पूर्वमुत्तरं वानुगतौ विनाशे च कर्तव्यविशेषांशाः मतभेदाश्च]

दक्षिणाग्न्यर्थस्य प्राक्संभारानिधानादनुगमने योनित उत्पादनम् । अनाज्ञातजपश्च । आहवनीयार्थमुद्धृतस्य प्राक्संभारेषु निधानादनुगमने

दक्षिणाग्नौ भुव इति हुत्वा पुनरुद्धरणादि। संभारेष्वाधानोत्तरकालं प्रागिष्ट्यन्वाधानाद्विनष्टे गार्हपत्ये भस्मनारणिं संस्पृश्य मन्थनं गार्हपत्यस्य। आहवनीयस्य तु लौकिकारण्योर्मन्थनं मित्रादिहोमाश्च। दक्षिणाग्नेस्तु सर्वप्रायश्चित्तम्। योनित उत्पत्तिः॥

केचिदेतेषामाधानमन्त्रैः स्थापनमिच्छन्ति। अन्वाधानोत्तरकालमन्वाधानप्रायश्चित्तमेव। सभ्यावसथ्ययोर्योनित उपादायाधानमन्त्रैः स्थापनं सर्वप्रायश्चित्तं च। पवमानेष्ट्यादीनां व्यहाद्युत्कर्षकाले गार्हपत्याहवनीयानुगमने 'यदि गार्हपत्यः' इत्यादि नैमित्तिकम्। दक्षिणाग्नेस्तु स्वयोनित उत्पत्तिः; सर्वप्रायश्चित्तं च। तथा सभ्यावसथ्ययोः॥

केशवस्वामिमते तु शमीगर्भस्यारणी आहरतीति सिद्धेऽपि तस्मिन् शमीगर्भादग्निं मन्थतीति पुनर्वचनात् मन्थनोत्तरकालं प्राग्गार्हपत्याधानादनुगमने पुनर्मन्थनं कालान्तर आधानमिति। नच तस्मिन् शमीगर्भादग्निं मन्थतीति मन्थने नियमार्थम्। अप्यशमीगर्भस्येत्यन्यानर्थक्यप्रसङ्गात्।

**एतदेव–क्रियते**– एतदेवेति कृत्स्नकाण्डस्य प्रत्यभिज्ञानाद्धोमयोरपि। तस्मिंस्तस्मिन्नग्नौ करणं भरद्वाजमताच्च। होमयोश्च तत्र तत्रानुष्ठाने हेतुः अदृष्टरूपसाधनत्वादिति।

**इतर–रन्**—तत्र सामान्यतः प्राप्तत्वात्। तथा सति 'एतदेव प्रणयन वर्जम्' इति कृत्स्नस्य वृत्तिविधानं युज्यते।

**केचित्तु–रोऽयम्**— साक्षादन्यस्योपदेशाभावात् आहवनीय एव प्राप्त इति।

(रु) तं तमनुगतं योनित उत्पाद्य भूरित्युपस्थानादि समानम्। होमावपि तत्रतत्रैवेत्यपरे। यथा दक्षिणाग्न्यनुगतिप्रायश्चित्तं प्रकृत्याह भारद्वाजः 'अन्वाहार्यपचने जुहुयादित्याश्मरथ्यः, आहवनीय इत्यालेखनः' इति॥

केचित्त्वाहवनीयानुगतावप्यजस्रविषये प्रणयनवर्जमावर्तयन्ति तस्य गार्हपत्याननुप्रवेशान्मन्थनमेव सर्वत्रेति । तदयुक्तं अविशेषात् , उद्धार्यस्यापि गार्हपत्यानुप्रवेशे प्रमाणाभावस्य दर्शितत्वाच्च ॥

अस्तु वा तदनुप्रवेशः तदा तमजस्रोऽप्यनुप्रविशन्न दण्डेन पराणुद्यते योनित्वादेरनुप्रवेशहेतोस्तं प्रत्यविशेषात् । वाच्या वा विशेषः, तस्मात्प्रणयनविधिष्ववशिष्टमेव प्रणयनमजस्रोद्धार्ययोः ॥ १४ ॥

(सू) मन्थेद्गार्हपत्यम् ॥९॥१॥१५॥२२२३॥

(रु) गार्हपत्यमनुगतं मन्थनेनोत्पाद्य यथोक्तमेव प्रायश्चित्तमावर्तयेत् । तथाऽऽहवनीयस्यापि गार्हपत्यतामापन्नस्य मन्थनमेव, न प्रणयनं; यथोर्ध्वमौत्तरवेदिकप्रणयनात्पशुसोमयोः ॥ १५ ॥

(सू) या प्रकृतिर्दक्षिणाग्नेः ॥९॥१॥१६॥२२२४॥

(रु) तत आहरेदिति शेषः प्रदर्शनार्थं चेत्सभ्यावसथ्ययोरपि यः कश्चनानुगच्छेदिति सामान्योपक्रमात् । अन्यथा तस्यानर्थक्यप्रसङ्गाच्च । तदभिप्रायमेव चानयोरननुक्रमणं वेदितव्यम् । अनित्यत्वाभिप्रायमित्यपरे । तदेतदन्वाहिताग्निप्रायश्चित्तं स्वविषये सर्वमाग्निहोत्रिकादिप्रायश्चित्तान्तरं बाधते विशेषविषयत्वात् ॥

[अनुगतप्रायश्चित्तविधीनां सर्वविधिबाधकत्वं तत्र निदानं च]

यस्य चोभावनुगतावित्यनेन तु सर्वो विधिर्बाध्यते विशिष्टतमविषयत्वात्तस्य । सर्वेऽपि ह्यनुगतप्रायश्चित्तविधयोऽन्वाहितानन्वाहितादिगोचरा एकैकानुगतावभिनिम्रोकाभ्युदयरहितोभयानुगतौ च सावकाशाः । तद्विशिष्टोभयानुगतौ युक्तं तदेकविषयेणानेन बाध्यत इति ॥ १६ ॥

[ब्राह्मौदनिकान्यावस्थाविशिष्टाग्नेरन्यत्रनयनेऽर्वाक् प्रविद्धशम्यापातात्प्रदक्षिणीकरणादिव्यवस्था]

**(सू) यद्याहिताग्नेरग्निरपक्षायेदा शम्यापरासात् 'परि वाजपतिः कविरग्निः' इति त्रिः प्रदक्षिणं परिक्रम्य 'तग्ं सम्भरेदिदं त एकं पर उत एकं तृतीयेन ज्योतिषा संविशस्व संवेशनस्तनुवै चारुरेधि प्रिये देवानां परमे जनित्र' इति ॥९॥१॥१७॥२२५॥**

(भा) अपक्षाणं देशान्तरगमनमग्नेः। अविधानादन्वाहिताग्नेरेव मा भूदपक्षाणप्रायश्चित्तमिति सर्वार्थं पुनराहिताग्निग्रहणम्। आहिताग्नेरिति वचनात् ब्राह्मौदनिके न भवतीति उपदेशः। अन्वाहिताग्नेर्नापक्षाणविधिः, पुनराहिताग्निग्रहणात्, सोमे चित्येऽग्नौ च कालवृद्धिभयान्नापक्षाणविधिः। शम्यापरासः—शम्याक्षेपः। यावच्छम्यया प्रविध्येत् तावति गते चाग्नौ प्रायश्चित्तम्। उपदेशो मर्यादा शम्यापरासः। अर्वागेव प्रायश्चित्तम्। यत्र परिक्रमणाय शक्यम्। परिक्रमणं सर्वतः प्रदक्षिणीकरणम्। यस्मान्निर्गतः तत्र क्षेपः संभरणम्।

(वृ) **अपक्षाणं—नात्**—प्रणयनादिविधानमन्तरेण अग्नेरायतनाद्बहिर्गमने कृत्स्नस्यैव यावत्प्रायश्चितं ध्रियमाणस्यैतत्प्रायश्चित्तम्; न विष्फुलिङ्गमात्रेऽपक्रान्ते अनुगते।

**अन्वाहिता-ग्रहणम्**—प्रकृतत्वात् अन्वाहिताग्नेरेव प्राप्नोतीति किंच—

**अन्वाहिताग्ने—न भवति**—यद्यग्निरपक्षायेदिति सर्वप्राप्तिसिद्धेराहिताग्निग्रहणात् श्रौतत्वेऽपि ब्राह्मौदनिकावस्थायां न भवति।

**उपदे—णात्**- आहिताग्निशब्दोपादानप्रयोजनमाहिताग्निमात्रस्य न, अन्वाहितावस्थाविशिष्टस्येति।

[सौमिकोपसदादिषु सोपपत्तिकं तदभाव-
व्यवस्थापनम्]

**सोमेचि–ण विधिः**—अन्वाहिताग्नेरपक्षाणप्रायश्चित्तप्राप्ति-पक्षेऽपि परम्तरामित्यत्रापक्षाणदेशे एक[1]रात्रोपवासविधानात् सोमे उपसदाद्यहस्सु अपक्षाणाहर्वृद्ध्या प्रधानकालोत्कर्षभयादेतत् प्रायश्चित्तं न भवति। संभृत्य सर्वप्रायश्चित्तमेव। [2]तदा चितेऽग्नौ दीक्षा-हस्स्वपक्षाणे कर्तव्यमेव। तत्र तत्र पुनर्निवृत्तौ देवयजनं प्रति गच्छति॥

**शम्याप–त्तम्**—आ शम्या परासादित्याभिविधिः। 'याव-च्छम्यया प्रविध्येत् यदि तावदपक्षायेत्' इति वचनात् यस्मिन् देशे गतेऽग्नौ नैमित्तिकं परिक्रमणादि।

**उपदेशे–शक्यम्**—यस्मिन् देशे परिक्रमणस्य संभवः तत्र-देशगमने नैमित्तिकं सम्भरणम्।

(रु) अन्वाहिताधिकारशङ्कानिवृत्त्यर्थमाहिताग्निग्रहणम्। यावति देशे शम्या परास्ता पतति ततोऽर्वाग्यद्यग्निः कश्चिदपक्षायेत् आयतनादप-गच्छेत्तदा तमेव त्रिः परीत्य सम्भरेत्पुनरायतने निक्षिपेत्॥

कृत्स्नाग्न्यपक्षाण एव चायं विधिः यथोक्तं बाहृच्याश्वलायनयोः। आहवनीयमवदीव्यमानमर्वाक् शम्यापरासादिति।

अग्न्येकदेशापगमे तु "यदि पुरा प्रयाजेभ्यो बहिः परिध्यङ्गारः स्कन्देत्" इत्यादि विध्यन्तरं द्रष्टव्यम्॥ १७॥

[तस्यैव प्रविद्धशम्यानिपातोत्तरमन्यत्र नयने
इष्ट्यन्तरविधानम्]

**(सू) यदि परस्तरामपक्षायेदनुप्रयायावस्येत्॥ ९॥**
**॥ १॥ १८॥ २२२०॥**

---

[1] रात्रवासवि–**ग. घ.** [2] तथा–**घ.**

**(सू) तदग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् ॥ ९ ॥ १ ॥ १९ ॥ २२२१ ॥**

**(भा)** परस्तरां शम्यप्रासात् अनुप्रयाय तं देशं गत्वा यत्र गतोऽग्निः असमारूढा अग्नयः प्रत्यक्षं नीयन्ते, एकदेशसमारोपणस्याशक्यत्वात् । तस्याग्नेः प्रत्यक्षनयनं प्रवृत्तमित्यन्येऽपि प्रत्यक्षं नीयन्ते तस्मिन् प्रवृत्तत्वात् । केचिदपक्षाणवर्जं समारोप्य नयन्ति आऽवसानं तत्रैकमहस्तिष्ठति कृत्वा पाथिकृतीम् ।

**(वृ) परस्तराम्**—परतः ।

**एकदेश-त्वात्**—अग्नयेकदेशस्य देशान्तरगतत्वात् कृत्स्नसमारोपणस्यासंभवात् ।

**तस्याग्नेः-त्तत्वात्**—इतराग्नीनामपि प्रत्यक्षनयनमेव, अग्नीनां देशान्तरप्रयाणे एकप्रकारस्यैव युक्तत्वात् तथाचाग्नौ दर्शितम्, 'समोप्येतरावग्नी अन्वारोप्य, इति ।

**केचिदप-दृष्टमिति**—अग्नीनां देशान्तरनयने समारोपणं दृष्टमिति, 'समोप्येतरावग्नी अन्वारोप्य' इति वचनादृते देशान्तरनयने प्रत्यक्षनयनस्यादृष्टत्वात् ।

**आवसानं**—'पाथिकृते समाप्ते व्यवस्येत्' इति वचनात् तत्रैकमहोरात्रं वसेत् । ततः 'श्वोभूते' इत्युत्तरत्र वचनात् अपक्रान्तैकदेशैनैकदेशान्तरं नीतं संयुज्य पथिकृदादि कर्तव्यम् ।

**(रु)** परश्शब्दः परो गोष्ठ इत्यत्रैव व्याख्यातः । शम्यापरासात्परतरमपगच्छेद्यत्र सोऽग्निस्तत्रेतरानपि प्रत्यक्षान्नीत्वा तदनुगुणान्विहृत्य तदहस्तत्र वसेदित्यर्थः ॥ १८ ॥

**तत् तत्र ॥ १९ ॥**

[ऐष्टिकप्रधानयागहविर्निर्वापयोः पूर्वमुत्तरं वाऽन्यत्र नयने कर्तव्यविशेषांशाः]

(सू) **पथोऽन्तिकाद्बर्हिराहरेत्** ॥ ९ ॥ १ ॥ २० ॥
॥ २२२८ ॥

(भा) पथोऽन्तिकात्—पथस्समीपात बर्हिः । 'अग्नेनया देवानाम्' इति पाथिकृतः, याज्यापुरोऽनुवाक्ये, प्राकृते स्विष्टकृतः । यद्यग्निहोत्रमध्येऽवसानं कृत्वाऽग्निहोत्रसंस्था तत इष्टिः । अथेष्टिमध्ये पशुमध्ये वा ; पाथिकृतोऽपि तदेव तन्त्रमुपजीवति, नीत्वाग्नीन् कृतान्तात्प्रक्रमः । अथवा इष्टिमध्ये सर्वप्रायाश्चित्तं नान्येष्टिः 'यस्य यज्ञे प्रतते' इति लिङ्गात् ।

(वृ) **तत इष्टिः**—देशान्तरे तत इष्टिः पाथिकृती, अग्निहोत्रकालातिपत्तौ सर्वप्रायश्चित्तं कृत्वा ।

**अथेष्टिमध्ये–प्रक्रमः**—तन्त्रमध्ये नैमित्तिकस्यापि तत्तत्तन्त्रम्, प्रसङ्गात् । इष्टिपशुमध्ये प्रधानयागोत्तरकालमपक्षाणे सति पथिकृतोऽग्निहोत्रहिरण्यदानादि । मन्त्रवद्धविरुत्पाद्य यागं कृत्वा कृतान्तात्प्रक्रमः । निर्वापात्पूर्वमपक्षाणे सह निर्वापः । निर्वापोत्तरकालं प्रधानयागात्पूर्वं चेत् पृथङ्निरुप्य हविरुत्पाद्य प्रधानकाले यागः ।

**अथवा इष्टि–लिङ्गात्**—समाप्तायामिष्टौ पाथिकृति ।

(रु) पथस्समीपे ये दर्भास्ततो बर्हिराहरेत् ॥

(सू) **अनड्वान्दक्षिणा, सिद्धमिष्टिस्सन्तिष्ठते** ॥ ९ ॥
॥ १ ॥ २१ ॥ २२२९ ॥

(रु) यदा त्वियमिष्टिस्तन्त्रमध्ये पतिता तस्यैव प्रसङ्गो वेदितव्यः ॥ २१ ॥

(सू) **ततः श्वोभूते गृहेषु प्रत्यवस्यति ॥ ९ ॥ १ ॥**
**॥ २२ ॥ २२३० ॥**

(भा) सर्वत्र श्वोभूते श्वः प्रभाते गृहान् गच्छति। सोमे दीक्षासु देवयजनम् ।

(वृ) **सर्वत्र**—अग्निहोत्रेष्ट्यादिषु ।

**सोमे दीक्षासु–नम्**—तिस्रो दीक्षादिकल्पेषु प्रागुपसदोऽवक्षाणं प्रायश्चित्तं भवति।

(रु) ततश्श्वोभूते यतो देशात्पूर्वं गतस्तत्र प्रत्यवस्यति। सोमेषु त्ववसानप्रत्यवसाने न भवतो यत्राहर्वृद्धिः स्यात् ॥

[वत्सापाकरणोत्तरं सान्नाय्ययागस्य द्रव्यदेवतान्तर-
विशिष्टनैमित्तिकप्रयोगोपदेशः,
मतभेदश्च]

(सू) **यस्य हविषे वत्सा अपाकृता धयेयुस्तत्स्थाने वायव्यां यवागूं निर्वपेत् ॥ ९ ॥ १ ॥ २३ ॥**
**॥ २२३१ ॥**

(भा) यदि धयेयुर्वत्सा अपाकृताः यदेज्या न संवर्तते तदा यवागूः। अर्धपानेतु अन्तरितप्रायश्चित्तं सर्वप्रायश्चित्तं च हूयते, यवागूः व्रीहिभिः, सान्नाय्यापूर्वा निर्वपणादयः अर्थलोपान्निवृत्ताः न शास्त्रात्। इह तस्यौषध[1]गुणत्वात् क्रिय[2]न्ते, नित्यार्थत्वाद्धविषः। उद्वासनोत्तरकालं तु

[1] गुणत्वाद्—च. [2] न्त इति अन्वेत्वांङ्ः.

साम्नाय्यधर्मा एव स्थानापत्तेः ॥ अन्ये त्वाहुः--- तिरःपवित्र सेकादयः साम्नाय्यधर्मा एव ततस्थानापत्तेः, नार्थलुप्ता इति । शाखाहरणादयस्तु दोहनान्ता अर्थलुप्ता इति न क्रियन्ते । निर्वपणादयस्तु तण्डुलोत्पवनान्ता अर्थलोपात्साम्नाय्यापूर्वान्निवृत्ताः । इहत्वोषधिगुत्वादुपकुर्वन्तीतिक्रियन्ते । 'वायो शतं, प्रयाभिः इति वायोः हुत्वा याज्यानुवाक्येऽनुमन्त्रणं साम्नाय्यवत्' नानादेवतत्वात्पृथक् प्रदानं साम्नय्यस्य । यदा तु दोहद्वयं पिबन्ति वत्साः, तदा यवाग्वोरेकदेवतत्वात्सह प्रदानम् ।

(सू) **तदा यवागूः**—यागार्थद्रव्यासंभवादेव यवागूः प्रतिनिधिः । एकदेशपानस्य दोहकाले वत्सोपसर्गादिविधानादवर्जनीयत्वात् ।

**अर्धपाने-यते**—अर्धशब्द एकदेशपरः । यागमात्रद्रव्यसंभवेऽपि प्रायश्चित्तं कृत्वा दोहनादि कर्तव्यम् । सर्वप्रायश्चित्तं तु समुच्चयपक्षे यागनिवृत्तिसंभवेऽपि 'नास्यैतां रात्रिं कुमाराश्च न पयसो लभन्ते, इति सर्वस्य पयसो दूष्यत्वात् एकदेशविनाशेऽपि प्रायश्चित्तं भवत्येव ।

**यवागूः व्रीहिभिः**—इति प्रदर्शनार्थम् । यवकाले यवैः, घनीभावनिवृत्त्यर्थम् ।

**[साम्नाय्ययागापूर्वप्रयोजकनिर्वापावघातादीनामौपदेशिकत्वस्याऽऽनुमानिकप्रमाणेन व्यवस्थापनम्]**

**साम्नाय्य-द्रविषः**—अस्यार्थः ; निर्वापावघातादीनां च दर्शपूर्णमासप्रकरणपठितानां सर्वकरणार्थ[1]त्वे प्राप्त व्रीहीनवहन्तीत्यादि श्रुतिसामर्थ्याभ्यामौषधद्रव्यसंस्कारार्थतया तत्साध्ययागापूर्वार्थत्वं प्राप्तम् । तथा च मीमांसकैः ये तत्र श्रूयन्ते ते तत्रैवेत्युक्तम् । (३-१-१०)

---

[1] र्थत्वेऽपि-क.

अतस्सान्नाय्यापूर्वार्थत्वं यद्यपि न प्राप्तम्; तथापीह नैमित्तिकप्रयोगे सान्नाय्ययागस्य यवागूद्रव्यं देवतान्तरं च विहितम्। तत्र यवागूनिष्पत्त्यर्थमवघातादीनामपेक्षितत्वात् द्वारकार्यसंभवेन निर्वापादीनां सान्नाय्य यागपूर्वार्थत्वमपि प्राप्तमुपदेशत एव। न च नैमित्तिकप्रयोगस्य[1] विकृतित्वं प्रकृतिभूतस्यैव कर्मणः तद्द्रव्याभावेऽभ्युदयेष्टिवत् द्रव्यदेवतान्तरविशिष्टप्रयोगमात्रोपदेशात्। अतः कार्यं शाब्दनिरूपणेन उपदेश शिक्षावत्। कृत्स्नप्रकरणद्वारपरामर्शेनैव धर्माणां विनियोगपर्यवसानात्।

[तत्र सूत्रभाष्यकृतोरभिप्रायैककण्ठ्याद्युपपादनम्]

ऐन्द्रयागस्य यवागूसाध्यत्वे सति तदपेक्षितत्वमित्यर्थधर्माणामुपदेशत एव प्राप्तिरिति भाष्यकारस्याभिप्रायः, सूत्रकारस्याप्ययमेव पक्षः, अग्निष्टोमस्य गुणाविकारा इति भाष्यकारेण वक्ष्यमाणत्वात्। न चैतष्वग्निचित्यादयो वैकृता धर्मा न सन्ति, इति व्याख्यानात्।

**उद्वास-पत्तेः**—तत्स्थानापत्तेर्यवाग्वास्तद्धर्मप्राप्तिः। अतो यत्पृथिवीमित्यासन्नाभिमर्शनादि अस्याः प्रतिनिधित्वाद्धविशब्द एव मन्त्रोद्वासनमन्त्रोऽपि प्रणयाद्विधानमन्तरेणाग्नेरायतनाद्बहिर्गमनात्कृत्स्नस्यैकदेशस्य यावत्प्रायश्चित्ते करणं म्रियमाणस्यैव तत्प्रायश्चित्तम् न विष्णुलिङ्गात्प्रक्रान्तेऽनुगते। अन्वाहिताग्नेर्माभूदपक्षाणप्रायश्चित्तं सान्नाय्यवदेवेति. केचित्। नासान्नाय्यवदिति केचित्।

**अन्ये त्वा-नर्थलुप्ताः इति**—'देवस्त्वा सविता पुनातु, वसोः पवित्रेण' इति स्थाल्यामुदकवत्यां तण्डुलान् क्षिपति। अतो दृगूँहेत्युद्वासनात्यर्थलोपाभावादिति। अन्ये त्वाहुः;—

**वायो शृतं-ऽयस्य**—यवाग्वाश्च सायं दोहार्थं पयः। पन्नारात्रावन्वापन्नानां तु आग्नेयेन सह निर्वाप इत्यन्ये। प्रातर्दोहार्थस्य

[1] विवक्षितत्वम्—**ग.घ.**

प्राङ्निर्वापात्पाने सह निर्वापः। ऊर्ध्वं तु पृथङ्निरुप्य तण्डुल-प्रस्कन्दनान्तं कृत्वा विरमति। उत्पवनकाले तण्डुलोत्पवनं आग्नेय-मधिश्रित्य घर्मोऽसीति तण्डुलानावपति ॥

(रु) यदा सर्वगवीनां वत्साम्सर्वमेव पयः पिबेयुर्न तु हविषे पर्याप्त-मवशिष्युः तदा वायव्यां यवागूं निर्वपेत् ॥

यद्यपि सान्नाय्यस्थानापत्तेस्तद्धर्मिका यवागूः ; तथाप्योषधिगुण-त्वान्निर्वापादयः श्रपणान्ता धर्माश्चरुवत्कार्याः ये हविर्निष्पत्त्यर्था भवन्ति ॥

सान्नाय्ये विहितास्त्वर्थलोपान्निवृत्ता न शास्त्रात्। अतोऽत्रार्थ-वत्त्वात्क्रियन्ते। उद्वासनादारभ्य सान्नाय्ययोर्यतरस्थानापन्ना ततरधर्मा भवति। पृथक्प्रदाना च नानादेवतत्वात्। यदा तूभयोरपि रोहयोः पयोधीतं* स्यात्तदा सहप्रदानं यवाग्वोरेकदेवतत्वात्। आह च भार-द्वाजः समानदेवतेषु समवदाय प्रचरति हविर्गणेषु पशुगणेषु चेति ॥ ॥ २३ ॥

[कृत्स्नस्य दर्शप्रयोगस्य पुनरावृत्तिविधानम्]

**( सू ) अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ॥**
**॥ ९ ॥ १ ॥ २४ ॥ २२३२ ॥**

(भा) [1]उत्तरं हविः पुनरावृत्तिः सर्वस्य [2]दर्शस्य हविश्शब्दस्य प्रदर्शनार्थत्वात्। प्रणयनादिब्राह्मणभोजनान्तं तत्सर्गँस्थाप्यान्यद्धवि-स्तद्दैवतं निर्वपेदित्यत्र तद्दैवतवचनात्। केचित्तु विनष्टमेव दधि पयो वा पुनरावर्तयन्ति ; इतरयोरदुष्टत्वात्। अन्ये तु प्रधानेज्यां कृत्वा तदैव वत्सापाकरणा[3]दीन्यावर्तयन्ति। तेन चेष्ट्वा [4]सशेषं सर्वप्रधानानां तन्त्रेण ॥

[1] उत्तरहविषः पुनरावृत्तिः—क. [2] दर्शस्य संसर्गित्वात, प्र—च. [3] णाद्याव—घ. च.

(वृ) **पुनरा-र्शस्य**—अथोत्तरस्मै हविषे वत्सानपाकुर्यादिति कृत्स्न-दर्शस्यावृत्तिः ।

**हविश्शब्दस्य प्रदर्शनार्थत्वात् ;**—उत्तरस्मै हविषे इत्येक-वचनस्य श्रवणेऽपि हविश्शब्दस्यैकवन्निर्दिष्टस्य प्रदर्शनार्थत्वात् ।

अतः ;

**प्रणयनादि-तवचनात्**—एकत्वाविवक्षापक्षेऽन्यद्धविर्निर्वपेदि-त्येतावतैव हविष आवृत्तौ प्राप्तायां तद्दैवतवचनाद्धविरावृत्तिमात्रश्रवणे कृत्स्नप्रयोगावृत्तिरवगम्यते । किंच प्रक्रान्तप्रयोगे समाप्ते पुनरावृत्ति-विधानात् पृथक्प्रयोगावृत्तिरवगम्यते ।

**केचित्तु-ष्टत्वात्**—दुष्टस्यैव समाधानं युक्तमिति । अनयोः पक्षयोः प्रतिपद्यारम्भः द्वितीयायां समाप्तिः ।

**अन्ये तु-न्त्रेण**—पुनरिज्याया अपि मुख्यत्वसिद्ध्यर्थं यद्यपि सूत्रकारेण वत्सानपाकृत्योपवसेदित्युक्तम् , तथाऽपि श्रुतौ वत्सानपा-कुर्यादित्येतावन्मात्रश्रवणात् तदानीमेव वत्सापाकरणादि ।

(रु) संस्थाप्येष्टिं तदहरेवोपवसथं कृत्वा पीतेन हविषा पुनर्यजेते-त्यर्थः । नाग्नेयस्यावृत्तिर्नाशदोषाद्यभावतः उत्तरस्मै हविषे वत्सान-पाकृत्येति लिङ्गाच्च । एवं दोहान्तरस्याप्यनष्टस्येति द्रष्टव्यम् ॥ २४ ॥

[सायंदोहनाशादौ कर्तव्यविशेषांशाः]

(सू) **यस्य सायं दुग्धगं हविरार्तिमार्छेतीन्द्राय व्रीहीन्निरुप्योपवसेत् ॥ ९ ॥ १ ॥ २५ ॥ २२३३ ॥**

(भा) सायं दोहस्यार्तिर्नाशः । दोषोऽपहरणं वा । इन्द्रायेति प्रदर्शनं महेन्द्रयाजिनो महेन्द्रायेति । व्रीहीनिति वचनात् यवकालेऽपि व्रीहय एव निरुप्यन्ते । निर्वापं कृत्वा ग्राम्येभ्य उपवसति आरण्याशनं

करोति। अथ तु कृते विनाशे निर्वाप एव। अन्यत्राप्यार्तिगतावनन्तरं निर्वापः। दर्भानास्तीर्य अग्निहोत्रहवणीं शूर्पं चापरतः पुरतः पात्रीं यदि पात्र्या निर्वापः। स्फ्यं च पश्चात् संविशन्तामित्यभिमृश्य वाग्यतस्स्रुगादाना[1]द्यन्वावपनान्तमिन्द्राय कृत्वा विरमति। श्वो भूते यथाप्रकृति कृत्वा वाग्यतः [2]पात्राणि संमृश्य असंमृष्टान्याग्नेय[3]निर्वापादि प्रतिपद्यते। व्रीहयः प्रवृत्ताः सान्नाय्यस्य [4]प्रतिनिधिरिति प्रातर्दोहेऽपि त एव स्युः। अत उच्यते;—'यत्प्रातस्स्यात्। तच्छृतं कुर्यात्' इति।

(वृ) सायंदोह-न्द्रायेति—[5]सदेवताके यागे द्रव्यमात्रप्रतिनिधिनिधानात् सान्नाय्यस्य सोमयाजिमात्रस्य नैमित्तिकविधानाच्च। किमर्थं तर्हि इन्द्रनिर्देश इति चेदिन्द्रनिर्देशाभावे प्रकृतत्वाद्यवागूदेवतैवात्रापि प्राप्नोति। अतस्सान्नाय्यदेवताप्रदर्शनार्थमिन्द्रायेति निर्देशः।

व्रीहीनिति-प्यन्ते—व्रीहिग्रहणाभावेऽपि निर्वापचोदनयैव व्रीहियवयोः प्राप्तत्वेऽपि व्रीहीनितिवचनान्नियमेन यवकालेऽपि व्रीहीणामेव निर्वाप इति।

निर्वापं-करोतीति—निरुप्योपवसेदिति नात्यन्तानशनम्, उपवसेदिति प्राप्तानुवादत्वात्। कृते उपवासे पश्चाद्यदि सायंदोहस्यार्तिः निर्वाप एव तदा नोपवासः।

अन्यत्रा-निर्वापः—आग्नेयनिर्वापोत्तरकालं दोहस्यार्तावनन्तरं निर्वाप एव, नोपवासः। उद्वासनानन्तरमौषधधर्माः पुरोडाशस्य। ऊर्ध्वं दधिधर्माः।

---

[1] अन्वापान्त-ग. ङ. च. [2] पात्राण्यभिमृ-च. [3] यंनी-ग. घ. [4] न प्रति.
[5] तद्देवताके यागे द्रव्यप्रतिनिधिमात्रविधानात् सान्नाय्ययागमात्रस्य-ग. घ.

**दर्भानास्तीर्ञ्चापरतः**—रात्रौ निर्वापपक्षे यावदपेक्षितपात्रप्रयोगप्रतिकर्षः। दर्भेषु सादितपात्रसाध्यत्वेन निर्वापस्यावगतत्वात्। दर्शे पूर्वेद्युर्वेदिकरणेन सादनादिप्रतिकर्षः। स्फ्यवेदयोर्दर्शपूर्णमासयोस्समानविधानत्वात् पौर्णमासप्रयोगपूर्वकत्वाभावात्। अत्र तु नित्यप्रयोग एव नैमित्ति[1]कत्वेन विकृत इति विशेषः।

(रु) आर्तिः नाशदोषापहारादितः। इन्द्रग्रहणं महेन्द्रस्यापि प्रदर्शनार्थम्। प्रातर्दोहेनास्य समवदाय प्रचरेदित्यविशेषवचनात्। अन्यथा महेन्द्रयाजिनस्तत्र याज्याऽनुवाक्यादिविरोधात्। तथा 'ऐन्द्रं वा महेन्द्रं वा पुरोडाशं तस्य स्थाने' इत्येव बह्वृचाः। व्रीहिग्रहणाद्यवा निवर्तन्ते। यदा रात्रावार्तिस्तदा यावदर्थं पात्राणि प्रयुज्य निरुप्य व्रीहीनुपवसेत्। यदा तु श्वस्तदा त्वनन्तरमेव नोपवासः ॥ २५ ॥

(सू) **यत्प्रातस्स्यात्तच्छृतं कुर्यात्** ॥ ९ ॥ १ ॥ २६ ॥
॥ २२३४ ॥

(भा) व्रीहयः प्रवृत्ताः सान्नाय्यस्य प्रतिनिधिरिति प्रातर्दोहेऽपि त एव स्युः। अत उच्यते—

(वृ) **व्रीहयः**—**उच्यते**—अस्यार्थः;—'इन्द्रस्य वृत्रं जघ्नुष' इत्यादि सान्नाय्योत्पत्तिब्राह्मणे सहोत्पन्नत्वात्तुल्यधर्मतया प्रतिनिधिरूपेणाप्येकस्मिन् प्रवृत्ता व्रीहयः उभयत्र भवेयुरित्याशङ्क्योच्यते; यत्प्रातस्स्यात्तच्छृतं कुर्यादिति। भिन्नयागत्वात् यदीयद्रव्यस्य दोषस्तस्यैव प्रतिनिधिर्युक्त इति।

(रु) यत्प्रातरदुष्टं स्यात्तच्छृतमेव कुर्यात्। न तु सान्नाय्यं प्रतिनिधित्वेन पुरोडाशः प्रवृत्त इति सोऽपि पुरोडाशः कार्य इति भावः ॥ ॥ २६ ॥

[1] त्तिकरूपेण विकृत—घ.

(सू) **अथेतर ऐन्द्रः पुरोडाशस्स्यात् ॥ २७ ॥**
**॥ २२३५ ॥**

(भा) इतरः—कृतनिर्वाप ऐन्द्रो वा माहेन्द्रो वा पुरोडाशः क्रियते। प्रतिनिधित्वात्सान्नाय्यधर्मा एव। यवाग्वादीनां पञ्चशराव[1]पर्यन्तानां यैस्तु हविस्सिद्धिः त औषधिधर्मा [2]अधिकार्याः। तद्द्वारम्।

(वृ) **इतरः—क्रियते**—ऐन्द्रशब्दः प्रदर्शनार्थ इति।

[सान्नाय्यधर्माणां औषधधर्मकत्वोपपादनम्]

**प्रतिनिधित्वा–तद्द्वारम्**—अस्यार्थः;—यवाग्वादीनां पञ्च-[3]शरावान्तानां सान्नाय्यप्रतिनिधित्वात् उपदेशेन स्थानिधर्मप्राप्तिर्युक्ता। तदुक्तं मीमांसकैः;—प्रतिनिधिश्च तद्वत् (३-६-१५)। नियमार्था पुनश्श्रुतिः (४-२-१४) इति न्यायेन प्रतिनिधावुपदेशतो धर्मप्राप्त्युपपादनात् प्रतिनिध्यङ्गीकारेणैव विनियोगशास्त्रार्थनिरूपणपर्यवसानम्, यथाविकृति प्राप्त्यपेक्षया अवघाताद्युपदेशानिरूपणपर्यवसानम्; यदीयोऽयमवघातस्तदीयं हविः प्रकृतिद्रव्यं संस्कार्यमिति। अतो यावत्संभवं सान्नाय्यधर्मा हविरुत्पत्त्यर्था औषधधर्मा इति सिद्धम्।

(रु) इतरो दोहः पुरोडाशस्स्यात्तस्य स्थाने निरुप्तैर्व्रीहिभिः पुरोडाशः कार्य इत्यर्थः। स चैकादशकपालो द्वादशकपालो वा ऐन्द्राग्नविकारत्वात्। तस्य च प्रागुद्वासनात्पुरोडाशधर्माः परतस्सान्नाय्यधर्माश्च पूर्ववदत्र वेदितव्याः ॥ २७ ॥

(सू) **तस्य प्रातर्दोहेन समवदाय प्रचरेत् ॥ ९ ॥ १ ॥**
**॥ २८ ॥ २२३६ ॥**

---

[1] वान्तानां–घ. [2] अपि कार्याः–ग. घ. च. [3] शरावपर्यन्तानां–ग. घ.

(रु) समवदाय सहावदाय ॥ २८ ॥

(सू) **एतदेव प्रातर्दोह आर्तिगते प्रायश्चित्तम् ॥ ॥ ९ ॥ १ ॥ २९ ॥ २२३७ ॥**

(रु) उपवासस्तत्रार्थान्निवर्तते ॥ २९ ॥

(सू) **सायंदोहेनास्य समवदाय प्रचरेत् ॥ ९ ॥ ॥ १ ॥ ३० ॥ २२३८ ॥**

(भा) दोहेन सह प्रदानं पुरोडाशस्य। अत्रापि पुनरिज्याश्रुतेः। 'अथोत्तरस्मै हविषे वत्सानपाकुर्यात्' इति यद्यपि नोपदिष्टा सूत्रकारेण। वत्सापाकरणग्रहणं च पुनरिज्या प्रदर्शनार्थं सर्वत्र।

(वृ) **दोहेन सह प्रदानं पुरोडाशस्य**—एकदेवतत्वात् निर्देशतन्त्रत्वसंभवात् दोहद्वयवत्सह प्रदानम्। स्रुक्पार्श्वेन होमः अमावास्यायां स्विष्टकृद्वत्।

**यद्यपि-दिष्टा**—पुनरिज्या।

**वत्सापा-र्वत्र**—यस्य सायंदुग्धमित्यादिना सूत्रकारेणाप्यस्मच्छाखानुवादेन पुरोडाशप्रत्यभिज्ञाप्रदर्शनात्। अस्मच्छाखायां चोत्तरस्मै हविषे वत्सानित्युपदेशात्।

(रु) गतः ॥ अत्र ब्राह्मणे कल्पान्तरेषु चान्यतरदोहार्तावुभयार्तौ च पुनरिज्योक्ता। सूत्रकारस्तु तामुभयार्तावेव वक्ष्यति। तेनान्यतरार्तौ नेष्यते। आश्वलायनस्त्वत्रानुग्रहमाह यथा अन्यतरादोषे व्यासिच्य प्रचरेयुः पुरोडाशं वा तत्स्थान इति। बाह्वृच्येऽपि सायंदोहार्तावाम्नातोऽनुग्रहः यथा प्रातर्दुग्धं द्वैधं कृत्वा तस्यान्यतरां भक्तिमातच्य तेन यजेतेति ॥ ३० ॥

[एकस्य दोहस्य दोहद्वयस्य वा विनाशे द्रव्यदेवता-
विशिष्टदर्शयागाङ्गेष्ट्यन्तरादिविधानम्, मतभेदाश्च]

(सू.) यस्योभौ दोहावार्तिमार्च्छेयुराग्नेयमष्टाकपालं निर्वपेदैन्द्रं पञ्चशरावमोदनम् ॥ ९ ॥ १ ॥ ३१ ॥ ॥ २२३९ ॥

(रु) उभयोः क्रमेण आर्तौ क्रमेण पुरोडाशौ निरुप्य सहप्रचारः पूर्ववत् । यदा पुनरनिरुप्तेऽन्यतरार्थे पुरोडाशेऽन्यस्याप्यार्तिर्युगपदार्तिर्वा तदाऽष्टाकपालपञ्चशरावौ निर्वपेत् ॥

[पञ्चशरावशब्दव्युत्पत्तिः]

तदस्य परिमाणमित्यर्थे लुप्तताद्धितः पञ्चशरावशब्दः पञ्चशरावपमितं द्रव्यमभिधत्ते ॥

तच्च शरावेण निर्वपति, त्रिर्यजुषा, द्विस्तूष्णीं, स द्वादशशरावं चरुं निर्वपति द्वादशमन्त्रेण तूष्णीमितराणीति लिङ्गात् ॥

[सप्रमाणमिन्द्रग्रहणप्रयोजनम्]

इन्द्रग्रहणमत्रापि प्रदर्शनार्थं ऐन्द्रं वा माहेन्द्रं वेति समानमिति बह्वृचश्रुतेः । सान्नाय्यप्रतिनिधित्वं च हविषोरत एव लिङ्गात्सिद्धं "पयो वा ओषधयः । पयः पयः । पयसैवास्मै पयोऽवरुन्धे" इति लिङ्गाच्च । तेन सान्नाय्यधर्मकतापि तयोः पूर्ववदेव वेदितव्या ॥

[कात्यायनोक्तविशेषोपन्यासः]

कात्यायनस्तु पञ्चशरावं प्रकृत्याह "प्रतिनिधिः प्रायश्चित्तं वा देवताश्रुतेः" इति प्रायश्चित्तार्थत्वे परतोऽप्युद्वासनादाग्नेयैन्द्राग्नधर्मता हविषोरिति विशेषः । यवाग्वादीनां प्रतिनिधित्वं तु प्रदर्शितमेव सूत्रे स्पष्टमिति सान्नाय्यधर्मतैव यथोक्ताऽनुसन्धेया ॥ ३१ ॥

(सू.) अग्निं पुरोडाशेन यजेत इन्द्रं पञ्चशरावेण ॥
॥ ९ ॥ १ ॥ ३२ ॥ २२४० ॥

(रु) देवतातद्धितेनैव सिद्धेरुत्तरविकल्पार्थोऽनुवादः ॥ ३२ ॥

(सू.) पञ्चशरावेण वोभे देवते यजेत ९ ॥ १ ॥
॥ ३३ ॥ २२४१ ॥

(रु) पञ्चशरावमेकैकमिन्द्राय निरुप्य तेनैव प्रथममग्निमिष्ट्वा तत इन्द्रं यजेत । न त्वष्टाकपालं पुरोडाशं निर्वपेदित्यर्थः ॥

[ब्राह्मणोक्तपक्षद्वयविवरणम्]

ब्राह्मणे हि "ऐन्द्रं पञ्चशरावमोदनं निर्वपेदग्निं देवतानां प्रथमं यजेत्" इति यागविधिरेवाग्नेरष्टाकपालस्य कल्पक इति प्रथमः कल्पः। ऐन्द्रादेव पञ्चशरावादग्नेर्वाचानिको याग इति द्वितीय इति द्रष्टव्यम् ॥

उभयत्र चाग्नेययोः सह प्रदानमिष्यते विभवात् ॥ ३३ ॥

(सू.) अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ॥
॥ ९ ॥ १ ॥ ३४ ॥ २२४२ ॥

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने प्रथमा खण्डिका

---

(भा) युगपदुभयोरार्तौ पञ्चशरावः। यदा तु कृते पुरोडाशे दोहनाशः तदा द्वितीयोऽप्यैन्द्र एव। शरावो मुष्टिस्रुक्प्रत्याम्नायो मल्लकः। त्रीणि मन्त्रेण द्वे तूष्णीं विकारे, द्वादश मन्त्रेणेति दर्शनात्। द्वितीय आग्नेयः। कपालोपधाने कृते पूर्वस्याग्नेयस्य प्रातर्दोहोत्पत्तेः[1]। अन्ये त्वाहुः;—एक एवाग्नेयः शाखान्तरे प्रातर्दोहोत्पत्ति[2]रग्निहोत्रकालो-

---

[1] त्पत्तिः—ङ. [2] त्तिः प्रातरग्निहोत्रलोपादिष्टिः—ग.

[1]परिष्टात् । यदा निरुप्त आग्नेये उभयोर्विनाशः तदा आग्नेयं निरुप्य पञ्चशरावः । उत्पन्ने त्वाग्नेये यदा दोहनाशः तदा पञ्चश[2]राव एक एव केवलः । [3]उभयोराग्नेययोः सह प्रदानं विभवात् । यदापि पञ्चशरावेणोभे देवते तदाऽप्याग्नेयस्य पञ्चशरावस्य चै[4]कत्वात्सह प्रदानम् । केचित्त्वाहुः ;– अग्निं पुरोडाशेन यजेतेति पुरोडाशाभ्यामित्यवचना-[5]न्नानाप्रदानमाग्नेययोरिति । तदर्थं चाग्निं पुरोडाशेत्यादिनिर्देशः । इन्द्राये[6]ति निरुप्य तेनाग्निश्चेन्द्रश्च पश्चादिज्येते । केचित्त्वाहुः ;— इन्द्राय व्रीहीन्निरुप्येति रात्रौ संकल्पमात्रमिन्द्राय कुर्वन्ति काल एव निर्वापः[7] ; तदनुपपन्नम् ; पय एवारभ्य गृहीत्वोपवसतीति ग्रहणं हि निर्वाप एव [8]यस्या गृहीतं हविरभ्युदियादिति न्यायस्तु यत्रागूरैन्द्रः पुरोडाशः पञ्चशरावश्च अङ्गविधय एते निमित्तसंयोगात् ।

इति धूर्तस्वामिभाष्ये नवमप्रश्ने प्रथमा खण्डिका

---

(वृ) युगपदु–रावः—प्रथममेकस्य नाशे नैमित्तिके द्वितीयस्यापि नाशो युगपदार्तिः । आर्तिक्रमेण निर्वापः ।

यदा तु –न्द्र एव—प्रथममन्यतरार्तौ नैमित्तिके तु पुरोडाशे [9]निष्पन्ने द्वितीयस्यार्तौ पुनरैन्द्र एव पुरोडाशः न पञ्चशरावः । [10]आरब्धे नैमित्तिकेऽपि क्रमेणार्तौ पञ्चशराव इति केचित् ।

[नोपपत्तिकं द्वयोः तूष्णीकविकारत्वोपपादनम्]

शरावो–दर्शनात्—अस्यार्थः ;—वाजपेये सप्तदशशरावे चरौ नैवारे द्वादश मन्त्रेण तूष्णीमितराणीति न्यायप्राप्तं, सूत्रकारोक्तं चतु-

---

[1] पदिष्टा–च. [2] राव एव केवल इति–ङ. च. [3] आग्नेययोः–ग. घ. [4] कदेवतात्वात्–ग. घ. च. [5] चनान्नाप्रदान–ङ. [6] य निरुप्य–ग. घ. च. [7] पः श्वोभूते निर्वापकाले इन्द्राय निर्वापः–ग. घ. [8] अथ यस्य-ग. घ. [9] निर्वृत्ते–ग. घ. [10] पृथगेकस्मिन् कालेऽनारब्धे–ट.

मुष्टिनिर्वाप[1]विकारे एकस्या मुष्टेश्चत्वारि चत्वारि शरावाणीति प्राप्तम्। तत्र चतुर्णां तूष्णीकविकारत्वे सति अन्त्यस्यापि तूष्णीकविकारत्वं 'अन्तालोपो विवृद्धिर्वा (आप. परि. ४-१४) इत्यन्तविवृद्ध्या तस्यापि तूष्णीकविकारत्वं युक्तमिति मत्वा तूष्णीमितराणीत्युक्तम्। तद्वदत्राप्यन्तविवृद्ध्या द्वे तूष्णीकविकारे [2] इत्युक्तम्।

**द्वितीय आग्नेयः**—नित्यादन्यः स इत्यस्यानुवादः कृतः।

**कपालोप-त्पत्तेः**—नित्यस्याग्नेयस्य कपालोपधानोत्तरकालं प्रातर्दोहोत्पत्तिः[3]। नित्यस्य निर्वापकाले उभयोरार्त्यसंभवा[4]न्नैमित्तिकाग्नेयं नित्याद्भिन्नमेव।

**अन्ये त्वाहुः-रिष्टात्**—अत आग्नेयनिर्वापात्प्रागेव उभयदोहार्तिसंभवान्नित्यस्यायमनुवाद इति[5]। एवं च;—

**यदा अनिरुप्त-एव केवलः**—अन्येषां पक्षे [6] अनिरुप्त आग्नेय उत्पन्ने त्वाग्नेय इत्यनेनाग्नेयमष्टाकपालं निर्वपेदित्यनुवादेन नित्यस्य पञ्चशरावोऽनैमित्तिको विधीयत इति सूत्रे व्याख्या कृता।

**उभयोराग्नेययो-भवात्**—एकदेवतत्वादुभयोस्सह प्रदानसंभवान्नित्यस्य नैमित्तिकस्य च हुतानुमन्त्रणं अग्नेरहं देवयज्ययान्नादो भूयासमिति समुच्चयः।

**यदापि पञ्च-हप्रदानम्**—नित्यस्याग्नेयस्य पुरोडाशस्य पञ्चशरावाग्नेयस्य च सहप्रदानम्। तत्राप्याशिषोस्समुच्चयः। ऐन्द्रपञ्चशरावस्य पृथक्प्रदानम्।

---

[1] विकारे सप्तदशशरावे एकैकस्या मुष्टेः—ग. घ. [2] इति युक्तः—ग. घ. [3] त्तेः—ख. ग. घ. [4] वात्तन्निमित्ताग्नेयं—घ. [5] इति। अन्येषां पक्षे—कृताः इदानीं स्वमतेनोच्यते। आग्नेययोः सहप्रदानं विभवादिति। एकदेवतत्वादुभयोः ............घ. [6] निरुप्त—घ.

केचित्त्वाहुः-दिनिर्देशः—पूर्वस्मिन् पक्षे अग्निं पुरोडाशेने-त्यनुवादः उभयोः पञ्चशरावं विधातुम् ।

[हविर्निर्वापयागयोस्सदृष्टान्तं विभिन्नदेवताकत्वे उपपत्तिकथनम् ]

इन्द्राय नि-दिज्येते—अस्यार्थः ;—अस्मच्छाखायामैन्द्रं पञ्चशरावमोदनं निर्वपेदिति निर्वापकाल इन्द्रमुक्त्वा पश्चादग्निं देवतानां प्रथमं यजेदिति यागे अग्नयवयवनिर्देशान्निर्वापकाल इन्द्राय निरुप्य यागकाले तस्मादेव हविषः प्रथममग्निमिष्ट्वा पुनरिन्द्रं यजेतेति । अन्यस्मै निरुप्यान्यस्मै यागोऽनुपपन्न इति चेत् ; सवनीयहविषामिव यागे देवतापनयो देवतान्तरसम्बन्धश्चोपपद्यत एव । आश्वलायनमता-च्चैवमेव । अस्मिन्पक्षे उभयं पञ्चशरावेण ।

केचित्त्वाहुः-निर्वाप इति—सायंदोहार्तौ सायंकाले नैमि-त्तिकसंकल्पमात्रमिति ।

तदनुपपन्नम्-भ्युदियादिति—ग्रहणस्य निर्वापपरत्वदर्श-नात् । अतो गृहीत्वोपवसतीति रात्रावेव निर्वापः कर्तव्य इति ।

[सौत्रकल्पान्तरस्य सदृष्टान्तं नैमित्तिकप्रायश्चित्तो-पदेशतात्पर्यकत्वम् ]

न्यायस्तु-योगात्—अस्यार्थः ;—यवाग्वादिषु द्रव्यान्तर-देवतान्तरसंयोगेन नैमित्तिककल्पान्तरचोदनान्न सान्नाय्ययागप्रयोग-विकारमात्रोद्देशः । अतो भिन्न जुहोतीतिवत् प्रकरणान्नैमित्तिकाङ्गत्वेन प्रायश्चित्तोपदेशः । अत एव पुनरिज्याविधानम् । इतरथा कृतस्य कर्मणः पुनरनुष्ठानमनर्थकम् । अभ्युदयेष्टौ तु त्रेधा तण्डुलानित्यादि-प्रकृतद्रव्यवद्यागप्रत्यभिज्ञानात् तत्र देवतान्तरसम्बन्धादिविकारमात्रोप-देशात् दर्शस्यैव प्रयोगान्तरत्वान्नाङ्गत्वमुपपद्यते । यवाग्वादिविषय-

स्त्वङ्गविषय एवेति मीमांसकाः। (६-४-२१) अस्मिन् पक्षे कर्मान्तरतयौषधविकृतित्वान्न सान्नाय्यधर्मः। तत्राग्नेयाविकारा यवागूः। ऐन्द्रः पुरोडाशः पञ्चशरावश्चैन्द्राग्नविकारौ सान्नायस्थाने। यद्यपि सूत्रकारेण तत्स्थाने वायव्यां यवागूमिति [1]स्थानापत्तिनिर्देशः कृतः। तथापि श्रुतौ वायव्यां यवागू निर्वपेदित्येतावन्मात्रोपदेशात् न्यायानुसारणाङ्गत्वमेव। तत्स्थाने इत्यस्य चैवं व्याख्या तत्काल इति। नैमित्तिकाङ्गपक्षेऽपि सायंदोहार्थद्रव्यपाने सायंकाले निर्वापः प्रातर्दोहार्थद्रव्यपाने प्रातःकाल इति। आमिक्षायां न सान्नाय्यप्रायश्चित्तमिति भरद्वाजः॥

इति धूर्तस्वामिभाष्यवृत्तौ नवमप्रश्ने प्रथमा खण्डिका

---

(रु) व्याख्यातः ॥ ३४ ॥

इति श्रीमद्रुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
नममप्रश्ने प्रथमा खण्डिका.

---

[यागानुष्ठानदिने पत्न्यां रजस्वलायां तत्परित्यागपूर्वकं स्वकाले कर्मणः कर्तव्यत्वव्यवस्था]

(सू) यस्य व्रत्येऽहन्पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत ॥ ९ ॥ १ ॥ ३५ ॥ २२४३ ॥

(भा) व्रत्यमहः—व्रतोपायनप्रभृतियावद्व्रतविसर्गः। अनालम्भुका—आर्तवोपजने सति नालभते भाण्डादीनीति। अपरुद्ध्य यजेत—न तां पत्नीकार्याणि कारयेत्।

---

[1] स्थानवर्तित्व—ट.

**[तत्र प्राजापत्यस्मृतिवचनमुपबृह्मणीकृत्य मतद्वयोपपादनम्]**

(वृ) **न तां पत्नी-येत्**—पत्नीकार्याणामाज्यावेक्षणादीनां पत्नीसंस्काराणां सन्नहनादीनां च निवृत्तिः। अत्र विषयशुद्धिः ;—व्रतोपायनादूर्ध्वं रजस्युत्पन्ने उपरोध इति केचित्, संकल्पादूर्ध्वमित्यपरे। तथा प्राजापत्यस्मृतिः ;—

प्रक्रान्तमग्निहोत्रादि यत्किञ्च श्रुतिचोदितम्।
आर्तवाभिप्लुतां नारीं विहाय कुरुते द्विजः॥

इति।

**[सङ्कल्पात्प्राक् रजस्वलायामपि मुख्यकाल एव कर्मणोऽनुष्ठेयत्वं, इति स्मृतिवचनस्य केषांचिद्व्याख्या]**

इदमेव वचनं केचिदेवं व्याचक्षते ;—यावज्जीवं संकल्पदशायां पत्न्याः प्रतिमासं रजःप्रादुर्भावमभ्युपेत्यैव यावज्जीवमधिकारात् ब्राह्मणे च पत्न्यनालम्भुका भवतीति वर्तमाननिर्देशाच्च प्रयोगसंकल्पात्पूर्वं रजस्युत्पन्नेऽप्यपरुध्य यागः; मुख्यकालातिक्रमस्यायुक्तत्वादिति। आहिताग्नितया यावज्जीवमधिकारे[1] सति रजसस्तत्कर्तृत्वमात्रप्रतिबन्धकत्वात् स्वकाले कर्म कर्तव्यमेवेति।

**[सङ्कल्पानन्तरं रजस्वलायां कर्मणोऽनुष्ठेयत्वमिति मीमांसकमतम्]**

मीमांसकास्तु ;—प्रतिप्रयोगमधिकारभेदात् यावज्जीवार्थमेकसंकल्पाभावात्प्राग्रजस्वलायामधिकाराभावात् कर्तृत्वसंपादनाशक्ते[2]रुचितत्वात् प्रयोगशक्त्यभावनिश्च[3]यात्। तेषामपि संकल्पादूर्ध्वं रजस्वला चेत् अपरुध्य याग एवेति।

---

[1] रे असति-**ट.** [2] क्तेर्निगमितत्वात्-**ट.** [3] यो न तेषामपि-**ग.**

[एकपत्नीकस्य सङ्कल्पानन्तरं रजस्वलायां सत्यां श्रौतकर्मणोऽनुष्ठेयत्वव्यवस्थापनम्]

व्रतोपाय–विसर्गः—इत्येतत् व्रत्यशब्दनिर्वचनार्थम्। न तु संकल्पवेलायामेव रजस उत्पत्तिकालनियमार्थम्। तथा सति व्रत-विसर्गानन्तरं रजस्युत्पन्नेऽपि कर्मविरोधा[1]संभवेन कर्मसमापनं न स्यात्। [2]अत ऊर्ध्वं पत्नीकार्याभावात्समापनमिति चेत् पूर्वमपि पुष्टि[3]मत्युपस्थानादूर्ध्वं पत्नीकार्याभावात् [4]यावद्व्रतविसर्ग [5]इत्यपि विवक्षितं स्यात्। तस्मा[6]द्व्रतकाले अनालम्भुकत्वमात्रं विवक्षितं न पुनस्तदानीमेव रजस उत्पत्तिः। अत एवाग्न्यन्वाधानप्रभृत्यपरुध्य यजेतेति बोधायनेनोक्तम्। तस्मात् श्रौते कर्माणि संकल्पिते रजस्वला चेत् तां विहाय कर्तव्यमेव।

[बहुपत्नीकस्य तु शुद्धया पत्न्याऽनुष्ठेयत्वम्, तत्र मतभेदाः, तदङ्गप्रायश्चित्तादीनि च]

व्रत्येऽहन्निति ब्राह्मणानुकरणं सूत्रकारस्य कर्मकालोपलक्षणार्थम्। बहुपत्नीकस्य तु शुद्धया पत्न्या कार्याणि कर्तव्यानि। अशुद्धा-मपरुध्य यागः[7]। आधानेऽपि संकल्पात्प्रभृत्यपरुध्य कर्तव्यमिति केचित्।

अपरे त्वाहिताग्नितयाऽग्निसाध्यकर्मस्वधिकारे संपन्ने संकल्पादूर्ध्वं रजस्युत्पन्ने कर्तृत्वमत्र परित्यज्यापि प्राप्ते अवश्यकर्तव्यत्वात् अपरोधो युक्त इतरकर्मसु आधानस्य[8] त्वधिकारसंपादकत्वात् कालान्तरेऽ-प्याधा[9]नाविरोधात् सहकर्तृत्वासिध्यर्थमुत्सृज्य कालान्तर आधान-मित्याहुः।

---

[1] रोध-ट. [2] कथं तदूर्ध्वं घ. [3] मतीत्यु–घ. [4] वावभृथविसर्ग–घ. [5] इत्यविवक्षितं स्यात्–ट. [6] द्व्रत्यकाले-घ. [7] गादि–ग. घ. [8] नस्य अधिकार–ख. ग. घ. [9] धानवि–ख. ग. घ.

अत्र संभारेषु गार्हपत्याधाने कृत आहवनीयादियोनिरूपस्यापि संपन्नत्वात् तस्य परित्यागे हेत्वभावान्नोत्सृज्य कालान्तरे प्रयोगः। द्वितीयेष्ट्यादीनां स्नानादूर्ध्वमनुष्ठानं द्वादशाहादिसंकल्पेन कालान्तरेऽपि संभवात्। सेष्ट्याधानसमाप्त्यनन्तरं रजस्वला चेत् स्नातायां तस्मिन्नहनि सप्तहोतारं हुत्वा सायमग्निहोत्रारम्भः।

प्रथमपूर्णमास्यारम्भात्पुरस्ताद्रजस्वला चेत् उत्सृज्य विभ्रष्टेष्टिं कृत्वा आगामिपौर्णमास्यामारम्भः। तथा पिण्डपितृयज्ञाग्रयणपश्वाद्यारम्भात्पूर्वं रजस्वला चेत् कालान्तर आरम्भः तद्विभ्रष्टेष्टिप्रायश्चित्तं कृत्वा।

केचित्तु विभ्रेषप्रायश्चित्तं नेच्छन्ति; तच्छिन्त्यम्;

प्रथमदर्शारम्भात्प्राग्रजस्वला चेत् स्नातायां विभ्रष्टेष्टिं कृत्वा गौणकालेऽपि दर्शानुष्ठानमुभयोः प्रक्रान्तत्वात्।

केचिद्विभ्रष्टेष्टिं विहाय पथिकृद्वैश्वानरौ कुर्वन्ति। चातुर्मास्येषु कृते वैश्वदेवे वरुणप्रघासकाले प्रागारम्भाद्रजस्वला चेत् स्नातायां पथिकृन्मुखादिकल्पेन।

[अग्निष्टोमसङ्कल्पानन्तरं रजस्वलायां मतभेदेनानुष्ठेयांशाः]

सोमे प्रवृत्ते रजस्वला चेत् प्रयोगविशेषः। संकल्पिते क्रतौ प्राग्दीक्षणीयान्वाधानाद्रजस्वला चेत् त्रैधातवीयां विभ्रष्टेष्ट्यर्थं कृत्वा कालान्तर क्रतुसंकल्पादीति केचित्।

अन्ये तु प्रक्रान्तमग्निहोत्रादीत्यनुसारेणापरुध्य याग इति। बोधायनीयवचनादग्न्यन्वाधानप्रभृत्यवरुध्यैव यजेत। तथै[1]काहाना-महर्गणेष्वप्येवमिति। वाजसनेयिनां तु पत्न्युदक्या दीक्षारूपाणि

[1] काहाहीनाहर्ग—ग.

विहाय सिकतास्वासीतोपस्रवणात् तिष्ठे[1]त्सन्धिवेलयोर्वेदिसमीपे सुत्यासु इतरेष्वहस्सु शालायाम् । त्रिरात्रान्ते गोमूत्रगोमयमिश्रणोदकेन स्नापयित्वा परिधानादि करोति । सान्निपातिकं वासो [2]दीक्षादि दक्षिणी-[3]याद्यतिरिक्तं यत्तत्पुनः कुर्यात् ।

प्रजातायां च सोममध्ये दशरात्रादूर्ध्वं स्नानादि पूर्ववत्करोति । दीक्षणीयोत्तरकालमेव[4] प्रयोगः ।

यत्पुनर्न गर्भिणीं स्त्रीं दीक्षयेदित्येके । "अयज्ञीया गर्भाः" इति श्रुतेरिति वाजसनेयकम् । अत्र न गर्भिणीं दीक्षयेदिति गर्भवत्पश्वालम्भननिषेध इति कल्पोपाध्यायेन व्याख्यातम् ।

[सौमिकाधाने, प्रवर्ग्ये, औपवसथ्ये, सुत्यायां, अर्वाग्दीक्षणीयान्वाधानाच्च रजस्वलायामनुष्ठेयांशनिर्णयः]

सोमाधाने पुरा दीक्षणीयाया अनालम्भुका स्यान्नाग्निहोत्रं जुहोति । त्र्यहे पर्यवेते स्नानादि । अस्मिन् पक्षे प्राग्दीक्षणीयायां रजस्वलायामपि न कर्मत्यागः । त्रिरात्रान्ते कर्मानुष्ठानं स्नातायाम् ।

सोमाधाने तु बोधायनीये प्रयोगविशेषः । प्रवर्ग्यारम्भात्प्राग्रजस्वलायां कृतान्ते विरम्य त्र्यहे पर्यवेते लोहिते छिन्धीति केनचिदुक्ते गोमूत्रमिश्रणोदकेन योनिदेशं प्रक्षाल्य मिश्रोदकेन स्नापयित्वा दर्भतरुणैः प्लावयित्वा वस्त्रजालयोऋाण्यपवीय प्रक्षाल्य विधिवत्प्रयोजयेत् । त्रिरात्रं हविष्यभोजनम् । ततः कृतान्तादारम्भः । प्रारब्धे प्रवर्ग्ये रजस्वला चेत्तदहः प्रयोगसमाप्तिः । औपवसथ्ये सुत्यायां च रजस्वलायां प्रागवभृथादपरुध्यानुष्ठानम् । स्नातायामवभृथादि । अत्र वचनन्यायानुसारेण निर्णयः ।

[1] त्सन्धि–ट. [2] दीक्षा दीक्षणीयाद्यति - घ. [3] याद्यति–ग. [4] मेव–ग. घ.

दीक्षणीयान्वाधानात्प्राग्रजस्वलायां तिस्रो दीक्षादिषु सुत्याकालानुपरोधसंभवाद्विरम्य तदन्ते स्नानादूर्ध्वं कृतान्तादारभ्य प्रयोगः। कालोपरोधे त्ववरुध्य यागः। प्रक्रान्तमग्निहोत्रादीति प्राजापत्यस्मृतेः दीक्षणीयान्वाधानोत्तरकालं अपरुध्यैव प्रयोगः। प्रागवभृथाद्दीक्षणीयायां कृतायामपि चतस्रो दीक्षादिषु कल्पेषूपसत्कालानुरोधेन स्नानसंभवे पूर्वोक्तप्रकारेण स्नात्वा प्रयोगः।

केचिद्बोधायनवचनबलात्कालोत्कर्षेऽपि न विरोध इत्याहुः। तच्चिन्त्यम्; अपक्षाणप्रायश्चित्तं कालवृद्धिभयादिति भाष्यकारेणोक्तत्वात्।

अत्र त्रिरात्रीणीति वचनात् रजस्वलायां स्नानदिवसेऽपि श्रौतकर्माणि कर्तव्यान्येव; न तु पञ्चमेऽहनीति।

[ व्रत्यशब्दादिविवरणम् ]

(रु) व्रतार्हमहः व्रत्यमहः तच्चौपवसथ्यम्। तत्रैव व्रतोपदेशात्तस्मिन्नहनि यदि पत्नी आर्तववशादनालम्भुका स्पर्शानर्हा स्यात्तदा तामपहाय यजेतैत्र दर्शपूर्णमासाभ्यामित्यर्थः। अथवा व्रतशब्दः कर्मवाची, यथा शिक्षति व्रतेनेत्यादौ, तत्प्रतिनियतमहर्व्रत्यमहः तस्मिन्ननालम्भुकायामपि पत्न्यां तया विना तत्कर्म कुर्यादेवेत्यर्थः। तद्यथा पर्वणोर्दर्शपूर्णमासौ अमावास्यायां पिण्डपितृयज्ञः सायम्प्रातरग्निहोत्रमित्यादि। व्रत्येऽहनीति वचनाद्येन प्रतिनियतं तत्तत्रानालम्भुकायां क्रियते॥ एतदुक्तं भवति यस्मिन्काले यस्यां क्रियायां प्रत्यवायः प्रायश्चित्तं वा, भ्रश्येच्च मुख्यः कालस्तत्तत्रानालम्भुकायामपि क्रियते नेतरदिति। तेन काम्येष्टयः पशुसोमाश्च यस्मिन् पर्वण्यनालम्भुका न तस्मिन्क्रियन्ते। क्रियन्त एव तस्मिन्यदा प्रक्रान्ता भवन्ति प्रक्रान्तस्य कर्मणस्तत्कालं प्रतिनियमात्। एतेनाग्न्याधेयादेरपि प्रक्रान्तस्य तत्कालापवर्गो व्याख्यातः॥

[कात्यायनादिमतविशेषवर्णनम्]

सोमे तु प्रक्रान्तेऽनालम्भुकायां नियमाविशेषानाह कात्यायनः पत्न्युदक्यादीक्षारूपाणि निधाय सिकतास्वासीतापस्रवणात्तिष्ठेत्संधिवेलयोर्वेदिसमीपे सुत्यासु त्रिरात्रान्ते गोमूत्रमिश्रेणोदकेन स्नापयित्वा परिधानादि करोति सांनिपातिकं प्रजायाश्च दशरात्रादूर्ध्वं स्नानादि । न गर्भिणीं दीक्षयेदित्येकेऽयज्ञिया गर्भा इति श्रुतेः ; नानूबन्ध्याप्रकरणादिति । प्रजातायां तु सत्यप्याशौचे यजमानस्याग्निहोत्रादावविकार उक्तो धर्मशास्त्रकारैः ॥

बोधायनस्तावत् नाशुचिः काम्यं तप आतिष्ठन्न यजेत न स्वाध्यायमधीयीतान्यत्राग्निहोत्रदर्शपूर्णमासेभ्य इति ॥

मनुनाप्युक्तं 'न वर्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः । न च तत्कर्म कुर्वाणस्सनाभ्योऽप्यशुचिर्भवेत्' इति ॥

याज्ञवल्क्योऽप्याह 'वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदिताः' इति ॥ तथा नित्यानि निवर्तन्ते वैतानवर्जमिति गौतमः ॥

जाबालिश्चाह 'जन्महन्योर्वितानस्य कर्मत्यागो न विद्यते' इति ॥ एतेन जातेष्टिरपि व्याख्याता ॥ तत्र त्वाह भारद्वाजः कथं जातेष्टिरित्यूर्ध्वं दशम्या इत्याश्मरथ्यो जात एवर्त्विजः कुर्युरित्यालेखन इति । बोधायनश्चाह 'स ह स्माह बोधायन उत्थितायां निर्वपेदिति, जातमेव विदितमिति शालीकिरिति ॥ ३५ ॥

**(सू) जघनेन वेदिमन्तर्वेदि वोदक्शुल्बं सन्नहनं स्तृणीयात् ॥ ९ ॥ १ ॥ ३६ ॥ २२४४ ॥**

(भा) जघनेन वेदिं पश्चाद्वेदेः अन्तर्वेदेः उदक्शुल्बं उदगग्रं शुल्बे निपातितेऽन्युदग्भवति उदगग्रस्य पत्नीयोक्त्रस्य ।

(वृ) **जघनेन–वेदेः** शुल्बं सन्नहनामिति । सन्नहनं योक्त्रम् ।

**उदागिति**–उदग्देशे ; स्तरणं न भवति, किन्तूदगग्रस्तरणमेव, जघनेन वेदिमिति विरोधात् । तस्मादुदगग्रशुल्बस्तरणादुदक्शुल्बता भवति । एतदेव स्पष्टयति ;—

**उदग–स्य**—स्तरणादिति शेषः । अत्र 'प्रोक्षणीरासादय' इति प्रैषे 'पत्नीग्ं सन्नह्य' इति पदद्वयनिवृत्तिः प्रतिप्रयोजनम् । पृथङ्मन्त्रत्वात्प्रैषस्य न प्रकृतौ प्रयोगविकारदोषः । तथा च वक्ष्यति अग्नीन् ज्योतिष्मतः कुरुतेति । अतः प्रकृतावपि पदद्वयलोपः ।

(रु) योक्त्रं तु स्वकाले दक्षिणतःपाशमुदक्शुल्बं पश्चाद्वेदेरन्तर्वेदि वा तूष्णीं निदध्यात् ॥ ३६ ॥

(सू) **यदा त्रिरात्रीणा स्यादथैनामुपह्वयेतामूमहस्मि सात्वं द्यौरहं पृथवी त्वं सामाहमृक्त्वं तावेहि संभवाव सह रेतोदधावहै पुंसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति ॥ ९ ॥ १ ॥ ३७ ॥ ॥ २२४५ ॥**

(भा) त्रिरात्रीणा–त्रिरात्रातीता । यदहः करोत्यृतुगमनम् । 'तामिष्टोपह्वयेत' इत्यनन्तरं स्यात् । अतस्त्रिरात्रीणेत्युच्यते । व्याहरणमेवैतैर्मन्त्रैः । मैथुनार्थमुपाह्वानं । पश्चादभिमन्त्रणं 'विष्णुर्योनिं कल्पयतु' इति ।

(वृ) **त्रिरात्रीणा–मनम्**—अप्रतिषिद्धदिवसे ।

**इष्टो–रं स्यात्**—ऋतुगमनम् ।

**अतस्त्रि–च्यते**—अप्रतिषिद्धरात्रौ गमनार्थम् ।

**व्याहरण–न्त्रैः**—अत्र न वाग्यमनपक्षः, मन्त्रविधानात् ।

**मैथु–ह्वानम्**—एतैः मन्त्रैः तावेहि संभवावेति ।

**पश्चादभिमन्त्रणं–त्विति**—तेषामपि ऋत्वनन्तरगमनेऽभिमन्त्रणार्थतया विहितत्वात् । तत्र हिंकृत्य गमनम् । तस्मादृत्वनन्तरगमने मन्त्रव्याहरणम् । अन्यत्रानियमः ।

[**पत्न्या ऋतौ कर्माङ्गप्रायश्चित्तार्थं गमनायाह्वानम्**]

(रु) यदेयमतिगतत्रिरात्रा स्नाता स्यात्तदैनामृतुगमनार्थमुपह्वयेत तच्च कर्मण एव प्रायश्चित्तार्थं न तु पुरुषार्थम् । कस्मात् । "अर्धो वा एतस्य यज्ञस्य मीयते । यस्य व्रत्येऽहन्पत्न्यनालम्भुका भवति तामिष्ट्वोपह्वयेत" इत्युक्त्वा "ऽर्ध एवैनामुपह्वयते, सैव ततःप्रायश्चित्तिः" इति श्रुतेः ॥ ३७ ॥

[अग्निहोत्रादिद्रव्यस्य विशेषतः स्यन्दने दोहनातिरिक्तसंस्कारस्य कर्तव्यत्वव्यवस्था]

(सू) **यस्याग्निहोत्रं सान्नाय्यं वा विष्यन्देतोदङ्परेत्य वल्मीकवपामुद्धृत्य प्रजापते न त्वदेतानीति प्राजापत्ययर्चा वल्मीकवपायामवनीय भूरित्युपस्थायान्यां दुग्ध्वा पुनर्जुहुयात् । यदि सान्नाय्यमन्यदा गमयेत् ॥ ९ ॥ १ ॥ ३८ ॥ २२४६ ॥**

(भा) उद्वर्तमानस्य विविधं स्यन्दनं विष्यन्दनम्; यदि प्राप्नोत्यग्निं भूमिं वा उदग्गत्वा यो वल्मीकः यस्य वपायामवनयति वम्रीभिरुद्धृता मृत्तिका वल्मीकः; वल्मीक एव वल्मीकवपा । तस्या उद्धननं तस्या अपनयनम् । यथा बिलमपाह्रियते प्रजापत इति बिले

क्षेपः सर्वस्य न स्वाहाकारः । होमो न भवतीति । भूरित्युपस्थानमुपांशु । हविस्संस्कारो दोहनेन विनाप्यन्यस्यागमः । सान्नाय्यकुम्भ्यामधि-श्रयणादि ।

(वृ) उद्वर्त–दनम्—पच्यमानस्याग्निहोत्रादिद्रव्यस्योद्वर्तमानस्य विविधं स्यन्दनं विष्यन्दनम् ।

यदि प्रा–मिं वा—अग्निभूमिस्पर्शाभावे कुम्भीबिलाद्बहिर्गमन-मात्रं नैतत् । तत्रान्तरितप्रायश्चित्तं सर्वप्रायश्चित्तं च ।

प्रजापत इति–वतीति—यद्यपि प्राजापत्येति निर्देशाद्देवता-स्मरणम् ; तथाऽप्यवनयनचोदनया होमरूपत्वाभावान्न स्वाहाकारः । अतोऽन्यत्रापि होमचोदनारहितेषु निरसनादिषु न स्वाहाकारः । न देवतानिर्देशः ।

भूरि–पांशु—भूतो वै प्रजापतिरिति प्राजापत्यत्वान्मन्त्रस्यो-पांशुत्वम् ।

हवि–णादि— यद्यपि 'यदि सान्नाय्यमन्यदागमयेत्' इत्यत्रा-न्यस्य पयसः प्रक्षेपमात्रविधिः, तथापि कुम्भ्या उपनतित्वात्पुनरधि-श्रयणादिः समन्त्रकदोहनव्यतिरिक्तः, संस्कारः कर्तव्यः । अग्निहोत्रे तु वल्मीकवपायां.........मुत्सृज्य........पुन...........रणादिः । ध.

(रु) क्वथनवशादुद्वृत्तस्याधःपतनं विष्यन्दनम् । व्याख्याता वल्मीक-वपा । तामुद्धृत्य विवृतबिलां कृत्वा तस्या बिलेऽवनीय पुनर्जुहुयादाग्नि-होत्रम् । अवनयनापेक्षया पुनश्शब्द आवर्तयेत् । दोहनेन विनाऽन्यदा गमयेदुत्पादयेत् ॥ ३८ ॥

**(सू) यदि कीटोऽवपद्येत मध्यमेनान्तमेन वा पलाशपर्णेन 'मही द्यौःपृथवी च न' इति द्यावा-**

पृथिव्ययर्चान्तःपरिधि निनीयान्यां दुग्ध्वा पुनर्जुहुयात्। यदि सान्नाय्यमन्यदा गमयेत् ॥ ९ ॥
॥ १ ॥ ३९ ॥ २२४७ ॥

(भा) कीटः—अमेध्यसेवी। यदि पतति पिण्डसंवर्तकः अग्निहोत्रे सान्नाय्ये वा। अन्तःपरिधीति देशमात्रं मध्यमपरिधिदेशस्य।

(वृ) कीटः–सेवी—क्रिमिः।

अग्निहो–य्येवा—अविशेषेण विधानात्।

अन्तःपरि–देशस्य—अन्तः परिधीति देशमात्रस्योपलक्षणम्; मध्यमपरिधिदेशस्यान्तरा तस्य प्रथमदेशत्वात्। द्यावापृथिव्ययेति ध्यानार्थम्।

(रु) कीटोऽमेध्यसेवी क्रिमिः। अन्तःपरिधीति देशोपलक्षणमग्निहोत्रे ॥ ३९ ॥

[होमार्थद्रव्योपरि वर्षबिन्दुनिपतने कर्तव्यप्रायश्चित्तम्]

(सू) यस्याग्निहोत्रमववर्षेत् 'मित्रो जनान्कल्पयति प्रजानन्मित्रो दाधार पृथवीमुत द्याम्। मित्रः कृष्टीरनिमिषाऽभिचष्टे सत्याय हव्यं घृतवज्जुहोत' इति तत्कृत्वाऽन्यां दुग्ध्वा पुनर्जुहुयात् ॥ ९ ॥
॥ १ ॥ ४० ॥ २२४८ ॥

(भा) पुनरग्निहोत्रवचनान्न सान्नाय्यस्य। अवदृष्टस्य प्रायश्चित्तम्। 'स जुहुयात्' इति श्रुतेः। 'मित्रो जनान् कल्पयति प्रजानन्' इति पूर्वा[1]हुतिः। [2]तत्संस्थाप्य मार्जनान्तं पुनर्होमो विहरणादिमार्जनान्तः[3]। उपदेशो वृष्ट्यन्तः पूर्वो होमः। द्वितीयो दोहनादिमार्जनान्त इति।

---

[1] पूर्वाहुतिं संस्थाप्य—च. घ. [2] संस्थाप्य—क. ङ. [3] 'न्त एव' इति वृत्तिपुस्तकेषु पाठः.

(वृ) अववृष्ट-श्चित्तम्--विष्यन्दनकीटपतनयोरग्निहोत्रे सान्नाय्ये चोपदेशादववृष्टेऽपि तथा माभूदग्निहोत्र एव कथं स्यादित्यग्निहोत्र-ग्रहणम्। अतस्सान्नाय्ये नैतत्प्रायश्चित्तम्।

स जुहु र्वाहुतिः—अस्यार्थः ; सूत्रकारेण मित्रो जनानित्यनेन होमकरणनिर्देशाभावेऽपि स जुहुयादिति श्रुतेः मैत्र्या पूर्वाहुतिं कृत्वा यथापूर्वं समाप्य विहरणादि, पुनः कृत्स्नो होमः। तत्कृत्वेति क्रिया-न्तरानुपदेशात होमकर्म कृत्वेत्यर्थः। तदाह ;

तत्संस्था-न्तः—इति।

उपदेशो-तो होमः—हुत्वाऽप उपस्पृश्येत्यन्तः।

द्वितीयो-न्त इति--निमित्ते सति पूर्वहोमस्य मन्त्रान्तर-विधानेन देवतान्तरानुप्रवेशात् नित्यहोमस्य चाकृतत्वादग्निहोत्रप्रकरणे च वृष्टिरसीत्यत्र हुत्वाप उपस्पृश्येति पुनर्वचनं तदन्तरनैमित्तिकनिवेशा-र्थमिति व्याख्यातत्वात् कालबाधप्रसङ्गाच्च पूर्वो न कृत्स्नसंस्थः, किं तु दोहनादीति दोहनात्पूर्वभाविनां कृतत्वात् द्रव्यस्य चापेक्षितत्वात्। दोहनादिमार्जनान्तो द्वितीय इत्युपदेशः। अववर्षणं—होमार्थद्रव्यस्योपरि वर्षबिन्दुपातः तण्डुलादेरपि। कीटपातश्च तण्डुलादेरपि। विष्यन्दनं तु पाक्यानां यवाग्वादीनां द्रव्याणाम्।

(रु) पुनरग्निहोत्रग्रहणात्सान्नाय्ये नायं विधिः। अववर्षेत् उपरि-वर्षेत्पर्जन्यः। तत्कृत्वा तदववृष्टं मैत्र्या हुत्वेत्यर्थः स जुहुयान्मित्रो जनानिति श्रुतेः। ततोऽन्यां दुग्ध्वा होमः॥ केचित्तु मित्रो जनानिति पूर्वाहुतिमन्त्रेणाग्निहोत्रं हुत्वा पुनर्होममिच्छन्ति। तदाप्यन्यां दुग्ध्वा पुनर्जुहुयादिति वचनाद्दोहहोमयोरेवाऽऽवृत्तिः। यत्तु पुरस्ताद्दोहस्योप-रिष्टाच्च हुत्वा उपस्पर्शनस्य तन्त्रं स्यात्तत्तन्त्रमेव भवति तयोर्वि-भवात्॥ ४०॥

[पूर्वाहुतिप्रक्षेपकालेऽनवधानतः कृत्स्नद्रव्यपतने कर्तव्योंऽशः]

(सू.) यदि पूर्वस्यामाहुत्यां हुतायामुत्तराऽऽहुतिः स्कन्देद्यदि वोत्तरया पूर्वामभिजुहुयात् 'यत्र वेत्थ वनस्पते देवानां गुह्या नामानि। तत्र हव्यानि गामयेति' वानस्पत्ययर्चा समिधमाधाय तत एव तूष्णीं हुत्वाऽन्यां दुग्ध्वा पुनर्जुहुयात् ॥ ९ ॥ ॥ १ ॥ ४१ ॥ २२४९ ॥

(भा) हुतायां पूर्वाहुतौ यद्युत्तराहुतिः स्कन्दति–पतति भूमौ, अभिहोमः–उपरिहोमः उत्तरया पूर्वस्याः। वानस्पत्ययेति परिज्ञानार्थम्। तत एव स्रुग्गतात् स्कन्नशेषात् तूष्णीमुत्तराहुतिः। यदाप्यभिहोमः कृतः पूर्वोक्त एव पुनर्होमविधिस्सर्वत्र।

(वृ) हुतायां–भूमौ—भारद्वाजेन 'यदि भूमिं प्राप्नुयात्' इति वचनात् 'पृथिवीं वा एतस्य पयः प्रविशति' इति च लिङ्गात्।

पूर्वोक्त–स्सर्वत्र—विहरणादि मार्जनान्तः। उत्तराहुतिप्रक्षेपोत्तरकालं तण्डुलानामुपरि पूर्वाहुतेः संसर्गेण ज्ञानं तत्र सर्वप्रायश्चित्तं वा। पूर्वाहुतिप्रक्षेपणैव प्रमादात् कृत्स्नद्रव्यपतने सर्वप्रायश्चित्तं कृत्वा चतुरुन्नीयोत्तराहुतिः ॥

[तत्र मतभेदः]

अन्ये तु 'एष वा अग्निहोत्रस्य स्थाणुः यत्पूर्वाहुतिः' इति पूर्वाहुतेः प्रधानत्वात् उत्तराहुतेश्च शतपथब्राह्मणे स्विष्टकृद्रूपत्ववचनात् द्रव्याभावे लोप एव, अप्रयोजकत्वादुत्तराहुतेरित्याहुः। कर्तव्यपक्षेऽप्यल्पावशेषेऽपि तेनैव होमः। मात्रापचारे तच्छेषेण समाप्नुयात् इति न्यायादिति ॥

(रु) अभिहोम उपरिहोमः तत एव शिष्टादेवोत्तराहुतिस्तूष्णीमुभयत्र ततो होमावृत्तिः पूर्ववत् । यदा पुनरुत्तराहुत्येकदेशस्स्कन्नो न सर्वाहुतिस्तदा तन्नाद्रियेत यथा च वक्ष्यति यदनाहुतिमात्रं विप्रुडेव सेति, मात्रापचारे तच्छेषेण समाप्नुयादिति च । पूर्वाऽऽहुत्या सहोत्तराहुतिपतनेऽप्ययमेव विधिस्तस्यापि फलतः स्कन्नत्वात् ॥ ४१ ॥

[पूर्वाहुतिप्रक्षेपोत्तरमाहवनीयानुगतौ कर्तव्यांऽशः]

**(सू) यदि पूर्वस्यामाहुत्यां हुतायामाहावनीयोऽनुगच्छेत् 'अग्निर्दारौ दारावग्निः' इति वदन्ननन्तरे शकले हिरण्ये वा जुहुयात् ॥ ९ ॥ १ ॥ ४२ ॥ ॥ २२५० ॥**

(भा) 'अग्निर्दारौ' 'दारावग्निः' इत्युत्तराहुतिः । वदन्निति वचनान्न मन्त्रान्तेन होमः । अनन्तरं शकलं यतः पश्चादनुगच्छत्यग्निः । हिरण्ये वा होमः । गार्हपत्यदक्षिणाग्न्योर्होमपरिसमाप्तिः । तपनेन्धनपरिसमूहनपरिषेचनानिवृत्तिः, आहवनीयस्याभावात्, 'ऊष्मपास्सप्तर्षयः' इति तपननिवृत्तेरुद्देशनस्यापि निवृत्तिः । न वा निष्टपनम्, अनुद्देशार्थत्वात् । 'निष्टपति स्वगाकृत्यै' इति शंयुवाककार्ये श्रूयते । एवं सत्युद्देशनमनिष्टप्तया क्रियते सप्तर्षितृप्तये, 'उद्दिशति, सप्तर्षीनेव प्रीणाति' इति । केचित्तपनेन्धनवर्जं सर्वं कुर्वन्ति शकले हिरण्ये वा आहवनीयप्रतिनिधिरिति । एतदेव प्रायश्चित्तम् ॥

शकलापरिज्ञाने ;—

(वृ) **गार्हपत्य-माप्तिः ।**

**तपनेन्धन-भावात्**—तपनमाहवनीये स्रुचः प्रतापनम् । इन्धनं दिदीहीति ।

**ऊष्मपास्स–निवृत्तिः**—अस्यार्थः ;—स्रुचं प्रताप्य तयोदङ्ङिनर्दिशति । 'सप्तर्षिभ्यस्त्वा' इत्युद्देशनस्य सप्तर्षीन् जिन्वेति सप्तर्षितृप्त्यर्थत्वम् । [1]तत्र च निष्टपनं विधाय 'उद्दिशति सप्तर्षीनेव प्रीणाति' इति वाक्यशेषात् स्रुग्गतोष्मणा सप्तर्षितृप्तिः । अतश्च तपनाभावादुद्देशाभावः ॥

**न वा निष्टपन–यते**—सम्यक्समाप्तिकार्ये निष्टपनं श्रूयते ।

**केचित्तप–धिरिति** – [2]तपनेन्धनयोरशक्यत्वात् ।

**एतदेव-प्रायश्चित्तम्**—अग्निर्दाराविति होम एव ।

(रु) यस्माद्दारोरुद्रायेदन्ततस्सोऽनन्तरश्शकलः । तस्मिन् तत्स्थे वा हिरण्ये जुहुयादुत्तराहुतिमित्यर्थः मन्त्रलिङ्गानुरोधात् । तथोत्तमे शकले हिरण्यं निधायेत्येव भारद्वाजः । वदन्निति वचनान्न मन्त्रमध्ये होमः । स्वाहाकारस्त्वन्तत एव भवति । ततश्शेषसमाप्तिः । तत्र स्रुक्प्रतितपनमुपसमिन्धनं चाहवनीयस्यासम्भवान्निवर्तते । प्रतितपननिवृत्तेरेवोद्देशनमपि निवृत्तं भवति । परिसमूहनादेस्त्वनिवृत्तिः, शकलहिरण्ययोरग्निप्रतिनिधित्वेन विधानात् । यस्याप्यजस्र आहवनीयस्तस्यापि प्रतिनिधावेव अग्निहोत्रसमाप्तिरविशेषात् । ततो मन्थनम् ॥ ४२ ॥

**[प्रयाजानुष्ठानात्प्राक् दक्षिणोत्तरादिपरिध्यग्रदेशाद्बहिरङ्गारस्य पतनेऽनुष्ठेयांशव्यवस्थापनं सूत्रत्रयेण]**

**(सू) यदि पुरा प्रयाजेभ्यो बहिःपरिध्यङ्गारस्स्कन्देत्तं 'स्रुवस्य बुध्नेनाभिनिदध्यान्मातमो मा यज्ञस्तमन्वायजमानस्तपन्नमस्ते अस्त्वायते नमो रुद्र परायते नमो यत्र निषीदसि । अध्वर्युं मा**

---

[1] अत्र च–ख. ग. घ. [2] ट.–पुस्तके तु प्रतिनिधित्वे तपनेन्धनयोरशक्यत्वादिति पाठो दृश्यते.

**हिꣳसीर्यजमानं मा हिꣳसीः' इति यदि पुरस्तात् ब्रह्माणं मा हिꣳसीर्यजमानं मा हिꣳसीः' इति दाक्षिणतः। होतारं मा हिꣳसीः पत्नीं मा हिꣳसीर्यजमानं मा हिꣳसीः' इति पश्चात्। आग्नीध्रं मा हिꣳसीः पशून्मा हिꣳसीर्यजमानं मा हिꣳसीः' इति यद्युत्तरतः ॥ ९ ॥ १ ॥ ४३ ॥ २२५१ ॥**

**(भा)** पुराप्रयाजेभ्यः यावत्प्रयाजा नारभ्यन्ते। परिधेर्बहिर्निर्गतः स्कन्नः। पूर्वतस्तु [1] परिध्यग्रा[2]त्परतो गतः स्रुवस्य बुध्नेन मूलेन अभिनिदध्यात्–[3]पीडयेत् 'मा तमः' इति सर्वासु दिक्षु अध्वर्य्वा[4]दीनि. प्रतिदिशं विशेषः।

**पूर्वतस्तु–गतः**—पूर्वत्र परिधेरभावात्तत्र बहिःपरिधिदेशगमनं दक्षिणोत्तरपरिध्यग्रप्रदेशाद्बहिर्निर्गमनम्। अतो बहिःपरिधीति देशोपलक्षणत्वात्परिधिनिधानात्पूर्वमप्येतत्प्रायश्चित्तम्।

**मा तम इति सर्वासु दिक्षु**––अनुषङ्गः॥

इति धूर्तस्वामिभाष्यवृत्तौ नवमप्रश्ने द्वितीया खण्डिका.

---

**( सू )** **अहं यज्ञं दधे निरृतेरुपस्थात्तं देवेभ्यः परिददामीत्येनमादाय ॥ ९ ॥ १ ॥ ४४ ॥ २२४४ ॥.**

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने द्वितीया खण्डिका.

---

**(भा)** आदानादि समानम्।

इति धूर्तस्वामिभाष्ये नवमप्रश्ने द्वितीया खण्डिका.

---

[1] परिध्यग्रात्पुरो गतः- ङ. [2] त्पुरतो गतः–ग. [3] पीडयति–क. घ. ट.
[4] दिप्र–ग. घ. ङ.

(रु) बर्हिः परिधीति देशोपलक्षणं यदि पुरस्तादिति लिङ्गात् ब्राह्मणेन परिध्यग्रहणाच्च । तेनान्वाधानप्रभृत्याप्रयोगारम्भादय विधिः । अन्यत्र तु तूष्णीमङ्गारं प्रहृत्य सर्वप्रायश्चित्तमेव । बुध्नो मूलम् । अभिनिदध्याम् अभिपीडयेत् । मा तम इत्येतत्सर्वासु दिक्षु समुच्चीयते ॥४४॥

इति श्री भट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
नवमप्रश्ने प्रथमे पटले द्वितीया खण्डिका

---

(सू) "सहस्रशृङ्गो वृषभो जातवेदाः, स्तोमपृष्ठो घृतवान् सुप्रतीकः। मा नो हासीन्मेत्थितो नेत्वा जहाम गोपोषं नो वीरपोषं च यच्छ" इत्येनमग्नौ प्रहरति ॥ ९ ॥ १ ॥ ४५ ॥ २२५३ ॥

(भा) प्रहरति—क्षिपति । [1] क्षिप्ताङ्गारस्योपरि वा जुहोति ।

(वृ) प्रहृत्य वाऽभिजुहुया[2]दिति पक्षे तूष्णीमङ्गारं प्रहृत्य सहस्रशृङ्ग इति होमः ।

(रु) गतः ॥ ४५ ॥

[प्रयाजेभ्य इत्यत्र बहुवचनोऽविवक्षितः]

(सू) प्रहृत्य वाऽभिजुहुयात् ॥ ९॥ १॥ ४६ ॥ २२५४ ॥

(भा) एकस्मिन्नपि शिष्टे प्रयाजे प्रायश्चित्तमित्युपदेशः ॥

---

[1] क्षिप्ते वा उप—च. क्षिप्त्वोपरि चाङ्गारस्य—च. वा—घ. [2] दित्यस्मिन् पक्षे—घ.

(वृ) **एकस्मिन्नपि–देशः**—'प्रयाजेभ्यः' इति बहुवचनस्याविवक्षितत्वात्। स्वपक्षे तु बहुवचनाविवक्षायामपि पुराप्रयाजेभ्य इति प्रयाजमात्रपूर्वभावित्वावगमात् एकस्मिन्नपि कृते पूर्वभावित्वं न स्यादिति।

(रु) तूष्णीं प्रहृत्य मन्त्रेण वाऽभिजुहुयात् ॥ ४६ ॥

[समारूढानुगतयोर्मथ्यमानयोरग्न्योः विहरणप्रणयनप्रधानकालेऽनुत्पत्तौ लौकिकमाहृत्य विहृत्य होमो भारद्वाजमते]

(सू) **यदि कालसन्निकर्षेऽग्निर्मथ्यमानो न जायेत यत्रान्यं पश्येत्तत आहृत्य जुहुयात् ॥**
**॥ ९ ॥ १ ॥ ४७ ॥ २२५५ ॥**

**अथात्वरमाणः पुनर्मन्थेत् ॥ ९ ॥ १ ॥ ४८ ॥**
**॥ २२५६ ॥**

**यद्यन्यं न विन्देदजायै दक्षिणे कर्णे होतव्यम् ॥**
**॥ ९ ॥ १ ॥ ४९ ॥ २२५७ ॥**

(भा) समारूढोऽनुग[1]तो वा यदि मथ्यमानो विहरणकालसमीपे न [2]जायेत यत्राग्निमन्यं लौकिकं पश्येत् तत [3]आहृत्य विहृत्य होमः भारद्वाजमतात्।

[उदयास्तयोरर्वाक् गार्हपत्ये प्रतिनिधिस्थापनमन्थनादिपूर्वकमनुष्ठेयांशव्यवस्था]

यदा त्ववक्षाणमन्थ[4]नं, भस्मनारणी संस्पृश्य मन्थनं वा कृत्वाऽग्निः[5] प्रतिनिधिः। यदा[6] न कृत्वा [7]विहरणकाले तदा 'यस्यो-

[1] तोऽपि वा यदि—**क. च.** [2] जायते—**ख. ग. घ.** [3] आहृत्य होमो—**ख. ग. घ.** [4] नं वा-**ङ. च.** [5] ग्निप्रति-**ग. घ. च.** [6] यदि न कृतो वि—**च.** [7] प्रणयनकाले—**घ.**

भावनुगतौ' इति पुनराधेयमेव। यदा तु समारूढः, तदा कृत्वाऽग्निप्रतिनिधिं [1] अस्तमितेऽनुद्धृ[2]तप्रायश्चित्तमेव। ततो होमं कृत्वा मन्थनमनुगतेष्टिः [3]; यावदन्यो विहरणकालो [4] न जायते[5]। अजाते [6] नष्टः तदा पुनराधेयमेव। केचित्त्वाहुः; —मन्थने प्रवृत्ते 'यस्य वोभावनुगतौ' इति नैतत्; यद्यप्युदेत्यस्तमेति वा कृत्वा प्रतिनिधिं अनुद्धृतप्रायश्चित्तम्। ततोऽग्निहोत्रहोमः, ततो मन्थनम्, द्वितीयमपि होमं प्रतिनिधौ जुहोति, तृतीयं प्राप्य त्रिनष्टो भवतीति। पुनः पुनर्मन्थेदित्यवचनादेक एव होमः प्रतिनिधौ युक्तः। अग्निहोत्रहोमार्थ एव प्रतिनिधिः 'अग्नावेवास्याग्निहोत्रं हुतं भवति' इति लिङ्गात्। मथितेऽनुगतप्रायश्चित्तं सर्वत्र। लौकिकाग्निः प्रतिनिधिः। पाकाहुति[7]क्षेपणं करोतीति सर्वाग्नीनां [8]विभवाच्च। अजादयस्तु क्रियमाणा अपि पाकं न साधयन्तीत्याहवनीयप्रतिनिधय एव, तस्य प्रधानाहुत्यर्थत्वात्। अग्निपतय इत्याहवनीयायतने प्रतिष्ठापनमग्नीनाम्, अनर्थलोपात्। अविकारश्च मन्त्राणां प्रतिनिधित्वात्। गार्हपत्याद्ग्रहणमुद्धरणमिति नोद्धरणमन्त्राः। न च तद्याजमानम्। तूष्णीमजादीनामायतने प्रतिष्ठापनमुपदेशः। नेध्मो न समित्, इन्धनार्थत्वात्, शुन्धनपरिस्तरणे[9] तु क्रियते। [10]न दोहः[11] न परिषेकः। प्रतिनिधेर्दक्षिणाग्नेश्च यदि [12]ध्रियते [13]धारा च। अग्न्यभावात् पाकादीनां निवृत्तिः। प्रतिष्ठापनं [14] तु भूमौ स्रुगादानादि, [15] न तपनमर्थलोपात्, संमर्शनं तु भवति। अभावेऽ-

---

[1] अनुद्धृतेऽस्तमिते प्रायश्चित्तमेव—क. ङ. [2] द्धृत्यप्रा?—ख. ग. घ. [3] ष्टिश्च—ग. ट. [4] तेतावदिन्धनम्—ग. घ. [5] कालो न जाते नष्टः—क [6] नष्टं—ङ. तु नष्टः—घ. [7] भक्षणं—ख. ग. घ. धाराहुतिलक्षणम्—ट. घ. क्षपणं—ङ. च. [8] भा—घ. [9] णे न क्रियते—च [10] अतो दोहनादिपरिषेकः—घ. च. [11] दोहनादिपरिषेकः?—ख. ग. ङ. [12] क्रियते—क. [13] धारा—च. [14] तु—घ. [15] अजादौ न तपन—ङ. च.

प्यर्चिषः [1] उद्द्रवणार्थत्वान्न मन्त्रलोपः। उपसाद्यापि उपस्पृश्य प्राणनादि, कर्ण एवाहुतिद्वयम्;[2] वचनाच्च न संसर्गदोषः। उत्तरमविकृतं तपने-न्धनवर्जम्। योऽग्निर्ध्रियते तस्य सर्वम्[3]। केचित्त्वाहुः;—संकल्पित-होमकालस्य सन्निकर्षे समीपे यदि मथ्यमानो न जायेत ततोऽग्निप्रति-निधिं कृत्वा अस्तमिते प्रायश्चित्तमिति।

(वृ) समारूढो–मतात्—अस्यार्थः;—यदि कालसन्निकर्ष इति प्रणयनकाल[4] उक्तो भरद्वाजेन गार्हपत्ये निधाय प्रणयनविधानात् प्रण-यनकालात्पूर्वमिति गम्यते।

यदा त्व–तिनिधिः—पूर्वं समारूढानुगतयोस्साधारणोऽ[5]क्तिः, इदानीमनुगमने भेदेनोच्यते। अनुगमने मथ्यमाने प्रागुदयादस्तम-याद्वा[6]ऽग्निं प्रतिनिधिं गार्हपत्येऽवस्थाप्य विहृत्य होमः।

यदा न–काले—प्रतिनिधिमन्थनादि करोति।

[समारूढपक्षे विशेषः]

यदा तु समा–श्चित्तमेव—समारूढपक्षे मन्थनाशक्तौ प्राग-स्तमयात् प्रतिनिध्यभावेऽपि नोभयानुगतिप्रायश्चित्तम्। अस्तमितेऽपि प्रतिनिधिं कृत्वा अनुद्धृतप्रायश्चित्तमेव; समारोपणस्य वाचनिकत्वात् अग्न्यदृष्टस्यारणिगतत्वादनुगत्यभावान्नोभयानुगतिः।

अत एव समारूढे अग्निहोत्रस्याशक्तौ तदर्थं मन्थनं, [7]क्रमा-भावेऽपि नादानम्।

[1] उद्धवणा—ङ. [2] द्वयम्। यत्र चासंभवः। वच—ङ. च. द्वयम्। यत्र च दर्भस्तम्बादौ संभवः। वच—ग. घ. [3] सर्वं कर्तव्यम्—घ. [4] कालमतो भर— ?—घ. ट. [5] णोऽग्निः—ख. ग. घ. [6] याच्चतं—ख. ग. घ. [7] प्रक्रमा—ख. ग. न्थनं प्रक—घ.

[तत्रैव योजनान्तरस्वीकारपूर्वकं वाक्यस्यार्थविवरणम्]

अकृत्वाऽग्निप्रतिनिधिमित्यकारप्रश्लेषेण योजना[1]। अर्थस्तु;—प्रतिनिधावकृतेऽस्तमितेऽपि पश्चात्प्रतिनिधिं कृत्वाऽनुद्धृतप्रायश्चित्तमिति। यद्यपि भस्मस्पृगवक्षाणमन्थनेऽपि 'स्वादेवैनं योनेः' इति निर्देशाददृष्टसद्भावः प्रतीयते; तथाऽपि तत्रानुगतिव्यपदेशादुभयानुगतिसंभवः। 'स्वादेवैनम्' इत्यदृष्टसद्भावबलादनुगतस्याग्नेर्मन्थनकाले तत्र सङ्क्रान्तिरिति वचनबलात्कल्प्यते। तस्मादसमारूढमन्थने उदयास्तमययोरस्थापिते अग्निप्रतिनिधौ पुनराधानमग्न्याधानं वेति स्थिते।

ततो–नम्—प्रतिनिधिपक्षे।

नष्टः–द्वितीयविहरणकालात्प्राग्यदि न जायेत तदा नष्टोऽग्निः। 'अथात्वरमाणः पुनः पुनर्मन्थेत्' इत्यवचनादिति वक्ष्यति[2]।

[कंचित्पक्ष स्वपक्षे च 'यदरण्योस्समारूढः' इति श्रुतिवाक्योन्नेयांशविवरणम्]

तदा पुनराधेयमेव—'यदरण्योस्समारूढो नश्येत्' इत्यादिविधानात्। केचित्पक्षहोमादौ[3] कृते मध्ये समारोपणे कृते मथ्यमानो न [4]जायेत; तदा मन्थनविधिप्रतिषेधे लौकिकेऽग्नावुपावरोहणं[5] कृत्वेति भरद्वाजवचनात्, अरणी लौकिकाग्निसन्निधौ निधाय 'उपावरोह जातवेदः' इति मन्त्रं जपेदित्याहुः। 'अरण्योस्समारूढः' इत्यव[6]क्षाणमन्थनस्यापि प्रदर्शनार्थम्। [7]तत्राप्युत्पत्त्यन्तरानुपदेशादग्न्याधेयं पुनराधेयं वा। ततो होमं कृत्वा इत्याद्युभयत्र मन्थने॥

---

[1] योजनात्–ख. ग. घ. [2] क्ष्यते–ख. ग. घ. [3] दौ समारोपणे कृते यदि मध्य–घ. [4] जायते–ख. ग. घ. [5] णं भरद्वा–घ. [6] क्षाणादिम–घ. [7] अत्रा–घ.

**केचित्त्वाहुः–स्तमेति वा** —अस्यार्थः ; मथ्यमानो न जायेतेति मन्थने प्रवृत्तमात्रस्य प्रतिनिधौ होमविधानात् प्रतिनिधिस्थापनस्य च कालविशेषानुपदेशान्मन्थने प्रवृत्तस्यास्तमितेऽपि प्रतिनिधिरिति ॥

[ **पुनः पदप्रयोगोऽन्योयोंऽशः** ]

**कृत्वा प्रति-भवतीति** —अथात्परमाणो मन्थेदित्येतावता पुनर्मन्थने सिद्धेऽपि पुनश्शब्दप्रयोगाद्द्वितीयहोममपि प्रतिनिधौ कृत्वा ततः पुनर्मन्थेदित्यवगम्यते । प्रागस्तमयादुद्धरणाभावादनुद्धृतप्रायश्चित्तं भवति। एतदन्तः केषांचित पक्षः ॥

[ **स्वपक्षकेचित्पक्षयोस्सोपपत्तिकं 'यदरण्योः' इत्यादि श्रुतिवाक्यस्य भावकथनम्** ]

**पुनः पुन–युक्तः** —अस्यार्थः —मन्थने प्रवृत्तस्य प्रतिनिधौ होमोत्तरकालं मन्थनविधाने पुनश्शब्दानुवादः पूर्वमपि मन्थने प्रयोगात् प्रवृत्तत्वात्प्रवृत्त्युत्तरकालं पुनः पुनर्मन्थेदित्यभ्यासवचनाभावादेक एव होमः प्रतिनिधौ युक्त इत्यनयोः पक्षयोर्विशेषः । अतएव 'यदरण्योस्समारूढो नश्येत्' इत्यस्य व्याख्यानावसरे आद्वितीयाद्धोमकालादजायमाने[1]ऽरण्योर्नाश इति व्याख्यातम् ॥

[ **औपवसथ्येऽहनि द्वितीयहोमाव्यवहितपूर्वक्षणे पक्षहोमादिकं, प्रतिनिधिं च कृत्वाऽनुद्धृतप्रायश्चित्तस्य अनुष्ठेयत्वव्यवस्था** ]

एवं च पक्षहोमादि कृत्वा समारूढेऽग्नौ औपवसथ्येऽहनि मन्थने प्रवृत्तस्याकृतप्रतिनिधेरुदयास्तमयेऽपि प्रतिनिधिं कृत्वा अनुद्धृतप्रायश्चित्तादि ; प्राग्द्वितीयहोमात् ॥

---

[1] मानो–घ.

**[ तस्मिन्नेवाहनि पक्षहोमानुष्ठानाव्यवहितोत्तरं पक्षमध्ये परस्परानुगत्या यथाक्रममभिनिम्रोचनादिकमुभयानुगतिनैमित्तिकं चानुष्ठेयम्, तत्र हेतुश्च ]**

पक्षहोमे कृते तु पक्षमध्ये ध्रियमाणयोरन्योन्यानुगत्या यदाऽवक्षाणादिमन्थने प्रवृत्तस्याभिनिम्रोचनादि भवति ततः उभयानुगतिनैमित्तिकं भवत्येव, प्रतिनिधिप्रयोगासम्भवात्। कथमसम्भवः? तत्राह ;—

**अग्निहोत्र-लिङ्गात्**—प्रतिनिधिरग्निहोत्रार्थ एव ; प्रकृतेरग्निहोत्रस्य कृतत्वादग्निहोत्रार्थत्वं न सम्भवति । अन्वाहिताग्नेस्तु होमकालेऽप्यनुगमने नायं प्रयोगो भवति, अस्याग्नेरग्निहोत्रार्थत्वाभावात् विशेषोत्पत्त्यन्तरोपदेशाच्च न सामान्यविहितमुभयानुगतिनैमित्तिकम् ॥

**[ अग्निहोत्रोद्धरणसमयात्प्राङ्मन्थने प्रवृत्तस्याप्रवृत्तस्य च कर्तव्यविशेषांशाः, भाष्यकृदभिमतविषयोपपादनम्, समारूढादिपक्षीयविशेषविवरणं च ]**

**मथिते-सर्वत्र**—मित्रादयो वा ; अत्रैवं व्यवस्था ;—अग्निहोत्रोद्धरणकालात्पूर्वमनुगते गार्हपत्ये समारूढे वा मन्थने प्रवृत्तस्यास्तमये प्रतिनिधिः । अप्रवृत्तस्यास्तमये पुनराधेयमग्न्याधेयं वा। प्रवृत्तस्यापि प्रागस्तमयात्प्रतिनिध्यस्थापने पुनराधेयमिति भाष्यकारपक्षः। समारूढेऽपि प्रागस्तमयात्प्रतिनिध्यस्थापने पुनराधानम् । अजस्रे गतश्रियश्च धार्याहवनीयप्रणयनकालेऽनुगमने मन्थनारम्भाद्याहवनीयस्यापि प्रतिनिधिप्रयोगः ; पश्चान्मन्थनम् । प्राग्द्वितीयहोमकालादजाते पुनराधानम्। गार्हपत्यस्याप्येवं। इतरेषां धार्याणामपि प्रणयनकालेऽनुगमने स्वयोनित उत्पत्तिः, सर्वप्रायश्चित्तं च । समारूढानामेकहोमाकरणेऽप्या-

धानमिति बह्वृचाः। अन्ये तु चतूरात्रादूर्ध्वमिति। ‘ यस्य वोभावनुगतौ ’ इत्यत्र ‘ नित्या गतश्रियो ध्रियते ’ इत्यत्र च शेषमुक्तम् ॥

**लौकिकाग्निः प्रतिनिधिः**—यद्यपि स्वामिनोऽग्नेर्देवताया इत्यग्नेः प्रतिनिधिनिषेधः ; तथाऽप्यदृष्टरूपसादृश्यसंपादनाशक्तावपि दृष्टरूपसंपादनसंभवाद्धोमाधारतया प्रतिनिधिः। एवमजादयोऽपि ; होमाधारत्वसंभवात्तेष्वपि या च यावती च सादृश्यसिद्धिः। अग्निसंपादनासमर्थस्य विधानात्प्रतिनिधि[1]र्नियत एव न मुख्यतया लौकिकाग्निः प्रतिनिधिः ॥

**पाकाहुति-विभवाच्च** ;—सर्वाग्निकार्यकरणसमर्थत्वात् पृथक्करणयोग्यत्वाच्च।

**अजादयस्तु-य एव** ; पाकासमर्थत्वाद्विभागायोग्यत्वात्। योग्यानामपि पृथक् स्थापने प्रयोजनाभावाच्च आहवनीयप्रतिनिधय एव।

**तस्य प्रधानाहुत्यर्थत्वात्-मुपदेशः** ;—अग्निलिङ्गत्वान्मन्त्राणां समवेताभिधानासंभवादूह इति ॥

**नेध्मो-ध्रीयते** ;—मथित्वाऽऽहितस्य नित्यधारणपक्षे ध्रियमाणेष्वग्निषु आहवनीयानुगतौ तस्य प्रतिनिधिप्रयोगोऽस्तीत्येतदनेन ज्ञापितम् ॥

**धाराचाग्रय-वृत्तिः** ;—आदिग्रहणादभिद्योतनादीनाम्।

**प्रतिष्ठा-लोपात्** ;—तापानुवृत्तेः।

**संमर्शनं तु भवति** ;—तपनसंस्कारलोपेऽपि प्रधानभूतसंमर्शनसंभवात् ॥

---

[1] निधिनियम एव—**ख. ग. घ.**

**वचनाच्च न संसर्गदोषः**;—नाग्निहोमदोषः न संसर्गदोष इति निर्देशादग्निहोमाभावे पूर्वाहुतिदेशाद्देशान्तरहोमेन संसर्गेऽप्यग्निहोमप्रायश्चित्तं न भवतीति ज्ञापितम् ॥

**उत्तरमपि–सर्वम्**;—नित्यधारणे गार्हपत्यदक्षिणाग्न्योर्ध्रियमाणयोराहवनीयानुगमने तयोः कर्मनिवृत्तिः । एवं च गार्हपत्याहवनीययोरन्यतरानुगमनेऽपि प्रतिनिधिर्नित्यधारणे ॥

**[ सङ्कल्पसमये कालविशेषादिसङ्कल्पोत्तरं मथ्यमानस्याग्नेरनुदये मन्थनप्रकारः, सौत्रकालसन्निकर्षपदोन्नेयोंऽशश्च ]**

**केचित्त्वाहुः–श्चित्तमिति** ;— अस्यार्थः ;—अग्निहोत्रारम्भसंकल्पकाले प्रदोषादिकालविशेषे संकल्पिते तस्मिन् कालेऽनुगतो मथ्यमानो यदि न जायेत ततः प्रधानकालोत्कर्षभयादस्तमितेऽपि प्रायश्चित्तं कृत्वा प्रतिनिधावग्निहोत्रं हुत्वा मन्थेत् । कालसन्निकर्ष इत्यनेन प्रधानकालपरामर्शस्य युक्तत्वात् ॥

**[प्रवासादौ विहरणप्रयोजकाग्नेर्मन्थनादिनाऽनुत्पत्तौ मतविशेषोन्नेयाः कर्तव्यविशेषांशाः]**

(रु) प्रवासादौ समारूढोऽग्निरग्निहोत्रकालसन्निकर्षे यदि विहरणाय मथ्यमनो न जायेत तदा लौकिकाग्निमाहृत्य गार्हपत्यायतने निधाय विहृत्य जुहायात् इत्यर्थः ॥

तथा च बोधायनः, अथारण्योस्समारूढेषु मथित्वाऽग्नीन्विहृत्य जुहुयात् , अपि वा लौकिकाग्निमाहृत्य विहृत्याग्नीनन्तरारणिं निधाय जुहुयादिति । आश्वलायनेनापि अग्निहोत्राय कालेऽग्नावजायमान इति वदता समारूढविषयत्वमेवास्य विधेः ख्यापितम् । न ह्यनुगतोऽग्निहोत्राय मथ्यते अपि तु सर्वकर्मार्थं, समारूढस्तु कदाचिदग्निहोत्रा-

यैव मथ्यते प्रवासादिति युक्तं तद्विषयत्वम् । तत्राजस्राग्नेर्बहुषु समारूढेषु य एवाग्निर्मथ्यमानः स एवाऽहर्तव्यः एवं विहरणकालप्रभृत्याहोमकालादयमेव विधिः । होमकालातिपत्तौ तु कालातिपत्तिविधिरेव, नायं विधिः । अनुगतविषये तु केवलगार्हपत्यानुगतावुभयानुगतौ च मथ्यमानस्याजन्मनि यो विधिस्स यस्य वोभावनुगतावित्यत्रैव दर्शितः । अन्यत्तु मतम् । मथ्यमान इत्यविशेषवचनादनुगतिविषयेऽपि समानोऽयं विधिः कालसन्निकर्ष इति च प्राधान्याद्धोमकालसन्निकर्षो गृह्यते ॥

तेनानुगतिविषयेऽपि होमकालातिपत्तौ 'यस्याहवनीये' इत्यादिविधिना मथ्यमानस्याजन्मनि भवत्येवायं विधिः । अनासत्तौ तु होमकालस्य यथाविहितप्रायश्चित्तान्येव भवन्तीति ॥ ४७ ॥

(रु) आगामिकालविप्रकर्षे एवात्वरमाणो मन्थेत् । अन्यथा पुनरनुकल्पः प्रसज्येत, न च तच्छक्तिविषये युक्तमिति भावः ॥ ४८ ॥

[अग्निप्रतिनिधीनां अजा, दक्षिणकर्ण, ब्राह्मणदक्षिणहस्त, दर्भ, जलादीनां कथनम् ]

(रु) अजादयोऽग्नेः प्रतिनिधीयन्ते मुख्यादिसामान्याद्यथोक्तं ब्राह्मणे "तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दो रथन्तरꣳ साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्ते"त्यादि । तस्मादविकारोऽग्निलिङ्गानां मन्त्राणाम् । तत्रोद्धरणश्रपणप्रातितपनाद्यमन्त्रभावान्निवर्तते । तथा श्रपणोद्धरणाभावादेवाजादीनां गार्हपत्ये स्थापनमपि निवृत्तम् । पराग्निहोमपक्षे तु होमार्थमवस्थापयन्ति ॥ ४९ ॥

[ मतभेदेनाजक्षीरमांसयोरशननिषेधादकम् ]

(सू) **अजस्य तु ततो नाश्नीयात् ॥ ९ ॥ १ ॥ ५० ॥**
**॥ २२५८ ॥**

(भा) [1]अजस्य मांसभक्षणप्रतिषेधः स्वार्थस्य भक्षस्य न परार्थस्येडादेः[2] क्रत्वङ्गभूतस्य। अजाक्षीरादीनां प्रतिषेध इति केचित्। शक्या जातिप्रतिषेधेनानुग्रहीतुमिनि प्रतिषेधे लिङ्गसङ्ख्ययोरविवक्षा। आलम्भना[3]दिष्वशक्या जातिरालब्धुमिति लिङ्गसंख्यादीनां विवक्षा॥

**स्वार्थस्य** —रागप्राप्तस्य॥

**न परा—स्य** —अजस्य तु नाश्नीयादिति मांसभक्षणप्रतिषेधेऽपि इडाभक्षणादेर्विहितत्वादप्रतिषेधः॥

**अजाक्षीरा—केचित्** ;—अजस्येति व्यधिकरणविभक्तियोगात् तत्संबन्धिनो[4] द्रव्यस्य प्राप्तभक्षणप्रतिषेधः। मांसस्य तु तदेकदेशत्वान्न व्यतिरिक्तत्वम्। अतः क्षीरादेः प्रतिषेधः॥

**शक्या—वक्षा** ;—अस्यार्थः ;—प्रतिषेधे निवृत्ति[5]विषयत्वं जातेरपि संभवति। तस्याश्च लिङ्गादिविरहात् शब्दमात्राज्जातिविवक्षा प्रतिषेधेषु। तस्मादजस्येत्युक्तेऽजाद्विबहूनां प्रतिषेधः; यथा ब्राह्मणो न हन्तव्य इति॥

**आलम्भनादि—वक्षेति**—आलम्भे द्रव्यस्योपाकरणादियोग्यत्वात् तस्य च लिङ्गादिविशिष्टत्वात्तत्र तद्विवक्षा॥

(रु) अजजातिसम्बन्धि मांसं क्षीरादि वा किंचिन्नाश्नीयात्। कर्णे चेन्मांसवर्जमित्याश्वलायनः॥ ५०॥

[ पूर्वपूर्वालाभेऽनुष्ठापककल्पान्तराणि ]

(सू) **यद्यजां न विन्देद्ब्राह्मणस्य दक्षिणे हस्ते होतव्यम्** ॥ ९॥ ॥ १ ॥ ५१ ॥ २२५९ ॥

(भा) अजा पश्चान्मुखी ब्राह्मणस्य ; तयोः परिस्तरणादिनावयवस्य।

[1] अजादेर्मा—घ. ङ. [2] देर्भक्षणस्य—ङ. [3] दिषु तु अश—ङ. [4] नोऽपि. [5] त्रिमात्र—ग.

(वृ) अजा–णस्य --उत्तरत आहवनीयस्य होमकर्तुर्दक्षिणकर्णयो-र्होमसौकर्यार्थं प्रत्यङ्मुखौ ।

तयोः परि–वस्य—कर्णादेरवयवमात्रस्य परिस्तरणादेरनाङ्ग-स्यात् ।

(रु) ब्राह्मणोऽप्यजया व्याख्यातः ॥ ५१ ॥

(सू) ब्राह्मणं तु वसत्यै नापरुन्धीत ॥ ९ ॥
॥ १ ॥ ५२ ॥ २२६० ॥

(भा) असूर्योढस्यापि वसतिं भोजनं च ब्राह्मणस्य दद्यात् ।

(वृ) असूर्यो–द्यात्—अस्यार्थः–आहिताग्निव्रते सूर्योढमतिथिं वसत्यै नापरुन्धीतेति विधानात् सूर्योढस्यानुपरोधः प्राप्तः, इदं त्वसूर्योढस्या-प्यनुपरोधार्थम् । नास्य ब्राह्मणोऽनाश्वान्, इत्यस्येहापि प्राप्तिः 'ब्राह्मणं तु वसत्यै नापरुन्ध्यात्' इत्येतन्नाहिताग्निव्रतेष्टितरपरि-संख्यानार्थमिति ॥

(रु) असूर्योढार्थं वचनम् ॥ ५२ ॥

(सू) यदि ब्राह्मणं न विन्देद्दर्भस्तम्बे होतव्यम् ॥
॥ ९ ॥ १ ॥ ५३ ॥ २२६१ ॥

दर्भांस्तु नाध्यासीत ॥ ९ ॥ १ ॥ ५४ ॥
॥ २२६२ ॥

(भा) उन्मुखोपर्यासनमध्यासनं दर्भाणां तस्य स्वार्थस्य निषेधः ॥

(वृ) तस्य–षेधः—न ब्रह्मयज्ञाद्यर्थस्य ॥

(रु) भवत्यत्र श्रुतिः 'अग्निवान् वै दर्भस्तम्ब' इति ॥ ५३ ॥

अन्यत्र ब्रह्मयज्ञाद्यर्थाद्द्वैधादासनादिति द्रष्टव्यम् ॥ ५४ ॥

(सू) यदि दर्भान्न विन्देदप्सु होतव्यम् ॥ ९ ॥ १ ॥ ॥ ५५ ॥ २२६३ ॥

आपस्तु न परिचक्षीतेमा भोजनीया इमा अभोजनीया इति ॥ ९ ॥ १ ॥ ५६ ॥ २२६४ ॥

अप्यभोजनीयस्यैतं वत्सरं परिगृह्णीयादेवापः ॥ ९ ॥ १ ॥ ५७ ॥ २२६५ ॥

(भा) परिचक्षणं—वर्जनं, तन्न कर्तव्यं अभोज्यानामप्य[1]पामेतस्मिन् सं[2]वत्सरे। न यावज्जीवं अभोज्यान्नप्रतिग्रहणं च कार्यम् ॥

(वृ) अपां न यावज्जीवम्—प्रतिग्रहणादि कर्तव्यम्। यावज्जीवमित्यालेखन इत्यस्मिन्नपि पक्षे अभोजनीयप्रतिग्रहणं संवत्सरमेव ॥

अभोज्या-कार्यम्—'आपस्तु न परिचक्षीत' इत्यनेनैव अपां परिग्रहे सिद्धे अप्यभोजनीयस्येति परिग्रहविधानात्, एकवजननिर्देशाच्च निन्दितान्नस्यापि भोजनम् ॥

प्रतिगृह्णीयादेवापः—इत्यस्यायमर्थः आपश्च प्रतिगृह्णीयादभोज्या आप इति ॥

(रु) कार्यकारणयोरभेदादिति भावः। भवति चात्र श्रुतिः "या अग्निं गर्भं दधिरे" इत्यादि ॥ ५५ ॥

आपस्तु बीभत्सा इति न वर्जयेदित्यर्थः। दातृदोषादपि न बीभत्सेत्याह ॥ ५६ ॥

अभोजनीयः अभोज्यान्नः ॥ ५७ ॥

---

[1] मप्येतस्मिन् संवत्सरे यावज्जीवमभोज्यानामप्यपां प्रतिग्रहणं च कार्यं—च.
[2] वत्सरे यावज्जीवं वा अभोज्यान्नप्रनिषेधः कार्यं—छ.

(सू) अद्भिस्तु न पादौ प्रक्षालयीत ॥ ९ ॥ १ ॥ ॥ ५८ ॥ २२६६ ॥

(भा) अद्भिस्तु पादप्रक्षालनप्रतिषेधः। श्रुतिबलीयस्त्वादधौतपादोऽप्यधिकुरुते [1]कर्मसु। कुण्डिकादिभिर्वा प्रक्षाल्य॥

केचित्त्वाहुः—अनुद्धृतास्वप्सु पादप्रक्षाळनं न करोति। अशुचेरनधिकारात् अद्भिरुद्धृताभिः पादप्रक्षाळनं करोतीति॥

(वृ) अद्भि-क्षाल्य—अद्भिस्तु न पादावित्यव्यवधानेन साक्षाद्धस्तेन प्रक्षालननिषेधः कुण्डिकादिभिः प्रक्षालनमनिषिद्धमिति॥

केचित्तु-तीति—अद्भिस्तु न पादावित्यद्भिरिति करणनिर्देशादप्यनुद्धृतासु पादप्रवेशेन प्रक्षालनं प्रतिषिद्धम्। श्रौताविरोधेन स्मृतिवचनोपप[2]त्तेः॥

(रु) सुखार्थस्य प्रक्षाळनस्य निषेधो न शौचार्थस्यापि। प्रयतस्यैव कर्माधिकारात॥ ५८॥

(सू) सांवत्सरिकाण्येतानि व्रतानीत्याश्मरथ्यः। यावज्जीवमित्यालेखनः ॥९॥१॥ ५९॥ २२६७॥

(भा) सांवत्सरिकाण्येतानि व्रतानि 'संवत्सरं [3]हि व्रतं नाति' इति लिङ्गात्। यावज्जीवं वा अविशेषश्रुतेः॥

(वृ) सांवत्स-ङ्गात्—संवत्सरेन्द्रयागविधिवाक्यशेषे व्रतानां संवत्सरकालत्वस्य प्रसिद्धवदनुवादात्। अतः कर्ममध्यपातिव्रतानां संवत्सरकालता। आहिताग्निव्रतानां तु आहिताग्निमात्रसंयोगात्तत्तत्कालता॥

---

[1] इदं पदं क. ङ. पुस्तकयोर्नास्ति. [2] त्तिः—ङ. [3] वमित्यविषे—घ.

यावच्-श्रुतेः—'अजस्य तु नाश्नीयात्' इत्यादिव्रतविधिषु वाक्यशेषेऽपि कालविशेषाश्रवणात् यावज्जीवमेव ॥

(रु) सांवत्सरिकत्वविकल्पाभावः स्वमते, अप्यभोजनीयस्यैतं संवत्सरमिति लिङ्गात् । श्रुतिश्च भवति 'संवत्सरꣳ हि व्रतं नाति' इति ॥ ५९ ॥

[ एकस्यां शरदि सम्पूर्णायां व्रातपतीष्टेरनुष्ठेयत्वम् ]

(सू) **संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् ॥ ९ ॥ १ ॥ ६० ॥ २२६८ ॥**

(भा) संवत्सरस्य परस्तात् पूर्णे संवत्सरे व्रातपती यत्र व्रतपतिरग्नि[1]: ; 'त्वमग्ने व्रतपा असि' 'यद्वो वयं प्रमिनाम' इति ॥

(वृ) पूर्णे सं-रग्निः—यत्र कर्मणि देवतायां व्रतपतिशब्दोऽस्ति सा व्रातपतीष्टिः । 'त्वमग्ने' 'यद्वो वयं' इति—याज्यानुवाक्ये ॥

(रु) व्रातपत्येष्ट्या व्रतनिवृत्तिः ॥ ६० ॥

[ भूतनिमित्तनिबन्धनदोषपरिहारार्थायाः क्षामवतीष्टेरनुष्ठेयत्वम् ]

(सू) **अग्नये क्षामवतेऽष्टाकपालं येषां पूर्वापरा अन्वञ्चः प्रमीयेरन् गृहदाहे वा ॥ ९ ॥ १ ॥ ॥ ६१ ॥ २२६९ ॥**

(भा) पूर्वे—पूर्ववयसः वृद्धाः ज्ञातयः अपरे पुत्र-पौत्रनप्त्रादयः ज्ञातयः अन्व[2]ञ्चः यदा संततं प्रमीयन्ते वृद्धाश्च बालाश्च ; नैमित्तिकक्षामवती 'नैषां पुरायुषोऽपरः प्रमीयते । नास्यापरं गृहान् दहति' इत्यर्थ-

---

[1] रस्ति—च.  [2] ञ्चः संतता यदा म्रियन्ते—च.

वादः ; न कामः, निमित्तेन चोदितत्वात् । अग्नये क्षामवते अग्ने क्षामवन् अग्निं क्षामवन्तं अग्नेः क्षामवतः अग्निः क्षामवान् 'अक्रन्दद् अग्निः' 'त्वे वसूनि' इति याज्यानुवाक्ये ॥

(वृ) न कामः—तत्वात्—येषामन्वञ्चः प्रमीयन्ते यस्य गृहान् दहतीति स्वकीय[1]गृहे वसतः तद्दाहस्य निमित्तसंयोगश्रवणात् भूत-निमित्तनिबन्धनदोषपरिहारार्था क्षामवती, न तु भविष्यन्मरणगृहदाह-परिहारार्था वाक्यशेषस्य निमित्ताधीनदोषपरिहारानुवादोपपत्तेः ; जातेष्टौ तु निमित्तासम्बन्धिपूततादिफलश्रवणानु[2]वादोपपत्तेः फलत्वेनान्वयः गृह-दाहादौ फलवदिति मीमांसका इत्युक्तम् ॥

(रु) सर्वे चापरे च वृद्धबाला वंश्या यद्यन्वञ्चस्सन्तता म्रियेरन् दहेरन्वा गृहास्तत्रेयमिष्टिर्नैमित्तिकी सिध्यति च तत्र कामो वाक्य-शेषात् । यथा "नैषां पुरायुषोऽपरः प्रमीयते" "नास्यापरं गृहान्दहति" इति च ॥ ६१ ॥

[ आहिताग्नेस्स्वकीयाग्नीनां श्रौतस्मार्तलौकिकाग्निभिः परस्परं संसर्गे मेध्यामेध्यतनुव्यावृत्तये विविचिनाम्न्या इष्टेरनुष्ठेयत्वम् ]

(सू) **अग्नये विविचयेऽष्टाकपालं यस्याहिताग्नेरन्यैर-ग्निभिरग्नयस्संसृज्येरन्मिथो वा ॥ ९ ॥ ॥ १ ॥ ॥ ६२ ॥ २२७० ॥**

(भा) अन्यैरग्निभिः—औपासनादिभिर्यदि मिश्रणं मिथोदिवा गार्हपत्या-[3]दयः, तदा सर्वे सह भवन्ति मिश्राः परस्परेण । अग्नये विविचये अग्ने

---

[1] गृह एव सतः—ग. गृह एव तद्दा—घ. [2] सुवदानुपपत्तेः—ग. घ.
[3]दयो यदा सर्वे—घ.

विविचे अग्निं विविचिं, अग्नेर्विविचेः अग्निर्विविचिः विते विष्वक्, त्वामग्ने मानुषीरीडते इति ॥

(वृ) **औपासनादिभिः**—आदिशब्देन लौकिकस्य ग्रहणं उख्याग्नेश्च ॥

**मिथो–रेण**—द्वयोर्मिथः संसर्गे वक्ष्यमाणत्वात् ॥

**अग्नये–रीडत इति**—याज्यानुवाक्ये ॥

[अन्यसंसर्गे पञ्चानां अन्योन्यसंसर्गे च कर्तव्यांशकथनम्]

(रु) अन्यैर्वैदिकैर्लौकिकैर्वा संसर्गे, पञ्चानां परम्परं संसर्गे च इयमेवेष्टिरुत्सर्गेण भवति, अपवादे त्वन्यास्ताश्च समारोपणेन विविक्तेष्वग्निषु भवन्ति। समारोपणमन्त्र एव तु तन्तमग्निं हंसः क्षीरनीर इव विवेक्ष्यति। तथा संसर्गे प्रकृत्यारण्योरग्नीन् समारोप्येत्येव बोधायनः ॥ ॥ ६२ ॥

[गार्हपत्याहवनीययोर्द्वयोस्संसर्गे विपृचिनाम्नया इष्टेरनुष्ठेयत्वम्]

(सू) **अग्नये विपृचेऽष्टाकपालं यदि गार्हपत्याहवनीयौ ॥ ९ ॥ १ । ६३ ॥ २२७१ ॥**

**अग्निना विपृचा वयं गीर्भिस्तोमं मनामहे। स नो रास्व सहस्रिणः। कविरग्निस्समिध्यते विप्रो यज्ञस्य साधनः। विपृञ्चन् रास्व नो वस्विति याज्यानुवाक्ये ॥९॥१॥६४॥२२७२॥**

(भा) गार्हपत्याहवनीययोस्संसर्गे अग्नये विपृचे अग्ने विपृक् अग्निं विपृचं अग्नेर्विपचः अग्निर्विपृगिदमग्निना विपृचा ॥

(वृ) विपृचा इति सूत्रोक्ते याज्यानुवाक्ये ॥

(रु) संसृज्येयातामिति विपरिणामेनान्वयः, गार्हपत्याहवनीयाविति वचनात्। तयोः पृथगेकदेशसंसर्गे न भवतीयमिष्टिः। एवमुत्तरत्रापि द्रष्टव्यम् ॥ ६३ ॥

(रु) गतः ॥ ६४ ॥

[गार्हपत्यान्वाहार्यपचनयोस्संसर्गे वीतिनाम्नया इष्टेरनुष्ठेयत्वम्]

(सू) **अग्नये वीतयेऽष्टाकपालं यदि गार्हपत्यदक्षिणाग्नी दक्षिणाग्न्याहवनीयौ वा ॥ ९ ॥ १ ॥ ॥ ६५ ॥ २२७३ ॥**

(भा) अग्नये वीतये, अग्ने वीते, अग्निं वीतिं, अग्नेर्वीतिः, अग्निर्वीतिरिदं, अग्न आयाहि वीतये, यो अग्निर्देववीतये, सर्वत्र चतुर्थी परिपाठिता ॥

(वृ) देववीतये इति—याज्यानुवाक्ये ॥

सर्वत्र—परिपठिता— सर्वत्र देवतानिर्देशे[1] चतुर्थ्यन्तः सूत्रकारेण पठितरूपः। तदनुसारिणा विभक्त्यन्तरेण कार्यः ॥

(रु) पूर्ववदन्वयः ॥ ६५ ॥

[वनदाहकगृहदाहकमनुष्यदाहकसंसर्गे, सूतकाग्निना, वैद्युतेन च संसर्गे अवश्यानुष्ठेयविशेषांशाः]

(सू) **अग्नये शुचयेऽष्टाकपालं यदि प्रदाव्येनाभ्यादाह्येन शवाग्निना वा। अग्नये संकुसुकायाष्टाकपालं यदि सूतकाग्निना। संकुसुको विकुसुको विकिरो**

[1] शेन—ख. ग. घ.

**यश्च विष्किरः । माषाज्येन नलेध्मेन क्रव्यादं शमयामसि । अस्मिन् वयं संकुसुकेऽग्नौ रिप्राणि मृज्महे । अभूम यज्ञियाश्शुद्धाः प्र ण आयूंषि तारिषत् इति याज्यानुवाक्ये । अग्नयेऽप्सुमतेऽष्टाकपालं यदि वैद्युतेन ॥ ९ ॥ १ ॥ ६६ ॥ २२७४ ॥**

(भा) अग्नय शुचये अग्ने शुचे अग्निं शुचिं अग्नेश्शुचेः अग्निश्शुचिरिदम् 'अग्निश्शुचिव्रततमः' 'उदग्ने शुचयस्तव' इति ॥

(वृ) **प्रदाव्येन**—प्रदाव्यो वनदाहः अभ्यादाह्यो यो गृहान् दहति । शवाग्निर्येन मनुष्या दह्यन्ते । संकुसुकस्य वृक्षवद्विभक्तयः । अग्नये संकुसुकाय, अग्ने संकुसुक, अग्निं संकुसुकम् इत्यादि । सूतकाग्निर्यस्मिन् जाते कर्म करोति । सूतिकां वा येन तापयत्यग्निनेति । वैद्युतेन संसर्गे अप्सुमानुक्तः । "अप्स्वग्ने" 'गर्भो अस्योषधीनाम्' इति ॥

**सूतिकां वा ग्निनेति**—शीतापनोदनाद्यर्थो लौकिकः 'संकुसुको विकुसुकः' इति सूत्रपठिते याज्यानुवाक्ये ॥

**वैद्युतेन—क्तः**—अप्सुमत इति उत्सर्गेष्ट्यामप्सुमतो विभक्तिप्रयोगो याज्यानुवाक्ये च ॥

(रु) संसृज्येरन्नग्नय इत्यन्वयस्सर्वत्र । प्रदाव्यो दावाग्निः । अभ्यादाह्यो गृहदाही । शवाग्निश्चिताग्निः । सूतकाग्निर्जातकर्मार्थः । वैद्युतोऽशनिप्रभवः । संकुसुकादन्यासामाम्नाय एव याज्यानुवाक्याः ॥ ६६ ॥

[एतदन्तोक्तेष्टीनां सर्वासां निमित्तत्वसन्निपाते मतभेदेनानुष्ठेयेष्टीनां व्यवस्थापनम्]

(सू) **यदि सर्वास्सन्निपतेरन् विविचये निरुप्य शुचये निर्वपेद्व्रातभृतीं तृतीयामप्सुमतीं चतुर्थीं क्षामवतीमन्तं परिक्रमयेत् ॥ ९ ॥ १ ॥ ६७ ॥ २२७५ ॥**

**व्रातभृतीं द्वितीयामेके समामनन्ति ; व्रातपतीमुत्तमाम् ॥ ९ ॥ १ ॥ ६८ ॥ २२७६ ॥**

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने तृतीया खण्डिका

---

(भा) उक्तानां संसर्गेष्टीनां यदि सर्वासां निमित्तान्युत्पद्यन्ते तदा सर्वसन्निपाते क्रम इष्टीनाम् । [1]यद्यन्येन क्रमेण निमित्तान्युत्पद्यन्ते [2]व्रातभृती चाधिका[3] । तृतीयावचनाच्च कृत्वा चतुर्थीमप्सुमतीमन्याः संसर्गेष्टयः । क्षामवती गृहदाहेष्टिरन्ते ॥

अथवा—विविचये निरुप्य [4]व्रातभृतेऽग्नये शुचयेऽप्सुमते । ततोन्याः क्षामवत्यन्ताः ; ततोऽग्नये व्रतपतय एकेषाम् । [5]उक्तवचनात् सर्वसन्निपाते क्रम इष्टीनाम् ॥

केचित्त्वाहुः—इहा[6]सिद्धाया दर्शनात् प्रायश्चित्तेष्टि[7]षु सर्वासु व्रातपती समुच्चीयत इति ॥

इति धूर्तस्वामिभाष्ये नवमप्रश्ने तृतीया खण्डिका

---

(वृ) **उक्तानां संसर्गेष्टीनामिति**—भूयस्त्वोपलक्षणम् गृहदाहेष्टेरप्यनुक्रमणात् ॥

**यदि सर्वाः सन्निपतेरन्निति**—सर्वसामत्रोक्तानां निमित्तत्वसन्निपाते ।

**तदास-ष्टीनाम् वचनात्**—निमित्ताभावेऽपि वचनाद्व्रातभृतीष्टिः ।

---

[1] यद्यप्यन्येन—ख. ग. यद्यप्यनेन—क. च. [2] व्रातपती चा—ङ. [3] वचनात् कृत्वा--ग. घ [4] व्रातभृते ततः शुचयेऽप्सुमते—ङ. च. व्रातभृते द्वितीया, ततः शुचये—घ. [5] उत्तमवचनात्—ट. च. [6] इह—ट. [7] ष्टिषु व्रातपती—ट. च.

**कृत्वा चतु—ष्टयः** — उक्तत्रिकव्यतिरिक्तास्संजातनिमित्ताः संसर्गेष्टयः कर्तव्याः । तासां नैमित्तिकक्रम एव क्रमः, क्षामवतीमन्तमिति विधानात् । सा च संततमरणगृहदाहयोरन्यतरस्य निमित्तांतरैस्सान्निपाते ॥

**क्षामवती गृहदाहेष्टिरन्ते**—गृहदाहेष्टिरित्युपलक्षणं मरणस्यापि ।

**अथवा–तय एकेषाम्** — सर्वसन्निपाते व्रातभृतीव्रातपत्योः क्रमभेदः ।

**उक्तवच–ष्टीनाम्**—एकेषां मते ।

[लौकिकाग्निसंसर्गे, श्रौताग्निमध्ये एकस्मिन्नग्न्यन्तरैकदेशसंसर्गे च संसर्गेष्टिपृथक्करणाद्युक्तिपूर्वकं कपर्दिस्वामिसूक्तिमुपबृह्मणीकृत्य सान्नवा ग्निनिवापोदेशतात्पर्यकत्वव्यवस्थापकम् ।

**केचित्तु यत इति**—अत्रेदं वक्तव्यम्—संसृष्टमग्निं समारोप्य मथित्वा तस्मिन् संसर्गेष्टिरिति केचित् अन्ये तु—लौकिकाग्निसंसर्गेष्टेरेव, न समारोपणम्, "मेध्यां चैवाम्यामेध्यां च तनुवौ व्यावर्तयति" इति वाक्यशेषादिष्ट्यैव पृथक्करणश्रवणात्, तथा श्रौताग्नयोरप्येकस्मिन्नग्नौ अग्नयन्तरैकदेशसंसर्गे इष्टमेव पृथक्करणम् ; स्व[1]देशेऽवस्थितैकदेशेऽन्यं दृष्टावस्थानमिष्टिमात्रेण संभवतीति । श्रौतयोः कृत्स्नयोस्संसर्गे द्वयोर्विभागः । अशक्तौ द्वयं पृथक्समारोप्य मथित्वेष्टिरिति । तथा हि—इह मंथनानुपदेशात्सूत्रकारेण (२१–२–१२) निर्मथ्य सन्निवपेरन् ततो विनिर्वपेरन् इत्यत्र विभागोपदेशात् प्रत्यक्षं पृथक्करणमत्रापि न्याय्यमित्यवगम्यते ; अत एव कपर्दिस्वामिना सन्निवापविनिवापौ वचन-

[1] स्वदेशमव—घ.

कृताविर्त्युपपादयता नित्यानां चाग्निहोत्रादीनां काले प्राप्ते विनिवाप इति वदता कुण्डपायिनामयनादिसत्रमध्येऽग्निहोत्रादीनां प्राप्तौ विनिवापो दर्शितः, न मन्थनम्; अतो न सत्रार्थ एव वाचनिको विनिवापः किंतु संसृष्टयोः पृथक्करणे प्राप्ते विनिवापो न्याय्य इति वचनकृताविति पुनः पुनः सन्निवापाद्युपदेशो वचनादिति ॥

इति धूर्तस्वामिभाष्यवृत्तौ नवमप्रश्ने तृतीया खण्डिका

---

(रु) यत्र तु गृहदाहादिनिमित्तसमुच्चयात् क्षामवत्यादयोऽप्सुमत्यन्तास्सर्वा इष्टयसन्निपतेयुः । तत्र निमित्तक्रमभेदे सत्यप्यनेनैव क्रमणेष्टीर्निर्वपेत् । व्रातभृतीं बाधिकां तृतीयाम् । तत्राप्सुमतीं चतुर्थीं निरुप्य ततो विप्रुगादिभ्यः संकुसुकान्तेभ्यश्शुचिवर्जं निर्वपेत् । ततः क्षामवतीमाद्यां सतीमन्तं गमयेत् ॥ ६७ ॥

(रु) अथवा विविभये निरुप्य व्रतभृते निर्वपेत् । ततोऽनन्तरोक्तेनैव क्रमेण शुच्यादिभ्यः क्षामवदन्तेभ्यस्ततोऽन्ते व्रातपतीमित्यर्थः । कतिपयसन्निपाते तु क्रमेणेष्टयो भवन्ति ॥ ६८ ॥

इति श्री भट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां नवमप्रश्ने तृतीया खण्डिका

---

[केचिन्मते स्रवतोऽग्निहोत्रद्रव्यस्याभिमन्त्रणं, सूत्रकारमते तु अग्निहोत्रद्रव्यविशिष्टस्थाल्या अभिमन्त्रणम्]

(सू) **गर्भं १ स्रवन्तमगदमकरग्निरिन्द्रस्त्वष्टा बृहस्पतिः । पृथिव्यामवचुश्चोतैतन्नाभिप्राप्नोति निर्ऋतिं पराचैः इत्यग्निहोत्रस्थालीं स्रवन्तीमभिमन्त्र्य विधुं दद्राणमिति संदध्यात् ॥ ९ ॥ १ ॥ ६९ ॥ २२७७ ॥**

(भा) स्रवन्तीमभिमन्त्र्य संधाय च स्थालीं स्कन्नप्रायश्चित्तमग्निहोत्रस्य ।

(वृ) **स्रवन्ती–त्रस्य**—भिन्नां स्रवन्तीमग्निहोत्रस्थालीं 'गर्भꣳ स्रवन्तम्, इत्याभिमन्त्र्य कार्यक्षमा चेत् संधानद्रव्यैर्मध्ये शर्करापिष्टादिभिस्संधानं कृत्वाऽग्निहोत्रस्कन्नप्रायश्चित्तम् । यदि कार्यासमर्था तामप्सु प्रक्षिप्य स्कन्नप्रायश्चित्तं कृत्वा स्थालीमाहृत्य दोहनादि ॥

केचित्तु—"रेतो वा एतद्वाजिनमाहिताग्नेः यदग्निहोत्रम् । तद्यत्स्रवेत्" इति होमद्रव्यं प्रकृत्य "गर्भꣳ स्रवन्तमगदमकरित्याह" इति विनियोगादग्निहोत्रद्रव्यं स्रवदभिम[1]न्त्रयेदिति वर्णयन्ति । न तथा सूत्रकारस्याभिप्रायः । अग्निहोत्रस्थालीं स्रवन्तीमभिमन्त्र्येति निर्देशात् वाक्यशेषे द्रव्यविशिष्टस्थाल्यभिमन्त्रणमाश्रीयते ॥

(रु) तस्यास्तु संधानायोग्यतायामन्या आहर्तव्या । स्कन्ने तु स्कन्नप्रायश्चित्तमपि स्यात् ॥ ६९ ॥

[दर्शपूर्णमासयोः स्वकालेऽननुष्ठाने एकद्विबहूनामतिपत्तौ प्रायश्चित्तम्, तत्र हेतुः, बोधायनादिमते विशेषश्च]

(सू) **अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजीत्युक्तम्** ॥९॥१॥७०॥२२७८॥

(भा) प्रवृत्तदर्शपूर्णमासयाजिनः पाथिकृती । यस्य तु प्राप्तेऽपि काले नारभ्येते दर्शपूर्णमासौ, तस्य यज्ञाविभ्रष्टेष्टिः । 'यो दर्शपूर्णमासयाजी सन' इत्यस्यायमर्थः ;—दर्शपूर्णयाजी भूत्वा अमावास्यां पौर्णमासीं वाऽतिपादयेत् न कुर्यात्काले । उभयोरप्यतिपत्तौ पाथिकृती प्रायश्चित्तम्, श्रुतिलक्षणत्वात् । देवयानो हि पन्था दर्शपूर्णमा[2]साविति । तस्मा-

[1] अभिमन्त्रयेत इति—घ.   [2] पौर्णमासौ—ङ. ङ.

देष पथोऽपथेनैति योऽतिपादयेत् । स[1] पथिकृत् । अपथात्पन्थामपि नयति । अनड्वान् यो वहति शकटं सा दक्षिणा । अग्नये पथिकृते अग्ने पथिकृत् अग्निं पथिकृतं अग्नेः पथिकृतः अग्निः पथिकृदिदम्, अग्ने नयादेवानाम् । इति पथिकृतः । "यद्वाहिष्ठम्, अग्ने त्वं पारय" इति स्विष्टकृतः । नैमित्तिकत्वाद्वैश्वानर्यपि पश्चात् । ततो दर्शपूर्णमासौ यावदन्यो न सर्वकालः । सर्वोऽपरपक्षः पूर्णमासस्य, सर्वः पूर्वपक्षो दर्शस्येति [2] निदानकारमतिः ॥

[3] द्वयोर्बहूनाम[4]तिपत्तौ पथिकृद्वैश्वानरावेव समानतन्त्रौ नानातन्त्रौ वा बोधायनमते ॥

प्रवृत्तस्य काला[5]तिक्रमे पथिकृत, अप्रवृत्तस्य वैश्वानरीति हिरण्यकेशिनः । उपदेशः पाथिकृतोऽपि स्वर्गपथप्रतिपत्त्यर्थः । वैश्वानरोऽपि ॥

| श्रुतायेकातिपत्तिश्रवणेऽपि नैमित्तिकान्तराविधानाद्-
भयातिसंनिपातेऽपि दोषद्वयनिराकरणाय एकैव
पाथिकृती अनुष्ठेया, तत्र दृष्टान्तश्च |

(धू) **अमावास्यां-श्चित्तम्** — 'अमावास्यां वा पौर्णमासीं वाऽतिपादयेत' इत्येकातिपत्तिश्रवणेऽपि एकस्मिन्नतिपन्ने अकृते नैमित्तिके द्वितीयस्याप्यतिपत्तौ उभयत्र दोषपरिहारार्थमप्येकैव पाथिकृती । तत्राप्येकातिपत्तेर्विद्यमानत्वात् । यथा युगपदपच्छेदे प्रत्येकापच्छेद-नैमित्तिकप्राप्तिः । अतोऽत्राप्येकमेव नैमित्तिकं तन्त्रेण कर्तव्यम् उभयार्ति-सन्निपाते पञ्चशरावनैमित्तिकान्तराश्रवणात् ॥

---

[1] पथिकृते–ङ. [2] निदानम–ख. ग. [3] उभयोः–ख. ग. [4] मप्यतिपत्तौ–ग. ङ. च. [5] तिनये.

किंच मीमांसकपक्षे अमावास्यां पौर्णमासीं वेति निरपेक्षनिमित्तश्रवणमविवक्षितम् । उभय हविरार्तिमित्युभयशब्दवन्निमित्तविशेषणानामविवक्षितत्वात् । तस्मात् द्वयोर्बहूनामप्यतिपत्तौ एका पाथिकृती ॥

**श्रुतिलक्षणत्वात्**—श्रुतौ लक्षणमात्रमुक्तम् , न कृत्स्नोक्तिः । अतो यस्य हविः क्षायतीति हविरेकत्वाद्यविवक्षितमित्युक्तम् । तद्वदत्राप्यतिपत्तिनिमित्तैकत्वादिविशेषणस्याविवक्षितत्वात् अनेकातिपत्तावप्येकं नैमित्तिकम् पथा वा एषोऽध्यपथेनैति इत्यस्य व्याख्या ॥

[ देवयानप्राप्त्युपायदर्शपूर्णमासयोर्देवयानत्वव्यवस्थापनम् ]

**देवयानो हि–मासौ**—'एष वै देवयानः पन्थाः, यद्दर्शपूर्णमासौ' इति श्रवणात् ब्रह्मज्ञानिनो नित्यकर्मानुष्ठानेनार्चिरादिमार्गस्य [1]ब्रह्मप्राप्त्युपायभूतस्य प्राप्तिः । तथा 'परमामेव काष्ठां गच्छति' इति दर्शपूर्णमासयोरपवर्गार्थत्वात् अर्चिरादिमार्गेण चापवर्गप्राप्तिः, कारणे कार्योपचारात् । देवयानप्राप्त्युपायभूतयोर्दर्शपूर्णमासयोर्देवयानत्वम् ॥

**तस्मादेष–ति पादयेदिति**—देवयानप्राप्त्यभावात् ॥

**स पथिकृत्**—'स एवैनमपथात्पन्थामपि नयति' इत्यत्र स इति पथिकृदित्यर्थः । पथिकृद्गुणकोऽग्निः, पन्थानं करोतीति पथिकृदिति व्युत्पत्तेः ॥

**अपथात्प–ति**—अपथादपनीय पन्थामपि[2]नयति पन्थानं करोतीत्यर्थः ॥

**अग्नये पथिकृते–स्विष्टकृतः**—याज्यानुवाक्याः ॥

**नैमित्तिक–र्यपि**—एकनिमित्तत्वादुभयोः अदृष्टो दोष उपदेशादुभाभ्यामेव हन्यत इत्युक्तम् । "एकस्मिन् दोषे श्रूयमाणानि" इत्यत्र । न च विकल्पः, उभयोरेकशाखापाठितत्वात् अध्येतृभेदेनापि

---

[1] ब्रह्मावाप्त्युपायस्य–घ. [2] नयत्यर्थः–ख. ग. घ.

व्यवस्थानुपपत्तेः । यथा उत्सर्गेष्ट्यामस्मच्छाखोक्तयोराग्नेयवैश्वानरयोः शाखान्तरोक्तैः पञ्चहविर्भिर्विकल्पः ॥

**पश्चात्**—पथिकृतः प्रथमपठितत्वात् ॥

**ततो दर्श–र्वकालः**—सकृत्प्रयोगस्त्वन्तरेणापि वचनमित्युक्तम् ॥

**सर्वोऽपर–कारमतिः**– "यं कामयेत पापीयान् स्यादिति, तमपरपक्षे" इत्येतदपि दर्शपूर्णमासयोर्न भवतीति ॥

**द्वयोर्ब–बोधायनमते**—अतिपत्ति[1]मात्रं निमित्तमित्युक्तम् । ततो गौणकाले अनन्तरातीतं केवलं कुर्यात् । पथिकृतोऽनड्वान् दक्षिणा । वैश्वानरस्य तु हिरण्यम् । हिरण्यमात्रचोदनायां शतमानं देयं, वाजसनेयवचनात् ॥

अयमपि 'यस्याग्निरुख्य उद्वायेत्' इत्यत्र 'हिरण्यं ददाति' इति ब्राह्मणविहितस्य शतमानं च हिरण्यं दक्षिणेति सूत्रकारेण परिमाणोपदेशादित्युक्तम् ॥

चातुर्मास्ये वैश्वानरस्य तु याज्यानुवाक्ये "ऋतावानं वैश्वानरं, जातो यदग्ने" इति । समानतन्त्रत्वेऽपि "यद्वाहिष्ठम्, अग्ने त्वं पारय" इति स्विष्टकृतः । पथिकृतो मुख्यत्वात् ॥

[ 'सुवर्गं लोकमेति' इत्यादिश्रुतिघटकस्वर्गशब्दस्य मोक्षतात्पर्यकत्वम्, तत्प्राप्तेश्चार्चिरादिमार्गप्राप्तिद्वारकत्वं च ]

**प्रवृत्तस्य–प्रतिपत्त्यर्थं**—स्वर्गपथप्रतिपत्त्यर्थं । "अथो देवता एवान्वारभ्य सुवर्गं लोकमेति" इति निर्देशात् । स्वर्गशब्दस्य मोक्षपरत्वात् । मोक्षप्राप्तेश्च देवयानमार्गप्राप्तिद्वारकत्वात् । वैश्वानरस्यापि

---

[1] मात्रस्य निमित्तमित्युक्तत्वात्.

स्वर्गपथप्रतिपत्त्यर्थत्वेन एकार्थत्वाद्विकल्प इति शाखान्तरोक्तेषु मुख्यकारणादिषु [1]वैश्वानरसमुच्चयः प्रतिपत्त्यभेदान्निरपेक्षकार्यकर[2]त्वाच्च ॥

[पाथिकृतीष्ट्याद्यनुष्ठानानन्तरं अतिपन्नेष्टेरनुष्ठेयत्वम्]

(रु) एतदुक्तं ब्राह्मणे तत्तथा कुर्यादित्यर्थः। इदं च तत्रोक्तं आरब्धदर्शपूर्णमासस्संस्तयोरन्यतरं स्वकालादतिपाद्यानडुद्दक्षिणां पाथीकृतीं निर्वपेदिति। तां च कृत्वा वैश्वानर्यपि कार्या; निमित्तैक्यादेकस्मिन्दोषे श्रूयमाणानीति वचनाच्च। ते च कृत्वाऽतिपन्नेष्टिरपि कार्या कालातिपत्त्यर्थत्वात्तयोः ॥

[तत्र बोधायनशालीक्यादिसंवादकथनम्]

उक्तं बोधायनेन पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालं निर्वपेददातिपन्नां प्रतियजेदिति। कल्पान्तरमप्याह तत्राह स्म ह शालीकिः, पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालं समानतन्त्रं (प्रति)अनुनिर्वपेन्न चातिपन्नां प्रतियजेदिति तत्र च यावदुत्तरस्य कर्मणः कालस्तावदेषाऽतिपन्नेष्टिः। उत्तरेणत्वविरुद्धे काले प्रायश्चित्तमात्रं तदधिकाराय क्रियते; नातिपन्नेष्टिः, अकाले कृतस्याकृतत्वात् ॥

[आपदि अननुष्ठितप्रायश्चित्तस्य भारद्वाजनिदानकाराभ्यामुक्तगौणकालनिरूपणम्]

अथ आपद्यकृतप्रायश्चित्तस्यैव गौणमेनं कालमाहुः कल्पान्तरकाराः। भारद्वाजस्तावदादर्शात्पौर्णमासस्य कालो नातीयात् आ पौर्णमासाद्दर्शस्येति। कालातिक्रमेऽप्यापदि यजेतेति। निदानकारोऽप्याह सर्वत्रापूर्यमाणपक्षो दर्शस्य स्थानं, कृष्णपक्षश्च पौर्णमासस्येति। तथा पौर्णमासेन हविषाऽपरपक्षमभियजेत आमावास्येन पूर्वपक्षमिति

---

[1] नवै—घ. [2] त्वात्.

न । वचनान्तराणि कल्पान्तराणि कल्पान्तरत्वान्न लिख्यन्ते । समानेऽतत् द्विबहूनामतिपत्तावपीति द्रष्टव्यम् ॥ ७० ॥

[ मूत्रत्रयोक्तशाखान्तरीयकल्पानां वैकल्पिकत्वम् ]

(सू.) **समानतन्त्रे वा मुख्यः कार्यः ॥ ९ ॥ १ ॥ ७१ ॥**
**॥ २२७९ ॥**

(भा.) अतिपन्नेन सह पर्वणा एकस्मिंस्तन्त्रे प्रथमः पथिकृत् कार्यः । अग्नेर्नया देवानामिति प्राकृत एव स्विष्टकृत्; न "यद्वाहिष्ठम्" इति, अस्य[1] पथिकृतः शाखान्तरविहितत्वात् ॥

(वृ.) **अतिपन्नेन विहितत्वात्**—एतस्मिन्नतिपन्ने आगामिपर्वणः प्रागनुष्ठीयमाने प्रथमः पथिकृत् । याज्यानुवाक्याकाण्डस्य अस्मच्छाखोक्तेष्टीनां क्रमणान्वये पथिकृद्याज्यानुवाक्ययोरनन्तरं यद्वाहिष्ठमित्यादेः पाठात्, तत ऊर्ध्वं व्रातपत्याः पाठात् पथिकृतः स्विष्टकृदर्थत्वम् । द्वयोरिति स्वशाखोक्तपथिकृत्स्विष्टकृदर्थे । किंच नैमित्तिकयागत्वान्मुख्यस्यापि तत्राप्रयोजकत्वात् प्राकृतस्विष्टिकृद्याज्यानुवाक्ये । एवं दक्षिणा नेति ॥

[ तत्र मुख्यकल्पः ]

(रु.) योऽयं पाथिकृतः पुरोडाशस्सोऽतिपन्नेष्ट्या सह समानतन्त्रे प्रयोगे मुख्यः कार्य इत्यर्थः तच्चातिपन्नेष्टेः सर्वथाऽतीतकालत्वेन संभवतीति गौणकाल एव व्यवतिष्ठते । न चास्मिन्कल्पे वैश्वानरी शाखान्तरीयत्वात्, पाथिकृतेन सहातिपन्नयागनिवृत्तेश्च । एवमुत्तरविकल्पयोर्द्रष्टव्यम् ॥ ७१ ॥

---

[1] अस्य तु.

(सू) अथैकेषाम्--वि वा एतस्य यज्ञश्छिद्यते यस्य यज्ञे प्रततेऽन्तरेतामिष्टिं निर्वपन्ति। य एवासावाग्नेयोऽष्टाकपालः पौर्णमास्यां योऽमावास्यायां तमग्नये पथिकृते कुर्यात्। तेनैव पुनः पन्थामवैति न यज्ञं विच्छिनत्तीति विज्ञायते ॥ ९ ॥ १ ॥ ७२ ॥ ॥ २२८० ॥

संयोज्ये एव पाथिकृती इत्यपरम् ॥ ९ ॥ १ ॥ ॥ ७३ ॥ २२८१ ॥

(भा) अन्ये त्वाहुः—विच्छिद्यते वा एतस्य यज्ञः यस्य यज्ञे प्रतते आरब्धेऽपरिसमाप्ते अन्तरेतामिष्टिं पाथिकृतीं [1] कुर्वन्ति। अत आग्नेय एव पथिकृद्देवत्यः कार्यः, प्रारब्धे कर्मणि। पुनश्च प्रधानं प्रतिपद्यते, न यज्ञविच्छेदः। स्विष्टकृतो वा "अग्नेनय, आ देवानाम्। इति याज्यानुवाक्ये। अप्रारब्धकर्मणस्तु मुख्यो वा पाथिकृतः प्रथमविधिवान्॥

[ शाखान्तरविहितपथिकृतः प्राधान्यपक्षे निन्दाया-स्तत्पक्षविधिप्रशंसार्थत्वम् ]

उपदेशः यावज्जीवं प्रवृत्तौ दर्शपूर्णमासौ। तयोर्मध्ये पथिकृन्मुख्यः कर्तव्यः इति निन्दा, उत्तरविधिप्रशंसार्था। त्रयोऽप्येते विकल्प्यन्त इति मुख्यकरणादयश्शाखान्तरोक्ता न व्यवस्थितविषयाः॥

(वृ) प्रारब्धे--कर्मणि--प्रक्रान्तप्रयोगस्य कर्मणो मुख्यकालातिपत्तौ प्रधानाग्नेय एव पथिकृद्गुणकः॥

---

[1] कृतीं मुख्यांकुर्वन्ति--ग. घ. ङ. च.

**न यज्ञ विच्छेदः**—अत्रानुवाक्ययोः पथिकृल्लिङ्गयोरपेक्षितत्वात् "अग्ने नय, आ देवानाम्" इत्येते आम्नाते, आम्नातयाज्यानुवाक्या लिङ्गैर्नियम्यते इति वचनात् । स्विष्टकृतस्तु प्राकृत एव, प्राकृतपथिकृद्गुणविशिष्टत्वात् । देवतान्तरनिबन्धनत्वात् स्विष्टकृद्विकारस्य संयोज्ये एव पाथिकृती इत्यस्यार्थः ॥

**स्विष्टकृतो–नुवाक्ये**—संयोज्ये इति स्विष्टकृद्याज्यानुवाक्ययोर्निर्देशः सर्वत्र इदमपि पक्षान्तरम् । निर्वापोत्तरमिष्ट्युत्कर्षे "अग्ने नय, आ देवानाम्" इति संयोज्ये पाथिकृती ॥

**अप्रारब्ध–धिर्वा**—प्रयोगानारम्भे उभौ कल्पौ "अथैकेषां वि वा एतस्य यज्ञ" इत्यस्योपदेशस्य व्याख्या ॥

**उपदेशः–स्थितविषयाः**—अस्यार्थः–शाखान्तरोक्तपथिकृन्मुख्यपक्षे निन्दा उत्तरविधेः प्रधानाग्नेयपथिकृत्पक्षविधिप्रशंसार्था । अतश्शाखान्तरविहितस्य पक्षत्रयस्य तुल्यवद्विकल्पः ॥

**[दम्पत्योरधिकारतौल्यात् पत्न्यां रजस्वलायामेकस्य यागानुष्ठानेऽनधिकारादनारब्धदर्शपूर्णमासस्यादौ (मतभेदेन) विभ्रष्टेष्टिरेवेत्यादिविषयव्यवस्था ]**

अत्रेयं स्थितिः—अन्वारम्भणीया विकृतौ न स्यादित्यस्मिन् पक्षेऽनारब्धदर्शपूर्णमासस्य प्रथमं विभ्रष्टेष्टिः । ततस्सारस्वतान्वारम्भणीयादि । स्याद्वा कालस्येत्यस्मिन् पक्षे प्रथममन्वारम्भणीया, ततो विभ्रष्टेष्टिः, ततस्सारस्वतान्वारम्भणीया । चतुर्होत्रादि । प्रथमारम्भकाले रजस्वलात्वेनानारम्भेऽपि विभ्रष्टेष्टिः । प्रवृत्तविषये अपरुध्य योगाविधिबलेन रजस्वलाया अपि अधिकारसंभवात् । इतरथा रजस्वलाया अधिकाराभावे प्रवृत्तविषयोऽपि अधिकारभङ्गात् , अपरुध्यानुष्ठानं न स्यात्,

अतः कर्तृत्वमात्रबाधादधिकारे सति अनारम्भाद्विभ्रष्टेष्टिः कर्तव्या। अत एव आरब्धविषयेऽपि प्राक्प्रयोगसंकल्पाद्रजस्वलायाः कर्तृत्वसंशये कर्तृत्व[1]संपादनाशक्तेर्निश्चितत्वात् अपरुध्यानुष्ठानं न भवति॥

केचित्तु---रजस्वलाया अनधिकारात् न विभ्रष्टेष्टिरित्याहुः। अधिकृतस्याना[2]रम्भे आरब्धदर्शपूर्णमासस्य स्वकालेऽननुष्ठाने पथिकृद्वैश्वानराव[3]नेकातिपत्ताव[4]पीति। तत्रानन्तरातीतमागामिपर्वकालात्प्राक् स्वरूपेण कर्तव्यम्। एकातिपत्तौ तस्य गौणकाले मुख्यकरणम्। प्रवृत्तप्रयोगस्य प्राङ्निर्वापादुत्कर्षेण मुख्यकालातिपत्तौ [5]आग्नेयस्य पथिकृद्गुणत्वम्। निर्वापोत्तरकालमुत्कर्षे पाथिकृती संयोज्ये इति। एवमाग्रयणेऽपि, प्रथमे पशौ संवत्सरमकृते विभ्रष्टेष्टिरेषा, न पशोरपि प्रयोगः। सूयवसादिकालविशेषसंकल्पे संकल्पितकालातिपत्तौ दर्शवत् मुख्यकाले पशोरशक्तौ तस्मिन् काले वैश्वानरी मनसोक्ता।[6] दर्शनारम्भेपि विभ्रष्टेष्टिः। प्रथमप्रयोगे आग्नेयाद्यन्यतरकिरणलोपे विभ्रष्टेष्टिः। द्वितीयादिष्वन्यतरकिरणलोपेन समाप्ते प्रयोगेऽनन्तरमेव तस्य साङ्गस्य पुनरनुष्ठानम्॥

**[ वरुणप्रघाससाकमेधादीनां विहितकालेऽननुष्ठाने आगामिकालात्प्रागग्निहोत्राननुष्ठाने चानुष्ठेयांशव्यवस्था ]**

वरुणप्रसादीनामपि स्वकालाकरणे पथिकृद्विधिचतुष्टयं भवति; तथा नक्षत्रेष्टिरेव श्येनादीनां द्वितीयाद्यकरणे आहिताग्नेः कृतप्रायश्चित्तपशुकस्य वसन्ते सोमयागानारम्भे [7]विभ्रष्टेष्टिः क्रतुस्सप्तदशस्तोमोऽग्निष्टुत् अभ्यासस‍ङ्कल्पे स्वकालाशक्तौ वैश्वानरी। तस्यां चाकृतायां विभ्रष्टेष्टिः

[1] समये-घ. [2] रम्भे विभ्रष्टेष्टिरिति आर-ग. [3] ककलाति-ट. [4] वधि तत्रा-क. ख. घ. [5] वाग्नेयस्य-घ. [6] दर्शारम्भेऽपि-ग. [7] विभ्रष्टक्रतुःसप्त-ग. घ.

क्रतुस्सोमश्च। आगामिकालात्प्रागग्निहोत्राननुष्ठाने सर्वदा सप्तहोता। काम्येष्टिपशुप्रयोगे प्रक्रान्ते कालातिपत्तौ संयाज्ये पाथिकृती सर्वप्रायश्चित्तं च ॥

[तत्रैव विकल्पितौ कल्पौ]

(रु) यस्य प्रारब्धेष्टिर्मध्ये विहता स्यात्तस्य यदि मध्येयज्ञं पाथिकृती क्रियेत तदा स यज्ञः पूर्वप्रततो विच्छिद्येत, नचान्ते कर्तव्यतेष्यताम्। निर्वृत्य दोषमतिपन्नायाः कर्तव्यत्वात्। अतो य एव तत्राच्युत आग्नेयः स एव पथिकृद्गुणकः कार्यः तेनैव पुनर्यज्ञस्य विहतस्य पन्थानं प्रतिपद्यते न च यज्ञो विच्छेदितो भवतीति। स चायं कल्पः प्रवृत्तस्यातिपत्तौ पूर्वाभ्यां विकल्पाभ्यां विकल्प्यते, शाखान्तरीयत्वात्। अप्रवृत्तस्य तु पूर्वावेव भवतः प्रवृत्तैकविषयत्वादस्य। सत्याषाढस्तु पाथिकृतीमपि प्रवृत्तविषयां वष्टि यथा एनां प्रकृत्याह इति प्रवृत्तस्य कालापनये अप्रवृत्तस्य वैश्वानरीयेति ; नायमभिप्रायस्सूत्रकृतः तस्य सामान्यतो वचनात् ॥ ७२ ॥

(रु) अथवा न केवलमिष्टिरेव मध्येयज्ञं कार्या गुणविकारोऽपि तस्य न कार्यः। संयाज्यामात्रं विकुर्यात्। 'अग्ने नया देवानामिति ; सर्वमन्यद्यथाप्रकृतीत्यर्थः। एवं चानन्तरस्यैवायं विधिर्विकल्पो न पूर्वयोरित्युक्तं भवति। अस्त्वेवं दर्शपूर्णमासयाजिनस्सतस्तदतिपत्तौ विधिः, अनारब्धदर्शपूर्णमासस्य तु को विधिर्भवति। नन्वस्ति यज्ञविभ्रष्टस्येष्टिर्ब्राह्मणविहिता 'यो यज्ञविभ्रष्टस्स्यादिति स्यात्' इति तां सूत्रकारोऽप्यनुक्रमिष्यति काम्येष्टिप्रकरणे, तत्सा प्रवर्तिष्यते। यतो यज्ञविभ्रष्टत्वं दर्शपूर्णमासयोरतिपत्तौ व्याख्यातमुपग्रन्थकारेण यथा को नु खलु विभ्रष इति प्रकृत्याह यस्याग्निहोत्राहुती अन्योन्यस्थानमापद्येते यत्र वा दर्शपूर्णमासाविति। अन्योऽन्यस्य स्थानमापद्येते इति गौणकालस्याप्यति-

पत्ताविस्यर्थः गौणकालश्च दर्शित एव प्राक्। अन्यच्च मतं न यज्ञातिपत्तिमात्रात्तावद्यज्ञविभ्रष्टो भवति प्रक्रान्तादुपरतस्यैव लोकशास्त्रयोर्भ्रष्टत्वप्रसिद्धेः, यथा योगभ्रष्टः सन्यासभ्रष्ट इति। तथा यो यज्ञविभ्रष्टस्स्यादिति प्रकृत्य उपक्रमाशक्नुवन्यज्ञविभ्रष्ट इत्येव सत्याषाढ, तस्माद्यत्रेष्टिपशूनां प्रक्रान्तानां मध्ये विभ्रेषस्तत्रेयमिष्टिः भवति ॥

[दर्शपूर्णमाससोमविभ्रेषोन्नयांशः]

तत्र दर्शपूर्णमासविभ्रेषऽनतिपन्नगौणकाले वि वा एतस्येत्येष विधिर्वैशेषिकत्वादनुसंधातव्यः सोमविभ्रेषे तु सोम एव वक्ष्यते सप्तदशेनाऽग्निष्टुताऽग्निष्टोमेन यज्ञविभ्रष्टो यजेतेति, दर्विहोमविभ्रेषे च दर्विहोमस्सप्तहोता ' ' सप्तहोत्रा यज्ञविभ्रष्टं याजयेत् ' इति ॥

[अनारब्धदर्शपूर्णमासस्य कालातिलङ्घने मतभेदेन प्रायश्चित्तसदसद्भावव्यवस्था]

**किमिदानीं अनारब्धदर्शपूर्णमासस्य तदतिपत्तौ नास्त्येव प्रायश्चित्तम्। ओमिति ब्रूयात्।** अथ वा पाथिकृतवैश्वानरावेव निर्वपेत् प्राप्तकालयोरतिपादनात् तदुक्तं बोधायनेन अनन्वारब्धदर्शपूर्णमासस्य प्रायश्चित्तकरणं इति कुर्यादिति **बोधायनो** न कुर्यादिति **शालीकिरिति** ॥

यस्तु प्रथमपूर्णमासेनेष्ट्वा प्रथमदर्शमतिपातितवांस्तस्य च पाथिकृतवैश्वानरावेव स्यातामारब्धदर्शपूर्णमासत्वात्, आरम्भस्य चोभयोरेकत्वात् अन्यथाऽऽरम्भार्थानां सारस्वतादीनां दर्शेऽप्यावृत्तिप्रसङ्गाच्च। तथाऽऽरब्धदर्शपूर्णमासस्य पश्वाग्रयणातिपत्तावप्येतदेव प्रायश्चित्तं वेदितव्यम् पशोस्त्वनुग्रह उक्तो मनुना यथा—" इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये। क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसम्भव " इति ॥ ७३ ॥

[अभ्युदयेष्ट्याममायामनुष्ठेयप्रायश्चित्तस्य मतभेदेन व्यवस्थापनं,
तत्र भाष्यकृत्सम्मतिश्च]

(सू.) यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेतीत्युक्तम्
॥ ९ ॥ १ ॥ ७४ ॥ २२८२ ॥

(भा) निर्वापे कृते यस्य पुरस्तात् पूर्वस्यां दिशि चन्द्रमा दृश्यते अमावास्येति प्रमादात्। त्रेधा त्रिभिर्भागैराग्नेयांस्तण्डुलान् आग्नेयैन्द्राग्नयोर्वा विभजेत्, मध्यमानग्नये दात्रे। स्थविष्ठान् स्थूलतमान्। इन्द्राय प्रदात्रे। दधनि सायंदोषे श्रपयितव्याः। अणिष्ठाः ते विष्णवे शिपिविष्टाय प्रातर्दोहे भाविनि पयसि श्रपयितव्याः [1]श्रपणार्थे प्रणीता धर्माः। ऊहेन यजुरुत्पूतेन वा। अग्निर्दाता आग्नेयापूर्वगुणविकारः, स्थानाद्देवतासामान्याच्च। इन्द्रः प्रदाता विष्णुः शिपिविष्टश्च। स्थानात् सान्नाय्यश्रवणाच्च सान्नाय्यापूर्वयोर्गुण[2]विकारौ। वायव्ययवाग्वा विधिरुक्तः चर्वोः। असोमयाजिनः उदके चरू ऐन्द्राग्नापूर्वगुणविकारौ। यतश्च प्राकृतानां स्थाने अतोऽभ्युदये[3]ष्ट्यामपि [4]व्रती यजमानः 'न द्वे एव यजत' इति अन्ये त्वाहुः;—आग्नेयद्रव्यविभागादाग्नेयस्यैवाभ्यासस्सोमयाजिनः। असोमयाजिनोऽग्निर्दाता-आग्नेयस्यैन्द्राग्नस्य [5]चरू इति। उपदेशः अग्निर्दाता शिपिविष्टश्चाग्नेयस्य; इन्द्रः प्रदाता ऐन्द्राग्नस्य॥

["यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति"
इत्यादिश्रुतिवाक्यार्थविवरणपूर्वकं त्रेधा तण्डुलविभाग-
फलकथनादिकम्]

(वृ) **निर्वापे कृते—प्रमादात्**—प्रमादान्निर्वापे कृते यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेतीत्यस्याः श्रुतेर्व्याख्या। पुरस्ताच्चन्द्रमा

---

[1] श्रपणौन्त्ये—घ. [2] विकारो—ङ. [3] ष्ट्यापि—घ. [4] कृती यज—ङ. च.
[5] सोमयाजनः ऐन्द्राग्नविकारौ चरू—ग.

अभ्युदेतीति निर्देशादमावास्यायामेवैतत्प्रायश्चित्तम्। अमावास्याभ्रान्त्या दर्शारम्भे पूर्वस्यां तिथौ कृते नैमित्तिकं हविर्निरुप्तमभ्युदेतीति अभ्युदयो भविष्यतीति निर्वापोत्तरकालं ज्ञाते न पुनर्निरुप्तेऽभ्युदये निष्पन्ने पूर्वस्यां दिशि चन्द्रोदयस्यापररात्रौ सम्भवात्, चतुर्दश्यामारब्धे पञ्चदश्यां निर्वापे कृतेऽभ्युदयासम्भवात्। [1]तदा त्रयोदश्यामारभ्य चतुर्दश्यां निर्वापेऽपि कर्मणि समाप्ते पश्चादपररात्र एवाभ्युदय इति त्रेधा तण्डुलान् इत्यादि नैमित्तिकत्वासम्भवः। शाखान्तरे यदि बिभीयादभ्युदेष्यतीति भविष्यदभ्युदयनिर्देशः कृतः। भाष्यकारश्च यदा ज्ञायते दृष्टश्चन्द्रमा इति वक्ष्यति। तस्मादनागते मुख्यकाले तन्त्रमारब्धमिति ज्ञानं निमित्तम्। तस्यावस्थाभेदो निरुप्तं गृहीतमिति। मीमांसकानां तु निरुप्तादीनामप्यविवक्षा। अकाले तन्त्रप्रवृत्तिमात्रं निमित्तमिति। पूर्णचतुर्दश्यां प्रातरन्वाधाने कृतेऽभ्युदये[2]ष्टिनिमित्तसम्भव इति केचित्। औपवसथ्यादह्नः पूर्वस्मिन्नहनि तन्त्रप्रवृत्तिमात्रमित्यन्ये॥

[असन्नयतोऽप्यभ्युदयेष्ट्युपपादनम]

**त्रेधा-दिति**--ऐन्द्राग्नतण्डुलविभागनिर्देशादसन्नयतोऽप्यभ्युदयेष्टिः! तथाहि;-अकाले प्रवृत्तदर्शस्यैव नैमित्तिकप्रयोगविशेषोपदेशे दधिकृतप्रयोगेऽपि पूर्वोत्पन्नहविषां देवतापनयपूर्वकदेवतान्तरसम्बन्धस्य विवक्षितत्वादसन्नयतोऽप्याग्नेयैन्द्राग्नहविर्विभागः।

**मध्यमानग्नये- तव्याः** — 'त्रिष्फलीक्रियमाणानाम्' इति कृत्वा तूष्णीं तण्डुलांस्त्रेधा विभज्य मध्यमादीनामिदमग्नये दात्र इत्यादिनिर्देशं कृत्वा मध्यमानां कृष्णाजिनादानादिकपालोपधानान्तं कृत्वा ध्रुवासीति दधिकुम्भीमुपधाय प्रातर्दोहे विष्णवे शिपिविष्टाय तण्डुलभूते पूर्वदेवतापनयात्।

---

[1] तथा- घ. [2] ष्टिनिमित्तनं-ग. घ.

केचित् पूर्वदेवतायै दोहं कुर्वन्ति। 'विष्णवे शिपिविष्टाय शृते चरुम्' इति शृतावस्थायां देवतान्वयात्।

**श्रपणा-त्पूतेन वा;**—श्रपणार्थे दध्नि (दधनि) पयसि च प्रणीताप्रणयनेन दध्नोऽपि सहप्रणयनादि। उदकपराभिधानान्नोहः। पिष्टोत्पवनकाले तण्डुलोत्पवनम्। यजुरुत्पूतपक्षे दधिशृतयोश्चोत्पवनम्। पुरोडाशमधिश्रित्य दोहयोस्तयोस्तण्डुलानावपति 'घर्मोऽसि' इति यजुरुत्पूते वा।

**अग्निर्दाता-न्याच्च**—आग्नेयापूर्वसाधनगुणभूतदेवतामात्रविकारः। यागस्तु स एव अपूर्वं च स्थानादिति प्रथमस्थानत्वाद्देवतासामान्यादित्यग्निदैवतत्वात्।

**इन्द्रः प्र-कारौ**—द्वितीयतृतीयस्थानत्वात्। द्वितीयस्य तु देवतासामान्यमपि सान्नाय्यश्रपणादिति सान्नाय्यहवीरूपस्यैव प्रदेयभूतस्य अर्थाच्छ्रपणनिवर्तकत्वात् सान्नाय्यापूर्वयोर्गुणविकारौ। अत आग्नेयादीनामेव देवताद्रव्यविशेषप्रयोगविकारः।

**वायव्य-चर्वोः**—उद्वासनात्पूर्वमौषधधर्माः येषां प्रयोजनमस्ति। ऊर्ध्वं तु सान्नाय्यधर्मा इति।

**असोम-चरू**—दधिशृतयोरभावेऽप्याग्नेयैन्द्राग्नयोस्तण्डुलांस्त्रिधा विभज्य पुरोडाशश्चरुद्वयं च कर्तव्यमिति उदके चरुश्रपणम्।

**ऐन्द्राग्न-विकारौ**—द्वितीयतृतीयौ। द्वितीयस्य देवतासामान्यम्। तृतीयोऽपि स्थानादैन्द्राग्नस्यैवाभ्यासः।

**यतश्च-यजेतेति**—अस्यार्थः—प्राकृतापूर्वसाधनभूतयागीयदेवतास्थानापन्नत्वात् कर्मान्तरत्वाभावात् [1]अभ्युदयेष्ट्या नित्याधिकार-

---

[1] अभ्युदयेष्टावाग्नेयादीनामेव प्रयोगविकारमात्रत्वान्न कर्मणां प्रायश्चित्तरूपता किं तु नित्याधिकारिसाधनतैव-**ग.**

निर्वृत्तेः दर्शस्य न पुनः प्रयोगः । 'न द्वे यजेत' इति श्रुत्या सकृत्प्रयोगस्तु अन्तरेणापि वचनं भवतीति पुनः प्राप्तदर्शप्रयोगनिषेधः ।

[सोपपत्तिकं 'द्वे एव यजेत' इति श्रुतिफलितार्थविवरणम्]

'अनादृत्य तद्द्वे एव यजेत' इति वचनस्यायमर्थः—कालान्तरे अभ्युदयेष्ट्या विना दर्शे निवृत्ते पश्चात्पुनरिज्याप्रयोगार्थं 'यमग्रेजानं पश्चाच्चन्द्रमा अभ्युदेति' इति वाक्यशेषे 'ईजानम्' इति भूतनिर्देशात्। अतो यागोत्तरकालं अभ्युदयज्ञाने द्वे एव यजेतेति वचनम् ।

**अन्ये त्वाहुः**—अस्यार्थः—अभ्युदये सति 'त्रेधा तण्डुलान् विभजेत्' इति पृथक्कृतानां तण्डुलानां ये मध्यमा इत्यादिना देवतासंयोगश्रवणात् शृते चरुं दधिनि चरुं इति शृतदध्नोरविकरणनिर्देशात्तयोः श्रपणार्थत्वात् तण्डुलसाध्यापूर्वगुणविकारा एव त्रयोऽपीति । [1]...

**उपदेशो–ग्नेयस्य**—औषधविकारत्वे सति तयोरेकदेवतात्वादाग्नेयस्य प्रकृतिदेवतात्वाच्च ।

**इन्द्रः प्रदातैन्द्राग्नस्य**—द्वितीयस्य तु प्रकृतिदैवतत्वादैन्द्राग्नविकारत्वमिति ।

[ब्राह्मणोक्तविशेषोपपादनम्]

(रु) उक्तमिदं ब्राह्मणे तद्यथाब्राह्मणं कुर्यादित्यर्थः । तत्र चेदमुक्तं, यः पुरस्ताच्चन्द्रोदयवतीं तिथिं चतुर्दशीं तेन मिश्रां वा पञ्चदशीं यजनीयमहर्बुध्वा तदनुगुणं प्रवृत्तदर्शतन्त्रो हविर्निर्वापोत्तरकालं तत्त्वं जानीयात्, स निरुप्तस्य हविषस्तण्डुलान् स्थूलमध्यमाणुभेदेन त्रेधा विभज्य मध्यमानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् अविवपनादिष्वग्निं दातारमुपलक्षयेदित्यर्थः । स्थविष्ठानिन्द्राय प्रदात्रे सायंदोहे चरुं कुर्यात्

[1] सोमयाजिनः ऐन्द्राग्नविकारौ चरू इति–घ.

अणिष्ठान्विष्णवे शिपिविष्टाय प्रातर्दोहे । तत्र चरुधर्मा यवाग्वा व्याख्याताः । चरुसांनाय्ययोश्श्रवणात्, स्थानाच्च तयोरेव गुणविकारौ पुरोडाशस्त्वाग्नेयविकार एव पुनरिज्यायास्तु विकल्पः तदुक्तं 'एकामेव यजेत, द्वे एव यजेत' इति । नायं विधिरसंनयतस्सान्नाय्यसंयोगात् आह; **चाश्वलायनः** सान्नाय्ये पुरस्ताच्चन्द्रमसाऽभ्युदित इति ; **भारद्वाजस्त्वाह** सोऽयं नासंनयतो विद्यत इत्येकं, विद्यत इत्यपरमिति । **विद्यत इति पक्षे** अप्सु श्रपणं चर्वोरैन्द्राग्नवच्च धर्माः ॥

[अनिरुप्ते हविषि चन्द्रदर्शने जाते प्राकृतीभ्यो देवताभ्यो हविर्निर्वाप इत्याश्मरथ्यमतम्]

(सू) **अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यः ॥ ९ ॥ १ ॥ ७५ ॥ २२८३ ॥**

(भा) अनिरुप्ते दृष्टे चन्द्रमसि प्राकृतीनामेव निर्वापः । प्रक्षाल्य विभागः ।

(रु) यदा पुनरर्वाङ्निर्वापादकालप्रवृत्तिर्ज्ञाता तदा संशयः, किं प्राकृत्या एव देवतायै निर्वप्तव्यं, उत वैकृतीभ्य इति । तत्र प्राकृतीभ्य इत्याश्मरथ्यो मन्यते । प्राकृतीभ्य इत्यविवक्षिता सङ्ख्या ॥

(सू) **तण्डुलभूतेष्वपनयेत् ॥ ९ ॥ १ ॥ ७६ ॥ ॥ २२८४ ॥**

(भा) त्रेधा तण्डुलानिति प्राकृतानामपनयः ।

['त्रेधा तण्डुलान् विभजेत्' इति श्रुतिवाक्ययोर्न्नयोंऽशः]

(वृ) **त्रेधा–नयः**—अस्यार्थः—त्रेधा तण्डुलान् विभजेदित्यनेन देवताभ्यो हविर्विभागः तण्डुलविभागश्चोपदिश्यते । तत्र देवतापनय-

स्तण्डुलावस्थस्य हविषः। अतो निर्वापकाले पूर्वदेवतानामेव निर्वापः। तण्डुलावस्थायां प्राकृतानामपनयः। अत एव हविरुत्पत्त्युत्तरकालत्वा-द्देवतापनयस्य प्रातर्दोहोऽपि पूर्वदेवताया इति केचित्।

(रु) तां तु प्राकृतीं देवतां तण्डुलीभूतेषु व्रीह्यादिषु पूर्ववद्वैकृत देवतानिवेशनेनापगमयेत्॥

[अकालप्रवृत्ततन्त्रभाग्देवताभ्यो हविर्निर्वाप इत्यालेखनमतम्]

(सू) व्यृद्धभाग्भ्य इत्यालेखनः॥ ९॥ १॥ ७७॥ ॥ २२८५॥

(भा) अकाले प्रवृत्तं तन्त्रं व्यृद्धं हविः तद्भजन्तीति दातृप्रभृतयो व्यृद्धभाजः। ताभ्य एव निर्वापः इत्यालेखनमतिः। चन्द्रदर्शनका-रितोऽपि प्राकृतानामपनयः।

(वृ) तत्र कारणमाह—चन्द्रद—नयः—काले तु विभागस्त्रेधा तण्डुलानिति। प्रक्षाल्य विभागः त्रेधा तण्डुलानां मध्यमादिरूपेण॥

(रु) 'वि वा एतं प्रजया पशुभिरर्धयति' इत्यर्थवादेन व्यृद्धिहे-तुत्वख्यापनादभ्युदितं हविर्व्यृद्धमित्युच्यते तद्भजन्ते या वैकृत्यो देवतास्ता-व्यृद्धभाजः ताभ्यो निर्वपेदित्यर्थः॥

[निरुप्ते हविष्यनिरुप्ते चाभ्युदयेष्टेरेवानुष्ठेयत्वम्]

(सू) विनिरुप्तेऽभ्युदिते प्राकृतीभ्यश्शेषं तण्डुलभूते-ष्वपनयेत्॥ ९॥ १॥ ७८॥ २२८६॥

(भा) विनिरुप्तमर्धनिरुप्तम्। तत्र प्राकृतभ्य एव शेषो निर्वापः ताः प्रवृत्ताः। अपनयश्च प्राकृतीनाम्। तण्डुलभूतेषु सवत्राभ्युदयेष्टिरेव॥

(वृ) **तत्र प्राक्-प्रवृत्ताः**; एकस्मिन् निर्वापपदार्थे प्रकृतिदेवतानां प्रवृत्तत्वात् ताभ्य एव शेषनिर्वापः। अत एव विनिरुप्तेऽभ्युदित इति निर्देशात् अभ्युदयज्ञानमेव निमित्तम्। अपररात्रे चन्द्रोदयकाले निर्वाप-प्रवृत्तिप्रसंगाभावात् ॥

**अपनयश्च-मिष्टिरेव**—निरुप्ते अर्धनिरुप्ते च अभ्युदयेष्टिरेव नैमित्तिकम्; न पुनर्दर्शप्रयोगः अविधानात् ॥

(रु) विनिरुप्तं अर्थनिरुप्तं तत्राभ्युदिते प्राकृत्या एव देवतायै शेषं निर्वपेदित्यर्थः ॥

[अनिरुप्ते चन्द्रदर्शने वैकल्पिकविधित्रयविधानम्]

(सू) **यस्यागृहीतं हविरभ्युदियात्, व्रतचर्यां वा नोदाशंसीत, स त्रेधा तण्डुलानिति पूर्ववत्। अथोत्तरस्मै हविषे वत्सानपाकुर्यात् ॥ ९ ॥ १ ॥ ॥ ७९ ॥ २२८७ ॥**

(भा) अगृहीतं अनिरुप्तं पुनश्च प्रातर्दोहार्थं तत्र चन्द्रदर्शने विकल्प उच्यते। व्रतचर्योपवसथाभ्यासः तस्य विधिरुत्तरत्रोच्यते। यदि नोदाशंसीत—न शक्नुयात् कर्तुम्? स त्रेधा तण्डुलानिति पूर्ववत्कृत्वा-ऽभ्युदयेष्टिः। पुनरामावास्यं सर्वं करोति विहरणाद्यविकृतम्। वत्सापा-करणं पुनरिज्याप्रदर्शनार्थम्। तत्र विधित्रयम्, अनिरुप्तेऽभ्युदयेष्टिरेव उपवसथाभ्यासो वा, कृत्वाभ्युदयेष्टिं पुनरामावास्यमविकृतामिति ॥

(वृ) **तस्य विधिरुत्तरत्रोच्यते**—अनशनसत्यवचनब्रह्मचर्यादि पुनः पञ्चदस्यां कृत्वा पूर्ववद्यवागूहोमादि पूर्वोत्पन्नं दध्यातञ्चनार्थमित्यादि वक्ष्यति ॥

**कर्तुं**—अनशनादि।

**अनिरुप्ते-रेव**—अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेत् इत्युक्तत्वात् ॥

**उपव-वा ;**—व्रतचर्या वेति विधानात् ।

**कृत्वाभ्यु-तम् इति**—यदि नोदाशंसीतेत्यादिना विहितम् ।

[निरुप्तानिरुप्तहविषोः शाखान्तरीया विकल्पिताः कल्पाः]

(रु) अथ निरुप्तानिरुप्तविशेषयोश्शाखान्तरीया अपि कल्पा विकल्पार्थं प्रदर्श्यन्ते । अगृहीतमनिरुप्तम् । अनिरुप्तविषये पूर्ववदभ्युदितेष्टिं कृत्वा पुनरिज्यां कुर्यात् । निरुप्तविषयेऽपि वक्ष्यमाणव्रतचर्यां कल्पाशक्तावेव कुर्यादित्यर्थः । व्रतचर्या वा नोदाशंसीत, व्रतचर्या उपवसथाभ्यासः ; तां च नोदाशंसीत न शक्ष्यामि कर्तुमित्युदीक्ष्य नाशंसीत जेच्छेदित्यर्थः । तथा च व्रताशक्ताववेति कात्यायनः । पुनरिज्यानियममात्रमत्राधिकमिति वेदितव्यम् ॥

[निरुप्ते पूर्वोक्ताभ्युदितेष्टिरेव कार्या]

(सू) **अथ यस्य गृहीतं हविरभ्युदियात् सैव प्रायश्चित्तिः, सा व्रतचर्या ॥ ९ ॥ १ ॥ ८० ॥ २२८८ ॥**

(भा) गृहीतं–निरुप्तम् । तत्राभ्युदितेष्टिः पूर्वेण, उपवसथोभ्यासो वा सैव प्रायश्चित्तिः । सा व्रतचर्या–अनशनसत्यवचनादि[1] ।

(वृ) **पूर्वेण**—यस्य हविर्निरुप्तमित्यादिना ।

**उपव-श्चित्तिः**—इति अभ्युदितेष्टिरुक्ता ।

(रु) निरुप्तविषये सैवाऽऽमावास्यैव पुनरभ्यस्ता प्रायश्चित्तिः ; सा वा व्रतचर्या व्रत्यमहरेव वाऽभ्यस्तमित्यर्थः । तदत्र निरुप्तविषयेऽनन्तर-

---

[1] दिच.

सूत्रोक्तेन कल्पेन सह त्रयोऽमी शाखान्तरकल्पा उक्ता भवन्ति, यथाप्रकृतिमेवाविकृतां कृत्वा तयैव पुनर्यजेत, उपवसथमात्रं वा वर्धयित्वा पश्चाद्यजेतेति । तदेतद्व्यक्तं बोधायनीये 'स ह स्माह बोधायनस्सिद्धैरेवामावास्यैर्हविर्भिरिष्ट्वा पुनरुपोष्य श्वो भूते कार्यामनभ्युदितामव्यापन्नां यजेत । अत्र ह स्माह शालीकिर्यैषा ब्राह्मणजेष्टिस्तया व्यक्तयेष्ट्वा पुनरुपोष्य श्वो भूते कार्यामनभ्युदितामव्यापन्नां यजेतेत्यपि वोपवसथ एवातिप्रवर्धेतेति' । सा व्रतचर्येत्यत्र प्रयोगमाह ॥

[प्रातर्दोहोत्तरकालिकाभ्युदयज्ञानोत्तरयोंऽशः]

(सू) **वत्सान् मातृभिस्संसृज्य पुनरपाकृत्य पूर्वेद्युः दुग्धं दधि हविरातञ्चनार्थं निदध्यात् ॥ ९ ॥ १ ॥ ॥ ८१ ॥ २२८९ ॥**

(भा) वत्सान् मातृभिस्संसृज्य प्रातर्दोहार्थान्, सायं दोहार्थं पुनरपाकरणं पुनश्च प्रातर्दोहार्थम्, श्वो भूते कृतान्तात्प्रक्रमः । कृतायामिज्यायां यदा ज्ञायते दृष्टश्चन्द्रमा इति तदा पुनरिज्यैव । हुत्वा [1] प्रायश्चित्तम् ।

अकाले कृतमकृतमिति उपवसथाभ्यासे उत्पन्नोऽपि प्रातर्दोहः परित्यज्यते उत्करे । 'यद्वै यज्ञियस्य' इत्युपदेशः ।

न्यायस्तु–देवतार्थं गृहीतस्य हविषो वचनमन्तरेण त्यागो न युक्त इति स एवाऽऽमेयः, श्रुतं च धार्यते पुनरन्य[2]देव श्रुतं क्रियते, पुनरपा[3]कृत्य सायंदोहस्त्वातञ्चनार्थो भवेत् ।

(वृ) **प्रातर्दोहार्थं**—अपाकरणं दुग्धे सायंदोहे ।

**श्वोभूते–क्रमः**—पूर्वमिज्याया अभ्युदयज्ञाने निरुप्ता व्रीहयः उत्तरेद्युः पुरोडाशार्थं रक्षितव्याः । सायंदोह आतञ्चनार्थम् । प्रातर्दो-

---

[1] सर्वप्रा–ग. [2] देव क्रियते–क. ख. ग. ङ. [3] कृत्येति–ङ. च.

होत्तरकालमभ्युदयज्ञानेऽपि कृतान्ताद्विरम्य दोहद्वयं निधाय-यवागूहोमादि। निष्पन्ने पुरोडाशे अभ्युदयज्ञाने व्रतचर्यापक्ष एव।

**कृताया-श्चित्तं**—अत्र ज्ञायत इति वचनात् सर्वत्र ज्ञानमेव निमित्तं, तदानीमेवारम्भः। अनादृत्य तद्व एव यजेत इति पूर्वमेव व्याख्यातम्।

**अकालकृत-उपदेशः**—अस्यार्थः—उपवसथाभ्यासपक्ष उत्पन्नोऽपि प्रातर्दोह उत्करे त्यज्यते अकाले कृतस्य हविषोऽकृतत्वात्। 'यद्वै यज्ञियस्य कर्मणः' इत्यारभ्य 'उत्करो वाव तस्य प्रतिष्ठा' इति सिद्धवदनुवादादुत्करे त्यागः। सायंदोहस्त्वातञ्चनार्थ एव, पूर्वेद्युर्दुग्धं दधि हविरातञ्चनार्थं निदध्यादिति वचनात्।

**न्यायस्तु-ग्रेयः**—अस्यार्थः – कालभ्रान्त्या प्रवृत्तेऽपि तन्त्रे देवतार्थं गृहीतस्य त्यागो न युक्तः। अतः स एवाऽऽग्नेयः, श्रुतं च धार्यते।

**श्रुतं-धार्यते**—प्रादर्दोहे निवृत्तिश्चेत्।

[याज्ञिकादिमतभेदेन कर्मानुष्ठानक्रमनिरूपणम्]

**पुनर-वेत्**—पुनरपाकृत्य इति वचनात् पुनस्सायंदोहः प्रातर्दोहश्च क्रियते। पूर्वेद्युर्दुग्धं पञ्चदश्यां सायंदोहस्त्वातञ्चनार्थम्। अतः प्रातर्दोहाभ्यां सायं दोहेन च यागः। अत्र कालोत्पन्नहविषो यागार्थं धारणनिर्देशात् अग्नीनामपि तेषामेव धारणम्। तथा कालभ्रमेण चतुर्दश्यां पौर्णमासीप्रवृत्तावप्यग्नीनां धारणं व्रतचर्यादि। ततः स्वकाले कर्मानुष्ठानम्। एवमग्निहोत्रेऽपि विहरणकालात्प्रागुद्धृते।

केचित्तु याज्ञिकाः अकाले पौर्णमासीप्रवृत्तावप्यपक्षाणन्यायेन अग्नीन् पुनस्संसृज्य स्वकालविहरणादि कर्तव्यमित्याहुः। तच्चिन्त्यम्। संसर्गस्यान्याय्यत्वात्। कर्तव्यकर्मार्थं प्रमादादकालेऽग्नौ विहृतेऽप्याहवनीयादयो भवन्त्येव। तथा वक्ष्यति यस्याग्नावग्निमभ्युद्धरेयुरिति।

अन्ये त्वकाले विहृतानामनुगमनमेव युक्तमित्याहुः । अनुगमयेयुरेनं प्रायश्चित्तमित्यत्र अन्यायेनोद्धृत इति हेतुनिर्देशात् अन्यायेनोद्धृतानामनुगमनमेव युक्तमिति ।

अमावास्याभ्रान्त्या तिथ्यन्तरे पश्वादिप्रवृत्तौ द्व्यहकालमुपवसथाभ्यासः । उत्पन्ने पुरोडाशे अभ्युदयज्ञाने तस्य पर्युषितत्वेन यागायोग्यत्वादप्सु प्रक्षिप्य कालान्तरे निर्वाप इति ।

(रु) अग्न्यन्वाधानादि सर्वं कर्म यथाऽनुष्ठितमेवावतिष्ठते । प्रातर्दोहार्थं त्वपाकृतान्वत्सान्मातृभिस्संसृज्य सायंदोहार्थं पुनरपाकृत्य दध्युत्पादयेत् । यत्तु प्रागुत्पन्नं दधि हविस्तदातञ्चने निदध्यात् प्रतिपादयेत् । यदि प्रातर्दोहोऽप्युत्पन्नस्स च तस्मिन्नेव दध्नि अभिदोहत्वेन योज्यो न त्याज्यः ; तत एव न्यायात् । यस्तु निरुप्त आग्नेयस्स धार्यते, श्रपितश्चेत्त्याज्य एव, शुक्तत्वपर्युषितत्वादिदोषप्रसङ्गात् । ततः श्वो भूते कृतान्तात्प्रक्रम्य यजेत । यदा तु कृतायामिज्यायां चन्द्रज्ञानं तदा पुनरिज्यैव । अकाले कृतस्याकृतत्वात् ॥

[ आहिताग्निव्रतलोपे प्रायश्चित्तद्वयम् ]

(सू.) **अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निस्सन्नव्रत्यामिव चरेत्प्रवसेद्वा, व्रत्येऽहनि मांसं वाऽश्नाति, स्त्रियं वोपैति ॥ ९ ॥ १ ॥ ॥ ८२ ॥ २२९० ॥**

(भा) अग्नये व्रतपतयेऽष्टाकपालः य आहिताग्निर्भूत्वा अव्रत्यामिव चरेत् आहिताग्निव्रतलोपं कुर्यात् । तत्र व्रातपती(तिः) । प्रवसति वा व्रत्येऽहनि कृतान्वाधानः मांसभक्षणे स्त्र्युपगमने वा व्रत्य एवाहनि आहिताग्निवचनात् ब्राह्मौदनिकव्रतातिपत्तौ अनुक्तप्रायश्चित्तमांसभक्षणादौ

न व्रातपती ; अनाज्ञातमेव । अग्नये व्रतपतये अग्ने व्रतपते अग्निं व्रतपतिं अग्नेर्व्रतपतेः अग्निर्व्रतपतिरिदं त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनामेति । उपदेश एतदेवाव्रत्यं प्रवासादि, आहिताग्निव्रतलोपे सर्वप्रायश्चित्तमिति । अबुद्धिपूर्वकं स्कन्ने रेतसि सर्वप्रायश्चित्तमेव ।

(वृ) **व्रातपती ;**—देवता ।

**अनुक्त-श्चित्त इति**—यदि प्रयायादनु वा गच्छेदिति पुनः ब्रह्मौदनपाकादेरुक्तत्वात् तत्रोक्तव्यतिरिक्तमांसभक्षणादिषु ।

**प्रमिनामेति**—याज्यानुवाक्ये ।

**उपदेश-श्चित्तमिति**—अस्यार्थः—य आहिताग्निस्सन्नव्रत्यमिव चरेदिति ब्राह्मणे अव्रत्यशब्दस्य सूत्रकारेण व्याख्या क्रियते—अन्वाधाने कृते प्रवासमांसाशनस्त्र्युपगमनान्यव्रत्यमिति । आहिताग्निव्रतलोपश्रुतिमुपादाय अनन्तरमेवैतेषां सूत्रकारेणोपदेशात् ।

**अबुद्धि-मेव**—अस्यार्थः—स्त्रियं वोपैतीति रेतस्स्कन्दनप्रदर्शनार्थम् । बुद्धिपूर्वकरेतस्स्कन्दने व्रातपती । अबुद्धिपूर्वे स्वप्नादौ सर्वप्रायश्चित्तं, स्मार्तं चार्कपूजादि । केचित्—बुद्धिपूर्वे पुरुषापराधत्वात् स्मार्तमप्यवकीर्णप्रायश्चित्तं भवतीत्याहुः ।

(रु) व्रतभ्रेषोऽव्रत्यचरणम् । व्रत्येऽहनीति मध्ये वचनान्न पूर्वाभ्यां सम्बध्यते । तेन सार्वकालिकयोरेव व्रतभ्रेषप्रवासयोर्भवति व्रातपती । व्रत्येऽहनीति काकाक्षिवदुभयत्र सम्बध्यते इत्यपरम् । बोधायनश्चाह 'य आहिताग्निस्सन्नव्रत्यमिव चरेदित्याधानप्रभृत्येवेदमुक्तं भवतीति बोधायनः, अन्वाहितेष्वेवोपसमाहितेषु चेति शालीकिरिति ॥

(सू) **अग्नये व्रतभृते (दे) ऽष्टाकपालं यद्वाऽऽर्तिजमश्रु कुर्यात् ॥ ९ ॥ १ ॥ ८३ ॥ २२९१ ॥**

(सू) "त्वमग्ने व्रतभृच्छुचिर्देवाँ आसादया इह । अग्ने हव्याय वोढवे । व्रतानु बिभ्रद्व्रतपा अदाभ्यो यजा नो देवाँ अजरस्सुवीरः । दधद्रत्नानि सुविदानो अग्ने गोपाय नो जीवसे जातवेदः" इति याज्यानुवाक्ये ।

व्रातभृतीं प्रवास एके समामनन्ति व्रातपतीमश्रुकर्मणि ॥ ९ ॥ १ ॥ ८४ ॥ २२९२ ॥

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने प्रथमः पटलः, चतुर्थी खण्डिका.

---

(भा) व्रतभृतेऽष्टाकपालमित्यर्थपाठः । आर्तिजमश्रु यदा दुःखेन व्रत्य एवाहनि । अग्ने व्रतभृते अग्ने व्रतभृद्धव्यं अग्निं व्रतभृतं अग्नेः व्रतभृतः अग्निर्व्रतभृदिदम् । प्रवासे व्रतभृते व्रतपतये वा शुक्रियायाम् ।

इति धूर्तस्वामिभाष्ये नवमप्रश्ने प्रथमः पटलः.

---

(वृ) व्रतभृते-पाठः—दकारपाठः छान्दसः ।

आर्तिज-एवाहनि—नैमित्तिकयोस्समानतन्त्रत्वम् । प्रवृत्तेष्टेः प्रवासे इष्टिलोपे विभ्रष्टेष्टिर्व्रातपती च पृथक्तन्त्रा । अकर्मकाले व्रतलोपे स्वतन्त्रा । पत्न्या अपि व्रतलोपादिषु नैमित्तिकम् ।

अग्ने व्रत-भृदिदं—इति सूत्रोक्तयाज्यानुवाक्ये ।

प्रवासे-क्रियायाम्—एकेषां मतेन ।

इति कौशिकेन रामेणाग्निचिता कृतायां धूर्तस्वामिभाष्यवृत्तौ नवमे प्रश्ने प्रथमः पटलः.

(रु) आर्तिजग्रहणं हर्षजाश्रुव्यावृत्त्यर्थम् । व्रतभृद इति दकारश्छान्दसः, प्रामादिको वा । व्रत्येऽहनीत्यनुवर्तते । तथा च बह्वृचास्तदाहुर्य आहिताग्निरुपवसथेऽश्रु कुर्वीतेति ॥ ८४ ॥

इति श्री भट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
चतुर्थी खण्डिका. प्रथमः पटलश्च समाप्तः.

---

## अथ द्वितीयः पटलः

[अग्निहोत्रहोमार्थपयोदोहनार्थसवत्सधेनुकर्तृकध्वनिप्रायश्चित्तम् ]

(सू) **यद्यग्निहोत्र्युपसृष्टा वाश्येत ' यस्माद्भीषाऽवाशिष्ठास्ततो नो अभयं कृधि । अभयं नः पशुभ्यो नमो रुद्राय मीढुषे ' इति जुहुयादभि वा मन्त्रयेत ॥ ९ ॥ २ ॥ १ ॥ २२९३ ॥**

(भा) अग्निहोत्रहोमार्था धेनुरग्निहोत्री । उपसृष्टा संगता वत्सेन प्रस्रवणार्थेन । सा यदि वाश्येत शब्दं कुर्यात्, यस्माद्भीषेति होमोऽभिमन्त्रणं वा ॥

(वृ) **अग्निहोत्री**—अग्निहोत्रहोमार्थपयोदोहनार्था ॥
**उप—र्थेन**—दोहनार्थं प्रस्रवणाय ॥

[अग्निहोत्रयाः आक्रन्दननिषीदनादौ प्रायश्चित्तानि]

(रु) अग्निहोत्रद्रव्यधुग्धेनुरग्निहोत्री । सा यदि प्रस्रवणार्थमुपसृष्टा संयोजितवत्सा क्रन्देत्तदाऽनया जुहुयात्तां वाऽभिमन्त्रयेत ॥

[ उक्तविशेषणविशिष्टधेनूपवेशनकालिकसमन्त्रकामन्त्र-
कप्रायश्चित्ते, तयोर्दोहनपूर्वं तस्या-
एव गोःप्रदानरूपमेकम् ]

**(सू.) यद्यु वै निषीदेदेतयैव 'यस्माद्भीषा न्यषदः' इत्यभिमन्त्रय 'उदस्थाद्देव्यदितिर्विश्वरूप्यायुर्यज्ञपता वधात्। इन्द्राय कृण्वती भागं मित्राय वरुणाय च, इत्युपस्थाप्य 'तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यात्। अवर्तिमेवास्मिन् पाप्मानं प्रतिमुञ्चति' इति विज्ञायते ॥९॥२॥२॥२९४॥**

(भा) निषण्णायां एतयैवेति वचनात् पूर्व एव मन्त्रः न्यषद इति विपरिणतः, अभिमन्त्रणमेवैतया निषण्णायाम्। दुग्ध्वा सह क्षीरेण दीयते धेनुर्ब्राह्मणाय, यस्यान्नं न भक्षयेत्। अवर्तिः—दारिद्र्यम्, तच्च पाप्मानं च तस्मिन् ब्राह्मणे स्थापयति ॥

(वृ) **निष–णतः**—यद्यु वै निषीदेद्यस्माद्भीषा न्यषद इत्यभिमन्त्रयेत्येतावत्युक्ते यावदुक्तमात्र एव मन्त्र इति 'ततो नो अभयं कृधि' इत्यादेरप्रयोगस्स्यात्। अतः पूर्वमन्त्रो विपरिणत इत्येवमर्थं एतयैवेत्युक्तम् ॥

**अभि–याम्**— अभिमन्त्रयेति पुनर्वचनात् ॥

**दुग्ध्वा–णाय**—'तां दुग्ध्वा ब्राह्मणाय दद्यात्' इत्युक्त्वा पुनर्दुग्ध्वा ददातीति वचनात् क्षीरस्य चान्यत्र विनियोगाभावात् अभिमन्त्रयेति पुनर्वचनात् सह क्षीरेण दानम् ॥

**यस्यान्नं नाद्यात्**– यजमानः द्वेष्यस्य ॥

[1]**अवर्तिः–यतिः**—अवर्तिं पाप्मानमिति पापविशेषोऽवर्तिः। दारिद्र्यस्य पापफलत्वात्। अतो दारिद्र्यं पापं चोभयं ब्राह्मणाय प्रयच्छतीति ॥

---

[1] अवर्तिमेवास्मिन् पाप्मानं प्रतिमुञ्चतीति श्रुतिः–घ.

(रु) एतयैव न्यषद इत्यधिकृतयोत्थापयत्यध्वर्युः। तां दुग्ध्वा सक्षीरेण तस्मै दद्याद्यजमानो यस्यान्नं न भुञ्जीत। तथा च कृते तस्मिन्नेवावर्तिलक्षणं पाप्मानं प्रति मुञ्चति आसजति। अवर्तिः दारिद्र्यं, अशनाया वा ॥ ९-५-२ ॥

[ अन्यच्च पूर्वोक्तामदुग्ध्वा ब्राह्मणायाप्रदायैव- तूष्णीमुत्थाप्यात्मनिलये स्थापनरूपम् ]

(सू) अपि वा दण्डेन विपिष्याविपिष्य वोत्थाप्यात्मन् कुर्वीत ॥ ९ ॥ २ ॥ ३ ॥ २२९५ ॥

(भा). अनियम उत्थापनद्रव्ये। अन्यस्याः पयसा होमः। अथवा दण्डेन विपिष्य संचूर्णयन्निवोत्थापयेत् तूष्णीम्। पूर्वस्मिंस्तु विनापि दण्डेनात्मस्थां करोति। न ददाति ब्राह्मणाय ॥

(वृ) अनिय–व्ये—न दण्डनियमः ॥

अथवा दण्डेन–ष्णीम्—अपि वेति प्रयोगान्तरोपदेशात् पूर्वोक्तसमन्त्रकप्रयोगो विकल्पित इति। तूष्णीमस्मिन्पक्षे उत्थानम् ॥

(रु) अपि वा पूर्ववदभिमन्त्र्य दण्डेन विपिष्य प्रणुद्य अविपिष्यैव वाऽनेन हापयित्वोत्थाप्यात्मनि कुर्वीत, न ब्राह्मणाय दद्यादित्यर्थः ॥

[ ग्रासप्रदानपूर्वकं प्रसक्तगोरेव पयोदोहनविधानम्, तत्र मतभेदश्च ]

(सू) सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्तीति दर्भस्तम्बमालुप्य ग्रासयेत् ॥ ९ ॥ ॥ २ ॥ ४ ॥ २२९६ ॥

(भा) सूयवसनादि ग्रासयित्वा दर्भस्तम्बं तामेव होमार्थं दोहयति ॥

अन्ये त्वाहुः--न्यषद इत्यभिमन्त्रणं उत्थापनं च। दण्डस्तु विशेषः। आत्मन् कुर्वीतेति दानप्रतिषेधात् सर्वविधिप्राप्तिः ॥

(वृ) **आलुप्य**--स्वयमेवाच्छिद्य; ग्रासमन्त्रोऽयं न च्छेदनमन्त्रः सर्वप्रायश्चित्तं हुत्वा तस्याः पयसा होमः ॥

**अन्ये त्वाहुः**—पूर्वोक्तमङ्गीकृत्य दण्डनियममात्मास्थापनं च विदधातीति तेषां पक्षः ॥

**उत्थापनं**—द्वितीयेऽपि पक्षे ॥

(रु) तामात्मनि कृतामेवं ग्रासयित्वा ततो होमाय दुह्यादिति भावः ॥

[लोहितदोहने प्रायश्चित्तम्]

(सू) **यद्यु वै लोहितं दुहीत व्युत्क्रामतेत्युक्त्वा दक्षिणाग्निं परिश्रित्य तस्मिन्नेतच्छ्रपयित्वा तस्मिन् व्याहृतीभिस्तूष्णीं वा हुत्वा तां ब्राह्मणाय दद्याद्य-मनभ्यागमिष्यन् स्यात् ॥ ९ ॥ २ ॥ ५ ॥ २२९७ ॥**

(भा) व्युत्क्रामत—विहारादन्यत्र गच्छतेत्यर्थः, होमकर्ता प्रेष्यति यजमानादीन्। लोहिते दुग्धे परिश्रयणं वेष्टनं दक्षिणाग्नेः, यथा न दृश्यते पच्यमाने हूयमाने च। अनभ्यागमिष्यन् स यस्याभ्यागमनं न गच्छति। अन्यां दुग्ध्वा होमः कर्तव्यः ॥

(वृ) **होमकर्ता प्रेष्यति;**—होमे कर्तव्ये प्रेष्यति। **यथा—ने च;**—अन्यैः ॥

**अन्यां—कर्तव्यः**—पुनर्होमवचनादिषु सर्वेषु होमानिवृत्तेः। अत्र पयसा होतुं प्रवृत्तत्वादन्यस्याः पयसा होमः, न तण्डुलादिभिः ॥

(रु) व्युत्क्रामत अन्यत्र गच्छतेति यजमानादीनां प्रैषः । यमनभ्यागमिष्यन् यं प्रति कस्मैचिदपि कार्याय न गमिष्यति तस्मै दद्यादित्यर्थः ॥

[अग्निहोत्रार्थस्य हविषो दोहनकाले स्कन्नस्य प्रायश्चित्तम्]

(सू) **यदि दुह्यमानं स्कन्देत् 'यदद्य दुग्धं पृथिवीमसक्त यदोषधीरप्यसरद्यदापः । पयो गृहेषु पयो अघ्नियासु पयो वत्सेषु पयो अस्तु तन्मयि' इत्येनदभिमन्त्र्य 'समुद्रं वः प्रहिणोमि' इत्यद्भिरुपसृजेत् ॥ ९ ॥**

**॥ २ ॥ ६ ॥ २२९८ ॥**

(भा) दुह्यमाने स्कन्देद्यदद्य दुग्धमिति स्कन्नाभिमन्त्रणम् । उपसर्गः—स्कन्नस्योपरिष्टादुदकक्षेपः समुद्रं व इति वक्ष्यमाणस्यापवादः अस्मान् उन्नम्भयेति च स्कन्नाभिमन्त्रणस्य उपसर्गस्य कृत्यं च दुह्यमाने । अनशनं तु विद्यते 'यदि सायं स्कन्देदाहोतोः' इति । अन्यां दुग्ध्वा पुनर्होम[1]ः कर्तव्यः ॥

(वृ) वक्ष्यमाणस्य—इत्येकवचनं वक्ष्यमाणस्योभयस्येति ॥

**अन्यां कर्तव्यः**—कृत्स्नस्कन्दने एकदेशस्कंदने च सर्वप्रायश्चित्तं कृत्वा अवशिष्टेन होमः, तदेव याद्दगिति श्रुतेः । स्कन्नद्रव्ये भूमिं प्राप्ते प्रायश्चित्तम् । 'पृथिवीं वा एतस्य पयः प्रविशति, यस्याग्निहोत्रं दुह्यमानं स्कन्दति' इति लिङ्गात् । स्कन्दनं भूमौ पतनम् । अत एव भाष्यकारेण 'उत्तराऽऽहुतिः स्कन्देत्' इत्यत्र पतति भूमौ इति व्याख्यातम् ॥

(रु) सामान्यतोऽग्निहोत्रस्कन्दने अस्कान्द्यौरित्याभिमन्त्रणं उन्नम्भयेत्यद्भिस्संसर्गं च वक्ष्यति । तस्यायं पुरस्तादपवादः ॥

[1] होमो–घ.

[एकदेशभिन्नस्थालीस्कन्नप्रायाश्चित्तम्]

**(सू) यदि दुह्यमाना स्थालीमवभिन्द्यात् निर्णिज्यान्यां दुह्यात्तां वैव ॥ ९ ॥ २ ॥ ७ ॥ २२९९ ॥**

(भा) यदि दुह्यमाना स्थाली एकदेशं भिनत्ति प्रक्षाल्य तां स्थालीं दोहनसमर्थामन्यां गां[1] दुह्यात् । तामेव वा, यदि विद्यते तस्यां पयः । सर्वभे[2]दश्चेत् अन्यत्पात्रं प्रक्षाल्य तेन, उक्तं स्कन्नप्रायश्चित्तम् ॥

(वृ) **यदि-तां**—हविर्धारणसमर्थाम् ।

**तामेव-वा**—गाम् ।

**सर्वभेद-तेन**—हविर्धारणासमर्थभेदने त्वन्यां स्थालीं प्रक्षाल्य तया दोहनम् । [3]भिन्नामुदके भूमिर्भूमिमगादिति [4]प्रक्षिप्य सर्वप्रायाश्चित्तं कृत्वा ॥

(रु) स्थालीं चेदेकदेशतो भिन्द्यात् तदा प्रक्षाळ्य तां स्थालीं तस्यामेवान्यां गां दुह्यात् । तामेव वा गां, सा चेत्पुनः प्रपीना स्यात् । सर्वभेदे तु स्थाल्यन्तरमागमयेत् ॥

[आर्तानार्तोभयसंसृष्टहविःप्रायश्चित्तम्]

**(सू) यदि दुह्यमानं दुग्धं ह्रियमाणं हृतमधिश्रियमाणं अधिश्रितमुद्वास्यमानं उद्वासितमुन्नीयमानं उन्नीतं वा स्कन्देत्तदेव यादृकीदृक्च होतव्यमन्यया वाऽभिदोह्यम् ॥ ९ ॥ २ ॥ ८ ॥ २३०० ॥**

---

[1] गां ततोदु—ग. ङ. [2] भेदने अन्यत्पा—क. त्वन्यत्पा—ख. घ. [3] भिन्नमु—ट. भिन्नां भूमि—घ. [4] प्रक्षिप्याप्सु सर्व—घ.

दुह्यमानस्य द्रव्यात्पत्त्यर्थे पुनरारम्भः—

(भा) दुह्यमानं–यावद्दोहनक्रिया परिसमाप्यते । दुग्धं [1]यावन्नीयते [2]गार्हपत्यसमीपम् । ह्रियमाणं नीयमानं हृतं [3]प्रापितम् । अधिश्रियमाण-मारोप्यमाणम् । अधिश्रितं पच्यमानम् । उद्वास्यमानं [4]उद्ध्रियमाणम् । उद्वासितं यावन्नोन्नीयते । उन्नीयमानं यावन्न चतुर्थो गृह्यते[5] पञ्चमो वा जमदग्नीनाम् । उन्नीतं यावन्न नीयते तस्य स्कन्नस्योत्पत्तिः । तदेव यादृक्कीदृग्वा यावत्तावद्वा । अनाहुतिमात्रमपि होतव्यम् । अन्या वा गौस्तस्योपरि [6]दोग्धव्या । दुग्धादारभ्य वक्ष्यमाणमाभिमन्त्रणम् । उप-सर्गोऽनशनं च सर्वं तत्प्रायश्चित्तम् ।

(वृ) दुह्यमान–म्भः—यदि दुह्यमानमित्यादि पुनरारम्भः तदेव यादृगित्यादि द्रव्यात्—

यावन्न नीयते—उर्वन्तरिक्षं वीहीति । दुह्यमानादीनां समाप्ति-र्यावत्परनिमित्तक्रियारम्भः ।

स्कन्नस्योत्पत्तिः—तस्य स्कन्नद्रव्यस्य होमसाधनत्वेनोत्पत्तिः स्कन्नद्रव्यवत्कर्मण उत्पत्तिरिति वा ।

अनाहु–व्यम्—स्कन्नशिष्टम् ।

उपसर्गो–त्तम्—उपसर्गश्च वक्ष्यमाणः । सर्वं तदिति ; सर्वं समुच्चितम् । स्कन्नेषु तु ;—

[दुह्यमान, दुग्धस्कन्दनयोः प्रायश्चित्ते द्रव्यनियमनम्]

(रु) दुह्यमान स्कन्दने प्रायश्चित्तमुक्तं पूर्वतरसूत्रे । तथा दुग्धादीना-मपि परस्ताद्वक्ष्यते । तत्रोभयेषामपि द्रव्यमनेन नियम्यते, अहो दुह्यमा-

[1] यावन्न नीयते–ख. ग. ङ. च. घ [2] गार्हपत्यसमीपम्–घ. [3] प्राप्तं गार्हपत्यम्–घ. [4] उत्तीयमाणम्–ख. ग. ङ. च. घ. [5] तेसृबः पञ्च–ग. ङ. च. घ. [6] दोहनीया–चा.

नस्य पुनर्ग्रहणम् । ह्रियमाणं गार्हपत्येऽधिश्रयणार्थम् । तदेव यादृगित्यादि स्कन्नशिष्टमेव यावत्तावद्वाल्पं शिष्टमपि होतव्यमित्याह । अथ यद्यल्पतरमवशिष्टमनाहुतिक्षमं स्यात्तदा तस्योपर्यन्यां दोहयित्वा वर्धितेन होतव्यमित्यर्थः ॥ ४ ॥

[सर्वस्कन्दने एकदेशस्कन्दने च कर्तव्यांशव्यवस्था]

(सू.) **यदि सकृदुन्नीतं स्कन्देद्द्विस्त्रिर्वा न तदाद्रियेत। यद्युवै चतुर्थमुन्नीतं स्कन्देत् स्थाल्यां शेषमवनीय चतुरभ्युन्नीय होतव्यमन्यया वाऽभिदोह्यम् ॥**
**॥ ९ ॥ २ ॥ ९ ॥ २३०१ ॥**

(भा) सकृदुन्नीते द्विस्त्रिर्वा अनादरवचनात् न स्कन्नप्रायश्चित्तम् । चतुर्थ उन्नीते द्रव्योत्पत्तिरन्या उन्नीतं वा स्कन्देदिति चतुरवत्तिनः प्राप्ते। उन्नीयमानामिति पञ्चावत्तिनः । अग्निहोत्रस्थाल्यां स्रुग्गतमानीय पुनर्मन्त्रैश्चतु[1]रुन्नीय होतव्यम् । असर्वस्कन्दने चतुरभ्युन्नीय होतव्यम्। अन्या वा गौः स्रुचि दोहनीया। यादृक् कीदृक् चतुर्थ उन्नीते न लभ्यते । उन्नीतं वा स्कन्देदिति पञ्चावत्तिनो विषयमेतत् ।

(वृ) **अनादर-त्तम्**—अनाज्ञातं, सर्वप्रायश्चित्तं वा कृत्वा पुनः स्थालीद्रव्याच्चतुरुन्नयनसंपादनम् ।

**चतुर-प्ते**—तदेव यादृगित्यादिद्रव्ये प्राप्ते ।

**उन्नीय-वत्तिनः**—तदेव यादृगिति प्राप्ते । उभयोरन्यतरस्य प्राप्तौ द्रव्यान्तरं विधीयतेऽपवादा[2]र्थत्वेन ।

**असर्व-तव्यम्**—एकदेशविशेषे शेषमुपनीयेति वचनात् ।

**अन्या वा-या**—सर्वस्कन्दने ।

---

[1] चतुरभ्युन्नीय-**च.** [2] दत्वेन-**ग. घ.**

**यादृक्–लभ्यते**—तत्र शेषापनयनादिकमेव ।

**उन्नीतं–तत्**—चतुरुन्नीतस्कन्दने सर्वेषां शेषापनयनादेरपवादत्वात् ॥

(वृ) यदि सकृद्द्विस्त्रिर्वोन्नीतं क्रमशो युगपद्वा स्कन्देन्न तदाद्रियेत, शिष्टेनैव जुहुयात् । आद्रियेतैव तु स्कन्नप्रायश्चित्तं, आहुतिमात्रस्कन्दने प्रायश्चित्तविधानात् । यदि पुनश्चतुर्थं स्कन्देत्तदा स्रुचि शिष्टं स्थाल्यामानीय पुनरुन्नयितव्यं अभिदोह्यं वा स्रुचि ॥

[चतुरशब्दस्य पञ्चमाद्युपलक्षकत्वकथनम्]

तत्र चतुरित्येतदनुवादत्वात्पञ्चमस्याप्युपलक्षणं पञ्चावत्तिनः । तेन चतुर्थमित्येतदपि चतुर्थप्रभृतीत्युक्तं भवति तथाऽत्र प्राक्चतुर्थादनादरवचनात् पूर्वसूत्रेऽप्युन्नीयमानमुन्नीतं वा स्कन्देदित्येतच्चतुर्थप्रभृत्येव स्कन्दनेऽवतिष्ठते । तस्य चानेन समुच्चयासम्भवाद्विकल्पः । केचित्तु विनिवेशनं कुर्वन्ति । यत्र तु सकृद्द्विस्त्रिर्वोन्नीतस्कन्दने सति चतुर्थप्रभृत्यप्युन्नीतं स्कन्दति तत्रायं विधिरन्यत्र पूर्व इति ॥

[दोहनोत्तरमाहवनीयं प्रत्युन्नीतस्य लेशपतने प्रायश्चित्तम्]

(सू) **यद्युद्द्रुतस्य स्कन्देत्तन्निषद्य पुनर्गृहीत्वा तदेव यादृक् कीदृक्च होतव्यम् । अथान्यां दुग्ध्वा पुनर्होतव्यम् । अथाऽऽज्येन वारुणीमृचमनूच्य वारुण्यर्चा जुहुयात् ॥ ९ ॥ २ ॥ १० ॥ २३०२ ॥**

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने पञ्चमी खण्डिका

———

(भा) [1] उद्द्रुतम्–[2] ह्रियमाणम् , उर्वन्तरिक्षं [3] वीहीति। उद्द्रवन् दशहोतारं व्याचष्ट इति यावद्दशहोतृपरिसमाप्तिः, तावदुद्द्रुतप्रायश्चित्तम् । तन्निषद्य–तस्मिन् देशे उपविश्य [4] यत् स्कन्नं तत्पुनर्गृहीत्वा[5] शुचि यदि शुचौ देशे पतितं तदेव यादृक् कीदृक्च होतव्यम् । इतरथा प्रतिनिधिना क्रियते । समाप्ते तु मार्जनान्ते[6] होमे विहरणादि कृत्वाऽन्यां दुग्ध्वा पुनर्वृष्टयन्ते होमे कृते अव ते हेड इत्युक्त्वा उदुत्तममित्याज्यं [7] जुहुयात। ततो होमसमाप्तिः । उपदेशो यत्र पुनर्होमस्तत्र पूर्वो वृष्टयन्तः, द्वितीयस्समाप्यते । दोहनादिवृष्टयन्ते होमः, उपस्थानादि च हुत्वाऽप उपस्पृश्येत्यग्निहोत्रे वचनात् ॥

इति धूर्तस्वामिभाष्ये नवमप्रश्ने पञ्चमी खण्डिका

---

(वृ) इतरथा—अशुचौ उपादानाशक्तौ ।

उपदेशो–प्यते—यादृक्कीदृक्च होतव्यमिति होममात्रविधानात् ।

उपस्थानादि च–'अथान्यां दुग्ध्वा' इति दोहनादिविधानात द्वितीयो दोहनादिः । तत्र वृष्टयन्ते आज्यहोमः 'भवतं न' इत्युपस्थानादि च ।

हुत्वा–वचनात्—व्याख्यातमेतत् । एवं च स्रुगादानादि वृष्टयन्तो होमपदार्थः । अतः स्वयं होमे अग्न्युपस्थानं वृष्टयन्ते कर्तव्यम् ॥

इति श्रीधूर्तस्वामिभाष्यवृत्तौ नवमप्रश्ने पञ्चमी खण्डिका

---

[1] उद्धृतं–ग. घ. [2] नीयमानम्–ख. ग. [3] वीहीत्युद्रवति–ङ. च. [4] यत्र स्कन्नम्–ट. च., तं यत्र स्कन्नम्–ङ., तत्र स्कन्नम्–क. [5] त्वा यदि–क. ङ. च. [6] नान्ते वि–क. ङ. च. [7] जुहुयात । हुत्वाप उपस्पृश्येत्यन्ते कृत आज्यहोमः । हुत्वेति पुनर्वचनादिति तत्र व्याख्यातम्–ग.

(रु) उद्द्रुतस्येत्यादि कर्मणि क्तः । उद्द्रुतं उत्थाय प्राङ्नेतुं प्रक्रान्तमित्यर्थः प्राङ्नयनप्रभृत्युत्तरत्रोपादानात् । उक्तं च ब्राह्मणे "बृहस्पतेरुन्नीतं । सवितुः प्रक्रान्तं । द्यावापृथिव्यꣳ ह्रियमाणम्" इति । तदुद्द्रुतं यत्र स्कन्देत्तन्निषद्य तत्राऽऽसित्वा स्कन्नस्योपरि स्थालीं निधाय तस्याः पुनः स्रुचि गृहीत्वा तदेवाभिवर्धितं होतव्यं ; न तु ततः पृथग्द्रव्यान्तरमुत्पादयितव्यमित्यर्थः । यथा चायमस्यार्थस्तथा 'यद्युद्द्रुतस्य स्कन्देत्' इत्यादिश्रुतिरेव विभावयितव्या ।

['यद्युद्द्रुतस्य' इति श्रुतेः बोधायनकृतव्याख्यानोपपादनम्]

व्याचष्ट च तां बोधायनः यथा यद्युद्द्रुतस्य स्कन्देत्तन्निषद्य पुनर्गृह्णीयादिति । स यत्रैव स्कन्दति तत्रैव स्थालीं निधायातिशिष्टमानीय पुनरभ्युन्नीय तदेव यादृक्कीदृक्च होतव्यमिति । पुनर्होमः प्रागेव व्याख्यातः । तस्मिन्मते 'अव ते हेडः' इत्यनुद्रुत्य 'उदुत्तमम्' इति वारुण्यर्चाऽऽज्याहुतिं जुहुयात् ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
नवमे प्रश्ने द्वितीये पटले पञ्चमी खण्डिका.

———

[प्राग्गामिनस्कन्दने वैकल्पिकं प्रायश्चित्तम्]

(सू) **यदि प्राचीनं स्कन्देत् तदेव यादृक्कीदृक्च होतव्यमन्यया वाऽभिदोह्यम् ॥ ९ ॥ २ ॥ ११ ॥**
**॥ २३०३ ॥**

(भा) प्राचीनं प्राग्गामि । स्वाहाग्नये वैश्वानरायेत्येवमादि यावद्दर्भसमीपं न प्राप्नोति । यादृक्कीदृक्चेति द्रव्योत्पत्तिः । वक्ष्यमाणमेव प्रायश्चित्तं सर्वत्र । यत्राप्युक्ता पुनरिज्या पुनर्होमः आज्यहोमश्च तत्राप्यविरोधात् समुच्चयो वक्ष्यमाणेन प्रायश्चित्तेनानशनान्तेन ॥

(वृ) वक्ष्य–वेत्र—स्कन्दने अस्कानुत्तम्भयेत्यादि ॥
यत्रा–मश्च—वारुणीमृचमनूच्येत्यादि ॥

(रु) प्राचीनं प्राक्प्रवृत्तं, यावत्पुरतो न पराहृतं स्यादित्यर्थः। अथास्मिन्नेव विषये शाखान्तरीयं विधिमाह ॥

[तत्राश्मरथ्यालेखनयोर्मतिभेदश्च]

(सू) अथैकेषाम्;—यदि प्राचीनं ह्रियमाणं स्कन्देत् प्रजापतेर्विश्वभृति तन्वं हुतमसि स्वाहेत्येनदभिमन्त्रयैतदेवाग्निहोत्रं स्यादित्याश्मरथ्यः। अन्यां पुनर्होतव्यमित्यालेखनः ॥ ९ ॥ २ ॥ ॥ १२ ॥ २३०४ ॥

(भा) प्राचीनं–ह्रियमाणं–नीयमानं यावद्भस्समीपं न प्राप्नोति पूर्वेण विकल्पते। स्वाहाग्नये वैश्वानराय वाताय त्वेत्यत्र तु पूर्वमेव। ह्रियमाणमिति विशेषितत्वात्,[1] प्रजापतेर्विश्वसृतीत्यभिमन्त्रणप्रत्याम्नायः। उपसर्गोऽनयनं च क्रियत एव। एतदेव स्रुक्शेष अग्निहोत्रहोमार्थं भवतीत्याश्मरथ्यमतिः। न पुनर्होमः। स्रुक्शेषेण होमसमाप्तिं कृत्वा अन्यां दुग्ध्वा पुनर्होतव्यामित्यालेखनमतिः। सर्वत्र पुनरिज्यासु[2] विहरणादि साङ्गस्यावृत्तिः। उपदेशः प्रजापतेर्विश्वभृतीति पूर्वाहुतिस्थानेऽभिमन्त्रणम्। प्राणनादिव्याहृतिजपान्तं सर्वं कृत्वा तत उत्तराहुत्यादि। एवंलक्षणमेतदग्नि[3]होत्रं स्यादित्याश्मरथ्यमतिः। पुनर्होम इत्यालेखनः[4] ॥

(वृ) प्राची–प्नोति—यदि प्राचीनं ह्रियमाणमित्यस्यार्थः।
पूर्वेण–विकल्पते—शाखान्तरविहितत्वादस्य।

---

[1] त्वादस्य–ग. घ. [2] ज्यासिह–ङ. [3] एतदेवाग्नि–क. च. [4] खनमतिः–ग. ङ. च.

**स्वाहा–मेव**—नीचैर्ग्रहणोद्ग्रहणकाले स्कन्दने ।

**ह्रिय–म्नायः**—अस्कानित्यस्य ।

**न पुनर्होमः**—अस्मिन् पक्षे ।

**पुनरिज्यासु**—पुनर्होमेषु ।

**उपदेशः–कृत्वा**—प्रजापतेरित्यभिमन्त्रणम् ।

**एतदेवाग्निहोत्रम्**—इत्येतच्छब्देन प्रजापतेरित्यभिमन्त्रणं परामृश्यते आनन्तर्यात् । एवं लक्षणमेतदग्निहोत्रं स्यादित्याश्मरथ्यमतिरित्युपदेशपक्षे आश्मरथ्यपक्षानिर्वाहः । अभिमन्त्रणात्मक एव होम इति पुनर्होम एवेत्यालेखनमतिरिति ॥

(रु) अत्र तु ह्रियमाणमिति विशेषणाद्यावन्नियच्छत्युद्गृह्णाति वा तदा पूर्व एव विधिर्भवति, अन्यत्र पूर्वो वाऽयं वा ; तत्र प्रजापतेरित्याद्यभिमन्त्रणमन्त्रोऽस्कानित्यस्यापवादः । उपसर्गस्तु यथोक्त एव भवति । तत एतदेव स्कन्नशिष्टमग्निहोत्रद्रव्यं स्यान्न त्वन्यां दुग्ध्वा पुनर्होतव्यमित्याश्मरथ्यमतम् । आलेखनमतात्तु पुनर्होमोऽपि कार्यः । तत्राशेषस्कन्दने स्थाल्याः पुनरुन्नयनम् । स्थाल्यामप्यभावे आज्यं च प्रतिनिधिमाहाश्वलायनः । प्रजापतेर्विश्वभृति तन्वं हुतमसीति तत्र स्कन्नाभिमर्शनम् । शेषेण जुहुयात् पुनरुन्नीयाशेष आज्यशेषमिति ॥९-६-३॥

[ दर्भसमीपं प्रापितस्य प्राप्यमाणस्य च स्कन्दने
मतभेदेनानुष्ठेयोंऽशः ]

(सू.) **यदि पुरः पराहृतं स्कन्देत् अनूदाहृत्य चतुरभ्युन्नीय होतव्यमन्यया वाऽभिदोह्यम् ॥ ९ ॥ २ ॥**

**॥ १३ ॥ २३०५ ॥**

(भा) [1]पुरः पराहृतं दर्भसमीपं नीतं साद्यमानं च तेषु अनुदाहृत्य स्रुक्समीपं स्थालीमाहृत्य उन्नीय च पुरुषधर्मेण चतुरिति प्रदर्शनम् । ततो होमोऽभिदोहनं वा । केचिदनूदाहृत्येति स्रुचं नयन्ति स्थालीसमीपे पुनश्चाऽऽगच्छन्ति मन्त्रैः ॥

(वृ) **पुरुषधर्मेण** —चतुरवत्तिपञ्चावत्तीनां स्वस्वसंख्यया ।

**केचि-मन्त्रैः** —अनूदाहृत्येत्यविशेषात् स्रुचं वा स्थालीसमीपं नयेत् पुनश्च समन्त्रकं नयनम् ।

(रु) **यः पराहृतं** पुरस्तादुपसादनदेशं प्रति नीतमित्यर्थः । तत्रोपसन्नस्य पुरस्तादुपसादनादुपसाद्यमानेऽप्ययमेव विधिः । अनूदाहृत्य स्रुचमनु स्थालीमानीय चतुरित्युपलक्षणं पूर्ववत् ॥

[दर्भेषु स्थापितादिद्रव्यस्कन्दने कर्तव्यपुनर्होमादयः]

(सू) **यदि पुर उपसन्नं स्कन्देत् तदेव यादृक्कीदृक्च होतव्यमन्यया वाऽभिदोह्यम् ॥ ९ ॥ २ ॥ १४ ॥ ॥ २३० ॥ ६ ॥**

(भा) उपसन्न—दर्भेषु स्थापितं यदि स्कन्देत् इति ।

(रु) दर्भेषूपसादनप्रभृत्या पूर्वाहुतेरयं विधिः । यदि पूर्वस्यामाहुत्यामिति पुरस्तादुपादानात्ततोऽर्वागवध्यन्तरानुपादानाच्च । तथा च च ब्राह्मणम् ॥

ऐन्द्राग्नमुपसन्नं, अग्नेः पूर्वाहुतिरिति ।

---

[1] पुनः—ङ.

(सू) **अथैकेषाम्—यदि पुर उपसन्नमहुतं स्कन्देत् तदेव यादृक्कीदृक्च होतव्यम्। अथान्यां दुग्ध्वा पुनर्होतव्यम्। आज्येन वारुणीमिति समानम्॥९॥**
**॥ २ ॥ १५ ॥ २३०७ ॥**

(भा) उपसन्नं अहुतं दर्भेषु स्थापितं होमार्थं च गृहीतं, दर्भेषु स्थापितं[1] पूर्वमिदं वा प्रायश्चित्तम्। होमार्थं गृहीते इदमेव; यादृक्कीदृक्च हुत्वा पुनर्होमो वारुणी च पूर्ववत्, द्रव्योत्पत्तिरुक्ता।

(वृ) **होमा-मेव**—अहुतमिति विशेषणोपादानात्।

**वारुणी च पूर्ववत्**—अवते हेड उदुत्तममित्याज्य[2]होमः।

**द्रव्योत्पत्तिरुक्ता**—स्कन्नेषु। यादृक्कीदृग्घोमोऽभिदोहनमभ्युन्नयनं च॥

(रु) अथास्मिन्नेव विषये शाखान्तरीयं विधिमाह।

उपसन्नमहुतं उपसादनप्रभृति यावन्न हुतं तावदित्यर्थः।

**[अहुतमित्यस्य प्रयोजनकथनम्]**

नन्वेवं पूर्ववदनुक्तसिद्धे परावधौ अहुतमिति कस्मादुक्तम्। को दोषः। पूर्वं हि कथंचिद्गम्यमानत्वात्परावधीर्नोपात्तः इदानीं शाखान्तरेऽपि पठित इति तथैव दर्शितः। तेनाचोद्यमेतत् पुनर्होमादि समानमुद्धृतस्कन्दनेन, एवमग्निहोत्रस्कन्दने द्रव्योत्पत्तिरुक्ता इदानीं प्रायश्चित्तमाह॥

**[स्कन्नप्रायश्चित्तम्]**

(सू) **अस्कान् द्यौः पृथिवीमस्कानृषभो युवा गाः। स्कन्नेमा विश्वा भुवना स्कन्नो यज्ञः प्रजनयतु।**

[1] स्थापितं—ङ. [2] ज्याहुतिः—ख. ग. च.

**अस्कानजनि प्राजन्यास्कन्नाज्जायते वृषा। स्कन्नात्प्रजनिषीमहीति स्कन्नमभिमन्त्रयोन्नम्भय पृथिवीमित्यद्भिरुपसृजेत् ॥ ९ ॥ २ ॥ १६ ॥ २३०८ ॥**

(भा) इदानीं स्कन्नप्रायश्चित्तमुच्यते—अस्कानिति। द्वाभ्याममभिमन्त्रयोन्नम्भयेत्यद्भिरुपसृजेत्–[1]मिश्रयेत् ॥

[स्रुवादङ्गुष्ठपर्वमात्राद्वा न्यूनत्वे तदभावः, तत्र सर्वप्रायश्चित्तमेव]

(सू) **यदनाहुतिमात्रं विप्रुडेव सा ॥ ९ ॥ २ ॥ १७ ॥ ॥ १३०९ ॥**

(भा) अनाहुतिमात्रं—स्रुवादूनम्, अङ्गुष्ठपर्वमात्रा[2]द्वोनम्; न तत्र स्कन्नप्रायश्चित्तम्, विप्रुट्तुल्यत्वात् ॥

(वृ) **स्रुवादूनम्** – स्रुवबिलपूर्णादूनम्।
**अङ्गुष्ठपर्वमात्राद्वोनम्**—कठिनद्रव्येषु।
**न तत्र–त्वात्**—तत्र सर्वप्रायश्चित्तमेव।

(रु) यदेकस्रुवमात्रं, ततोऽपि वा न्यूनं स्कन्नं, तद्विप्रुण्मात्रकल्पमित्युपेक्षणीयं। न तत्र प्रायश्चित्तमित्यर्थः।

[सकलाग्निहोत्रद्रव्यस्कन्दने कर्तव्यांऽशः, 'आहोतो' इत्यत्राऽऽङोऽभिविध्यर्थकत्वं च]

(सू) **यदि सायं स्कन्देदाहोतोः प्रातर्नाश्नीयात्। यदि प्रातराहोतोः सायं नाश्नीयात् ॥ ९ ॥ २ ॥ ॥ १८ ॥ २३१० ॥**

[1] इदं विवरणं–क पुस्तके नास्ति. [2] द्वा–क. ङ. च.

(भा) सायं स्क[1]न्ने आहोतोः [2]प्रातर्होमात् नाश्नीयात्। प्रात[3]स्स्कन्नेऽपि आहोतोस्सायम्। उभयत्राभिविधिः। हुते प्रातर्होमे [4]अशनं सायं स्कन्ने, हुते सायमग्निहोत्र[5]मात्रे प्रातस्कन्ने। सर्वाग्निहोत्रद्रव्या[6]-णामेष स्कन्नविधिः। यत्राभिदोहनं तत्र तज्जातीयस्य द्रव्यस्य क्षेपः।

(वृ) **नाश्नीयात्**—यजमानः पत्नी च।

**आहोतोस्सायम्**—आहोतोर्होमनिवृत्तिः।

**उभयत्रा-सायम्**—"न सायमाहुतावहुतायामश्नीयात्" इत्याहिताग्निव्रते उक्तत्वात् होमात्पूर्वं अशनासम्भवादभिविधिरेव।

**सर्वाग्नि-विधिः**—सर्वाग्निहोत्राणामङ्गभूतानामपि सर्वद्रव्याणां दध्यादीनामपि स्कन्ननिमित्ते एतदेव—अस्कानित्यादि। स्कन्नद्रव्य-सजातीयस्य तण्डुलादेः।

(रु) सायं स्कन्दने प्रातराहोतोराप्रातर्होमं नाश्नीयात्। एवमासायं-होतोः प्रातः। सर्वाग्निहोत्रद्रव्याणामयमेव विधिः। स्कन्दने द्रव्यो-त्पत्तौ तु अभिदोहनादिस्थाने तज्जातीयस्य द्रव्यस्य पुनराहरणमिति शेषः।

[यजमानेऽशनिपतनकालेऽग्निहोत्रद्रव्यकर्मक-ध्वनिविशेषप्रायश्चित्तम्]

**(सू) दिव्या वा एतमशनिरभ्यवैति यस्याग्निहोत्रं शिरिशिराभवति। समोषामुमिति ब्रूयाद्यं द्विष्यात्**
**॥९॥२॥१८॥२३११॥**

---

[1] प्रातराहोतोः—**क.** [2] प्रातर्ना—**ग. घ.** [3] स्कन्ने अहो—**ग. ङ.** [4] अशनं कार्यं नायं—**ङ.** [5] त्रे अशनं प्रा—**ग. ङ.** [6] णां स्कन्नानामेष विधिः—**ङ.**

(भा) दिवि भवा दिव्या, अशनिर्विद्युत्, एतं यजमानमभिगच्छति यत्राग्निहोत्रद्रव्यं [1]शिरिशिराभवति पच्यमानं शब्दं करोति। तत्र प्रायश्चित्तं समोषामुमित्याहाध्वर्युः यं द्वेष्टि यजमानः तस्य नाम गृह्यते।

(वृ) पच्य-करोति—शिरिशिरेत्येवं शब्दं करोति।
तत्र-ध्वर्युः—अमुमिति यं द्वेष्टि।
नाम गृह्यते—द्वितीयान्तेन।

(रु) शिरिशिरेतिशब्दानुकारः यस्याग्निहोत्रं शिरिशिरायते तस्यायमशनिपातो दुर्निमित्तमिति यावत्। तत्र यजमानद्वेष्यस्य नाम गृहीत्वाऽध्वर्युर्ब्रूयात्समोष देवदत्तमिति। ओषतिर्दाहकर्मा, तस्य द्वेष्यस्य रूपं समोषेति ॥ ९ ॥ ६ ॥ १० ॥

[यजमानस्याग्निहोत्रहविषि गार्हपत्ये पाकार्थमधिश्रिते गार्हपत्याहवनीययोर्मध्ये शुनो गमनेऽनुष्ठेयांशव्यवस्थापनम्]

(सू) यस्याग्निहोत्रेऽधिश्रिते श्वाऽन्तरा धावेत् गार्हपत्याद्भस्माऽऽदायेदं विष्णुर्विचक्रम इति वैष्णव्यर्चाऽऽहवनीयाद्ध्वंसयन्नुद्द्रुत्यैतयैव भस्मना शुनः पदमपि वपेत् ॥ ९ ॥ २ ॥ २० ॥ २३१२ ॥

(भा) सर्वत्राग्निहोत्रेऽधिश्रिते यावन्नोत्तीर्यते [2]तावदेतत्प्रायश्चित्तम्। अन्यत्र सर्वप्रायश्चित्तम्।

अन्ये त्वाहुः—अधिश्रयणादा[3]परिसमाप्तेरेतत्प्रायश्चित्तमिति। श्वा अन्तरा गार्हपत्याहवनीययोर्धावेत्—गच्छेत्।

---

[1] शिशिरीति—ङ. [2] तावदेव तत्प्रा—ग. घ. [3] ग्राप—च.

[1] गार्हपत्याद्भस्म गृहीत्वा "इदं विष्णुर्विचक्रम" इति—

गार्हपत्यादार[2]भ्याहवनीयाद्ध्वंसयन् कम्पयन् भस्मना गच्छति। एतयैवर्चा भस्मना शुनः पदमपि वपेत्—प्रकिरेत्। श्रुतेर्नात्र स्मार्तमु-[3]दकोक्षणम्, न गोभिराक्रम[4]णम्, भस्मनैव शौचम्।

(वृ) **सर्व–श्रित्तम्**—सर्वत्रेति नैमित्तिकान्तरप्राप्तावपि। इन्द्राय व्रीहीन्निरुप्येति निर्वापोत्तरकालं प्रातर्होमार्थमधिश्रितेऽप्येतदेव। तथा पशुपुरोडाशाद्यर्थे निरुप्तेऽप्यग्निहोत्रद्रव्येऽधिश्रिते। शुनोऽन्तराग्निधावने भस्मादानादि प्रायश्चित्तम्। [5]न तु तत्र "अपोऽन्वतिषिच्य" इत्यादि नैमित्तिकम्। "यद्ग्रामन्वत्यावर्तयेत्, रुद्राय पशून्" इत्यादिना ब्राह्मणेन नैमिकान्तरप्राप्तिमाशङ्क्य निन्दां कृत्वाऽग्निहोत्रेऽधिश्रितेऽस्यैव विधानात्प्राप्तिसम्भवेऽप्ययमपवादः।

**अन्य–श्रित्तम्**—उद्वासनादू[6]र्ध्वमधिश्रिते कालमात्रनिर्देशात्।

**अन्ये त्वाहुः–त्तमिति**—अधिश्रित इति नामैत्तिकप्राप्तिकाल-निर्देशादयमधिश्रिते न पूर्वमित्यर्थः। अधिश्रयणादूर्ध्वमासमाप्तेरेतदेव भवतीति।

**श्रुते–शौचम्**—अस्यार्थः—श्रुतेरपराधाद्विहितापराधात्पुरुषाप-राधत्वाभावात् [7]न स्मार्तं शकृज्जलक्षेप[8]णादि नैमित्तिकं तयोः श्रुतौ निन्दनात्। अथवा अयमर्थः श्रुतेर्नात्र स्मार्तमित्यादेः—श्रुतौ यद्ग्रामन्व-त्यावर्तयेदित्यादिसिद्धवदनुवादादनुवादसरूपाविधिकल्पनया शकृज्जल-प्रक्षेपादयः कर्तव्याः इति न भवति; श्रुतावनूद्य निन्दाकरणात् 'रुद्राय पशूनपिदध्यात्, [9]अनाद्यमग्नेराप, इति निन्दितत्वात्। नचोत्तरविधि-

---

[1] गार्हपत्यस्य भस्म–घ. [2] रभ्य यावदाहवनीयस्तावत् ध्वंसयन्–ङ. च. घ. [3] मुदकक्षेपणं–क. ग. घ. [4] णं निन्दनात्–ङ. ग. घ. [5] नपुनस्तत्रा–ग. घ. [6] ध्वम्, अधिश्रितकाल–ग. घ. [7] न तत् स्मा–क. [8] णं न गोभिराक्रमणं च नै–क. [9] प्य–घ.

प्रशंसार्था निन्दा ; उदकक्षेपणादेः श्रुतौ विधानाभावात् । तस्मादिह लोकसिद्धमनूद्यैव निन्दा निषेधपरा, अतोऽत्र भस्मनैव शुद्धिः । इह निन्दार्थमनूदितस्यैव[1] दशक्षेपणादेः यस्य सान्नाय्येऽधिश्रिते इत्यस्य सूत्रकारेण उपादानम् ॥

(रु) ध्वंसयन् इतस्ततो भस्म विकिरन् गत्या शुनः पदानि भस्मनाऽभिवपेत् । अधिश्रयणप्रभृत्योद्वासनादिदं प्रायश्चित्तम् । आप्रदानमित्यपरे । अन्यदा सर्वप्रायश्चित्तमेव ॥

[दक्षिणाग्न्यानयनाभावसमानाधिकरणास्तमयोऽग्नयोंऽशः]

(सू) **यस्याग्निमनाहृतं सूर्योऽभिनिम्रोचेद्यत्र दीप्यमानं परापश्येत्तत आहृत्यैतं प्रविशानीति वैष आधीयते ॥ ९ ॥ २ ॥ २१ ॥ २३१३ ॥**

(भा) अनाहृतमनानीतं[2] दक्षिणाग्निं सूर्योऽभिनिम्रोचेत्—अस्तमियात् [3] अनाहार्यं यत्र यस्मिन् देशे दीप्यमानं ज्वलन्तं पश्येत् तत आहृत्याग्निं करोत्येतं प्रविशानीत्यनेन मन्त्रेण । इति वैष आधीयते—स्थाप्यते । एषा श्रुतिः तस्याग्नेरनाहृतस्येति न ज्ञायते । तत्र सूत्रकारोऽप्याचष्टे दक्षिणाग्ने[4]रनाहृतस्यैषा श्रुतिरिति । दीप्यमानादग्नेरग्निमानीयैतं प्रविशानीत्यनेन मन्त्रेण स्थापयितव्य इति न सभ्यावसथ्ययोः ॥

(वृ) **अनाहार्यं**—अहरहरेतं [5] दक्षिणमाहरन्तीत्येतन्न कर्तव्यम् । किंत्वन्यत्रापि ॥

[1] त्यस्योदकक्षेपः—**च. घ.** [2] मसाधिकं—**ग. घ.** [3] आहार्यं—**क. ख. ग. च.** [4] रनुगतसैषा—**च.** [5] दक्षिणत आह—**घ.**

**यत्र-मन्त्रेण**—यत्र क्वापि दीप्यमानं शुचिभूतमग्निमनेन मन्त्रेणाऽऽहृत्य दक्षिणाग्नयदृष्टस्य अस्मिन् प्रवेशनं संकल्प्य स्थापयेत् ॥

**इति वैष आधीयते**—अनेन मन्त्रेण स्थापनं वा ॥

[सूत्रस्यैव ब्राह्मणवाक्यशेषप्रतिपादकत्वम्]

**दीप्य-तव्य**—एतदुक्तं भवति—दीप्यमानं परापश्येत्तत आहृत्याग्निं कल्पयेदित्येकं सूत्रम्। एतं प्रशानीति मन्त्रः। इति वैष आधीयते इति ब्राह्मणम्। तस्य वाक्यशेषो दक्षिणाग्नेरिति सूत्रम् ॥

**न सभ्यावसथ्ययोः**—अप्याहार्ययोरेतद्भवति ॥

(रु) अहरहरेनमाहरेयुरति दक्षिणाग्नावुक्तम्। तत्र यद्यनाहृतेऽग्नौ सूर्योऽस्तमियात्तदा पुष्टगृहादियोनिविशेषमनवेक्ष्य यत्र दृष्टोऽग्निः तत आहृत्यैतं प्रविशानीत्येष निधीयते। वाकारः प्रसिद्धौ। अथवा एवं प्रविशानीति तूष्णीं वा निधीयत इत्यर्थः। अभिनिम्रोचेदिति वचनादभ्युदये तूष्णीमाधेयः ॥

(सू) **इति दक्षिणाग्नेरनुगतस्याऽऽधानकल्पः** ॥ ९ ॥ २ ॥ ॥ २२ ॥ २३१४ ॥

**(भा)** अनुगतस्याऽऽधानकल्प इत्यस्यार्थः—यदा वा[1] अनुगच्छति दक्षिणाग्निस्तस्य चायं विधिरेतं प्रविशानीति आधानकल्पः स्थापनविधिरिति ॥

अन्ये त्वाहुः—आधानकल्पः—आधानविधिरिति; यैराहितोऽग्न्याधेये, तैरेव पुनः स्थाप्यत इति। उपदेशो यत्र दीप्यमानं परापश्येत्तत आहृत्य आहर्तव्य इत्येतावदनाहृते एतं प्रविशानीति वैष आधीयते इत्येतावता अनुगतस्य स्थापनं दक्षिणाग्नेः ॥

[1] चानु-घ.

(वृ) यदा च-विधिः—अनुगतस्य दक्षिणाग्नेरग्निहोत्रार्थस्य स्वयोनित आहृत्यानेन मन्त्रेण स्थापनम् ॥

स्थापनविधिः—समाधानप्रकारः सर्वप्रायश्चित्तं च ॥

उपदेशो-दक्षिणाग्नेः—एतमित्याधीयत इत्येतेन मन्त्रेणानुगतस्य दक्षिणाग्नेः पुनः स्थापनमित्युपदेशः ॥

[आहवनीयानुद्धरणसमानाधिकरणास्तमये कर्तव्यप्रायश्चित्तम्, तत्र मतभेदानां सोपपत्तिकमुपपादनं च सूत्रत्रयेण]

(सू) यस्याग्निमनुद्धृतगं सूर्योऽभिनिम्रोचेत् ॥ ९ ॥ २ ॥ २३ ॥ ॥ २३१५ ॥

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने षष्ठी खण्डिका

---

(भा) [1] अनुद्धृतमाहवनीयमभिनिम्रोचेदस्तमियात्सूर्यः ॥

(रु) सर्वत्रानुगतस्यापि दक्षिणाग्नेर्यथायोन्युत्पाद्यायमेवाऽऽधानप्रकार इत्यर्थः । दक्षिणाग्नेरिति वचनात्सभ्यावसथ्ययोस्तूष्णीमेवाऽऽधानम् । प्रायश्चित्तमेव विशेषस्यानुक्तत्वात् ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां षष्ठी खण्डिका

---

(सू) दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेत् । अन्वङ्ङार्षेयो ब्राह्मणो बहुविदुद्धरेत् । अन्वङ्ङग्निहोत्रेणानूद्द्रवेत् । आयतने हिरण्येऽग्निं प्रतिष्ठाप्य नित्यमग्निहोत्रमुपसाद्याऽऽतमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवस्सुवरित्युपस्थाय वारुणं चरुं निर्वपेत् ॥ ९ ॥ २ ॥ २४ ॥ २३१६ ॥

---

[1] अनुद्धत आय-च.

(भा) दर्भेण हिरण्यं बद्ध्वा सुवर्णं पुरस्ताद्धरेत्। [1]अग्नेः कश्चित् अन्वक्–अनुमार्गेण[2] तस्य हिरण्य[3]स्यार्षेयो [4]यस्तानृषीन् वेद बहुविच्च।

अन्ये त्वाहुः—'आर्षेय उद्धरेत्' इति[5] तस्य व्याख्या बहुविदिति। सोमवित् बहुवित् चतुर्होतृ [6] विद्वान् ' स ह्येव भूयो वेद ' इति श्रुतेः। बहुविदः पश्चादध्वर्युः अग्निहोत्रेण सह गच्छेत् [7]। गार्हपत्यदक्षिणाग्न्योः सभ्याऽऽवसथ्ययोश्च। यदि नाऽऽहवनीयात् शुन्धनान्तं परिस्तरणान्तं [8] वा। सर्वान् परिस्तृणाति। दुग्धायां गवि [9] पलयामुपविष्टायां परिषिच्य द्वावग्नी उपवेषादानादिगमिदुपधारणान्तम् [10]। [11]यत्रकुत्रस्थो यजमान उन्नयनप्रैषमाह। [12]नाभिमीलतेति तिष्ठति च तत उद्धरेत्याह बहुविदम्; ततस्स उद्धरति। वाचा त्वेत्युद्ध्रियमाणे चाभिमन्त्रिते[13] उर्वन्तरिक्षं वीहीत्युद्द्रवत्यध्वर्युः[14]। बहुविदा पूर्ववते संस्थापिते हिरण्येऽग्नौ नित्यं काम्यं पयः तदस्मिन् होमे नियम्यते। पूर्ववृत्तं नित्यमिति केचित्। तदुपसाद्य पूर्ववत् समिदाधानादि परिस्तरणान्तमपरेणाऽऽहवनीयं यजमानोऽतिक्रम्याऽऽचामति विद्युदसीति। केचित् [15]पूर्वमाचामति यजमानसंस्कार इतीहातिक्रामत्येवोपस्थानार्थं, ततोऽध्वर्युः परिषिच्याऽऽहवनी[16]यं धारां च कृत्वा विद्युदसीत्या[17]दि जपान्तम्। आतमितोः—[18]आतमनात् यावच्छ्रान्तो भवति; तावदप्राणन् अनुच्छ्वसन् आसित्वा। समन्य उच्छ्व-

[1] अग्निः कश्चित्–क. ख. ग. [2] क्रमेण–क. [3] ण्यस्य पश्चादार्षे–ग. घ. [4] यस्स्वानृषीन्–च. घ. [5] दिति श्रुति सिद्धिस्यास्य–ख. ग. [6] विद्वान्–क. [7] च्छेत् कर्म। गार्हः–च. गच्छेत् कर्मगार्ह–घ. [8] वा यदि सर्वान्–च. [9] णान्तं कृत्वा–ङ. [10] पलयां चोपविष्टायां–घ. ग. ङ. च. [11] यत्र तत्रस्थो–ख. ग. घ. [12] नहि मीलने–ख. ग. घ. ते तिष्ठति–च. ङ. [13] मन्त्रय–ङ. च. मन्त्रिके दक्षिणाग्नेः प्रणयनमेकयोनित्वे। ततो बहुविद्भिः प्रणीयमाने, पश्चादुर्वन्तरिक्षं–ग. घ. [14] त्यद्रवणाद्यध्वर्युः–च. [15] पूर्वं यजमानः–ख. ग. [16] यं दक्षिणाग्निम् चैकयोनित्वे धारां– ग. घ. याद्धारां–च. [17] त्यादि व्याहृतिजपान्तं कृत्वा–च. [18] आताम नात्–चि.

स्य हुत्वा अग्निर्ज्योतिरिति वृष्ट्यन्ते भूर्भुवस्सुवरित्युपस्थायाध्वर्युः समाप्य होमं वारुणं करोति। अनन्तरं [1]विहरणादि। यदा तु नक्तधारणपक्षः तदा तस्मिन्नेवाग्नौ। केचित्त्वसति साक्षाद्वचने रात्रौ करणं नेच्छन्ति; 'न सायमस्ति देवया अजुष्टम्, इति लिङ्गात्॥

(वृ) **दर्भेण–काश्चित्**—हिरण्यशब्दस्य रजतेऽपि "हिरण्यं रजत" मित्यादिषु प्रयोगे दृष्टेऽप्यत्र 'ज्योतिर्वै हिरण्यं' इति वाक्यशेषात्सुवर्णपरता; अग्नेः पुरस्तात् कश्चिच्छुचिर्ब्राह्मणो हरेत्॥

**यस्तानृषीन् वेद बहुविच्च**—आर्षेयज्ञ आर्षेयशब्दः प्रवर्तते।

**अन्ये त्वाहुः–व्याख्या**—सूत्रकारेण क्रियते।

**सोमवित्**—ज्योतिष्टोमवित्।

**चतुर्होतृविद्वान्**—तेषां विनियोगमर्थं च यो वेत्ति; 'प्रजापतिरकामयत प्रजास्सृजेय' इत्यादि प्रश्नद्वयार्थं 'ब्रह्म वै चतुर्होतार' इत्यनुवाकार्थं च यो वेत्ति।

**गार्ह–योश्च**—कर्तव्यम्।

**यदि नाऽऽहवनीयात्**—सभ्याऽऽवसथ्ययोरुत्पत्तिः।

**शुन्धनान्तं–वा**—कर्तव्यमिति पूर्वेण संबन्धः।

**सर्वान् परिस्तृणाति**—बहूनां परिस्तरणे परिस्तरणान्तम्। आहवनीयस्यैव परिस्तरणपक्षे आहवनीयाभावाच्छुन्धनान्तम्।

**दुग्धायां–णान्तम्**—द्वावग्नी इति दक्षिणाग्नेर्भिन्नयोनित्वे। एकयोनित्वे तु आहवनीयोद्धरणादूर्ध्वं दक्षिणाग्नेः प्रणयनात्पूर्वं गार्हपत्यस्यैव परिषेचनम्। सभ्याऽऽवसथ्ययोर्भिन्नयोनित्वेऽपि परिषेचनाभावः। गार्हपत्यादीनां त्रयाणामेव परिषेचनस्य क्रमेणोपदेशात्।

---

[1] विद्युद्धारणादि–**क. ख.** विद्युद्धारणादि–**ग. घ.** व्युद्धरणादि–**च.**

**यत्र कुत्र–माह**—आहवनीयाभावात्तमपरेण दक्षिणातिक्रम्य यजमानदेशेऽवस्थानासंभवात् ।

**बहुविदा–ण्येऽग्नौ**—हिरण्यनेत्रा हिरण्ये निहितेऽभिपतय इत्यादिना बहुविद्धिरण्यं[1] प्रतिष्ठापयेत् । ततः ;—

**तदुपसाद्य–न्तम्**—करोति ; आहवनीयस्य दक्षिणाग्नेश्च एकयोनित्वे इध्मा[2]धानशुन्धनपरिस्तरणादि ।

**ततोऽध्वर्युः–यम्**—दक्षिणाग्निं[3] च, एकयोनित्वे ।

**हुत्वा–उपस्थाय**—अत्राध्वर्योरुपस्थानम्, हुत्वा भूर्भुवस्सुवरिति समानकर्तृकत्वावगमात्, प्रत्यगाशीष्ट्वाभावाच्च ।

**केचित्तु–लिङ्गात्**—देवया इति देवयाग इति [4]छान्दसो गकारलोपः ।

अथवा या प्रापणे । देवया इति देवयानम्, देवानप्राप्तं सायमिष्टम् । उभयपक्षेऽपि अजुष्टमिति हेतुनिर्देशः । यस्मादजुष्टं रात्रौ कृतं देवैर्न सेवितमिति । अतो रात्रौ नेष्टिः कर्तव्या, श्वो भूत एव द्वितीयेष्टिः ॥

**[ अधिवृक्षसूर्यकालिकप्रणयनातिक्रमोत्थप्रायश्चित्तानि मतभेदेन ]**

(रु) अधिवृक्षसूर्ये प्रणयनस्योक्तत्वात्तदतिक्रमे प्रायश्चित्तमिदम् । अत उद्धरणशब्देन प्रणयनं लक्ष्यते, यथा 'यस्याग्नावग्निमभ्युद्धरेयुः' इत्यादौ । तथा यस्याऽऽहवनीयमप्रणीतमभ्यस्तमित्याश्वलायनः । तेनोद्धृतेऽप्यप्रणीते भवत्येव प्रायश्चित्तं ; वेदार्थविदार्षेय इति व्याख्यातो ब्रह्मौदने, तत्रैव

[1] ण्येऽग्निं प्रति–**ग. घ.** [2] दान. [3] ग्नेः प्रणयनमेक–**म.** [4] छान्दसो गकारलोपः । अथवा या प्रापणे देव्याया इति देवानां देवानप्राप्तं–**घ.**

बहुविषयं वेदनं यस्य स बहुवित् । अथवा 'ब्राह्मण आर्षेय उद्धरेत्' इति ब्राह्मणस्य व्याख्या बहुविदिति । तत्र च वेदनबहुत्वस्यापेक्षितत्वाद्यस्य यस्य यतो यतो वेदनप्रत्यक्षं तस्य तस्य परिग्रहे गुणातिशय इति द्रष्टव्यम् । तत्रेध्माहरणादारभ्य प्रागुद्द्रवणादाहवनीयकर्मवर्जमध्वर्युणा कृते यजमानस्य परिकर्मीणं दर्भेण बद्धं हिरण्यं पुरस्ताद्धरेत् । तमन्वगनुगतो बहुविदग्निमुद्धरेत् । विधिवत्प्रणयेत् । तमन्वगग्निहोत्रेणाध्वर्युरनूद्द्रवेत् । ततः परिकर्मिणा स्थापिते हिरण्ये बहुविदग्निं प्रतिष्ठाप्य मुञ्चति, ततोऽग्निहोत्रमुपसादयत्यध्वर्युः । नित्यमिति नित्याग्निहोत्रमेवेदं ; न तु वैकृतं सत्पुनर्होमापेक्षितमित्यर्थः । नित्यः पयसो नियम इत्यन्ये । तत आहवनीयस्येध्माधानादि प्रतिपद्याऽऽपूर्वाहुतेः कृत्वा ततो यावत्तावदिति तावदनुच्छ्वसन्नासीत । उच्छ्वस्य हुत्वाग्निहोत्रं वृष्टिरसीत्यपामुपस्पर्शनान्ते कृते भूर्भुवस्सुवरित्याहवनीयमुपस्थाय तदानीमेव वारुणं चरुं निर्वपेत् । श्वो भूत इति भारद्वाजः ॥

(सू.) **व्रातभृतीं द्वितीयामेके समामनन्ति ; ऋते हिरण्यात्प्रणयनमेके ॥ ९ ॥ २ ॥ २५ ॥ २३१७ ॥**

(भा) द्वितीयेष्टिः अग्नये व्रतभृते एकेषां मतेन । 'अव ते हेड, उदुत्तमम्' इति[1] वारुणस्योक्ते ; व्रतभृतस्त्वमग्ने व्रतभृदिति । ऋते हिरण्यादिति ;-हिरण्यप्रणयनवर्जम् । समानमन्यत् ॥

(वृ) **वारुणस्योक्ते—**याज्यानुवाक्ये ॥

(रु) गतः ॥

---

[5] वरुणायोक्ते व्रतभृते त्वमग्ने—**च.**

[सायम्प्रातरग्निहोत्रानुष्ठानकालातिपत्तावनुष्ठेयांशप्रतिपादनं सूत्राभ्याम्]

(सू) यदि सायमग्निहोत्रकालोऽतिपद्येत दोषावस्तोर्नमस्स्वाहेति कालसमापादनीयं होमं हुत्वा नित्यमग्निहोत्रमुपसाद्याऽऽतमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवस्सुवरित्युपतिष्ठेत ॥ ९ ॥ २ ॥ ॥ २६ ॥ २३१८ ॥

(भा) निशायां व्यतीतायां सायंकालातिपत्तौ। अनापदि सङ्कल्पितकालातिप[1]त्तौ च। अन्यः[2] कालो येन सम्पाद्यते स कालसमापादनीयः। तं हुत्वा दोहनादि। नित्यमग्निहोत्रमुपसाद्येत्युक्तार्थम्। [3]उपस्थाने कृते अविकृतो होमस्समाप्यते।

(वृ) **निशायां–पदि**—अनापदि मुख्यकालेष्वग्निहोत्राकरणे कालातिपत्तिः।

**सङ्कल्पित–त्तौ च**—प्रवृत्ते प्रदोषादिसङ्कल्पितकाले होमाकरणेऽपि कालातिपत्तिः।

**तं हुत्वा**—दोषावस्तोरिति। अग्निर्देवता।

**दोहनादि**—प्रवृत्तकर्मणः उत्कर्षे यावदन्त उत्कर्षः। तत्र होमाकृत्वा कृतान्तात्प्रक्रमः।

(रु) अग्निहोत्रे सन्ध्यादयस्सायंप्रातर्होमकाला उक्ताः। तेषां सर्वेषामतिपत्तौ प्रायश्चित्तमुपदिश्यते। तदा प्रदोषान्तो, होमकालः सङ्गवान्तः प्रातः। तमतिनयेत्याश्वलायनः। तत्र त्वापदि काला उक्ताः सूत्रकृता, यन्मध्मन्दिने जुहोतीत्यादिना। तथोपग्रन्थकारेणाप्युक्तं, 'सर्वमहःप्रात-

---

[1] त्तेः–क. [2] त्तावन्यः–च. [3] उपस्थानं कृत्वा अवि–च.

राहुतेः स्थानं, सर्वा रात्रिः सायमाहुतेः' इति। भारद्वाजोऽप्याह 'सायंहोमं चोपोदयं जुहुयात् प्रातर्होमं चोपास्तमयं कालेन कालमनतिक्रम्य न स्कन्दन्ते न व्यथन्ते इति विज्ञायत' इति। तस्मादनापद्येतत्प्रायश्चित्तम्। आपदि तु होम एव क्रियेत, यावदुत्तरस्य कालः प्राप्स्यति; प्राप्ते तूत्तरस्मिन्नपूर्वः क्रियते भ्रष्टकालत्वात्। प्रायश्चित्तं तु तत्र परस्ताद्दर्शयिष्यते। कालः समापद्यते येन स कालसमापादनीयः तं हुत्वेध्माहरणादि। स एवाग्निहोत्रे कैश्चिदिष्टः तन्निरासार्थमुक्तं नित्यमग्निहोत्रमिति। व्यक्तं चैतद्भारद्वाजेन यथा दोषावस्तोर्नमस्स्वाहेति जुहुयात्। एतदेव नित्यमग्निहोत्रमित्याश्मरथ्यः। अथालेखनः कालसमापादनीयमेवानेन मन्त्रेण होमं हुत्वा नित्यमग्निहोत्रं जुहुयादिति पूर्ववत्॥

(सू) **यदि प्रातः प्रातर्वस्तोर्नमस्स्वाहेति कालसमापादनीयं होमं हुत्वा नित्यमग्निहोत्रमुपसाद्याऽऽतमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवस्सुवरित्युपतिष्ठेत वरो दाक्षिणा॥ ९॥ २॥ २७॥ २३१९॥**

(भा) सङ्ग[1]वेऽप्यतीते प्रातःकालातिपत्तौ, सङ्कल्पितकालातिपत्तौ वा। प्रातर्वस्तोर्नमः स्वाहेति होमः। समिदाधानादि पूर्ववत्। अङ्गान्यपि [2]तदानीं होमकाले कर्तव्यानीति; सायं होमे तु दोहनमस्तमिते। [3]पत्न्युपवेशनादि होमकाले। व्याहृतिभिरुपस्थाय वरदानमध्वर्योः। (हुत्वेति वचनात् परिसमाप्ते होमे आहवनीयानु[4]गमनं केचित् ?)

(वृ) **सङ्गवे–पत्तौ**—सङ्गवान्तः प्रातरित्याश्वलायनवचनात्।

[1] वे व्यतीते प्रातः–ङ. [2] तदादीति–च. [3] प्रत्युप–ग. पत्युप–च.
[4] गमनम्–क. ख. ग. ङ.

**सङ्कल्पित–त्तौ वा**—[1] यस्य व्यतीत उपोदय इति ।

**प्रातः–होमः**—अग्निर्देवता ।

**समिदाधा–नीति**—होमादूर्ध्वम् । यस्मादङ्गान्यपि तदानीं प्रातःकाले होमकाले कर्तव्यानीति । समिदाधानादीति निर्देशात् प्रातःकालेऽप्युद्धरणं न होमकाले ; किंतु प्रागुदयादेवेति । अतः कालसमापाद-नीयहोमे कृते समिदाधानादि ।

**सायं–मिते**—अस्तमिते दोग्धीति तस्य स्वकालत्वात् ।

**पत्तयुप–काले**—अतो दोहनादूर्ध्वं दोषावस्तोरिति होमः ।

(रु) **गतः ।**

**[मार्जनावसानेऽनुगमनम्, आहार्याग्नीनां सायं होमार्थं पुनराहरणम्, आदित्योपस्थानादिकं च]**

(सू) **हुत्वाऽऽहवनीयमुद्वास्य 'अन्वाग्निरुषसामग्रमख्यत्' इत्यन्यं प्रणीय 'इहैव क्षेम्य एधि मा प्रहासीन्मामु-मामुष्यायणम्' इत्यादित्यमुपस्थाय मैत्रं चरुं निर्वपेत् ॥ ९ ॥ २ ॥ २८ ॥ २३२० ॥**

(भा) हुत्वेति वचनात् परिसमाप्ते आहवनीयानुगमनम् । अन्वाग्नि-रित्याहवनीयस्य प्रणयनं इष्टिस्सायं होमार्थस्य । मा प्रहासीन्मां देवदत्तं वात्स्यमित्यादित्योपस्थानम् । जीवत्सु पूर्वपुरुषेषु वात्सायनमिति ।

(वृ) **हुत्वेति–गमनम्**—हुत्वाहवनीयमिति पुनर्वचनात् मार्जनान्तेऽ-नुगमनम् । नैमित्तिकस्यापरिसमाप्तत्वादाहवनीयधारण(णा)शङ्कायां अनु-गमनं विधीयते । यथाऽनुद्धृतेऽभ्युदिते अन्वाग्निरुषसामिति प्रणयन-

---

[1] यस्याप्यतीते उपोषायादिः—च.

विधानादेव [1] पूर्वस्यानुगतौ सिद्धायामप्यनुगमनविधानाद्गतश्रियोऽप्यनुगमस्य प्रणयनमिति केचित् ।

**अन्वग्निः—र्थस्य**—आहवनीयस्यैवोभयार्थता । दक्षिणाग्निसभ्याऽऽवसथ्यानामाहार्याणां सायंहोमार्थं पुनराहरणम् । एकयोनित्वे तेषामप्यनुगमनम् । पुनः प्रणीय धारणम् ।

**जीवत्सु—नामिति**—"जीवति तु वंशे युवा" इति युवप्रत्ययस्मरणात् ।

**(रु)** अमुमामुष्यायणमिति यजमानस्य नामगोत्रयोर्निर्देशः । यथा-देवदत्तं भार्गवमिति ॥

**[वारुणमैत्रसौर्याणामाग्नेयविकारत्वम्, स्वाभिप्राय-स्फुटीकरणम्, सहेतुकं वैशेषिकधर्माणां विकृतिषु प्राप्तिश्च]**

**(सू)** **सौर्यमेककपालमेके समामनन्ति ॥ ९ ॥ २ ॥ ॥ २९ ॥ २३२१ ॥**

**(भा)** वारुणमैत्रसौर्या आग्नेयविकाराः । वृक्षवच्च विभक्तयः । 'अयं मित्रो, अनमीवास, इति [2] मित्राय, 'उदु त्यं चित्रम्' इति [3] सूर्याय । एककपालधर्मा वैशेषिकाः, नव प्रयाजानूयाजाः, पृषदाज्यं, बर्हिरादि सर्वमिति केचित् । य आग्रयणे वैशेषिक आम्नातः स एव तस्य, लिङ्ग-दर्शनादितरस्य न स्यादित्यापस्तम्बमतिः ।

**(वृ)** **वारुण—भक्तयः**—त्रयाणामपि देवतावाचकशब्दानामकारान्तत्वात् ।

[1] पूर्ण—क. [2] मैत्रस्य—क. [3] सौर्यस्य—क.ङ.च.

**एककपाल--वैशेषिकाः** --- अभिपूरणादयः ।

**नव प्रया–केचित्**—नवसङ्ख्याकाः ।

**सर्वमिति–केचित्**—साधारणधर्माणामपि तदङ्गत्वाविशेषात् ।

**य आग्रय–मतिः** —वैशेषिकधर्माणां सर्वहुतादीनां आग्रयणे अनुवाददर्शनात् सोमयागादीनामनुवादादर्शनाच्च वैशेषिकाणामेव विकृतिषु प्राप्तिरिति ।

(रु) सौर्यस्याग्रयणोक्ता एककपालधर्माः कार्याः । स चाग्नेयविकारः ॥

[मैत्रयास्सौर्येष्ट्वा समाप्तौ दम्पतिभ्यामनुष्ठेयांशव्यवस्था]

(सू) **संस्थितायामिष्टयामाहवनीयमेवैतदहरिन्धाना-वनश्नन्तौ वाग्यतावासाते यजमानः पत्नी च ॥**
**॥ ९ ॥ २ ॥ ३० ॥ २३२२ ॥**

(भा) संस्थितायां मैत्र्यां सौर्येष्टौ वा [1] । आहवनीयमेव न दक्षिणाग्नि [2] माहार्यम्, एतदहः सायं होमार्थमिन्धनम् । प्रातर्होमेऽन्यः प्रणीयते । अन्यत्र त्वहर्ग्रहणेन वा अहोरात्रयोर्ग्रहणं परिसमाप्तं भवति, [3]इन्धनं पुनः पुनः क्षिपति [4] ।

(वृ) **आहवनी–र्यम्**—आहार्यपक्षे तेषां धारणेऽपि न समिन्धनम् । एकयोनित्वेऽपि न समिन्धनम् आहवनीयमेवेति नियमात् ।

**एतदहः–भवति**—एतदहरिदं त्विन्धानावित्युक्त्वा द्वयोः पयसा पूर्ववत्सायमग्निहोत्रं जुहुयादिति वचना[5]दिदमहर्ग्रहणं अहर्मात्रपरम्, [1]इन्धने पुनः पुनः क्षिपतः पत्न्या अपि पृथक् समिदाधानम् ।

---

[1] ष्टावाह–**च. घ.** [2] ग्नि यथाहार्यः–**च.** [3] इन्धने–**च,** [4] क्षिपतः–**क. ख.** क्षिप्तः–**घ.** [5] दितराहग्र–**क.**

(रु) आहवनीयमेवेति तमेवाहवनीयं सायंहोमार्थमिन्धानावित्यर्थः। अथवा सर्वाग्नीन्धनस्य आश्वलायनादिभिरिष्टत्वात्तन्निवृत्त्यर्थ एवकारः।

(सू) **द्वयोः पयसा पूर्ववत् सायमग्निहोत्रं जुहुयात्॥**

(भा) सायं होमे दक्षिणाग्न्यादिरन्यः। द्वयोः पयसा अग्निहोत्रं अग्निहोत्रस्थाल्या पूर्वा[1]मिति पूर्ववत्।

(वृ) **सायं–अन्यः**—आहवनीयस्यैव इन्धनेन धारणविधानात्।

(रु) द्वयोः, गवोरिति शेषः। पूर्ववत्, यथा द्वयोः पयसा पशुकामस्य जुहुयादित्यत्रोक्तरीत्येत्यर्थः॥ २॥ ३॥ २३२३॥

[आहवनीयानुद्धरणसमानाधिकरणोदयनिमित्तक-
प्रायश्चित्तप्रतिपादनम्।]

(सू) **यस्याग्निमनुद्धृतं सूर्योऽभ्युदियाच्चतुर्गृहीतमाज्यं पुरस्ताद्धरेत्। अन्वङ्ङार्षेयो ब्राह्मणोऽग्निमुद्धरेत्। अन्वङ्ङग्निहोत्रेणानुद्रवेत्। आयतनेऽग्निं प्रतिष्ठाप्योषाः केतुना जुषतां यज्ञं देवेभिरिन्वितम्। देवेभ्यो मधुमत्तरँ स्वाहेति प्रत्यङ्ङिषद्याज्येन जुहुयात्॥ ९॥ २॥ ३१॥ ॥ २३२३॥**

(भा) अभ्युदियात्–अनुद्धृत आहवनीये उदयं कुर्यात्। चतुर्गृहीतमाज्यं जुह्वामानीयाऽऽहवनीयस्य पुर[2]स्तान्नयेत्। ब्राह्मणस्तम[3]न्वङ्ङार्षेयः–आहवनीयेन सह गच्छेत्। तमन्वङ्ङग्निहोत्रेण सहाध्वर्युः। पूर्ववत्कर्म। स्थापित आहवनीये 'उषाः केतुना जुषतां' इति

---

[1] मितिवत्–ख. ग. घ. [2] स्थाद्धारेत्–ङ, ध्रारयेत्–क. [3] न्वार्षेयः–ङ.

प्रत्यङ्मुख उपविश्याज्यं जुहुयात् येनानीतं ततः पूर्ववत् समिदाधानादि नित्यमग्निहोत्रमुपसा[1] द्येत्येवमादि ।

(वृ) पूर्ववत्—बहुविदुद्धरणवत् ।

स्थापित-जुहुयात्—उषाः—देवता ।

येनानीतं—अध्वर्योरग्निहोत्रधारणे व्यापृतत्वादाहरणस्य दृष्टार्थत्वाय तेन होमः ।

[तत्कालेऽग्निहोत्रानुष्ठानप्रकारः]

(सू) **अग्निहोत्रस्य स एव होमकल्पः, तत्प्रायश्चित्तं यत्प्रातः कालातिपन्नस्य ॥९॥२॥३२॥२३२४॥**

(भा) स एव होमकल्पः—कालसमापादनीयहोमवर्जं उपस्थानवरदाने कृत्वा होमपरिसमाप्तिः । आदित्योपस्थानादि द्वयोः[2] पयसा होमान्तम् । तदेव प्रायश्चित्तम्, यत्पात्रः कालातिपत्तौ ।

(वृ) काल-वर्जम्—होमकालातिपत्त्यभावात् ।

(रु) व्याख्यातोऽयमभिनिम्रोचनाविधिना । इयांस्तु विशेषः, हिरण्यस्थाने तु चतुर्गृहीतं हरेत् । तच्च प्रतिष्ठापितेऽग्नावध्वर्युरग्निहोत्रमुपसाद्य पुरस्तादाहवनीयस्य प्रत्यङ्मुख उपविश्य उषाः केतुनेति जुहुयादिति ॥ ९ ॥ ७ ॥ १०–११ ॥

[अत्राऽऽहवनीयानुगमनाभावः]

(सू) **एतावन्नाना । नात्राहवनीयमनुगमयति ॥ ॥ ९ ॥ २ ॥ ३३ ॥ २३२५ ॥**

---

[1] द्येति=क. [2] पयसाग्निहोत्रम्—ङ.

(भा) एतावन्नानाभावः । नात्राहव[1]नीयस्यानुगमनम् । अग्नि-होत्राहवनीय एव मैत्रादिः ।

(रु) आतमितोरप्राणन्नित्यादिर्वरदानान्तो होमकल्पोऽनन्तरविधिना-समानः । तथा आदित्योपस्थानादि द्वयोः पयसा होमान्तं प्रायश्चित्त-मित्यर्थः ॥

[आहवनीयानुद्धरणसमानाधिकरणोदये शाखान्तरीयविधेः वैकल्पिकत्वमेव ; न समुच्चायकत्वम् ; अनुद्धृतप्रायश्चित्ता देर्मतभेदेन व्यवस्थापनं च । ]

(सू) अथैकेषाम्—यस्याग्निमनुद्धृतं सूर्योऽभिनिम्रो-चेदभ्युदियाद्वा ॥ ९ ॥ २ ॥ ३४ ॥ २३२६ ॥

'मनो ज्योतिर्जुषताम् त्रयस्त्रिंशत्तन्तव' इति द्वे चतुर्गृहीते जुहुयात् ॥ ९ ॥ २ ॥ ३५ ॥ २३२७ ॥

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने सप्तमी खण्डिका

---

(भा) अन्येषां शाखिनां [2]मतिः । मनो ज्योतिर्जुषतामित्येकं चतु-र्गृ[3]हीतं हुत्वा चतुर्गृहीत्वा त्रयस्त्रिंशदिति द्वितीयं, अग्निहोत्रार्थ एव विहृतेऽग्नौ, तदङ्गत्वात् । इष्टयस्तु [4]तन्नभिन्नाः ; तस्मात्तासा-मन्योऽग्निः ।

केचित्तु हुत्वा प्रायश्चित्तमाहुतिद्वयं पश्चादग्निहोत्रार्थं पुनः प्रणयन्ति । शाखान्तरस्थो विधिः विकल्पते सर्वत्र न समुच्चीयते ।

इति धूर्तस्वामिभाष्ये नवमप्रश्ने सप्तमी खण्डिका

---

[1] नीयानु—क. [2] शाखिनामिति—ख. ग. घ. [3] हीतं गृहीत्वा—च. [4] तत्र—क. ङ.

(वृ) द्वितीयं—तदङ्गत्वात्—द्वे चतुर्गृहीते इति सूत्रं चतुर्गृहीताभ्यां होमद्वयार्थम् । 'मनो ज्योतिर्जुषतां या इष्टा' इत्युत्तरार्धचेत्त्रयस्त्रिंशदित्येतत्संनिधानात् । अतो होमावग्निहोत्रहोमार्थेऽग्नौ; तन्त्रभेदाभावात् ।

शाखान्तर—यते—प्रतिपत्त्यभेदान्निरपेक्षोपदेशाच्च प्रथमस्य मनो ज्योतिर्देवता । द्वितीयस्य देवा देवता । अत्रेदमुच्यते—आपदि होमकालातिपत्तावेव अनुद्धृतप्रायश्चित्तहोमद्वयं बहुविदुद्धरणं वा कृत्वा अग्निहोत्रहोमः । अनापदि होमकालातिपत्तौ अनुद्धृतप्रायश्चित्तं कालसमापादनीये च कृत्वा होमः कर्तव्यः इति । अत्रानुद्धृतप्रायश्चित्तमाहुतिद्वयात्मकमेवेति केचित् । इतरस्य विरोधा[1]त्तर्हि प्रातःकालातिपत्तावाहवनीयानुगमनस्याङ्गत्वाच्चतुर्गृहीतमाज्यं पुरस्तात् इत्यत्र । नात्राहवनीयमनुगमयतीति तन्निषेधाद्विरोधः ।

अन्ये तु अयं विधिः प्रातःकाले; सायंकाले तु विरोधाभावात् बहुविदुद्धरण[2]मपि न कर्तव्यमित्याहुः । होमकालविशेषे सङ्कल्पितेऽनुद्धृते तत्कालातिपत्तौ अनुद्धृतप्रायश्चित्तं कालसमापादनीयं च कर्तव्यम् ॥

इति धूर्तस्वामिभाष्यवृत्तौ नवमप्रश्ने सप्तमी खण्डिका

---

(रु) तस्मिन्नेवाग्नौ मैत्रेष्टिः सायंहोमश्चेति भावः ॥

इति श्री भट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
नवमप्रश्ने द्वितीये पटले सप्तमी खण्डिका

---

[1] तथाभिप्रेतः—घ. [2] णं विकल्पेन कर्त—ग.

[ अनुदितहोमानुष्ठानविषयकप्रायश्चित्तम् ]

(सू ) यस्य विप्रक्रान्तमहुतमग्निहोत्रं सूर्योऽभ्युदियाद्यथा विजनिष्यमाणो न विजायेत तादृक्तत् । आत्मानं चाह यजमानो रुणाद्धि सर्वज्यानिं वा जीयते । नित्यमग्निहोत्रमुपसाद्याऽऽतमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवरित्युपतिष्ठेत एकहायनो दक्षिणा ॥ ९ ॥ २ ॥ ३६ ॥ २३२८ ॥

(भा) विप्रक्रान्त[1]मारब्धम् । अनुदिते होष्यामीति उदिते समिदाधानादि । परिषेचनादीत्युपदेशः । अहुतायां च पूर्वाहुतौ सूर्य उदेति । यथा विजनिष्यमाणा प्रसूयमाना गौर्न विजायेत तादृक् तदग्निहोत्रं आर्तिगतं मन्येताध्वर्युः । (आत्मानं[2] चाह एवमार्तिगतोऽहमिति मन्येताध्वर्युः ) [3]तथाऽग्निहोत्रहोमोऽनर्थकः । यजमानो रुणाद्धि [4]आव्रियन्तेऽस्य स्रोतांसि, सर्वज्यानिः सर्वस्वहानिः । नित्यमग्निहोत्रमिति पूर्ववदुपस्थानान्तम् । एकहायनः—एकवर्षः । [5]दक्षिणा ;—अध्वर्योः ॥

(वृ ) अनुदिते होष्यामीति—संकल्पिते होमात्पूर्वम् ।

उदिते समिदाधानादि —उदितानुदितहोमयोरुभयोः प्रणयनस्यानुदितेन न कर्तव्यं वा । [6]उदितहोमे प्रणयनादूर्ध्वमुदयस्यावश्यं भावित्वात् प्रक्रान्तमाग्निहोत्रमिति निमित्तत्वानुपपत्तिः । समिदाधानादयस्तु पूर्वकालस्य विधानात् होमसमानकालत्वात् अनुदिते होमे संकल्पिते प्राग्घोमादभ्युदये वक्ष्यमाणनैमित्तिकं भवतीति ।

[1] अन्वारब्धम्—च. [2] नं वा एव—च. [3] यद्वाग्नि—ङ. [4] आभ्रियन्ते तस्य—ङ., आव्रियतेऽस्य—घ. [5] सा दक्षिणा—ग. ङ. [6] अनुदिते-घ.

**परिषेचनादीत्युपदेशः**—समिदाधानशुन्धनपरिस्तरणानामनियतकालत्वात् परिषेचनादेर्नित्यवद्धोमसमानकालत्वात् तदूर्ध्वमुपदेशेनेत्युपदेशः।

**अहुतायां–ध्वर्युः**—अग्निहोत्रे होमोत्पत्तिकाले अनुत्पत्तेरग्निहोत्रमार्तिगतमात्मानं चाह अमादार्तिगतोऽहमिति मन्येताध्वर्युम्। आत्मानं वाह इति क्वचित्पाठः। तत्र वाशब्दश्चार्थे।

**तथाग्नि–र्थकः**—एवमार्तिगतत्वात् अग्निहोत्रहोमः क्रियमाणोऽपि निष्प्रयोजनः।

**यजमानो रुणद्धि**—अस्यार्थः;—आम्रियन्तेऽस्य सन्निरोधं प्राप्नोति;—अग्निहोत्राकरणेन [1] निरोधं प्राप्नोति यजमानः, मूत्रपुरीषादीनां निरोधं प्राप्नोति।

**सर्वज्यानिः–सर्वस्वहानिः**—सर्वज्यानिं वा जीयत इति सर्वस्वहानिर्यथा भवति तथा जीयते।

(रु) तयोरप्युद्धृत एवाग्नौ होमस्तदङ्गत्वात्।

[आर्तहविषः प्रायश्चित्तम्]

यस्यानुदिते होष्यामीत्यभिसंधाय प्रक्रान्तमग्निहोत्रमनुदित एवाहुतं स्यात्। तद्यथा प्रक्रान्तप्रसवा स्त्री सद्योऽप्रसूतार्तिमियात्तादृगार्तं भवति। तेन च यजमानोऽप्यात्मानं रुणद्धि दुःखायात्मानं नयतीत्यर्थः। वाकारश्चार्थे; हेति प्रसिद्धौ। ततो दुःखाय रुद्धस्सर्वज्यानिं जीयते; सर्वा बाधाः प्राप्नोति। तस्मादादर्तव्यमेतत्प्रायश्चित्तमिति भावः। नित्यमग्निहोत्रमित्यादि व्याख्यातम्॥

---

[1] सन्निरोधं–ख. ग.

[आश्मरथ्यालेखनमतोक्तयाविशेषांशप्रतिपादनम् ।]

(सू) हुत्वा तदुद्वास्य पुनराधेयं तस्य प्रायश्चित्ति-रित्याश्मरथ्यः ॥ ९ ॥ २ ॥ ३७ ॥ २३२८ ॥

(भा) [2]वृष्ट्यन्तात्परं होमं समाप्य मार्जनान्ते तदुद्वास्य—परित्यज्य विधानेनाग्निं [3]जातं पुनराधेयं प्रायश्चित्तिरनन्तरं न वर्षासु । अग्न्या[4]-धेयमपि लभ्यते, आलेखनमतादित्युपदेशः ।

(वृ) विधानेन—विधिबलात् । केचित् विधानेन इत्युत्सर्गेष्टि-पूर्वकपरित्यागमिच्छन्ति, न वर्षास्वित्यनन्तरमेव पुनराधानं संवत्सरं परार्धमितिवद्वचनाभावात् प्रायश्चित्तरूपत्वाच्च निमित्तान्तरमेव ।

अग्न्याधेय-पदेशः—'यस्य वोभावनुगतौ' इत्यत्र पुनरा-धेयश्रुतेः अग्न्या[5]धेयेऽपि तुल्यतया आलेखनव्याख्यानादिह सूत्रकारे-णानुक्तोऽपि स पक्षः कर्तव्यः इत्युपदेशः ।

[तत्र पुनराधेयमपीत्याश्मरथ्यः]

(रु) हुत्वा तदग्निहोत्रं विधिवदुद्वास्य पुनराधेयमप्यस्य प्रायश्चित्त-त्वेन कार्यमित्याश्मरथ्यो मन्यते । न त्वन्येषामेतन्मतमित्यर्थः ॥

[उन्नयनोत्तरकालाभ्युदयनिमित्तकप्रायश्चित्तम् ।]

(सू) अथैकेषाम्—"यद्यन्ते स्यात् ; उन्नीय प्राङु-दाद्रवेत् स उपसाद्यातमितोरासीत ; स यदा ताम्येत् ; अथ भूः स्वाहेति जुहुयात् ; प्रजापति-र्वै भूतः ; तमेवोपासरत् ; स एवैनं तत उन्नयति ;

---

[1] दत्वा वृ.—ङ. [2]जातं सर्वाग्निं—ग.. [3] दानमपि—ग. [4] धेयस्यापि तुल्य.

**नार्तिमार्छति यजमानः इति विज्ञायते ॥ ९ ॥**

**॥ २ ॥ ३८ ॥ २३२८ ॥**

(**भा**) अथैकेषा[1] मित्यस्मच्छाखामाह सूत्रकारः । तेन [2]खाण्डिकेऽधीयानानाधिकृत्य कृतं सूत्रम् ; यद्यन्ते स्यात् यदि समीपे स्याद्यजमानः स उन्नीय[3] प्राङुदाद्रवेत्—गच्छेत् आहवनीयं प्रति । [4]स उपसाद्य व्याहृतिजपान्तं कृत्वा [5]आतमितोः—आश्रमोपजननात् तिष्ठेत् [6]श्रान्तो भूत्वा भूः स्वाहेति पूर्वाहुतिं जुहुयात् । प्रकृतिवदुत्तराहुत्यादि । प्रजापतिर्वै भूतः नित्यजातस्तमेवोपा[7]सरच्छरणं तस्य होमं कुर्वन् स एवैनं तत उन्नयति तस्माद्दोषादुद्धरति नार्ति[8]मार्छति यजमान इति श्रुतेः । नात्राग्नित्यागः ; प्राजापत्यं हविः, प्रजापतिः [9] प्रजापतिमित्यूहः । परतोऽप्युन्नयनादाहोमात्सन्निहिते [10]यजमाने एतत्प्रायश्चित्तं उन्नयनादित्युपदेशः ।

(**वृ**) **अथै–तिष्ठेत्**—प्रवृत्त्यन्तरनिवृत्तिमात्रपरस्तिष्ठतिशब्दः । आतमितोरासीतेति श्रुतेः ।

**नित्यजातः**—नित्यं प्रादुर्भूतः ।

**तमेव–कुर्वन्**—अस्माद्वाक्यशेषलिङ्गात् अस्मिन् होमे प्रजापतिर्देवता न सूर्यः । न च व्याहृतिदेवता ।

**नात्राग्नित्यागः**—नैमित्तिकान्तरत्वात् ।

---

[1] मिति ऋक्शाखा–**ख. ग. घ.** [2] खण्डि. [3] य स्वयं प्रा **च.**
[4] तदुन्नीय–**ङ.** [5] आतमनाश्रु–**च.** [6] शान्तो भूस्स्वाहेति–**क. ग. घ. च.**
[7] सरत्–तमुपागच्छच्छरणं–**क. ग. ङ. घ. च.** [8] माप्नोति, प्राप्नोति,–**ङ. ग. च.**
[9] प्रजामित्यूहः–**ङ. च.** प्राजापत्यग्रहः–**ग. घ.** [10] ने लभ्यत एत–**ग. ज. घ.**

**प्राजापत्यं–श्चित्तम्**––यद्यपि 'उन्नीय प्राङुदाद्रवेत्' इत्युन्नयनप्रभृति नैमित्तिकं निर्दिष्टम्, तथाप्युन्नयनोत्तरकालमभ्युदितेऽपीदं नैमित्तिकम्। यस्य विप्रक्रान्तमहुतमिति प्रक्रान्तप्रयोगस्य प्राग्घोमादभ्युदयमात्रस्य निमित्तत्वात्।

**उन्नय–पदेशः**––उन्नयनादिनैमित्तिकनिर्देशात् नित्यमग्निहोत्रमित्यादिपूर्वो विधिरसन्निहिते यजमाने।

(रु) एकेषां तु शाखिनां विज्ञायते। यद्यन्ते स्यात् यद्येतन्निमित्तं होमसमीपे स्यात्। किमुक्तं भवति। यदि निष्पन्नेऽग्निहोत्रद्रव्येऽर्वाग्घोमादुदयः स्यादित्यर्थः। तथा च भारद्वाजः यद्यन्ते स्यादित्यग्निहोत्रादनन्तरवादोऽभिप्रेत इति। तत्रोन्नयनाद्योपसादनात्कृत्वा प्राणायामेन तान्तो भूस्स्वाहेति पूर्वाहुतिं जुहुयात्। भूरिति हि प्राजापत्याभिधायी। यस्मादसौ नित्यं भूतो भवति तदनेन प्रजापतिमेवोपासरेत्। प्रजापतिरेवोपसृतः स्यात्। ततश्च स एवैनं तस्माद्दोषादुन्नयति उद्धरति न चार्तिं प्राप्नोतीति। यस्मादेवं शाखान्तरं तस्मादीदृशे निमित्ते पूर्वेणैतद्विकल्पत इति भावः॥ ९॥ ८॥ ४॥

[अग्निहोत्रहोमाभावप्रतीकारनिरूपणम्]

(सू) **यस्याग्निहोत्रं विच्छिद्येत द्व्यहे त्र्यहे चतुरहे वा तन्तुमतेऽष्टाकपालं निर्वपेत्**॥ ९॥ २॥ ३९॥
॥ २३२९॥

(भा) विच्छिन्नेऽग्निहोत्रस्य होमे एकाहे द्व्यहे च ब्राह्मणोक्तमपि लभ्यते। उतैकाहमुत द्व्यहं न जुह्वति इति। परतश्चतूरात्रादग्न्याधेयमेव। अग्निहोत्रस्याग्निगुप्त्यर्थत्वात् अग्नये तन्तुमते अग्ने तन्तुमन् अग्निं तन्तुमन्तं अग्नेस्तन्तुमतः अग्निस्तन्तुमानिदम्।

[भारद्वाजभवस्वामिमतीयाविशेषांशप्रतिपादनम्]

(वृ) विच्छिन्नो–जुहोति —"तस्माद्यस्यैवं विदुषः, उतैकाहमुत द्व्यहं न जुहोति, हुतमेवास्य भवति"—इति वचनादग्निहोत्रब्राह्मणार्थविदुषः आपदि होमचतुष्टयाकरणेऽपि न दोषः।

केचित् 'यस्यैवं विदुषः, इत्यर्थवादत्वात् सर्वेषामपि ब्राह्मणोक्तं लभ्यत इति वर्णयन्ति। तथा भारद्वाजमतिः।

भवस्वामिमतिस्तु —"प्रजापतिर्देवतास्सृजमानः" इति ब्राह्मणार्थविदुष एवेति। तस्यायमर्थः—"सोऽमुमादित्यमात्मनो निरमिमीत। तं हुत्वा पराङ् पर्यावर्तत" इत्यादि "असौ ह्यादित्योऽग्निहोत्रम्" इत्यन्तेनैवं प्रतीयते। आदित्योऽग्निहोत्रमिति बुद्ध्या तमग्नये जुहोमीत्येवं विदुषो होमचतुष्टयाकरणेऽपि दोषाभावात् न प्रायश्चित्तम्।

[एकाद्विहोमविच्छित्तौ सप्तहोता, अतीतहोमश्च; नवमहोमकालादर्वाक् चतुर्थहोमाद्यष्टमान्तविच्छेदे तन्तुमतीष्टिः; अत ऊर्ध्वमाधानमेवेत्यादिविषयव्यवस्थापनम्]

केचित्तु सर्वप्रायश्चित्तं कुर्वन्ति। तस्य द्विरात्रादूर्ध्वं तन्तुमती[1] स्यादिति भारद्वाजः। 'यस्यैवं विदुषः' इति कस्यचिद्विशेषणतया निर्देशात् कृत्स्नवेदार्थविदुषोऽधिकारसम्भव इति ज्ञापितम्। भाष्यकारेणापि लभ्यत इति निर्देशादेवमविदुषो द्व्यहादि[2]विच्छेदे तन्तुमतीष्टिः, ततोऽनन्तरातीतहोमः कर्तव्यः[3]। गौणकालसम्भवे अविदुष एकाद्विहोमविच्छेदे सप्तहोता, अनन्तरातीतहोमश्च। चतुर्थहोमप्रभृत्यष्टमान्तहोमविच्छेदे तन्तुमतीष्टिर्नवमहोमकालात्प्राक्; अत ऊर्ध्वमाधानमेव। यद्यपि तद्विच्छिद्येत द्व्यहं इत्येतावत्युक्तेऽपि त्र्यहादिविच्छेदेऽ-

---

[1] तीति. [2] च्छेदे न तन्तु–**ख. ग. घ.** [3] व्यः तस्य गौ–**क.**

पीष्टिः प्राप्नोति, तथापि चतूरात्रादूर्ध्वमिष्टिनिवृत्त्यर्थं चतुरह इति वक्तव्यम् ॥

एवं च द्व्यहचतुरहग्रहणं नियमार्थं कर्तव्यं द्व्यहात्पूर्वं चतुरहादूर्ध्वं चेष्टिर्न भवतीति । तथाच द्वयोरुपादानेन द्व्यहचतुरहविच्छेद एवेष्टिः ; त्र्यहे तु सामान्यविहितसप्तहोतैवेति शङ्कायां त्र्यहग्रहणम् ॥

अत्र द्व्यहे त्र्यहे इत्यधिकरणनिर्देशात् अत्यन्तसंयोगे द्वितीयाभावात् तदहन्येकैकविच्छेदेऽपीष्टिः । अतस्त्रिषु सप्तास्वपि विच्छिन्नेष्विष्टिरेव ॥

[चतूरात्रमननुष्ठिते होमेऽग्निनाशादाधानमेव,
तत्र हेतुश्च ]

परत-र्थत्वात्—चतूरात्रमहूयमानोऽग्निर्लौकिकः संपद्यते इति श्रुतिः । तथाऽस्माकमपि ;—'यन्न जुहुयात् अग्निः पराभवेत्' इति श्रुतेः होमाकरणेनाग्निनाशोऽवगम्यते । सूत्रकारश्च दीक्षितस्य होमनिषेधेऽपि न त्वेव न व्रतयेदग्निहोत्रस्याविच्छेदायेति व्रतेन होमकार्यसंपत्तिं वदन् पुरुषार्थाग्निहोत्रनिषेधेऽपि होमस्य कार्यान्तरं [1] व्रतेन संपाद्यमस्तीति दर्शयति । तच्चाग्निरक्षणम् । श्रुत्यन्तरानुसारात् ॥

अत एव यजमानप्रोषितमरणादौ नित्याग्निहोत्राभावेऽपि आशरीरस्याग्निभिस्संस्पर्शनादग्निहोत्रमुक्तम्[2] । तदपि यावच्छरीरदहनमाग्निरक्षणं कर्तव्यमित्यभिप्रायेण । तस्मात् सोमाधानेऽपि सेष्टिकाधाने समाप्ते दीक्षणीयायाः प्राक्होमकाले प्राप्ते सोमपूर्वत्वात् नित्याधिकाराग्निहोत्रप्राप्त्यभावेऽपि अग्निरक्षणार्थसंकल्पेन होमः कर्तव्यः । तदारम्भार्थं च दशहोता, समाप्ते सोमे ॥

[1] व्रतेम-घ. [2] दित्यग्नि-ग. घ.

[1] अथ सायमित्यस्मिन् काले नित्याग्निहोत्रारम्भो दशहोता च ; केवलाधाने नित्याधिकाराग्निरक्षणकार्यद्वयसाधनहोमस्यैकत्वात्तन्त्रेणारम्भो दशहोता च ; उभयकार्यार्थं तन्त्रेणाहरहरनुष्ठानम् । अतो नवमप्रभृति होमातिपत्ता[2]वग्निधारणेऽप्यदृष्टनाशादाधानमेव । [3]तत्र चतूरात्रमहूयमान इति 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीयाश्रवणादष्टानां होमानां विच्छेदे आधानम् ॥

[चतुरहादूर्ध्वं होमाभावेऽग्निनाश इत्याकारकमतनिरासपूर्वकं इष्टिकालादिव्यवस्थापनम् ]

(रु) चतुर्षु होमेष्वतिपन्नेषु तन्तुमती कार्या । षट्सु वाऽष्टासु वा । प्राक् एतेभ्योऽवधिभ्यो विच्छेदे वैशेषिकप्रायश्चित्तावचनात्सामान्योक्तस्सप्तहोता भवति, सप्तहोत्रा यज्ञविभ्रष्टं याजयेत् । न चाग्निहोत्रस्यायज्ञत्वादयज्ञविभ्रेषत्वमस्य शङ्कनीयम् , 'तस्मादग्निहोत्रस्य यज्ञक्रतोः, इति तस्यापि यज्ञसंस्तवात् । बोधायनेनास्यैवाहृत्य यज्ञविभ्रेषत्ववचनाच्च ; यथा प्रोषितमधिकृत्योक्तं अथ यद्यस्मै यज्ञविभ्रेषमाचक्षते न तेऽहौषुरितीति । तथोपग्रन्थकारेणापि 'को नु खलु विभ्रेषः' इति प्रकृत्योक्तम् । यस्याग्निहोत्रस्याहुती अन्योऽन्यस्य स्थानमापद्येते इति । तस्याद्युक्तमेतत्सप्तहोता भवतीति । यज्ञविभ्रष्टेष्टेस्तु विषयव्यवस्था प्रागेव दर्शिता । कात्यायनस्तत्राह—अग्निहोत्रातिपत्तौ आहुतिं जुहुयान्मनो ज्योतिर्जुषतामिति । आश्वलायनश्च मनस्वत्या चतुर्गृहीतं प्रकृत्याह—अग्निहोमे च प्रतिहोममेक इति । बोधायनेनासमारूढविषये प्रतिहोम एवोक्तः, यथा दीप्यमानेष्वेवाहूयमानेषु यावन्त्यतिक्रान्तान्यग्निहोत्राणि स्युस्तानि प्रतिसंख्याय जुहुयादिति । विदुषस्तु ब्राह्मणोक्तमप्यनुसन्धेयम् । "तस्माद्यस्यैवं विदुषः ।

---

[1] अथ यागाहित्यस्मिन्नित्यग्निहोत्रारम्भो—ग. [2] वग्निरक्षणे—घ. [3] नात्रचत—क.

उतैकाहमुत द्व्यहं न जुह्वति । हुतमेवास्य भवति" इति । अत्र चतुरहादूर्ध्वमनेकविच्छेदेऽप्ययमेव विधिः, अतोऽन्यस्यावचनात्, अर्वाक्चतुरहादिष्टिनिवृत्त्यर्थत्वाच्चाधिकवचनस्य । भारद्वाजस्त्वत्र समारूढाग्नेश्चिरकालं होमादिविच्छेदे विशेषमाह—होमेष्वहूयमानेषु चात्मन्यरण्योर्वा ध्रियमाणानां कथं तत्र न लुप्यते । द्वौ मासावहुतेऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाऽग्नये पथिकृतेऽग्नये वैश्वानरायाग्नये व्रतपतयेऽग्नये व्रतभृत इत्येषा महापाथिकृतीष्टिः । पवित्रेष्ट्या यजेताग्निहोत्रदर्शपूर्णमासाविति सर्वमाप्नोतीति । तथा षण्मासानहुतेऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वा वेति प्रकृत्य पूर्ववदेव पवित्रेष्ट्यन्तमुक्त्वाऽतिपवित्रेष्ट्या यजेतेत्युक्तवान् । अतो यदत्र कैश्चिच्चतुरहादूर्ध्वं होमविच्छेदेऽग्निर्नश्यतीत्युक्तं तददतिसाहसं पश्यामः ॥

[प्रधानस्य याज्यापुरोनुवाक्ये]

**(सू) "स्वयं कृण्वानस्सुगमप्रयावं तिग्मशृङ्गो वृषभश्शोशुचानः । प्रत्नग्ँ सधस्थमनु पश्यमान आतन्तुमग्निर्दिव्यं ततान । त्वन्नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः । त्वयाग्ने पृष्ठं वयमारुहेमाथा देवैस्सधमादं मदेम" इति याज्यापुरोनुवाक्ये ॥ ९ ॥ २ ॥ ४० ॥ २३३० ॥**

(भा) स्वयं कृण्वानस्सुगं त्वन्नस्तन्तुरिति प्रधानस्य ॥

(वृ) **प्रधानस्य**—याज्यानुवाक्ये ॥

[उपहोमास्स्विष्टकृतोर्मन्त्रकथनं सूत्रद्वयेन]

**(सू) "तन्तुं तन्वन्, उद्बुध्यस्वाग्ने, उदुत्तमम्, उद्वयं तमसस्परि, उदुत्यं चित्रम्" इत्युपहोमाः ॥ ९ ॥ २ ॥ ४१ ॥ २३३१ ॥**

(भा) [1] तन्तुं तन्वन् उद्बुध्यस्वाग्ने [2] इत्यादिकान् षडुपहोमान् हुत्वा नारिष्ठान् ॥

(वृ) तन्तुं तन्वन्–ग्ने—अग्निरिति पुनः कृण्वगँस्त्वा पितरमिति यस्यां षडुपहोमान् हुत्वा नारिष्ठादि, अनन्तरं वा प्रधानादिति ॥

(सू) हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम्। ज्योतिष्मन्तं दीद्यतं पुरन्धिम्, अग्निँ स्विष्टकृतमाहुवेम। स्विष्टमग्ने अभि तत्पृणाहि विश्वा देव पृतना अभिष्य। उरुं नः पन्थां प्रदिशन् विभाहि ज्योतिष्मद्धेह्यजरं न आयुः ॥ ९ ॥ २ ॥ ४२॥ २३३२ ॥

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने अष्टमी खण्डिका

---

(भा) हव्यवाहं स्विष्टमिति स्विष्टकृतः। यद्यग्निर्म्रियेते [3] एतत्प्रायश्चित्तमस्य। अन्यथा पुनराधेयमग्न्याधेयं वा ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये नवमप्रश्ने
द्वितीयः पटलः

---

(वृ) यद्यग्नि–मस्य—इष्टिसप्तहोत्रात्मकम्।
अन्यथा —अनुगते तु होमविच्छेदः।

---

[1] तन्तुमित्यादि.......नारिष्ठान्। इत्यस्य स्थाने। षडेते नारिष्ठान् हुत्वेति ङ पुस्तके दृश्यते. [2] ग्ने उदुत्तमामित्युपहोमाः षडेते नारिष्टान् हुत्वा–च. [3] ते तत एतत् प्रायश्चित्तम्–ङ. घ. अनुगते भूयोनुगमनप्रायश्चित्तम्। पुनरा–ङ. ते तत अनुगते तूभय–च.

पुनः-यं वा—उभयानुगतिर्नैमित्तिकं कृत्वा होममात्रविच्छेदे नैमित्तिकं सप्तहोतैव। नेष्टिः॥

इति कौशिकरामाग्निचिद्विरचितायां धूर्तस्वामिभाष्यवृत्तौ
नवमप्रश्ने द्वितीयः पटलः

---

(रु) आगन्तुकत्वात्ते नारिष्टेभ्य ऊर्ध्वं भवन्ति॥

(रु) गतः॥

इति श्री भट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
नवमप्रश्ने द्वितीये पटले अष्टमी खण्डिका
इति द्वितीयः पटलः

---

[आहवनीये विद्यमाने गार्हपत्याग्निनाशे पूर्वसिद्धाहवनीयविनाशपूर्वकं गार्हपत्यो मथितव्यः, तत्र मन्त्रः, ततोऽभिमन्त्रणेन्धनबलवत्प्रणयनादिपूर्वकमारब्धं कर्म समाप्य ततः तपस्वदिष्ट्यादेः प्रणयनादिकम्]

(सू.) यस्याहवनीयेऽनुद्वाते गार्हपत्य उद्वायेदाहवनीयमुद्वाप्य गार्हपत्यं मन्थेत्। "इतः प्रथमं जज्ञे अग्निः" इत्येतया "अग्ने सम्राडिषे रय्यै रमस्व सहसे द्युम्नायोर्जे पत्याय" इत्यभिमन्त्र्य, "सम्राडसि विराडसि सारस्वतौ त्वोत्सौ समिन्धातामन्नादं त्वान्नपत्याय" इत्युपसमिध्य "अन्वग्निरुषसामग्रमख्यत्" इत्यन्यं प्रणीय, अग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं निर्वपेत्॥
॥९।३॥१॥२३३३॥

(भा) यस्य यजमानस्य आहवनीये ध्रियमाणे गार्हपत्योऽनुगच्छेत् आहवनीयस्य विद्यमानस्यानुगमनं कृत्वा गार्हपत्यस्य मन्थनं कर्तव्यमितः प्रथममित्येकया। अग्ने सम्राडित्यभिमन्त्र[1]णं सम्राडसीतीन्धनं [2]बलवत्प्रणयनं चान्वग्निरिति। ततः प्रवृत्तं कर्म समाप्यते। [3]ततस्तपस्वतः प्रणयनादि। दर्विहोममध्ये इष्टेरसंभ[4]वात् तन्त्रभेदाच्च इष्टिमध्ये नेदं प्रायश्चित्तम्। अन्वाधानप्रायश्चित्तं तत्रापवादः। इष्टावपि यदान्वाहितस्तदा "यस्याहवनीयेऽनुद्वाते" इत्येव। नैतदजस्रेषु तत्राहवनीयो गार्हपत्यं न गच्छतीत्युपदेशः "यस्याहवनीयोऽनुद्वाते" इत्याविशेषवचनात् सर्वत्रेति न्यायः। अग्नये तपस्वते जनद्वते पावकवते अग्ने तपस्विन् जनद्वन् पावकवन् अग्निं तपस्वन्तं जनद्वन्तं पावकवन्तं अग्नेस्तपस्वतो जनद्वतः पावकवतः अग्निस्तपस्वान् जनद्वान् पावकवा[5]न्॥

(वृ) **दर्वित–भेदाच्च**—प्रसङ्गानुपपत्तेः।

**अन्वाधान–वाद इति**— पूर्वमेवोक्तम्।

**नैतद्–देशः**—पृथक्कार्यत्वादाहवनीयस्योद्वापनेऽपि गार्हपत्यं न गच्छतीति प्रणयना[6]भावान्नैतत्प्रायश्चित्तमजस्रेषु।

**यस्याह–न्यायः**—अविशेषणोद्वापनवचनात् [7]अजस्रेष्वप्याहवनीयोऽप्यनुगतोऽपि गार्हपत्यं प्राप्नोतीति न्यायः। गतश्रियो नित्यधार्येषु नैतत्प्रायश्चित्तम्; [8]न योनिं गच्छति नित्यधार्यो यावज्जीवमिति।

[1] णं बलवतः—प्र. ग. [2] बलवतः—प्रण. क. [3] ततस्तस्वपतः इष्टिप्र—ग. घ. च. [4] वाच्चेष्टिमध्ये—ग. [5] वानिदं—क. ख. ग. [6] ना सम्भवा—ग. घ. [7] अजस्रोऽप्य—क. [8] इदं क. ग. पु. नास्ति.

[ गार्हपत्यनाशोऽग्नयांशाः ]

(रु) यत्राजस्रे कर्मार्थं प्रणीते वाग्नौ म्रियमाणे गार्हपत्य उद्वायेत् तत्राहवनीयं दक्षिणाग्निं च गार्हपत्ययोनिमुद्वाप्य यथोक्तेन प्रकारेणाग्निमुत्पाद्य-तपस्वतीष्टिर्वक्ष्यमाणा आहुतयो वा । ततः कर्मसमाप्तिः । सावित्र-सारस्वत चतुर्होत्रादयो दर्विहोमा उदाहरणं । अग्निहोत्रे च प्राग्घोम-कालात् इष्टिः पशवोऽपि प्रागन्वाधानात् । परतस्त्वाधानाद्धोमकाले च तत्प्रायश्चित्ताभ्यां वैशेषिकाभ्यामपोद्यत एव विधिः । अपवदति च स्वविषये गार्हपत्य इत्यादिविधिम् । तं प्रति विशेषविषयत्वात् ॥ तेनाकर्मकालेऽव्ययमेव विधिजस्राग्नेः ॥ अथवा विकल्प एव तयोर्विध्योर्न सामान्यविशेषभावश्शाखाभेदात् । यथोक्तं सत्याषाढेन—यस्याग्निरनु-गच्छेदित्येकेषां न कालमवधारयेदिति । तेभ्य एवावक्षाणेभ्योऽधि-मन्थितव्य इति भारद्वाजश्चाह अथैकेषां अन्यतरोऽग्निरनुगच्छेत्तेभ्य एव दारुभ्योऽधिमन्थितव्य इत्यादि । अत्र आश्वलायनवाजसनेयककात्यायन-बोधायनैश्चाहावनीयं म्रियमाणमाहृत्य गार्हपत्यायतने निधाय ततः पुनः प्रणयनमुक्तम् । तत्र बह्वृचे चाहवनीयमधिकृत्याम्नायते सर्वमेवैनं सह भस्मना समोप्य गार्हपत्यातने निधाय अथ प्राञ्चमाहवनीयमुद्धरे-दिति ॥ वाजसनेयके एवमेवाल्पान्तरः पाठः । तथाऽऽश्वलायनकादावपि । बोधायनीये तु सकृदाहवनीयं भाण्डे समोप्य दक्षिणेन विहारं हृत्वाऽऽय-तनद्वयादपि वोद्वास्य शकृत्पिण्डेनोपलिप्य न्युप्योपसमाधाय प्रणयन-मिति विशेषः। प्रायश्चित्तेऽपि विशेष उक्तः षट्स्रुवाहुतीर्जुयादुद्बुध्यस्वाग्ने त्वमग्ने सप्रथा असि मनोज्योतिर्जुषतां तन्तुं तन्वन्नुदुत्यं चित्रमिति ॥

[गार्हपत्यानुगमनेऽनुगतेष्टिरित्येकः कल्पः, अग्निमात्रानु-गमने सेष्टिरित्यन्यः, तदुभयं विधत्ते]

(सू.) सर्वत्रानुगतेष्टिमेतामेके समामनन्ति ॥ ९ ॥

॥ ३ ॥ २ ॥ २३३४ ॥

(भा) सर्वत्र गार्हपत्यानुगमने यत्राप्यन्यदुपादिष्टमनुगतप्रायश्चित्तम् । यथान्वा[1] हिते, तत्राप्यनुगतेष्टिस्तपस्वते एतेषां मतेन समुच्चीयते न विकल्प्यते ॥

अन्ये त्वाहुः—सर्वाग्निष्वनुगतेषु तपस्वत इष्टिरिति ।

(वृ) यत्रा–त्तम्—अन्य न्मिन्ननुक्ते [2]ऐषेवष्टिः । [3]अन्यस्य शाखान्तरोक्तत्वेऽपि सर्वत्रेतिवचनान्न विकल्पः ॥

अन्येत्वाहुः—सर्वत्रेत्यग्निमात्रानुगमने विशेषाभावात् ॥

(रु) सर्वत्र सर्वानुगतिनिमित्तां तपस्वतीमेके समामनन्ति । तदीयं सर्वत्र तेनानुगतिप्रायश्चित्तेन विकल्प्यत इत्यर्थः । अथवा यत्र यत्राग्नीनां स्वनुगते निमित्ते इष्टिरन्यान्याभिहिता तत्र सर्वत्रैतामेके समामनन्ति । अतस्तया विकल्प्यत इत्यर्थः ॥

(सू) आयाहि तपसा जनेष्वग्ने पावको अर्चिषा ।
उपेतु सुष्टुतिं मम । आ नो याहि तपसा जनेष्वग्ने
पावक दीद्यत् । हव्या देवेषु नो दधदिति याज्या-
नुवाक्ये ॥ ९ ॥ ३ ॥ ३ ॥ २३३५ ॥

[आहवनीयानुगमने ज्योतिष्मत एवेष्टिः, 'न तपस्वते' इत्यनेन समुच्चयनिषेधश्च ]

(सू) आहवनीयेऽनुगतेऽग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपति ॥ ९ ॥ ३ ॥ ४ ॥ २३३६ ॥

(सू) न तपस्वते ॥ ९ ॥ ३ ॥ ५ ॥ २३३७ ॥

[1] हितस्तत्रा. [2] एकैवेष्टिः–घ. [3] अस्य–च. ग. घ.

(भा) आहवनीयेऽनुगते ज्योतिष्मत एव यदि गार्हपत्य आहवनीयो वाऽनुगच्छेत् । अग्नये तपस्वते जनद्वत[1] इति प्राप्ता समुच्चीयते। न तपस्वत इति प्रतिषिध्यते विकल्पत एव ।

अन्ये त्वाहुः---सर्वाग्निष्विति प्राप्तायां प्रतिषिध्यते इति । अग्नये ज्योतिष्मते अग्ने ज्योतिष्मान् अग्निं ज्योतिष्मन्तं अग्निर्ज्योतिष्मतः अग्निर्ज्योतिष्मानिदं उदग्ने शुचयस्तव विज्योतिषेति याज्यानुवाक्ये ॥

(वृ) **न तपस्वतः विकल्पत एव**---न तपस्वत इति समुच्चयनिषेध इति ॥

**सर्वाग्नि-ध्यते**---शाखान्तरीयप[2]क्षे प्राप्तायाः प्रतिषेधः, नावक्षाणादिमन्थनविषये प्राप्ताया इति ।

**अग्नये-वाक्ये**---सर्वत्रानन्वाहितगार्हपत्यानुगमने आहवनीये विद्यमाने यस्याहवनीयेऽनुद्वाते इत्येतद्भवति । उभयोरनुगमने गार्हपत्यस्यावक्षाणादिमन्थनं कृत्वा तूष्णीमाहवनीयं प्रणीय प्रवृत्तं कर्म समाप्य पुनर्विहृत्यानुगतेष्टिः ॥

(रु) तत्रतत्राहवनीयानुगतौ यथाविहितमग्निमुत्पाद्य ज्योतिष्मतीं निर्वपति । यथा यदि सायमहुतेऽग्निहोत्रे; यदि प्राग्घोमकालादित्यादौ तु प्रायश्चित्तविशेषश्चोदितः । तत्र स एवेष्यते यथान्वाहिताग्निना तेनाप्येषा विकल्प्यत इत्यन्ये । ननु पूर्वसूत्रेण तपस्वत्यपि तत्रैव प्राप्ता । तत्किमनयोरेकस्मिन्दोषे श्रूयमाणत्वात्समुच्चयः । नेत्याह ॥

**[तपस्वती ज्योतिष्मतीष्ट्योर्विषयव्यवस्थापनम्]**

(रु) यदा ज्योतिष्मते निर्वपति तदा न तपस्वते । विकल्प एव त्वनयोश्शाखाभेदादिति भावः ॥ अथ वा सर्वत्रानुगतेष्टिरित्यनेन

---

[1] इति समानमिति प्राप्ता समुच्चये न तपस्वतः---**ग.** तपस्वते समुच्चयन न तप---**च.** [2] पक्षप्रा---**ग.**

सहैतत्सामान्यविशेषभावेन योजनीयम् । सर्वाग्निषु तपस्वती, ज्योतिष्मती त्वाहवनीये न तपस्वत इति बाध एव तत्र तपस्वत्या इत्यर्थः । मन्थनविषये तु यदि गार्हपत्य आहवनीयो वेति विधिना तपस्वती तु सर्वत्र न ज्योतिष्मती विशेषविहितत्वात् । अन्यथाऽऽहवनीये तस्यानवकाशत्वप्रसङ्गाच्च । तत्रापि तु द्वयोर्विकल्प इत्यपरम् ॥

[ सायमग्निहोत्रहोमाभावसमानाधिकरणाऽऽहवनीयानुगमनोन्नेया विशेषांशाः]

(सू) यदि सायमहुतेऽग्निहोत्रे पूर्वोऽग्निरनुगच्छेदधिश्रित्याग्निहोत्रमुन्नीय वाऽग्निना च सहाग्निहोत्रेण चानुद्रवेत् । यो ब्राह्मणो बहुवित्स उद्धरेत् । यत्पुरा धनमदायी स्यात्तद्दद्यात् । अच्युतेनैनं च्यावयतीति विज्ञायते ॥ ९ ॥ ३ ॥ ६ ॥ ॥ २३३८ ॥

(भा) सायमहुतेऽग्निहोत्रे पूर्वोऽग्निराहवनीयोऽनुगच्छेत् अधिश्रित्याग्निहोत्रं उन्नीय वेत्यवधि[1]ग्रहणात् कृतसंस्कारस्य नयनम्, इतरथा अकृतसंस्कारं नीयेत । [2]तद्द्वयोरग्न्योः पूर्ववत् समिन्धनं याजमानं च । यानि पाक्यानि तानि दुग्ध्वा अधिश्रित्य उन्नीय च पूर्ववन्नयति । यानि तु अपाक्यानि तैरपि लभ्यते होमः । अधिश्रित्योन्नीय वेति संस्कारप्रदर्शनार्थमुच्यते । अग्निना च सहाग्निहोत्रेण चेति । यद्येतावदुच्येत [3]असंस्कृतमग्निहोत्रं नीयते । बहुविद्याख्यातः । यत्पु[4]रा धनमदायी अदेयमिति यदनेन संकल्पितम् । तत् उद्धरेत्युक्ता ददाति । पूर्ववत् द्वयोरग्न्योरध्वर्युः कर्म करोति यजमानश्च । इह त्वकृतो हो[5]मः,

---

[1] त्ववधिद्वय-ङ. [2] द्वयोरग्नोः-च. घ. [3] संस्कृत-च. [4] रापूर्वधन-ङ.
[5] होमाः-ङ.

विशेषविधानात्। सायमहुत एवैतत्प्रायश्चित्तम्, न प्रातः; अग्निहोत्रहोमार्थ एव प्रणीयते न दर्शपूर्णमासार्थे, [1]नाजस्रेषु च अहुतेऽग्निहोत्रे' इति वचनाद्यावन्न हूयते पूर्वाहुतिः तावदेतत्प्रायश्चित्तमित्येके। विशेष[2]विधानात् होम[3]कालात्प्रागेवेति युक्तम्। अच्युतेन–अदेयेन–अप्रत्तेन धनेन। आहवनीयं गार्हपत्यात्प्रच्यावयति। आयतने [4]सादिते समिन्धनपरिस्तरणाद्यध्वर्युः करोति। [5]स्रुवमन्यस्मै प्रय[6]च्छेत्। प्रकृतिवत्स[7]र्वम्। ततोऽपरेणाहवनीयं यजमानः। ततः परिषेकः, आहवनीयस्य धारा च। तत उपसाद्याग्निहोत्रं प्रकृतिवत् सर्वं 'यस्याहवनीयेऽनुद्राते गार्हपत्य उद्रायेत' इत्य[8]विशेषविहितस्य।

(वृ) उन्नीय-नयनम्—[9]वाक्यानामधिश्रित उन्नीते वा बहुविदुद्धरणं तण्डुलादीनामुन्नीत[10]मुद्धरणं। कृतसंस्कारस्येति—उन्नयनान्तसंस्कारे कृते द्रव्यस्य नयनम्। अधिश्रित्येऽत्यस्मिन् पक्षे स्थाल्या अग्निहोत्रद्रव्यमाहवनीयस्य पश्चादनुद्धृत्य [11]दर्भसमीपं नीत्वा अग्नौ स्थापिते पश्चादुन्नयति।

इतरथा-येत—अधिश्रित्य उन्नीयते वा इत्यु[12]क्तहोमद्रव्यमकृतसंस्कारं नीयते।

नग्नो-नम्—गार्हपत्यदक्षिणाग्न्योः पूर्ववत् समिन्धनम्–दर्भेण हिरण्यमित्यत्रोक्तप्रकारेण।

---

[1] नाप्यजस्रेषु–ख. ग. घ. च. [2] विशेषवचनात्–च. [3] कालेऽपवाद इति–च. [4] सादिते बहुविदा स्रु–च. ग. घ. [5] स्रु–च. क. ग. घ. च. [6] च्छेदध्वर्युरायवनीयसमीपसमीन्धनार्थं–ग. घ. [7] र्वम्। समिन्धनशुद्धन परिस्तरणाध्वर्युः करोति। दक्षिणाग्नेरन्यग्योर्गार्हे बहुविदुद्धरणात्पूर्वमपराग्न्योः संस्कारः इतरथा गार्हपत्यस्ये ततो–ग. घ. [8] शेषेण–ग. घ. [9] पवाख्यान–ख. ग. घ. पाख्यानमिति. [10] त उद्ध–क. घ. [11] द्रव्यसमीप–ग. घ. [12] त्यानुक्ते होम–ग. त्यनुक्त होम–घ.

**यजमानं – नयति** — अन्वङ्ङग्निहोत्रेणेति पूर्वं संक्षिप्तस्य विवरणम् ।

**यानि–मः**—यस्मात् ।

**अधि–च्यते**—उन्नीयेत्यपाक्य[1]द्रव्यत्वात् ।

**यत्पुरा–लिप्तम्**—स्नेहात् ।

**तदु–ति**—बहुविदे ।

**पूर्व–रोति**—अनुद्धृतप्रयोगवत् ।

**यजमानश्च**—पूर्ववत् ।

**इह तु–विधानात्**—कृतसंस्कारनयनदक्षिणादानादिविशेषविधानात् । अत्र होमे 'आतमितोरप्राणन्नासित्वा' इत्यादि [2]विकारो न भवति किन्त्वत्रोक्तप्रयोगविशेषव्यतिरिक्तमविकृतमेव भवति ।

**साय–तः**—अत्राधिकरणन्यायेन निमित्तविशेषणानामविवक्षितत्वात् अहुतेऽनुगच्छेदित्येतावन्मात्र[3]विवक्षायामुच्यते सायमहुत एवैतदिति । कालावस्था[4]भेदेन अनेकनैमित्तिकोपदेशाद्विशेषणानां व्या[5]वृत्तिसंभवाच्च सूत्रकारोपदिष्टविशेषणानां विवक्षितत्वमेव युक्तम् । अतोऽग्निहोत्रविशेषणात् ।

**अग्निहो–त्रेषु च**—दर्शपूर्णमासार्थेऽग्निहोत्रे हूयमानेऽपि अन्वाहितप्रायश्चित्तस्यापवादत्वान्नैतद्भवति । अजस्रेषु नित्यधार्यत्वात् गार्हपत्यप्रणयनसंभवात् । अत्र च यस्याहवनीयेऽनुद्वात इतिवदनुगमय्य प्रणयनोप[6]देशाभावात् ।

**विशेष–युक्तम्**—यदि होमकाल इति विशेषविधानात् । होमकालेऽपवाद इति ।

---

[1] द्रव्यार्थत्वात्–ग. घ. [2] विकारश्च न–घ. [3] विवक्षाशंकया–घ.
[4] स्थादिभे–ग. घ. [5] वृत्यसं–ग. घ. [6] देशान्–ख. ग. घ.

अच्युतेन–अदेयेन—अप्रत्तेन पूर्वं, इदानीं प्रत्तेन। अग्नेः पृथक्करणार्थत्वात् होमकाले दक्षिणादानमवश्यंभावीति ज्ञा[1]पयितुं श्रुतिनि[2]र्देशः।

आयत–च्छेत्—अध्वर्युराहवनीयसमिन्धानाद्यर्थम्।

प्रकृतिवत्सर्वम्—आहवनीयस्य समिन्धनादि।

ततो–मानः—अतिक्रामति।

तत–र्वम्—अविकृतम्।

[सायम्प्रातरग्निहोत्राननुष्ठाने कर्तव्यप्रायश्चित्तम्]

(रु) यत्राहुतेऽग्निहोत्रे इति वचनादापूर्वाहुतेरयं विधिरास्थेयः। तत्राप्यधिश्रित्याग्निहोत्रमुन्नीय वेत्युद्धरणकालनियमात् सहाग्निहोत्रेणोद्द्रवणवचनाच्च ततः पूर्वकाल एवास्य सङ्कोचस्सामर्थ्यात्। बहुविद्याख्यातः तदयमर्थः। विहरणकालप्रभृत्याधिश्रयणादोन्नयनाद्वाहवनीयानुगतौ पूर्ववदाहवनयीकर्मवर्जमधिश्रयणान्त उन्नयनान्ते वा कर्मणि कृते बहुविद्ब्राह्मणस्तूष्णीमग्निमुद्धरेत्। ततोऽध्वर्युः कृतान्तादारभ्योद्द्रवणात्कृत्वा सहाग्निहोत्रेण बहुविदमग्निं नयन्तमनून्नयेत्। ततो बहुविदाप्रतिष्ठापितेऽग्नौ तस्मै यजमानस्तद्धनं दद्यात् यस्मै स्पृहयालुरात्मार्थं निहितवान्नेदमन्यस्मै दास्यामीति। नैवाच्युतेन धनेनैनमाहवनीयं गार्हपत्याच्च्यावितवान्भवति एनं बहुविदं वा। ततोऽग्निहोत्रमन्यस्मै दत्वा अन्यत्र वा निधायानुगतेष्टिर्मित्राद्याहुतयो वा। तत आहवनियकर्माण्यकृतानि कृत्वा कृतान्तादारभ्याग्निहोत्रसमाप्तिः। समानोऽय विधिरजस्रे; विशेषावचनात्। न चाहुतेऽग्निहोत्र इति वचनादग्निहोत्रमात्रार्थाग्निविषयोऽयं इति वाच्यम्। यदि प्रातरहुतेऽग्निहोत्रेऽपरोऽग्निरनुगच्छेदित्यादेः व्यभिचारात्। "यस्याग्निरुद्धृतोऽहुतेग्निहोत्र उद्वायेत्"-इत्यत्र श्रुतौ वचनाच्च॥

---

[1] ज्ञनार्थ–ग. घ. [2] देशः–ख. ग. घ.

[प्रातरग्निहोत्रहोमाभावसमानाधिकरणकालेऽनुष्ठेयांशाः]

(सू) **यदि प्रातरहुतेऽग्निहोत्रेऽपरोऽग्निरनुगच्छेत् अनुगमयित्वा पूर्वं पूर्ववन्मथित्वा परं पूर्ववदुद्धृत्य जुहुयात् ॥ ९ ॥ ३ ॥ ७ ॥ २२३९ ॥**

(भा) यदि प्रातरहुतेऽग्निहोत्रेऽपरोऽग्निरनुच्छेत् गार्हपत्य इति कालविशेषे विधिचतुष्टयमपवादः । अनुगमयित्वा पूर्वं पूर्ववन्मथित्वा परं पूर्ववदुद्धृत्य जुहुयादिति पुनः पाठो विध्यन्तरविकल्पार्थः । परिसंख्यार्थमिति केचित् । अभिमन्त्रणोपसमिन्धनेऽननुक्रमाणान्न क्रियेते । विकल्पविवक्षया च पुनः पाठः । अतस्सर्वं क्रियते । उद्धृत्य पूर्ववदग्निहोत्रहोमः । ततस्तपस्वत इष्टिः ।

(वृ) पुनः पाठो–र्थः — ' यस्याहवनीयेऽनुद्वाते ' इत्युक्तस्य विकल्पार्थः—वक्ष्यमाणविध्यन्तरस्य ।

अभिम–न्धने—" अग्ने सम्राट्सम्राडसीत्येते " ।

अननु–क्रियेते—यस्याहवनीयेऽनुद्वात इति पक्षस्य यदि त्वरेतेत्यादिभिरनुवादितत्वात् , तत्प्रतिप्रसवार्थत्वात् तत्पक्षानुक्रमणस्य, परिसंख्यायाश्च दुष्टत्वात् , विकल्पार्थत्वमेव युक्तम् ।

उद्धृत्य–होमः—पूर्ववदुद्धृत्य जुहुयादित्यग्निहोत्रहोमानुवादो न सर्वप्रायश्चित्तविषयः ; तस्य सामान्यतः सिद्धत्वात् ॥

(रु) प्रातर्विहरणकालप्रभृत्यापूर्वाहुतेर्गार्हपत्यानुगतौ आहवनीयोद्वापनादितपस्वत्यन्तं कर्म यस्याहवनीयेऽनुद्वाते इत्यादिविधिना समानम् । तत्कृत्वा ततोऽग्निहोत्रं जुहुयादित्यर्थः । पुनरुपन्यासस्तूत्तरविधिविकल्पार्थः ॥

[तत्रैव स्वपक्षः]

**(सू) यदि त्वरेत पूर्वमन्ववसाय ततः प्राङुद्धृत्य जुहुयात् ॥ ९ ॥ ३ ॥ ८ ॥ २३४० ॥**

**(भा)** यदि त्वरेत अग्निहोत्रकालोऽतिपद्यत इति पूर्वमन्ववसायाहवनीयं गार्हपत्यं करोति । तत्रैवान्वाहार्यपचनं नयति । अन्ववसानं—[1] पूर्वसमीपगमनम् । दक्षिणाग्निना [2] सह समारूढो नीयत इत्युपदेशः । तत आहवनीयात्प्राञ्चमुद्धृत्यान्यमाहवनीयमग्निहोत्रसमाप्तिः । ततो यदि गार्हपत्य आहवनीयो वाऽनुगच्छेदिति गार्हपत्योत्पत्तिरिष्टिश्च ।

**(वृ) यदि–रोति**—आहवनीयात्प्रागष्टासु प्रक्रमेषु पूर्वाहवनीयादाहवनीयं संकल्पेनोद्धृत्य स्थापयति । पूर्वाहवनीयं च गार्हपत्यस्थाने संकल्पयेत् ।

**तत्रैव-नयति**—पूर्वस्य दक्षिणतः पुरस्ताद्वितृतीयदेशे दक्षिणाग्निं प्रत्यक्षं नीत्वा स्थापयेत् ।

**अन्वव-देशः**—अयमेव स्वपक्षः; पक्षान्तरानुपन्यासात् । तथा चावक्षाणप्रायश्चित्ते प्रत्यक्षनयनमुक्तम् ॥

**(रु)** यदि त्वरेत कालातिपत्तिभयादिना तदाहवनीयमेव गार्हपत्यं परिकल्प्य तत्रैव दक्षिणाग्न्यादीनपि नीत्वा ततः प्राञ्चमाहवनीयमुद्धृत्याग्निहोत्रं जुहुयात् । ततो यदि गार्हपत्य इत्यादिविधिना गार्हपत्यस्योत्पत्तिः ॥

[गार्हपत्यद्वयकरणपूर्वकमनुष्ठेयांशव्यवस्थापनम्, तत्र मतभेदश्च]

**(सू) जामि तु तद्योऽस्य पूर्वस्तमपरं करोति । अन्यत्रैवावसाय पूर्ववन्मथित्वा परं पूर्ववदुद्धृत्य**

---

[1] पूर्ववत्समीप—**च.** [2] सह असमा—**क. ङ. ख. ग. च.**

**जुहुयात् । ततः श्वो भूतेऽग्नये तपस्वते जनद्वत इति समानम् ॥ ९ ॥ ३ ॥ ९ ॥ २३४१ ॥**

(भा) उत्तरविधिप्रशंसार्था निन्दा । जामि तु तद्विधानम् । समानजातीय[1]स्योत्पत्ति[2]र्जामि स्यात् । [3]तत्र द्वौ गार्हपत्यौ अवक्षाणस्थश्च । [4]यश्चास्य [5]पूर्वस्सोऽपरः क्रियते, तस्मादेतदसाधु । अतोऽन्यत्रैवावसाय [6]अनुद्राप्याऽऽहवनीयं अन्यं देशं गत्वा पूर्ववन्मथित्वा गार्हपत्यं इतः प्रथममित्यवक्षाणेभ्यो भस्मनाऽरणी संस्पृश्य वाऽनुद्राप्याऽऽहवनीयम्, अभिमन्त्रणेन्धने च कृत्वा पूर्ववदुद्धृत्य प्रातर्होमः । ततः श्वोभूते उदित आदित्ये तपस्वत इष्टिः । अन्ये त्वाहुः ;—द्वितीयेऽहनि[7] श्वो भूते इष्टिः । इदमपि कर्म प्रात[8]र्होमार्थ एवेति ॥

(वृ) **उत्तर-निन्दा**—न तु [9]निन्दितुम् ; तस्यापि पक्षस्य विहितत्वात्, विध्यानर्थक्यप्रसङ्गात् ।

**जामि तु-धानम्**—विधीयत इति विधानं कर्म ।

**अतोऽन्यत्र-नीयम्**—अन्यत्रैवावसायेत्यवसानमात्रविधानादाहवनीयमनुद्राप्यैव गार्हपत्यावक्षाणेन तदभावे भस्मना सह देशान्तरं गत्वा इतः प्रथममिति मन्थनादि । गार्हपत्यं मथित्वा आहवनीयोद्वासनं कर्तव्यमिति केचित् ।

**अभि-कृत्वा**—अग्ने सम्राट्सम्राडसीति कृत्वा ।

**प्रातर्होमः**—अन्वग्निरुषसामिति कृत्वा प्रातर्होमः ;—

---

[1] यविधानस्यो—च. [2] त्पत्तिर्जामि । तत्र—क. घ. [3] तत् द्वौ—ङ. [4] यश्चान्यः—क. [5] पूर्वस्थोऽपरः—क. [6] उद्धाप्या—च. [7] नि भूत—च. [8] र्होम एव—क. ख. ग. घ. [9] निन्दितपक्ष निषेधाय—ग. घ.

**ततः श्वो-इष्टिः** उदितहोमश्चेत् होमोत्तरकालम् । श्वोभूतशब्दो [1] होमोत्तरकालपर इत्याहुः ।

**द्वितीष्टिः**—होमोत्तरकालं ततश्श्वोभूते इति निर्देशात् ।

**इदमपि-एव**—अग्निहोत्रेण प्रातःकालस्या[2]वरुद्धत्वात् इष्टेः श्वोभूतेऽनुष्ठानसंभवात् ॥

(रु) जामीति पूर्वनिन्दा उत्तरविधिप्रशंसार्था । पौनःपुन्यनिमित्तमश्रद्धेयत्वमजामित्वम् । तत्तु जामि यत्पूर्वमेवाग्निमपरमपि करोतीति । तस्मादन्यत्रैव देशे सहाग्निभिर्ध्रियमाणैर्गत्वा तत्रानुगमयित्वा पूर्वमित्यादिविधिना परं मथित्वा पूर्ववदेवोद्धृत्याग्निहोत्रं जुहुयात् । ततः श्वोभूते तपस्वतीं निर्वपेत् ॥

**(सू) अथैकेषाम्;—यस्याग्निरनुगच्छेन्न कालमवधारयेत् । अनुगमयित्वा पूर्वं पूर्ववन्मथित्वा परं पूर्ववदुद्धृत्य जुहुयात् । वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं यवमयं चरुम् ॥ ९ ॥ ३ ॥ १० ॥ ॥ २३४२ ॥**

(भा) एके त्वाहुः ;—यस्याग्निरनुगच्छेद्गार्हपत्यः प्रातरहुतेऽग्निहोत्रे ध्रियमाणे आहव[3]नीये कालावधृतिः, उषस्युपोदये वा होमः कार्यः इति । [4]नास्मिन् विधौ कालापराधजं प्रायश्चित्तम् । आहवनीयानुगमनादि पूर्ववत्कृत्वा हुत्वा च प्रातर्होमं अनुगते[5]ष्टिरन्यविहरणाद्यनन्तरं अग्नये वैश्वानराय द्वादशकपालो वारुणो यवमयश्चरुः ।

---

[1] होमोत्तर—ग. घ. [2] स्यापरु—क. [3] नीयेन का—ग. च. [4] नापद्विधौ—ख. ग. घ. [5] अन्य वि—ङ.

[1]वैश्वानरो व्रीहीणां यवानां वा उक्तो नानाबीज[2]धर्मो नियमः याज्यानुवाक्याश्च ॥

(वृ) एके तु—कार्यः—नैमित्तिकेऽनुष्ठीयमाने संभावितकाले कर्तव्य एव होमः ।

नास्मिन्—श्चित्तम्—न कालमवधारयेदिति वचनात् । अतोऽन्यविधिषु कालापराधे कालापराधजं प्रायश्चित्तमपि कर्तव्यमिति ।

उक्तो—क्याश्च—उत्सर्गेष्टौ "वैश्वानरो न ऊत्या, पृष्टो दिवि, अव ते हेडः, उदुत्तमम्" इति ॥

[गार्हपत्याऽऽहवनीययोरनुगतौ मन्थनविशेषविशिष्टेष्टिविधानम्, सूत्रत्रयेण]

(सू) यदि गार्हपत्य आहवनीयो वाऽनुगच्छेत् तेभ्य एवावक्षाणेभ्योऽधिमन्थितव्यः । यदि न तादृशानीवावक्षाणानि स्युर्भस्मनारणी संस्पृशन् मन्थितव्यः 'स्वादेवैनं योनेर्जनयति' इति विज्ञायते ॥ ९ ॥ ३ ॥ ११ ॥ २३४३ ॥

(भा) यदि गार्हपत्य आहवनीयो वाऽनुगच्छेत्तेभ्य एवावक्षाणेभ्योऽधिमन्थितव्यः । गार्हप[3]त्ये विनष्टे आहवनीये वा अवक्षाणा[4]न्युल्मुकेभ्योऽ[5]धरारणिरुत्तरारणिश्च कर्तव्यौ यदि [6]त्वशक्तान्युल्मुकान्यग्न्युत्पत्तये स्वेन स्वेन भस्मना[7] संस्पर्श्य मन्थितव्यम् । "स्वादेवैनं योनेर्जनयति" इति श्रुतिः । [8]अरणी लौकिक्यावाहवनीयस्य ।

---

[1] वैश्वानरस्य—घ. [2] धर्मनियमो—घ. [3] पत्य आहवनीयेऽपि नष्टेवक्षा—क. [4] णानि स्वेभ्यः—क. णान्युल्मुखानि स्वेभ्य उल्मुकेभ्यो—ग. घ. ङ. [5] अधरोत्तराणी—ग. घ. च. [6] न समर्थान्युल्मु—ङ. त्व समर्थान्यु—ग. च. [7] नारणी सं—ग. घ. ङ. च. इवै—ग. ङ. [8] अरणी लौकिक—ख. ग. अरणी लैाकिके—च.

(धू) यदि तु श्रुतिः—सूत्रकारेण श्रुत्युपादानं भस्मस्पर्शनस्यावश्यं भावित्वार्थं भस्मस्पर्शेन विना [1]मथितेऽप्यग्न्युत्पत्तिर्नास्तीति ।

(रु) क्षामावशिष्टानि काष्ठान्यवक्षाणानीत्युच्यन्ते । तेषु मन्थनसमर्थेषु सत्सु तेभ्य एव द्वे गृहीत्वा मन्थेत् । यदि पुनर्न तादृशानि स्युस्तदा तद्भस्मसंस्पर्शं कृत्वा तयोररण्योर्मन्थेत् । एवमरणी संस्कृत्य मन्थन् स्वादेव योनेः जनयत्यग्निम् । अवक्षाणाभावे भस्मस्थत्वादग्नेस्ततस्थस्य इदानीमरण्योः संक्रमितत्वाच्च । तात्स्थ्ये च लिङ्गम्, 'अत्र वाव स निलयते' इति श्रुतिः । अत एव वचनादवक्षाणाभावे भस्मसंस्कारमन्तरेण मथितोऽप्यग्निस्स्वयोन्यनुत्पन्नत्वादसत्स इत्युक्तं भवतीति । न च गार्हपत्यारण्योराहवनीयमन्थनं, पृथगरणीष्वग्नीनिति लिङ्गात् । गार्हपत्यस्य तावदियमेवोत्पत्तिस्सर्वत्र । प्रायश्चित्तं च तपस्वत्येवासत्यपवादे यथान्वाहितादौ । यत्राऽऽहवनीयस्यापि प्रणयनानुपदेशः तत्रापीयमेवोत्पत्तिः, यथा सावित्रादिषु दर्वीहोमेष्वग्निहोत्रे च होमकाले तदिष्टिपशुष्वपि प्रागन्वाधानादित्यादिप्रायश्चित्तं च तत्रेदमेवासत्यपवादे, यथा यदि होमकाले प्राण उदानमित्यादिना । सत्याषाढस्त्वत्राह यस्य पूर्वोऽग्निरनुगच्छेदित्येषां न कालमवधारयति तेभ्य एवावक्षाणेभ्योऽधि मन्थितव्य इत्यादि । भारद्वाजश्चाह अथैकेषाम् यतो यतोऽग्निरनुगच्छेत्तेभ्य एव दारुभ्योऽधि मन्थितव्य इत्यादि ॥

(सू) एवं शकैधे तृणैधे च ॥ ९ ॥ ३ ॥ १२ ॥ ॥ २३४४ ॥

(भा) शकानि पुरीषाणि यानि मेध्यानि तानि यस्येन्धनं स शकैधः, तृणानि यस्येन्धनं स तृणैधः; तस्य भस्मनारणी[2] इति नियतम् ।

---

[1] मथितेऽग्निर्नास्तीति—क. ग. [2] णी क्रियते इति—ग. घ.

यद्यपि [1]समर्थानि तृणानि वा ; सर्वत्र गार्हपत्य[2]स्यैषोत्पत्तिः । आहवनीयस्य च यत्रास्य विहरणं सोमदिष्टम् ।

(वृ) **यद्यपि-वा**—इति [3]केषांचित्पक्षः । तृणा[4]दीनां तालमालादीनामग्न्युत्पत्तिसमर्थत्वेऽपि भस्मना संस्पृश्य मन्थनम् । अत्र शकग्रहणमनास्थया, तृणसाहचर्यात् ।

**सर्व-त्पत्तिः**—अविशेषात्सर्वत्रेति निर्देशात् सोमे शालामुखीयस्यापि ।

(रु) शकानि करीषाण्येधांसि यस्य स शकैधः । तथा तृणैध इति । शकादीन्धने चाग्नावनुगते भस्मनाऽरणी संस्पर्श्य मन्थितव्यः । तेषामपि मन्थनासामर्थ्यादिति भावः ॥

(सू) **अग्नये तपस्वते जनद्वत इति समानम् ॥९॥**
**॥३॥१३॥२३४५॥**

(भा) तपस्वत इष्टिः । आहवनीयेऽप्यनुगते[5] । समानवचनात् । विकल्पेन ज्योतिष्मते वा ; अनुगतेष्टेर्विकल्पेनाहुतयः [6]सर्वस्याः, न केवलं तपस्वत एवेष्टिः । देवतानां तासु दर्शनात् । इष्टेः स्थानत्वात् ।

(वृ) **तपस्वते—गते**—यद्यपि पूर्वं गार्हपत्यानुगतावुक्ता ।

**समा-नात्**—उभयोरनुगतिं (तं) निर्दिश्य साधारण्येन नैमित्तिकविधानात् ।

---

[1] शकानि सम.—**ग. घ. ङ.** [2] स्यैषैवोत्पत्तिः—**ङ. च.** [3] केषांचित्तृणा—**ग. घ.** [4] तृणानां नाळादीना—**क. ख. ग. घ.** [5] गतेवा—**ख.** [6] सर्वस्याः तपस्वत एवेष्टिः—**च.**

**विकल्पेन-ते**—आहवनीयेऽनुगतेऽग्नये ज्योतिष्मते इति नियमात् सर्वानुगतेष्टिदेवतानां तासामाहुतिदर्शनाच्च ।

**अनुगतेष्टिः**—यद्यपि अनन्यरोक्ता एता आहुतीः जुहुयादित्येतावता सिद्धेऽप्यनुगतेष्टेर्वा स्थानात् । किंच

**देवतानां-नात्**—सर्वानुगतेष्टिदेवतानां तासु आहुतिषु दर्शनाच्च सर्वासाम् ।

(रु) दर्शितोऽस्यापि विषयविभागः प्रागेव । तथा दर्शितावनया बाधविकल्पौ ज्योतिष्मत्याः ॥

[सर्वत्र गार्हपत्याऽऽहवनीययोरनुगतौ अजस्रादिधारणपक्षे च मन्थनप्रणयनादीनां मतभेदेन व्यवस्थापनम् । ]

(सू) **अनुगतेष्टेर्वा स्थान एता आहुतीर्जुहुयात्, मित्राय स्वाहा वरुणाय स्वाहाऽग्नये व्रतपतये स्वाहाऽग्नये तपस्वते जनद्वते पावकवते स्वाहाऽग्नये शुचये स्वाहाऽग्नये ज्योतिष्मते स्वाहा सूर्याय स्वाहेति व्याहृतीभिर्विहृताभिस्समस्ताभिश्च जुहुयात् ॥ ९ ॥ ३ ॥ १४ ॥ २३४६ ॥**

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने नवमी खण्डिका

---

(भा) समाप्ते कर्मणि विहृत्याऽग्निं द्वादश हूयन्ते । केचित्तु यस्मिन् कर्मणि अनागत[1]स्तत्रैवाहुतीः कुर्वन्तीति, विभवात् तदङ्गत्वाच्च । अकर्ममध्ये तु विहृ[2]त्यैव विहृता विभक्ता एकैवाहुतिः [3]समस्ताभिः ।

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये नवमप्रश्ने नवमी खण्डिका

---

[1] तः. [2] त्रैवाग्निं-क.ख. ग. घ. [3] समस्ता-च.

(वृ) **विहृतास्ताभिः**—अत्रैवं व्यवस्था—सर्वत्र गार्हपत्यानुगतौ अवक्षाणमन्थनम् । तदभावे भस्मना मुख्यारणिं संस्पर्श्य मन्थनम् । आहवनीयस्य तु सर्व[1]दर्वीहोमार्थं प्रणीतस्याकृते होमेऽनुगत अवक्षाणादिमन्थनम् । अजस्रादिधारणे च इष्टावपि प्रागन्वाधानादनुगतेऽग्निहोत्रस्य होमकाले प्रवत्स्यदुपस्थानार्थे च प्रागुपस्थानसमाप्तेरनुगते[2]ऽन्यत्रापि यत्र प्रणयनचोदनास्ति तत्र सर्वत्र मन्थनम् । अजस्रपक्षे दक्षिणाग्नेरपि मन्थनं प्रणयनं वा, भरद्वाजमतात् । भस्मस्पर्शविषये तल्लोपे समारोपणावरोपणमन्त्रलोपे निर्वर्तमानजपलोपे च मथितोऽग्निर्लौकिको भवतीति केचित् ।

इति धूर्तस्वामिभाष्यवृत्तौ नवमप्रश्ने नवमी खण्डिका

---

(रु) पूर्वस्या एवानुगतेष्टेरयं विकल्पः, पुनरनुगतेष्टिग्रहणात् । अन्यथा हि नवैता आहुतीरित्येवावक्ष्यत ; तथा सर्वासामेव प्रायश्चित्तेष्टीनामनुग्रहमाहाऽऽश्वलायनः, अपि वा प्रायश्चित्तेष्टीनां स्थाने तस्यै तस्यै देवतायै पूर्णाहुतिं जुहुयादिति विज्ञायत इति । बह्वृचास्तु ता एवेष्टीः प्रकृत्याधीयते ॥

इति श्री भट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
नवमप्रश्ने नवमी खण्डिका

---

**(सू) यदि प्राग्घोमकालादाहवनीयोऽनुगच्छेद्गार्हपत्यादन्यं प्रणयेत् ॥ ९ ॥ ३ ॥ १५ ॥ २३४७ ॥**

**(भा)** प्राग्घोमकालात्— पूर्वं होमकालात् । परिस्तीर्णेष्वग्निषु दुग्धे च हविषि अधिश्रिते वा होमकालः वाजसनेयमतात् । तत्रैव वा

---

[1] पर्वहो—ग. [2] ते यत्रापि वा—च.

पात्राऽऽसादनम् । अयं च होमकालः इति । अन्ये त्वाहुः—अपरेणाऽऽहवनीयं दर्भेषु सादिते होम[1]काल इति । एतस्माद्धोमकालात्पूर्वं-[2]मनुगतस्याग्नेः मन्त्रैस्तूष्णीं वा प्रणयनम् ; न ज्योतिष्मतीष्टिः । यद्यपि शतकृत्व उद्वायेदेतदेव प्रायश्चित्तमिति श्रुतिः । [3]सर्वप्रायश्चित्तमेव ।

(घृ) परिस्तीर्णेषु-काल इति--एषां कालानामन्यतमः कालस्सङ्कल्पयितव्यः कर्मादौ । प्रागघोमकालादिति होमकाले नैमित्तिकभेदाऽऽम्नानात् अनुष्ठानविशेषसिद्ध्यर्थम् ।

एत-नम्—प्रथमप्रणयने मन्त्राणां प्रयुक्तत्वात्तूष्णीमित्युच्यते ; तथा च सूत्रकारो न्यायं वक्ष्यति । "तूष्णीं वाऽग्निं चिन्वीत मन्त्रवन्तमित्यपरम्" इति ।

न ज्योति-मेव—दक्षिणाग्निं स्वयोनितः एतं प्रविशानीति प्रणयेत् । पूर्वाऽऽहुत्युत्तरकालं द्वितीयहोमात्प्रागनुगतेऽप्येतदेव । सभ्याऽऽवसथ्ययोस्तूष्णीं स्वयोनितः ।

(रु) केचिदहुत इत्यनेन सायंकाले सकलस्य बाधं मन्यन्ते । तदयुक्तं, शाखाभेदात् । एकोदाहरणाभिप्रायेण सामान्यायोगाच्च । यदि हि तथाभिप्रेष्यत प्रातर्ग्रहणमेवाकरिष्यत् । न हि माणवकायैकस्मै प्रातर्ग्रहदधनि दित्सिते तक्रे कौण्डिन्याय ; भवति वचनं ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति । तथा च महाभाष्यकारः, न ह्येकमुदाहरणं सामान्यवचनं प्रयोजयतीति तस्मादुभयकालार्थमित्येव युक्तम् । अथ को वा होम कालः ; ननूक्ता आनक्षत्रदर्शनादयः कालाः सायम्प्रातर्होमयोः सूत्रकृता,

[1] कालः अपरेण गार्हपत्यं दर्भेष्ट सादिते अन्येष—घ. [2] मनुगते अन्यस्याग्नेः—क. ख. च. [3] अयं क्वाचित्कः पाठः.

तेषु यतमस्मिन् जुहूषति ततमो भविष्यति । प्राग्घोमकालादिति कोर्थः ; यत्रेध्माहरणादि तन्त्रं प्रक्रंस्यते ततः प्रागित्यर्थः । तथा च होमकालमनुवदता कात्यायनेनोक्तम् । आसन्नेषु चोत्पात्रेष्वाहवनीयोऽनुगच्छेद्गार्हपत्ये जुहुयात्प्राण उदानमप्यगादिति । कश्च पात्रासादनकालः । तन्त्रारम्भ इति ब्रूयात् । तथा प्रणयनविध्यनन्तरमाह बोधायनः, अथैतान्यग्निहोत्रपात्राणि प्रक्षाळितान्युत्तरेण गार्हपत्यमुपसादयतीति । सत्याषाढभारद्वाजौ तु परिस्तरणानन्तरमाहतुः ; अग्निहोत्रपात्राणि प्रयुनक्तीति । तस्मात्प्रणयनप्रभृत्यातन्त्रारम्भादा वा परिस्तरणादाहवनीयस्यानुगतावन्यं प्रणीयानुगतेष्टिर्मित्राद्याहुतयो वा । समानोऽयं विधिरजस्रे अविशेषात् ।

[आहवनीयगार्हपत्यदक्षिणाग्नीनां मध्येऽन्यतमस्य होमकाले पूर्वानुगतौ च कर्तव्यविशेषांशकथनं सूत्रत्रयेण । ]

**(सू) यदि होमकाले प्राण उदानमप्यगादिति गार्हपत्ये जुहुयात् ॥ ९ ॥ ३ ॥ १६ ॥ २३४८ ॥**

**(भा)** होमकाले त्वनुगत आहवनीये प्राण उदानमप्यगादित्याज्याऽऽहुतिं गार्हपत्ये हुत्वा आहवनीयस्यावक्षाणेभ्य उत्पत्तिः । भस्मनारणी संस्पृश्य वा । ततोऽग्निहोत्र[1]समाप्तिः प्रकृतिवत् । उपदेशस्तु प्रधानाऽऽहुतय एताः पूर्वाऽऽहुतिस्थाने । [2]अपरेण तं तमग्निमुपसाद्य प्रकृतिवत्प्रा[3]णनादि कृत्वा पूर्वाऽऽहुतयः । द्वयोश्चाग्न्योः कर्मसमाप्तिः । विद्यमाने चाऽऽ[4]हवनीये दक्षिणाग्न्यनुगमने गार्हपत्य एव हो[5]मः ।

**(वृ) संस्पृश्य वा**—अस्मिन् होमे प्राणो देवता ।

---

[1] त्रहोमस—ग. ङ. [2] अपरेण तु तमग्नि—क. [3] त्प्रणयनादि—ङ. [4] हवनीय दक्षि—ङ. [5] म इति—ङ.

**उप-स्थाने**—अस्यार्थः---अग्निहोत्रहोमस्य प्रकृत[1]त्वात् पूर्वानुगतौ च स्वयमग्निहोत्रद्रव्यभक्षणस्य होमप्रत्याम्नायरूपत्वस्य वक्ष्यमाणत्वात्तत्तुल्यतया होमकाले एते होमाः प्रधानाऽऽहुतय इति ॥

**अपरेण-तयः**—प्राण उदानमित्यादयः ॥

**द्वयो-माप्तिः**—विद्यमानयोरग्न्योः कर्माणि कुर्यात् ॥

**विद्यमाने-होमः**—प्रधानहोमत्वेऽपि विशेषवचनात् एतदन्त उपदेशपक्षः ॥

**(रु)** व्याख्यातो होमकालः पूर्वसूत्रे । तत्र यद्याहवनीयोऽनुगच्छे-[2]त्प्रत इत्यादिना गार्हपत्ये प्रायश्चित्तार्थमाज्याऽऽहुतिं जुहुयात् । ततो यदि गार्हपत्य आहवनीयो वेत्यादिविधिनाऽग्निमुत्पाद्य प्रकृतिवदग्निहोत्र-समाप्तिः । तथा चात्रैतामाहुतिमुक्त्वा यथानुपूर्व्यकरणमिति कात्यायनः । नात्रानुगतेष्टिः ; प्रायश्चित्तविशेषवचनात् , नापि विकल्प्यते शाखा-भेदात् । यस्याग्निरुद्धृत इति विधिनोद्धरणमप्यस्याऽऽहवनीयस्योद्धार्यस्य लभ्यत इति द्रष्टव्यम् ॥

**(सू)** **यदि गार्हपत्य उदानः प्राणमप्यगादित्याहव-नीये ॥ ९ ॥ ३ ॥ १७ ॥ २३४९ ॥**

**(भा)** यदि गार्हपत्योऽनुगच्छति होमकाले तदा 'यस्याहवनीयेऽनुद्वाते' इति न भवति । उदानः प्राणमप्यगादित्याज्याहुतिराहवनीये ; ततो गार्हपत्योत्पत्तिः । समाप्तिश्चाग्नि[3]होत्रस्य । प्रकृतिवन्नेहानुगतेष्टिः । एतदेव कालविशेषप्रायश्चित्तम् । [4]अन्यत्र च तदेव यत्र [5]विशेषाम्नानम् ॥

---

[1] त्वात्सर्वानुगतौ—**ख. ग. घ.** [2] प्रण इत्यादिना—**क.** [3] होमस्य—**ख. ग. घ. च.** [4] अत्रैतदेव—**ख. ग. घ.** [5] विशेष आम्नातः—**ग. घ.**

(वृ) उदानः—वनीये—उदनो देवता ।

ततो—त्तिः—अवक्षाणादिना । एतदेव ;

एतदेव—त्तम्—होमकाले विशेषेणाम्नानात् ।

अयन्त्र—नम्—अन्वाहितप्रायश्चित्तं बहुविदुद्धरणादि ॥

(रु) व्याख्यातः पूर्वेण । नात्र यस्याहवनीयेऽनुद्रात इत्येष विधिरिष्यते । जीवन्तमाहवनीयं कृत्वा तत्र होमवचनात् । यस्तु अथैकेषां यस्याग्निरनुगच्छेन्न कालमवधारयेदिति विधिः सर्वत्रापि भवतु सार्वकालिकत्वात् ॥

(सू) यदि दक्षिणाग्निर्व्यान उदानमप्यगादिति गार्हपत्ये ॥ ९ ॥ ३ ॥ १८ ॥ २३५० ॥

(भा) यदि दक्षिणाग्निर्होमकालेऽनुगच्छेत् व्यान उदानमप्यगादिति गार्हपत्ये आज्याहुतिः[1] । तत उत्पाद्य स्वयोनेर्दक्षिणाग्निं तूष्णीमग्निहोत्रसमाप्तिः प्रकृतिवत् ॥

(वृ) आज्याहुतिः—व्यानो देवता ।

अग्निहोत्र—वत्—होमकाले नैमित्तिकस्य वैशेषिकत्वादेतं प्रविशानीति सामान्यविहितो मन्त्रो न भवति । [2]एतस्मिन् काले सभ्याऽऽवसथ्यानुगतौ वाऽऽहवनीये सर्वप्रायश्चित्तम् । स्वयोनित उत्पाद्यिस्तूष्णीमग्निहोत्रसमाप्तिः प्रकृतिवत् ॥

(रु) एवं हुत्वैतं प्रविशानीति यथायोन्युत्पाद्याऽऽधेयः ॥

---

[1] तिं हुत्वा तत—ग. घ.  [2] अस्मिन् काले—ग. घ.

[सर्वानुगमनोऽग्नेर्योऽशः]

(सू) यदि सर्वेऽनुगच्छेयुरग्निं मथित्वा यां दिशं वातो वायात्तां दिशमुद्धृत्य 'वायवे स्वाहा' इति जुहुयात् ॥ ९ ॥ ३ ॥ १९ ॥ २३५१ ॥

(भा) होमकाले सर्वानुगमने मथित्वा गार्हपत्यं यां दिशं [1]वातो गच्छति तां दिशमुद्धृत्याऽऽहवनीयं "वायवे स्वाहा" इत्याज्याहुतिः ; प्रकृतिवद्विहारे स्थापनं, होमसमाप्तिश्च । येषां तु पूर्वाऽऽहुतिस्तेषां तदभिमुख एव विहारः प्रधानदेशान्यङ्गानीति ॥

(वृ) यां दिशं-द्धृत्य—अष्टासु प्रक्रमेष्वित्यादिना विहारं कल्पयित्वा यां दिशं गच्छति वायुस्तां दिशं प्रत्युद्धृत्याऽऽहवनीयम् । ततः ;

प्रकृति-पनम्—तस्याग्नेः । नात्राऽऽहवनीयस्य मन्थनम् ; उद्धरणादिविधानात् ।

विहारः—न प्राकृतदेशे ।

प्रधान-नीति—भाष्यकारेण येषां तु पूर्वाऽऽहुतिरित्यादिना प्रयोगोपदेशादुपदेशपक्षोऽप्यङ्गीकृतस्सर्वत्र ॥

(रु) होमकालेऽनुगतौ सर्वेषां गार्हपत्यं मथित्वा निधायानुवातमाहवनीयमुद्धृत्य वायवे स्वाहेत्याहुतिं जुहुयात् । ततो यथास्थानं विहृत्याग्नीन् कृतान्तादारभ्य कर्मसमाप्तिः । कात्यायनस्तु वायव्यामाहुतिमपि यथास्थानमुद्धृत्य तस्मिन्नग्नावेवाह यथा—" सर्वे चेत्तूर्णं मथित्वा प्रति[2]वातमुद्धृत्य वायव्यामाहुतिं हुत्वा यथानुपूर्व्यकरणम् " इति॥

---

[1] गच्छति वायुस्तां—ङ. च. वातो वायात्—ग. घ. [2] प्राञ्चम्—क.

[युगपदुभयानुगमने प्रायश्चित्तव्यवस्था]

(सू) यद्यु वै निवाते मथित्वा विहारं साधयित्वाऽपरेणाऽऽहवनीयं यजमान उपविश्य स्वयमग्निहोत्रं पिबेत्। अग्निहोत्रप्रत्याम्नायो भवतीति विज्ञायते ॥ ९ ॥ ३ ॥ २० ॥ २३५२ ॥

(भा) होमकाले सर्वानुगमने निवाते च मथित्वा गार्हपत्यं [1]प्रकृतिवद्विहरणं [2]साधयित्वा मन्त्रव[3]द्दुग्ध्वा अग्निहोत्रद्रव्यमानीय अपरेणाऽऽहवनीयमुपविश्य यजमानः स्वयं [4]पिबेत्। भक्षयेद्वा भक्ष्यम्। स्वयं ग्रहणाशक्तोऽपि यजमानः स्वयमेव पिबति नान्यस्मै ददाति। साङ्गस्याग्निहोत्रस्य प्रत्याम्नायो भक्षणमिह, श्रुतेः ॥

(वृ) निवा–थित्वा—गार्हपत्याऽऽयतने निधाय। [5]विहरणं च प्राकृतदेशे ;—

प्रकृतिवत्—सादयति। आहवनीयं प्रणीय ;

यजु–पिबेत्—सर्वमग्निहोत्रद्र[6]व्यम्।

भक्षयेद्वा भक्ष्यम्—तण्डुलादिसर्वमुन्नीतम्।

स्वयं–ददाति—अस्माल्लिङ्गादन्यत्रेडाभक्षणाद्यशक्तावन्येन भक्षितेऽप्यविरोधः।

साङ्ग–श्रुतेः—अग्निहोत्रप्रत्याम्नाय इति श्रुतेः। अत्र होमकाले एकैकानुगमने प्रायश्चित्तमुक्तम्। सर्वानुगमने च।

---

[1] प्रकृतिवन्मन्त्रवदुद्धृत्यान्यं वा. [2] त्वान्यं मन्त्र–ङ. [3] ग्ध्वान्यद्वाग्निहोत्र–च.
[4] पिबेद् सर्वमग्निहोत्रं भक्ष–ङ. च. क्षं–ङ. [5] विहारं च प्रा–क.
[6] व्यमुन्नीतं–घ.

द्वयोरनुगमने उच्यते ;—गार्हपत्याहवनीययोर्होमकाले युगपदनुगमने सर्वानुगतप्रायश्चित्तमेवेति । प्राणादिहोमपूर्वकाग्न्युत्पत्त्यसंभवात्, दक्षिणाग्न्यादीनां[1] चोभयाग्निपरत्वाच्च । दक्षिणाग्निगार्हपत्ययोरनुगमने उदानः प्राणमित्याहवनीये हुत्वा गार्हप[2]त्यं संपाद्य तत्र व्यान उदानमिति हुत्वा दक्षिणाग्नेः स्वयोनितः उत्पत्तिः ॥

दक्षिणाग्न्याहवनयियोरनुगमने प्राण उदानमिति गार्हपत्ये हुत्वाऽऽहवनीयमुत्पाद्य पश्चाद्दक्षिणाग्नेर्होम [3]उत्पत्तिश्च । होमकाले सभ्यावसथ्ययोरनुगतौ सर्वप्रायश्चित्तं स्वयोनितः उत्पत्तिश्चेति ॥

गार्हपत्याऽऽहवनीय[4]योरन्यतरेण सहानुगमनेऽप्याहवनीयादेः पूर्ववन्नैमित्तिकं अनयोस्सर्वप्रायश्चित्तमेव । होमकाले सर्वानुगतौ यजमानसन्निध्यभावे पानासम्भवात् होमलोप एव । द्वितीयहोमातिपत्तावुभयानुगत्या पुनराधानमेव ॥

केचित् यजमानसन्निधावपि गार्हपत्यं मथित्वा धारणं [5]कृत्वा गते यजमाने सप्तहोत्राद्यग्निहोत्रलोपप्रायश्चित्तं कृत्वा होमं कुर्वन्ति प्रागष्टाभ्यः । तत ऊर्ध्वमाधानमित्याहुः, तच्चिन्त्यं ; हुतेष्वग्निष्ववधार्याणा[6]मुपेक्षैव ॥

(रु) यदि निवाते सति सर्वेनुगच्छेयुस्तदा गार्हपत्यं मथित्वा यथास्थानमेव विहारं साधयित्वा यथाविधि संस्कृतमग्निहोत्रमपरेणाहवनीयमुपाविश्य यजमानस्स्वयं पिबेत् । पानस्य च होमप्रत्याम्नायत्वान्न पुनर्होमः ॥ होमकालादन्यत्र सर्वानुगतावनुगतिक्रमेण तस्य तस्याग्नेर्यथाविहितमुत्पत्तिः प्रायश्चित्तं च । क्रमानवगमे त्वाधानक्रमेणेति द्रष्टव्यम् ॥

---

[1] नां च योनिपर–घ. [2] त्यमुत्पाद्य–ग. घ. [3] त्तदुत्पत्तिश्च–ग. घ.
[4] योरनुगमने–ग. घ. [5] हुत्वा–घ. [6] मुपक्षेपः–ग.

[अर्वागस्तमयाद्धोमेऽनुष्ठिते पुनः होमानुष्ठान-पूर्वकोपस्थानविधानम्]

(सू.) यदि प्रागस्तमयाज्जुहुयात् पुनरेवास्तमिते हुत्वा 'भवतं नस्समनसौ' इत्युपतिष्ठेत ॥९॥
॥३॥२१॥२३५३॥

(भा) पूर्वमस्तमयाद्धुते अकाले [1]कृतमकृतमिति पुनर्होमः। स एव तु विहारस्तस्य स्वकाले [2]कृतत्वात्। पुनर्होमे वृष्टयन्ते गार्हपत्याऽऽहवनीययोरुपस्थानं 'भवतं नस्समनसौ' इति।

(वृ) पूर्व-होमः—सङ्कल्पितकालात्प्राग्घोमेऽप्येवमेवेति केचित्।

स एव-त्वात्—विहृतोऽग्निः। अस्माद्धेतुनिर्देशात् प्रणयनकालात्प्राक्प्रणयने कृतेऽनुगमयेयुरेनं प्रायश्चित्तमिति वक्ष्यमाणन्यायादनुगमनं सर्वप्रायश्चित्तं च। पुनः स्वकाले प्रणयनादि। अपराह्णमात्रं प्रणयनकाल इत्याश्वलायनमतिः। अन्तरितप्रायश्चित्तं कृत्वा पूर्व[3]प्रणीतोऽग्निर्धार्यत इत्यन्ये। अपरे तु गार्हपत्ये संभृत्य सर्वप्रायश्चित्तं कुर्वन्ति। तच्चिन्त्यम्॥

पुनः-साविति—यजमानस्य प्रत्यगाशीष्ट्वात् द्विवचनादुभयोरग्न्योः॥

(रु) प्रागस्तमयाद्धोमे साङ्गस्य होमस्याऽऽवृत्तिः, अकाले कृतस्याकृतत्वात्। प्रधानकालत्वाच्चाङ्गानाम्, न तु प्रणयनस्याऽऽवृत्तिः। काल एव तस्य कृतत्वात, तत्र तु हुत्वाऽप उपस्पृश्येत्येतावति कृते भवतं नः समनसावित्युपतिष्ठेत। गार्हपत्याऽऽहवनीयाविति शेषो मन्त्रलिङ्गात्॥

[1] कृतमिति—ङ. [2] तत्कृत्वा पूर्वहोम—ङ. [3] प्रणीक एवाग्नि-घ.

[माहारात्रिकोपस्थाने स्वपरमतयोर्विशेषः]

(सू) यदि महारात्रे पुनरेवौपसं हुत्वा तयैवोपतिष्ठेत ॥
॥ ९ ॥ ३ ॥ २२ ॥ २३५४ ॥

(भा) महारात्र उषस्यजातायां यदि जुहोति पुनरेव पूर्ववद्धोमः[1]। [2]केचित्पूर्ववद्विहृत्य तस्मिन्नेवाऽऽहवनीये[3] संसृष्टहोमं कुर्वन्ति। [4]तस्य च संसृष्टस्योपस्थानं अग्नि[5]व्रते चेष्टिसमाप्ते।

(वृ) तस्य–स्थापनं–अस्यार्थः ;—समन्य हुत्वा भूर्भुवस्सुवरित्यादीनामाहवनीयोपस्थानत्वादस्यापि तत्तुल्यतयाऽऽहवनीयोपस्थानस्य युक्तत्वात् द्विवचनादाग्निद्वयसम्बन्धावगतेः पुनरन्यं तस्मिन् प्रणीय होमस्तयोरेवोपस्थानम्। संसृष्टयोस्संसृष्टहोम इति। संसृष्टेऽग्नौ होम इत्यर्थः, संसृष्टोपस्थानमितिवत् प्राकृतस्य तु संसृष्टहोमस्य सूर्याग्निदेवताद्वयसंसृष्टविषयत्वान्नाग्निद्वयसंसर्गविषयता।

अग्निव्रते–समाप्ते—यथा कथा चाभ्युद्धरेयुः प्रायश्चित्तमि[6]तीमं पक्षमाश्रित्य।

(रु) उषसि जुहूषतः प्रागुषसो होमेऽप्येवमौषसः पुनर्होम उपस्थानं च ॥

[हविः प्रोक्षणकालेऽग्नौ प्रमादेन शीकरपतने
पुनस्समिन्धनकथनम्]

(सू) यदि हविःप्रोक्षन्नग्निमभिप्रोक्षेद्भूतेन यज्ञेन यजेत।
'पुनस्त्वाऽऽदित्या रुद्रा वसवस्सामिन्धताम्' इति
पुनरग्निमुपसामिन्ध्यात् ॥९॥३॥२३॥२३५५॥

---

[1] मः उपस्थानं—च. ग. घ. ङ. [2] केचित्पुनर्विहृत्य—च. [3] य विद्यमाने तस्योपरि प्रणीय—ग. घ. [4] तस्य संसृष्टस्य तयो—क. [5] व्रत इष्टिर्वा समाप्ते—क. [6] मित्यन्तिमं—ग.

(भा) हविः प्रोक्षणं कुर्वन् अग्नि[1]माद्भिः यदि प्रोक्षेत् हतेन विनष्टेन यजेत यजमानः, पुनस्त्वाऽऽदित्या रुद्रा वसवस्समिन्धताम् , इति पुनरुपसमिन्धनम् ॥

(रु) हतो निर्वीर्यः । पुनरुपसमिन्ध्यादित्यन्वाधानिकोपसमिन्धनापेक्षया पुनश्शब्दः ॥

[सर्वोदक्योपघातेषु एकस्य द्वयोस्त्रयाणां वा स्पर्शे प्रायश्चित्तव्यवस्था, रजस्वलादिस्पर्शे महाभारतादिविहितेष्ट्याऽऽधानयोः सौत्रसिद्धान्तव्याहतत्वादनादरणीयत्वं च]

(सू) एवं सर्वेष्वग्न्युपघातेषु ॥ ९ ॥ ३ ॥ २४ ॥ ॥ २३५६ ॥

(भा) समिद्धस्यापि प्रोक्षणमपि तावदग्न्युपघातः । एवं सर्वेष्वग्न्युपघातेषु विष्ठासंसर्गादिषु । [2]उदक्योपघा[3]तादन्यस्मिन्नित्युपदेशः ।

(वृ) समिद्ध–घातः—पूर्वमुपघातान्तरेण पुनस्त्वेति समिद्धस्याग्नेः पुनः प्रोक्षणोपघाते पुनर्मन्त्रेण समिन्धनं कर्तव्यम् ।

एवं स–दिषु—अयमभिप्रायः–यद्यपि बोधायनेन भगवता अमेध्यादिसंसर्गे आधानमुक्तम् । तथाऽपि सर्वेष्वग्न्युपघातेष्विति सूत्रकारवचनात् विष्ठादिसंसर्गादिषूपघातप्रायश्चित्तमेव ; रजस्वलास्पर्शेऽपीति भाष्यकाराभिप्रायः । एवं श्वादिभिरुपस्पर्शनेऽ[4]प्युपघातप्रायश्चित्तमेव । ततश्च—

“ वसा [5]शुक्लमसृङ्मांसमूत्रं विष्कर्णविण्णखाः ।
श्लेष्माश्रुपूयिकास्वेदा द्वादशैते नृणां मलाः ॥ ”

इत्येतैः स्पर्शेऽप्युपघातः ॥

[1] मग्नि हवि–ग. घ. ङ. मग्नि प्रोक्षेत् यदि हतेन–च. [2] उदक्योपघाते. [3] घाते अन्य–च. घ. [4] ग्न्युपघात–घ. [5] सृङ्मज्जाम्–घ.

केचिद्रजस्वलास्पर्शेऽप्याधानमिच्छन्ति । इष्टिर्वाऽग्नये शुचये । तथाहि कौण्डिन्यकल्पवचनम् ॥

"स्पृष्ट्वा तु वैदिकाग्निं या प्रमादाद्वा रजस्वला ।

नष्टं तमाहुर्विद्वांसो ह्यग्न्याधेयं भवेत्पुनः ।" इति । तथा च स्मृत्यन्तरेऽप्युक्तम् । महाभारतेऽरण्यपर्वणि :—

"रजस्वला चेच्छ्रौताग्निमज्ञानात् स्पृशते यदि ।

इष्टिरष्टाकपालेन कर्तव्या शुचयेऽग्नये ।" इति ।

अनयोर्व्यवस्था—बुद्धिपूर्वकस्पर्शे आधानम् । अबुद्धिपूर्वकस्पर्शे इष्टिरिति युक्तम् । [1]तदेतदापस्तम्बनिबन्धनात्सर्वेष्वग्न्युपघातेष्विति वचनाद्विध्यपराधे श्रुतिलक्षणमेवेति नियमाच्च नास्माकमादरणीयम् । किंतूपघातप्रायश्चित्तमेव ॥

कल्पान्तरपक्षाश्रयणेऽपि सर्वाग्निस्पर्शे आधानम् । गार्हपत्याऽऽहवनीययोर्द्वयोरेव स्पर्शेऽप्युभयानुगतिवत् , तयोरेवाधानप्रयोजकत्वात् । गार्हपत्यमात्रस्पर्शेऽप्याहवनीयमुद्राप्याधानम् । भिन्नयोनित्वे धार्य एवेति केचित् । आहवनीयस्पर्शेऽपि यत्रानुगतौ पुनः प्रणयनविधानं नास्ति तत्र गार्हपत्यादीनप्यनुगमय्य रजस्वलास्पृष्टस्य [2] अवक्षाणादिमन्थनमयोग्यत्वादेव । दक्षिणाग्नेरप्येकयोनित्वादाधानमेव ; यथा सप्त[3]होमाद्यर्थेषु । यत्र च गार्हपत्याऽऽहवनीयदक्षिणाग्निनामेकदेशानां कर्मार्थं वचनात्पृथक्कृतानां स्पर्शनम् , [4]यथा आग्नीध्रेऽनुगते उत्तरवेदिस्पर्शनम्, यथा शामित्रप्रवर्ग्यधर्म्योखाश्रपणादिषु, तत्र अन्तरितप्रायश्चित्तं कृत्वा अनुपहतैकदेशान्तरात्प्रणयनम् । सर्वत्र योनिभूतस्योपहतौ तद्योनीनामनुगमनं कृत्वाऽऽधानमिति केचित् । एकस्पर्शे आधानाभावपक्षे महाभारतोक्तेष्टिरुपघातप्रायश्चित्तं च ॥

[1] स्व—ग. [2] नावक्षणा—घ. [3] होत्राद्य—घ. [4] यथा सोम आग्नीध्रः—घ.

समारूढारण्योरमेध्यादिस्पर्शेऽपि त्यक्त्वाऽ[1]रणिमाधानं कर्तव्यमिति बोधायनमतिः रजस्वलादिसामीप्ये तत्स्पृष्टस्पर्शेऽप्युपघातप्रायश्चित्तमेव, रजस्वलादिभिः स्पृष्टस्पर्शेऽपि ॥

उदक्यो-देशः—यदि हविः प्रोक्षन्नित्य[2]भ्युपघातस्य प्रकृतत्वात् सर्वेष्वभ्युपघातेष्विति [3]सर्वोदक्योपघातेष्वित्यर्थः । अस्मिन् व्याख्याने बोधायनादिपक्षोऽप्याश्रयणीयः । तस्मिन्नपि पक्षे श्वादिस्पर्शेन उपघातप्रायश्चित्तम् । रजस्वलास्पर्शे आधानमिति केचित्, कौण्डिन्यकल्पोक्तत्वादिति ॥

(रु) एवं परिषेचनादौ प्रमादेऽप्युपसमिन्धीत । सर्वग्रहणान्मूत्रपुरीषाद्यशुचिसंसर्गे श्वशूद्रोदक्याद्यप्रयतसंसर्गेऽप्युपसमिन्धीत । बोधायनस्त्वत्राह अमेध्याभ्याधाने समारोप्य निर्मथित्वा पवमानेष्टिरिति ॥
महाभारतेऽप्यारण्यपर्वणि पठन्ति ॥

" रजस्वला चेच्छ्रौताग्निमज्ञानात्स्पृशते यदि ।
इष्टिरष्टाकपालेन कर्तव्या शुचयेऽग्नये ॥

इति ।

[ क्रत्वर्थमुद्धृते आहवनीयेऽर्वाक्क्रत्वनुष्ठानादन्याग्निसंसर्गे कर्तृविनाशापनुत्तये इष्ट्यन्तरविधानम् ]

(सू) अग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नावग्निमभ्युद्धरेयुः ॥ ९ ॥ ३ ॥ २५ ॥ २३५ ॥

(भा) अग्निरग्निवान् अग्नयेऽग्निवते अग्निमग्निवन्तं अग्नेऽग्निवन् अग्नेरग्निवतः । एवं विभक्त्यन्तराणामपि प्रयोगः पश्चाद्वक्ष्यते । इह सूत्रानुसारेणोपक्रमो विभक्तिनिर्देशस्य । यस्य यजमानस्याग्नौ विद्य-

---

[1] रणे आधानं–घ. [2] त्युपघातस्य–क. [3] दकोप–घ.

माने नाप्रवृत्ते कर्माणि अन्यमग्निमुपर्युद्धरेयुर्गार्हपत्यात् । तस्यैतदपवृत्त-कर्मणा संसर्गे यस्याऽऽहिताग्नेरन्यैरग्निभिरितीष्टिः, निर्दिष्टभाग इति लिङ्गात् ॥

(वृ) यस्य–लिङ्गात्—अस्यार्थः–यागार्थमुद्धृत आहवनीये यागे त्वकृते तस्योपरि पुनरन्यस्मिन्नाहवनीये प्रणीते संसर्गे पूर्वमुद्धृतस्य यागार्थत्वान्निर्दिष्टभागत्वम् । शास्त्रान्तरेण हविर्भागसंबन्धावगमात् । उत्तरस्य तु यागार्थत्वाभावादनिर्दिष्टभागत्वम् । अतो निर्दिष्टभाग इत्यादि निर्देशादनप्रवृत्तकर्माग्निर्विषयता ।

अत्र च भागधेयेनै[1]वैनं शमयतीति वाक्यशेषादाहवनीयाग्ने[2]-रग्निमुत्तरया देवतात्वमिति केचित् ॥

अपवृत्तकर्माग्नेर्लौकिकत्वात् [3]तेन संसर्गे विविचय इष्टिः । [4]तत एव भाष्यलिङ्गात् विविचय इष्टेरुपदेशाच्च [5]शास्त्रान्तरे उद्धरण-प्राप्त्यभावेऽप्याहवनीयादिबुद्ध्या प्रणीते वैदिकाग्नौ तत्तदग्नित्वम् । इत-रथा संसर्गेष्टिर्न स्यात् । अनपवृत्तकर्मणामिति बहुवचनाद्दक्षिणाग्न्या-देरप्युपर्युद्धरणेऽग्निवत् इष्टिरिति केचित् ॥

(रु) यस्याहवनीये विद्यमाने तमसन्तं बुध्वा तस्योपर्यन्यं प्रणयेत् । तामिष्टिं निर्वपेत् ॥

[ सर्वत्रापन्यायेनोद्धरणे अन्यायेन प्रणीते च मतभेदेनानुगमनसर्व-प्रायश्चित्तयोःसोपपत्तिकं विधानम् ]

(सू) **यथा कथा चाभ्युद्धरेयुः प्रायश्चित्तमित्याश्म-रथ्यः, यद्यसंन्युप्ते स्पाशयेयुरनुगमयेयुरेनं न प्रायश्चित्तमित्यालेखनः ॥९॥ ३ ॥ २६ ॥२३५८॥**

[1] वैनं–ग. घ. [2] रग्निमत्ताया–ग. घ. [3] तेन विविचय इष्टिः–ग. घ.
[4] अत एव–ग. घ. [5] शास्त्रतः–ग. घ.

अग्नये ज्योतिष्मतेऽष्टाकपालमित्युक्तम् ॥९॥३॥
॥ २७ ॥ २३५९ ॥

(भा) यथाकथा चाभ्युद्धरेयुः—[1]येनकेनचित्प्रकारेण विद्यमानेऽग्नौ अन्यस्मिन्नुद्धृते [2]असंसृष्टे विज्ञातेऽपि [3]कर्तव्यमेव[4] प्रायश्चित्तम्। असंन्युप्ते अमिश्रिते। स्पाशयेयुः—स्मरेयुः। अन्यो विद्यत इति कर्मानिवृत्तौ विहृत इति अनुगमयेयुः। पश्चादुद्धृतं न प्रायश्चित्तं; अग्नयेऽग्निवते क्रियते तु सर्वप्रायश्चित्तम्, अन्यायेनोद्धृते इति। अग्नयेऽग्निवते अग्नेऽग्निवन् अग्निमग्निवन्तम्। अग्नेरग्निवतः [5]अग्निरग्निवानिदम्।

अग्नये ज्योतिष्मते अग्ने ज्योतिष्मन् अग्निं ज्योतिष्मन्तं अग्नेर्ज्योतिष्मतः अग्निर्ज्योतिष्मानिदम्।

यस्याग्निहोत्रार्थमुद्धृतोऽहुतेऽग्निहोत्रे[6]नुगच्छति तस्योत्पत्तिः। अपरोऽग्निर्गार्हपत्य आदीप्य [7]प्रज्वाल्य तस्मादु[8]द्धर्तव्य आहवनीयः। समाप्य चाग्निहोत्रं ज्योतिष्मती। न कार्यमिति निषेध उत्तरविधिप्रशंसार्थः। यो भागार्थं पूर्व उद्ध्रियते तस्याप्रदाय भागं नान्य उद्धर्तव्यः। तस्मादवक्षाणेभ्योऽधिमन्थितव्यः 'इतः प्रथमम्' इति छन्दोभिर्गायत्र्यादिभिः। 'स गायत्रिया' इति[9] स्वाद्योनेरवक्षाणे[10] उत्पादयति। ततोऽग्निहोत्रसमाप्तिः। ततो ज्योतिष्मती। स एवायमाग्निः, केवलमस्य ज्योतिः परापतितमिति कृत्वा ज्योतिष्मती॥

(वृ) यथाकथा च–श्चित्तम्—यथाकथा चेति [11]संसर्गे असंसर्गे च बुद्धिपूर्वे अबुद्धिपूर्वेऽचोद्धरण इदं प्रायश्चित्तं कर्तव्यवेमेति।

[1] गार्हपत्याद्येनकेन–ङ. [2] संसृष्टे–ग. घ. [3] कर्तव्यमेव संसर्गप्रायश्चित्तं च–च. [4] व संसर्गप्रायश्चित्तं–ग. घ. ङ. [5] अहुते–च. [6] त्रे आहवनीयोऽनु–ग. घ. [7] प्रताप्य–ङ. [8] द्धरन् आहवनीय–क. [9] मन्त्रवर्णात् स्वा–क. ग. घ. [10] भ्यः उत्पाद्यते–च. [11] संसर्गे बुद्धि–ग. घ.

**असं न्यु–विहृतः** — कर्मानिवृत्तेराहवनीये विद्यमानेऽप्यन्यो विद्यत इति यदि स्मरेयुः ।

['अन्यायेनोद्धृत इति' हेतुनिर्देशोपपादनम्]

**अग्नये–द्धृत इति** – अन्यायेनोद्धृत इति हेतुनिर्देशात् अन्यत्राप्यपन्यायेनोद्धरणे अनुगमनं सर्वप्रायश्चित्तं च कर्तव्यमिति । केचिदपक्षाणप्रायश्चित्त आ शम्यापरासादिति मर्यादापक्षमाश्रित्य अत्रापक्षाणप्रायश्चित्तं कुर्वन्ति; तन्न रोचते—अग्न्यन्तरे विद्यमाने तद्बुद्ध्या प्रणीतस्य पुनस्संभरणमयुक्तम् । संसर्गे नैमि[1]त्तिकस्येहोक्तत्वात् संसर्गात्प्राकृते[2] अनुगमनं सर्वप्रायश्चित्तं चेत्येतदेव युक्तम् ।

**अग्नये–वानिदम्**—'उदग्ने शुचयस्तव, वि ज्योतिषा' इति याज्यानुवाक्ये । अग्नये ज्योतिष्मतेऽष्टाकपालमिति ब्राह्मण उक्तम् ।

**यस्याग्नि–त्पत्तिः**—अहुतेऽग्निहोत्र इति वचनात् । अग्निहोत्रार्थमु[3]द्धृतेऽनुगते एतत्प्रायश्चित्तम् ।

['तत्तथा न कार्यम्' इति श्रौतप्रतिषेधस्य वक्ष्यमाणमन्थनविधिप्रशंसार्थत्वोपपादनपूर्वकं 'यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्रे' इत्यादिब्राह्मणवाक्यार्थविवरणम्]

**न कार्य–सार्थः**—तत्तथा न कार्यम्' इति प्रतिषेधोऽपि वक्ष्यमाणमन्थनविधिप्रशंसार्थः, न पूर्वस्य प्रणयनस्य निषेधपरः ।

'यद्भागधेयमभिपूर्वं उद्ध्रियते' इत्यादेरर्थः; **यो भागा–र्तव्य इति ।**

**तस्माद्–दयाति**; 'स गायत्रिया त्रिष्टुभा' इति मन्थनमन्त्रे छन्दसां कीर्तनात् छन्दसां करणत्वेन निर्देशः ।

एष वाव सोऽग्निरित्यादेरर्थः;

---

[1] त्तिके त्यस्ये–ग. [2] ते तस्मादन्यायेन प्रणीतेऽनु–ग. [3] मुद्धृतानुगत–ग. च.

**स एवाय-ष्मती**—अस्यार्थः ;–यः पूर्वमनुगत आहवनीयोऽग्निः । स एवायमग्निः योऽत्र [1]देवताभूतोऽग्निः पूर्वमनुगतस्याव-क्षाणस्थस्य ज्योतिर्मात्रं विनष्टं तत्राहवनीयाग्नेः ज्योतिष्मतो विनष्टस्य देवतात्वेनान्वयात् 'यदेवास्य ज्योतिः परापतितं तदेवावरुन्धे' इति विनष्टस्य ज्योतीरूपस्यादृष्टात्मकस्य प्रतिसमाधाना[2]र्थेयमिष्टिरग्न्युत्प-त्त्यर्था ; अत एवैतच्छ्रुतिव्याख्यानोपक्रमे तस्योत्पत्तिरिति भाष्यकारे-णोक्तम् । तथा च मीमांसकैः (५–३ ;–२१–२५) उद्वासनपठि-तोऽग्निर्निमित्तम् । अग्न्युत्पत्त्यर्थत्वमिष्टेरुक्तम् । एवं च मन्थनप्रणय-नाभ्यां दृष्ट[3]रूपो[4]त्पत्तिः ।

योगरूपादिभिरदृष्टसंपत्तिरिति एवमन्यत्राप्यनुगतौ अग्निहोत्रस्य प्रक्रान्तत्वादिष्टेः प्रागप्यग्निहोत्रसमाप्तिः, तन्मध्ये इष्टेरसम्भवात् । अतः प्रातिनि[5]धेरविरोधः ।

(रु) ननु किं उद्धरणमात्रप्रयुक्तमिदं प्रायश्चित्तम्, आहोस्वित् अग्निप्रणयप्रयुक्तमिति न ज्ञायतेऽनुद्धरणशब्दस्योभयत्रापि दर्शनात् । तत्र यदि अभ्युद्धरणमात्रप्रयुक्तं, ततोऽभ्युद्धृताग्निं मध्ये सन्तं विदित्वा न निहितवतोऽपि प्रायश्चित्तं स्यात् । अतो वक्तव्यो विशेषस्तत्राह । अस्तुवाऽग्निप्रणयनं मा वा । यदि कथञ्चिदभ्युद्धरेयुर्भवत्येवेदं प्रायश्चित्तमित्याश्मरथ्यमतम् । आलेखनस्तु मन्यते, यद्यनिहतेऽग्नौ-स्पाशयेयुः जानीयुस्सन्तं तदेनं पश्चादुद्धृतमग्निमनुगमयेयुः, न तु भवत्येतत्प्रायश्चित्तम्, सर्वप्रायश्चित्तमात्रं तु श्रूयते, अप्राप्तस्योद्धरणमिति । यत एतदुभयमप्याचार्याणां मतम् ; ततो याथाकामी तयोरिति भावः ।

---

[1] देवतोऽग्निः–घ. [2] र्थोऽयमग्निरिष्टयुत्पत्त्यर्थः–घ. [3] रूपत्वोक्तिर्यागसम्पत्ति-रिति–ग. [4] त्वोत्पत्तिर्या–घ. [5] निधिरविरुद्धः–क.

कर्मार्थाग्न्यभ्युद्धरणविषयश्चायं विधिः, 'निर्दिष्टभागो वा एतयोरन्योऽनिर्दिष्टभागोऽन्यः' इति लिङ्गात्। तेनापवृत्ते कर्मण्यन्यार्थमुद्धृतेऽग्नौ संन्युप्ते लौकिकाग्निसंसर्गनिमित्तेष्टिरेव कार्या, नाभ्युद्धरणनिमित्ता न तु अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालमित्युक्तम् ॥

ब्राह्मणे तु अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेदिति प्रकृत्य प्रणयनं निषिध्य निन्दित्वा च पुनरितः प्रथमामित्येतया मन्थनमुक्तम्। तत्र प्रणयननिन्दानिषेधयोर्मन्थनविधिप्रशंसार्थत्वात् प्रणयनमन्थनयोर्विकल्प इति सूत्रकाराभिप्रायः। तत्र च लिङ्गम्, 'तꣳ हैतमेके पशुबन्ध एवोत्तरवेद्यां चिन्वते' इति ब्राह्मणव्याख्याता विकाराः,ताननुक्रमिष्यामः। पशुबन्धे, सोमे, सत्रे, सहस्रे, सर्ववेदसे चेति ब्राह्मणनिरूपितस्यैव पशुबन्धस्य विकल्पतया स्मरणम्। तथा दध्नोऽवदाय शृतस्यावद्यति, एतद्वा विपरीतम्, तथा पत्नीं सन्नह्यति तिष्ठन्तीं वेत्यादि द्रष्टव्यम् ॥

अयं विधिरहुतेऽग्निहोत्रवचनादापूर्वाहुतेर्होमकालविषयैस्सर्वैरपि पूर्वोक्तैर्विधिभिर्विकल्प्यते। यस्याग्निरुद्धृत इति वचनान्नाजस्रेऽग्नौ भवति ॥

[मन्थनपक्षीयविशेषांशविवरणपूर्वकं विधिद्वयादिविधानम्]

(सू) अथाऽऽहुतिं जुहुयात्त्रयस्त्रिंशत्तन्तव इति ॥

॥ ९ ॥ ३ ॥ २८ ॥ २३६० ॥

(भा) पुनर्विहृत्य त्रयस्त्रिंशत्तन्तव इ[1]त्याहुतिरुभयत्र। [2]प्राग्घोमकालादेवैतद्विधिद्वयं 'यस्याग्निरुद्धृत' इति प्राग्घोमकालादिति च। होमकाले तु प्रत्यक्षविधिरेव।

केचित्त्वाहुः—'यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्रे' [3]इति यदि सायमहुतेऽग्निहोत्रे इति च; उभयत्राहुत इति वचनात् होमका[4]लेऽप्येतल्ल-

---

[1] इति त्वाहुतिः—क. [2] यदि प्रा—ग. घ. [3] त्रे उद्वापेदिति—ङ. [4] लेत्वेत—ङ.

भ्यते केवलं तु हुते न लभ्यत इत्यग्निहोत्रहोमार्थमुद्धृतस्यैतानि प्रायश्चित्तानि। [1]नाप्यहोमार्थम्। नाप्यजस्रेषु। आहवनीयेऽनुगतेऽग्निहोत्रार्थे प्राग्घोमकालाद्विधित्रयम्। यदि सायमहुतेऽग्निहोत्र इति सायंकाल एव। यदि प्राग्घोमकालात् 'यस्याग्नि[2]रुद्धृत' इत्यविशेषविधिरपि प्रातःकाल एव सायंकालेऽ[3]प्यस्य विहितत्वात्। उभयकालार्थ इत्युपदेशः। अविशेषविधानात् अन्यशाखोक्तत्वाच्च।

(वृ) पुनर्वि–यत्र—उद्धरणपक्षमन्थनपक्षयोरुभयत्रेष्टिहोमात्मकनैमित्तिकत्वेनाऽऽनन्तर्यान्मन्थनपक्ष एवेति।

प्राग्घो–यम्—परिस्तीर्णेष्वग्निष्वित्यादिसंकल्पितहोमकालाविशेषात्प्राग्विधिद्वयम्।

यस्याग्नि–दिति च—हो[4]मकाले विशेषस्यापवादस्योक्तत्वात्।

होम–रेव—सर्वेषां तस्मिन् काले आहत्य विशेषविधानात्।

केचित्त्वाहुः–ल्लभ्यते—नैमित्तिकद्वयम्। 'अपर आदीप्यानूद्धृत्य' इत्यादिकं बहुविदुद्धरणं च, अहुत इति प्रधानहोमानिवृत्तिपरमिति।

केवलं–जस्रेषु—अहुतेऽग्निहोत्रे इत्यग्निहोत्रार्थाग्न्यनुगत्यवगमान्नान्यकर्मार्थस्यानुगतौ। उद्धरणसंबन्धावगमान्नाज[5]स्रेषु गतश्रियादिषु, तत्रोद्धरणा[6]संभवात्।

यदि सा–ल एव—बहुविदुद्धर[7]णम्।

यदि प्रा–त्वात्—बहुविदुद्धरणस्या[8]विशेषविहितत्वात्।

---

[1] नान्ययर्मार्थं–ग. [2] उद्धृतविशेष–च. [3] न्यस्य–ग. घ. ङ. च. [4] होमकालादिविशेषणोपपादकस्योक्तत्वात्–ग. घ. [5] जस्रानुगत्यादिषु–घ. [6] णं सायंकाल एव–ग. [7] स्य विशेषः.

[ उपदेशपक्षीयविशेषांशोपपादनम् ]

**उभय-स्त्वाच्च**—अस्यार्थः—यदि प्राग्घोमकालाद्यस्याग्निरुद्धृत इत्यनयोः प्रातरिति विशेषानिर्देशादुभयत्र प्राप्तिः। न च सामान्यापवादन्यायेन सायंकाले बहुविदुद्धरणस्यापवादत्वम्। यदि प्राग्घोमकालादित्यस्य यस्याग्निरुद्धृत इत्यस्य च बहुविदुद्धरणाद्भिन्नशाखोक्तत्वात्तत्प्रतिपत्तृभेदेन उत्सर्गापवादन्यायासंभवात्। अतः सायंकालेऽप्यनयोर्बहुविदुद्धरणेन विकल्पः। प्रातःकाले प्राग्घोमकालादेते एव नैमित्तिके। बहुविदुद्धरणं तु सायंकाल एव, विकल्पेनेत्युपदेशपक्षः। अयमपि भाष्यकारेण स्वीकृतः हेतुनिर्देशात्॥

[अन्वाहितहोमकालविषयविशिष्टाहवनीयसमानाधिकरणगार्हपत्यानुगमनादौ कर्तव्यविशेषांशोपपादनं मतभेदेन ]

[1] अत्रायमर्थसंग्रहः ;—अन्वाहितहोमकालविषये[2] विद्यमाने आहवनीये गार्हपत्यानुगमने यस्याहवनीयेऽनुद्वाते इति नैमित्तिकतदपवादचतुष्टयं चानुगतेष्टिश्च। आहवनीयस्यास्मिन् विषये प्रणयनचोदनाभावे यदि गार्हपत्य आहवनीयो वेति मन्थनमिष्टिश्च। अपोढशामित्रादीनां प्राक्पातात्सर्वप्रायश्चित्तं पुनः प्रणयनं च। पाकादूर्ध्वमपोढनाशे सर्वप्रायश्चित्तम्। शामित्रस्य तु पाकादूर्ध्वं नाशे सर्वप्रायश्चित्तम्। गुदहोमलोप इति केचित् अग्न्यभावात्। अन्ये तु शामित्रं भस्मना संस्पृश्य लौकिका[3]रण्योर्मथित्वा। गुदहोमः कर्तव्य इत्याहुः॥

(रु) अथानुगतेष्टेरनन्तरं मित्राद्याहुतीनां वा त्रयस्त्रिंशत्तंतव इत्याहुतिः॥

---

[1] अत्रेत्थं संग्रहः—ग. घ. [2] कालव्यतिरिक्तविषये—घ. [3] रणे—म. क.

[अनेकदर्शपूर्णमासातिपत्तावेकस्य नैमित्तिक-
प्रायश्चित्तस्य विधानम्]

(सू) यस्य सान्नाय्येऽधिश्रिते हविषि वा निरुप्ते पुरुषः श्वा रथो वाऽन्तराग्नी वीयात् दुर्वराहैडको वा तदत्रापोऽन्वतिषिच्य गामन्वत्यावर्तयेत् वर्धतां भूतिर्दध्ना घृतेन मुञ्चतु यज्ञो यज्ञपतिमंहस-स्स्वाहेति ॥ ९ ॥ ३ ॥ २९ ॥ २३६१ ॥

(भा) सान्नाय्येऽधिश्रिते ;—अधिश्रयणादि यावन्न हूयते हविर्निर्वापणादि [1] यावन्न प्रदीयते । पुरुषाद्या जातयः । अनश्शकटम्, रथः चतुर्विधोऽपि, एकैकस्यापि गमने [2] समस्तानामपि । अन्तराग्नी —गार्हपत्या[3]हवनीयौ । वीयात्–गच्छेत् । दुर्वराहो—ग्रामसूकरः एडकः—मेषः । केचिदुष्ट्रः । तत्तस्मिन्नेव काले । [4]अत्रास्मिन्नेव देशे । येन देशेन [5] तत्र यन्निर्गतं पुरुषादि द्रव्यम् । अपोऽन्वतिषिच्य स्मार्तेन विधिना शकृदुदकेन गामन्वत्या[6]ऽतिनीय तेनैव मार्गेण येन [7] यातं [8] तत्सत्त्वम् । आवर्तयेत्[9]—निवर्तयेत् । तामेव गाम् । [10] वर्धतामिति [11] गामन्वत्याऽनया निष्क्रान्तं [12] सत्त्वं [13] निवर्तयेदिति ॥

(वृ) पुरु–जातयः—पुरुषादीनां [14]पुंस्त्वादिविशेषादिविवक्षा नास्ति, किंतु जातिमात्रमेव, अतः स्त्रियोऽपि गृह्यन्ते ॥

---

[1] यावन्ना–ज. [2] समुदिता–ख. च. ज. [3] हवनीयोः–ज.
[4] अस्मिन् देशे–क. ख. ग. घ. ङ. [5] तस्मिन्निर्गतं येन देशेन तस्मिन् द्रव्यं निर्गतम् अपो–क. ङ. तस्मिन्निर्गतं येन देशेन तद्द्रव्यं निर्गतम्–क. ज. च.
[6] त्यानीय–ग. घ. च. [7] यातं सत्वं तत्–च. [8] तत्सत्वं पुरुषादि–क. ग. घ.
[9] यत्तामेव–ग. क. [10] तामित्युपदेशः–च. [11] गामन्वती ऋक् तया–च.
[12] सर्वं–च. [13] निर्वर्तयतीति–क. ख. ग. घ. [14] पुंस्त्वविशेषादिविवक्षा नास्ति.

**एकैकस्या-मपि**-- व्यस्तनिर्देशेऽपि निमित्तगतैकत्वादेरविवक्षितत्वात्। अस्माल्लिङ्गादनेकदर्शपूर्णमासातिपत्तावपि सकृदेव नैमित्तिकम्।

**अन्तराग्नी-गच्छेत्**--- गमनमात्रं नान्तरातिक्रमणमेव। अत एवान्तराऽग्नी वीयादिति केवलगमनमात्रं नैमित्तिकस्य सामान्यतया सर्वत्र प्राप्तस्येष्टावपि चान्यस्मिन् काल इति वक्ष्यमाणस्य यस्य सान्नाय्येऽधिश्रिते इत्येतदपवादभूतं वदन् अस्यापि गमनमात्रमेव निमित्तं, नातिक्रमणमिति दर्शयति भाष्यकारः।

**वर्धतामिति**---मन्त्रेण उपदेशो वर्धतामिति॥

(रु) पुरुषो मनुष्यजातीयः अनश्शकटम्। दुर्वराहो ग्रामसूकरः। एडको मेषः। क्रमेलक इत्यन्ये। यद्येषामन्यतमस्सर्वो वा हविरुत्पत्तिप्रभृत्याप्रदानादन्तरा गार्हपत्याहवनीयौ गच्छेत्तदाऽत्र पुरुषादिगते मार्गेऽपोऽन्ववतिषिच्यताननतिक्रान्ताननवपस्सिक्त्वा गामन्वत्य सर्वतोऽनुगमय्यावर्तयेत्। यत एव गमितस्तत एव प्रतिगमयेदित्यर्थः। गामन्तरेणातिक्रमयेदित्याश्वलायनः॥

(सू) **देवान् जनमगन्यज्ञस्ततो मा यज्ञमाशीरागच्छतु। पितॄन् पञ्चजना दिश आप ओषधीर्वनस्पतीन् जनमगन्यज्ञस्ततो मा यज्ञमाशीरागच्छत्विति षडाहुतीर्हुत्वा 'इदं विष्णुर्विचक्रमे' इति वर्त्म समूहेत् पदं वा लोभयेत्॥ ९॥ ३॥ ॥ ३०॥ २३६२॥**

(भा) वनस्पतीन् जनमगन्यज्ञ [1] इति त्यागः। प्रथमस्य वा। उपदेश [2] ओषधीर्वनस्पतीन् जनमगन्यज्ञ इत्येको मन्त्रः। आप

---

[1] इत्यस्य त्यागः-ग. [2] ओषधिवनस्पतीन्-घ.

[1] इत्यर्थपाठः । वर्त्म समूहनम् । वर्षनं [2] शकट[3]रथयोः । पदलोभनं—पदनाशनम् । पदवतां[4] सर्वत्र विहृत आहवनीय इष्टौ च, अन्यस्मिन् काले ॥

(वृ) वनस्प-त्यागः—अन्ताल्लोपः इति ॥

प्रथमस्य-वा—द्वितीयादीनां सानुषङ्गतया एकगुणत्वपाठात् प्रथमस्य पृथङ्मन्त्रत्वावगमात् तस्य त्याग इति ॥

उपदेश-मन्त्रः—अन्यत्रौषधिवनस्पतीनां [5] प्रायशो द्वन्द्व-निर्देशनात् । पूर्वव्याख्यानं तु पितृनित्यादिवत्, औषधीर्वनस्पती-निति व्यस्तनिर्देशात् ॥

आप इत्यर्थपाठः—देवान् जनमगन् यज्ञ इत्यादीनां द्वितीयान्तत्वादत्राऽपि द्वितीयान्तेन भवितव्यमिति । आप इति पाठ-श्छान्दसः । देवपित्रादयो देवताः ॥

पदलो-आहवनीये—सर्वकर्मस्वाहवनीये विहृते यस्याऽनो वा रथो वेत्यादि प्रायश्चित्तम् ॥

[ सान्नाय्याधिश्रयणान्यकालिकनिर्वापाव्यवहित-
पूर्वकालानुष्ठेयप्रायश्चित्तम् ]

अन्यस्मिन्-काले—सान्नाय्येधिश्रिते इत्यतोऽन्यस्मिन् काले निर्वापात्प्रागेतत्प्रायश्चित्तम् । यागहोमोत्तरकालमुभयं न भवति कामं [6] हुते संचर्यमित्युक्तत्वात् ॥

(रु) पितृनित्यादिषु जनमगन्नित्यादेरनुषङ्गः । आपो जनमगन्निति द्वितीयार्थे प्रथमा । ओषधीर्वनस्पतीन् जनमगन्नित्येको मन्त्रः, षडिति

---

[1] सार्थपाठः—घ. [2] शकट्याः—च. [3] योः वर्त्मबन्धनं पांसुभिः पूरणं—घ. [4] तां पुरुषादीनां गमने—घ. [5] यशः प्रथमस्य द्वन्द्व—घ. [6] विहृते.

वचनात् । वर्त्म समूहेत् । अनोरथयोर्वर्त्मनी समीपदेशेन समीकुर्यात् । पदं वा लोभयेत्, पुरुषादीनां पदरूपं नाशयेत् । गार्हपत्यभस्मना पदमभिवपेदिति तु सत्याषाढः ॥

[ आहवनीयगार्हपत्ययोर्मध्ये शकटरथादिगमनोऽग्नेयांशः ]

(सू.) यस्याऽनो वा रथो वाऽन्तराग्नी यात्याहवनीयमुद्धाप्य गार्हपत्यादुद्धरेत् 'यदग्ने पूर्वं प्रभृतं पदꣳ हि ते सूर्यस्य रश्मीनन्वाततान । तत्र रयिष्ठामनुसम्भरैतं सन्नस्सृज सुमत्या वाजवत्या । त्वमग्ने सप्रथा असीत्येताभ्याम् । ततः पाथिकृतीं पूर्ववन्निर्वपेत् ॥ ९ ॥ ३ ॥ ३१ ॥२३६३ ॥

(भा) रथो [1] वा याति यद्यन्तराऽग्नी आहवनीयमुद्धाप्य गार्हपत्यादुद्धरेत् । यदग्ने पूर्वं प्रभृतं पदꣳ हि ते 'त्वमग्ने सप्रथा [2] असि' इत्येताभ्यामेव । ब्राह्मणेऽनुक्रमणाद्द्वयोः । केचित्त्रिभिः । एका पठिता द्वे आदिप्रादिष्टे इति । [3] समाप्ते कर्मणि पाथिकृती पूर्ववत । यस्यां पथोऽन्तिकात् [4] बर्हिराहरेत् सा पूर्वाम्नाता । [5] दक्षिणाभेदाच्च तन्त्रभेदः । [6] नेदमजस्रेष्वित्युपदेशः । तत्राऽऽहवनीयो गार्हपत्यं न गच्छतीति ॥

(वृ) अनो रथो वा–ग्नी —आहवनीयगार्हपत्ययोरन्तरा नैमित्तिकस्य तत्संबन्धित्वात् तयोः प्रधानत्वाच्च । आहवनी–द्वयोः—एताभ्यामिति द्विवचनं पूर्वेण सह ब्राह्मणे द्वयोरुक्तत्वात् प्रथमा पठिता । द्वितीयस्याः प्रतीकोपादानम् । ब्राह्मणे तथा निर्देशात् तथाऽनुकरणं क्रियते सूत्रकारेण ।

केचित्त्रिभिः —केचित्त्रिभिरुद्धरणं कुर्वन्ति ।

[1] वा अनो वा याति–ग. ङ. च. घ. [2] असीत्येताभ्यामेव ब्राह्मणानु–ङ. [3] आरब्धे समाप्ते–ङ. [4] बर्हिस्सा पू–ग. घ. ङ. [5] म्नाता दक्षिणा–ङ. [6] नाजस्रे–घ.

**एका पठिता**—सूत्रकारेण ।

**आदिप्रदिष्टे द्वे**—प्रतीकोपा[1]दानात् द्विवचननिर्देशात् ।

**समाप्ते कर्मणि–स्नाता**—इष्टौ निमित्तासंभवे समाप्तायामिष्टौ पाथिकृती । तथेष्टिविकारेष्वपि ।

**नेदमजस्रेषु–गच्छतीति**—अस्यार्थः—अजस्रेष्वाहवनीयोद्वापनेऽपि गार्हपत्यं न प्राप्नोति, नित्यधार्यत्वादवक्षाणादिमन्थनमेव । ततश्चोद्धरणासंभवान्नैतत्प्रायश्चित्तं रथादियानेऽपि; नैमित्तिकविधेरन्यत्र [2]चरितार्थत्वात् ।

[ **स्वपरमतीयविशेषांशोपपादनम्** ]

केचित्तु ;—'यस्याऽऽहवनीयेऽनुद्वाते' इतिवन्निमित्ताविशेषवचनबलादत्राप्याहवनीयोद्वापने पश्चाद्गमनसंभवादुद्धरणोपपत्तिरित्याहुः । अग्निहोत्रे तु 'यस्याग्निहोत्रे' [3]इति प्राग्घोमाद्विशेष उक्तः । अधिश्रयणात्पूर्वमेतदेव । [4]सोमे तु विशेषं वक्ष्यति ॥

(सू.) **एतामेव निर्वपेत्** ॥ ९ ॥ ३ ॥ ३२ ॥ २३६४ ॥

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने दशमी खण्डिका

---

(भा) अस्मिन् वा निमित्ते ।

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये नवमप्रश्ने दशमी खण्डिका

---

(वृ) पाथिकृत्या निमित्तान्तरमुच्यते अस्मिन्निति । वा शब्दश्चार्थे

इति धूर्तस्वामिभाष्यवृत्तौ नवमप्रश्ने दशमी खण्डिका

---

[1] दाने–ग.घ. [2] सावकाशत्वात्–ग.घ. [3] प्रयोगाविशेष उक्तः–ग.घ.
[4] होमे तु–ग.

[विधेः सार्वत्रिकत्वे हेतूपपत्त्यादिविशदीकरणम्]

(रु) सामान्यवचनात्सार्वत्रिकोऽयं विधिः। पूर्वविधिविषये तु तेन बाध्यते। तथा यद्यनो रथो वाऽन्तराग्नी सदोहविर्धाने वा वीयात्पाथिकृतीं पूर्ववन्निर्वपेदिति सौमिकेनापि बाध्यते, तस्यापि सदोहविर्धाननिर्माणा-दूर्ध्वभावित्वेन विशिष्टविषयत्वात्। अथवा विकल्प एवास्य, द्वाभ्यां न सामान्यविशेषभावश्शाखाभेदात्। तथा सत्याषाढभारद्वाजाभ्यां पूर्व-विधिमुक्त्वाऽनन्तरमुक्तम्। 'यद्यनो वाऽन्तराग्नी वीयादित्येकेषाम्' 'न कालमवधारयति' इति। समानोऽयं विधिरजस्रेऽप्यविशेषात्। बह्वृचा स्त्वत्राधीयते, यस्य गार्हपत्याहवनीयावपरेण अनो वा रथो वाऽश्वो वा प्रतिपद्येत का तत्र प्रायश्चित्तिरिति चेत्; नैतन्मनसि कुर्यादित्याहुः, आत्मन्यस्य हिता भवन्तीति। तच्चेत्पूर्ववत्कुर्वीत गार्हपत्यादविच्छिन्ना-मुदकधारां हरेत् 'तन्तुं तन्वन्रजसो भानुमन्विहि' इत्याहवनीयात्, सा तत्र प्रायश्चित्तिरिति। पूर्ववदिति पथोऽन्तिकाद्बर्हिराहरेदनड्वान्दक्षिणेति विधिनेत्यर्थः॥

इति श्री भट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
नवमप्रश्ने दशमी खण्डिका

---

[अन्यथाऽनुष्ठितयोः स्तोत्रशस्त्रयोः प्रयोगस्य
समाप्तावसमाप्तौ चानुष्ठेयोंऽशः]

(सू) स्तोत्रे शस्त्रे वा मूढे ॥ ९ ॥ ३ ॥ ३३ ॥ २३६५ ॥

(भा) अन्यथाक्रिया मोहः स्तोत्रशस्त्रयोः[1]। यदि त्वपरिहिते संनिदधाति तदा सर्वप्रायश्चित्तम्। दक्षिणा बर्हिश्च प्रस[2]ज्यते यद्यन्य-तन्त्र पाथिकृती॥

---

[1] योः पाथिकृत्परिहिते—घ. [2] प्रसज्येत—च.

(वृ) यदि तु–त्तम्– मूढ इति निर्देशादन्यथाकृतरूपेणैव स्तोत्रप्रयोगे परिसमाप्ते इष्टिः, असमाप्ते समाहिते सर्वप्रायश्चित्तम्, ऋक्सामभ्रे[1]षप्रायश्चित्तं च ।

[स्तोत्रशस्त्रयोस्सोमाङ्गत्वेन अङ्गवैकल्यसमाधानायान्तराऽनुष्ठेयविशेषांशविवरणम्]

दक्षिणा–प्रसज्यते—अस्यार्थः ;—स्तोत्रशस्त्रयोः सोमाङ्गत्वादङ्गवैकल्यसमाधानार्थं मध्ये कर्तव्यत्वान्नैमित्तिकेष्टिस्सवनीयतन्त्रप्रयोगे सत्यप्रयुक्तैष्टिकपात्रप्रयोगादि निरुप्य लेपनिन[2]यनान्ते यागादिचतुर्धाकरणभक्षणा[3]न्तम् । ततो [4]ग्रहादियागः । रथादियाने तु पाथिकृतीप्राप्तौ सत्यामपि[5] अङ्गवैकल्यसमाधानार्थत्वाभावात् 'यस्य यज्ञ प्रतते' इति निषेधाद्दक्षिणाभेदाच्च पृथक्प्रयोगः पाथिकृत्याः ।

[कर्मणि समाप्ते आहवनीयस्यादृष्टरूपनिष्पत्तिं सदृष्टान्तमुपपाद्य तत्र भाष्यकारोक्तिसंवादकथनम्]

किंच आहवनीयस्यादृष्टरूपसिद्धिर्मन्त्रवत्प्रणयनादेवेति तत्रानुगते[6]ष्टिवत्पाथिकृत्याः प्रयोगः समाप्ते कर्मणि ; इह तु अङ्गसाकल्यसंपादनार्थत्वात्प्रयोगमध्य एव युक्ता । अत एव 'यद्यनो वा रथो वाऽन्तरामी' इत्यत्र सोममध्ये कर्तव्यत्वान्न तद्दक्षिणेति भाष्यकारो वक्ष्यति।

यद्यन्यतन्त्रे पाथिकृती—सवनीय[7]पशुब्राह्मण[8]भोजनादूर्ध्वं सोमातिरेकनिमित्तस्तोत्रादिभ्रेषतन्त्रमध्यत्वाभावात् कृत्स्न[9]मन्त्रप्रयुक्त्यर्थं यदिशब्दः ॥

---

[1] षनिमित्तं–घ. [2] यनादि एते यागा–घ. [3] णानन्तरम्–ग. घ. [4] ग्रहयागादि–क. ग. घ. [5] मपि नाङ्गवै–क. [6] तेष्टिस्समाप्ते कर्मणि पाथि–ख. ग. घ. [7] पशुकाल वा–ख. ग. घ. [8] तर्पणा–ग. घ. [9] तन्त्रप्र–ग. घ.

[ स्तोत्रशस्त्रैकदेशाप्रतिभानान्यथाप्रतिभानसर्वाप्रतिभानोत्त्रेयांशः]

(रु) स्तोत्रशस्त्रयोरवयवस्याप्रतिभानं वा मोहः। तत्राप्येतामेवेष्टिं निर्वपेत्। यद्यासमाप्तेरप्रतिसंहिते भवतः। प्रतिसन्धाने नेष्यते। सर्वाप्रतिभाने तु हुत्वा सर्वप्रायश्चित्तं तदेव प्रतिभावद्भिः प्रतिभावनीयम् ॥

[अग्निव्यवायोत्त्रेयोंऽशः]

(सू) **यस्य वाऽग्निभिरग्नीन् व्यवेयुर्यो वा व्यवेयात्**
**॥ ९ ॥ ३ ॥ ३४ ॥ २३६६ ॥**

(भा) अग्निभिर्लौकिकैर्वैदिकैर्वा [1]स्वानग्नीन् व्यवेयुः; अन्तरा नयते [2]एकेनाप्यग्निना व्यवायः। अन्ये त्वाहुः—वैदिकैरेव व्यवाये; वैदिकत्वसामान्यात्। योऽप्यग्निं नयति तस्यापि यो वा व्यवेयादिति पाथिकृती। न तु यो लौकिकं नयति तस्येष्टिराहिताग्नेरपि ॥

(वृ) **यस्य—व्यवेयुः**—यस्याग्नीन् परे स्वैरग्निभिर्व्यवेयुः—अन्तरा नयेयुः।

**अन्तरा—व्यवायः**—औपासनादिनाऽपि; अग्निव्यवायमात्रस्य विवक्षितत्वात्।

**अन्ये—मान्यात्**—'यस्य वा अग्निभिरग्नीन्' इति अग्निबहुत्वेन निर्देशाद्वैदिकत्वावगतेः तत्सामान्याच्छ्रौतैरेव व्यवाये।

**योऽप्यग्निं—कृती**—यो व्यवेयादेतामेव निर्वपेदित्यन्वयात्। समारूढविषयेऽप्यात्मन्यरण्योर्वाऽन्तरा गमनेऽपि पाथिकृतीति केचित्। प्रत्यक्षाग्निभिरित्यन्ये।

---

[1] सर्वानग्नीन्—**क.** योऽग्नीन् व्य—**ङ.** [2] श्रौतेना—**ग. घ.**

**न तु यो–ग्नेरपि**—व्यवधाननिमित्ताग्निदोषपरिहारार्थत्वादिष्टेः [1]नीयमानस्य च लौकिकाग्नेर्दोषाभावात् आहिताग्नेरिष्टिसंभवेऽपि प्रयोजनाभावान्न भवतीष्टिः; अत्रेष्टितन्त्रमध्ये व्यवायश्चेत्तन्त्रप्रसङ्गः। दर्वीहोममध्ये चेत्तस्मिन् समाप्ते पाथिकृती ॥

(रु) एतामेव निर्वपेदित्यनुषङ्गः अग्निभिरिति जात्याख्यायां बहुवचनं, संसर्गित्वाद्वा। यस्याग्नीन्विहृतान् परास्स्वेनाग्निना समारूढेनासमारूढेन वा व्यवेयाद्व्यवदध्यात्तस्येयमिष्टिः। यश्चैवं व्यवेयात्तस्यापि लौकिकाग्निना व्यवेताग्नेरपीत्यन्ये ॥

**[पराग्निविशिष्टस्वाग्निविहारे गार्हपत्यसंसर्गादौ पाथिकृती, संसर्गेष्टिश्च]**

(सू) **यस्य वाऽग्निभिरग्नीन् विहरेयुः ॥ ९ ॥ ३ ॥ ३५ ॥ ॥ २३६७ ॥**

(भा) यस्य पराग्निभिस्सह स्वानग्नीन् विहरेयुः सह प्रयातानां गार्हपत्य संसर्गे वा; अथवा परगार्हपत्ये वा यो गार्हपत्यमुपावरोहयति अज्ञानतो विहरति वा तत्र पाथिकृती, संसर्गेष्टिश्च, यस्याहिताग्नेरन्यैरग्निभिरिति ॥

(वृ) **यस्य पराग्नि–रेयुः**—एतां पाथिकृतीं निर्वपेत् ॥

**सह प्रया–संसर्गे**—पराग्निर्विद्यते इत्यज्ञानात् स्वाग्नेरेकस्य द्वयोर्बहूनां वा उपरि विहरणात्संसर्गे पाथिकृती। अविहृतावस्थायां गार्हपत्यमात्रसंसर्गो वा, अथवा ॥

**परगार्ह–विहरति वा**—लौकिकबुद्ध्याऽऽत्मसमारूढाग्निमुपावरोहयति परगार्हपत्ये। यद्वा परगार्हपत्ये स्वाऽऽहवनीयं विहरति तत्र सर्वत्र पाथिकृती ॥

---

[1] व्यवधीयमानस्य–क.

**संसर्गे-ग्निभिरिति**—पराग्निषु स्वाग्निविहरणनिमित्ता पाथिकृती ऋत्विजा यजमानेन वा विहरणे कृते अग्न्यन्तरसंसर्गात्संसर्गेष्टिश्च; यस्याग्निषु विहरणं तस्य संसर्गेष्टिरेव। अत्रोभावग्नी विभज्योभाविष्टिं कुरुत इति केचित्॥

[तत्र मतभेदाः]

अन्ये तु संसृष्टाग्नी स्वारण्योः पृथक्समारोप्य मथित्वा पृथगिष्टिं कुरुत इत्याहुः। अत्र यस्य पराग्निभिरिति व्याख्यानाद्व्यवायेऽपि यो व्यवेयादिति निर्देशादुभयत्र पराग्निव्यवायसंसर्गनिमित्तमेव प्रायश्चित्तम्। न तु स्वकीयलौकिकवैदिकव्यवाये; तत्र सर्वप्रायश्चित्तमिति। केचित् तत्रापि पाथिकृती कर्तव्येत्याहुः॥

(रु) पूर्ववदनुषङ्गः। बहूनां सह प्रयाणादौ प्रमादाद्यस्याग्निं पराग्निना सह निदध्युः, स्वं तस्मिन्नुपावरोहन्ति वा तस्यापि विहर्तुरियमिष्टिर्भवति। संसर्गेष्टिश्च संसर्गनिमित्ता, इतरस्य तु संसर्गेष्टिरेवाग्निविहरणाभावात्। तत्रापि समारोपणेन विविक्तेऽग्न्याविष्टिः॥

(सू) **एतां जने प्रमीतस्य ॥ ९ ॥ ३ ॥ ३६ ॥ २३६८ ॥**

(भा) एतामेव विजने प्रमीतस्य-देशान्तरे प्रमीतस्य विप्रयुक्तस्याग्निभिः॥

(वृ) **एतामे-ग्निभिः**—पाथिकृतीं कुर्यात्॥

(सू) **तस्य ॥ ९ ॥ ३ ॥ ३७ ॥ २३६९ ॥**

(भा) तस्येत्येतावदेकं सूत्रमध्याहारसापेक्षम्। तस्य मत इति श्रुते गृहे पाथिकृती॥

(वृ) **तस्य–कृती**—पत्नी[1]प्रवृत्तैः ऋत्विग्भिः कार्या। पत्न्यनुमत्याऽध्वर्युरुद्देश्यत्यागं कुर्यात्; सर्वस्वारे आर्भवादुपरितनयागवत्। पत्न्येव दक्षिणां ददाति। इडासूक्तवाकादिष्वाशिषां निवृत्तिः। केचिद्याजमानेषु करणमन्त्रानध्वर्युः करोतीत्याहुः पाथिकृतेऽध्वर्युरेव पितृमेधान्तं कुर्यात्। पाथिकृतो विहरणकाल एव पत्नय[2]ध्वर्यू पितृमेधान्तकर्मा[3]र्थतया संकल्पं कुर्याताम्॥

(रु) जने प्रमीतस्य देशान्तरे मृतस्य मरणश्रवणानन्तरं गृहेष्वेतामिष्टिं निर्वपेत्। भारद्वाजस्त्वत्रानुग्रहमाह, प्राचीनावीती पूर्णाहुतिं जुहुयादित्येके इति॥

[सायंप्रातः होमद्रव्यविशेषकथनम्]

(सू) **अभिवान्यवत्सायै पयसाऽग्निहोत्रं जुहुयादाशरीरस्याग्निभिस्संस्पर्शनात्॥ ९॥ ३॥ ३८॥ २३७०॥**

(भा) अभिवान्यवत्सा–मृतवत्सा या परवत्सेन दुह्यते। तस्याः क्षीरेण होमस्सायंप्रातः; यावदा[4]नीय शरीरमग्निभिर्दह्यते तैलद्रोण्यामवधाय शकटेनाहरन्ति[5]। निर्मन्थ्येन वा दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य अहतेन वाससा प्रच्छाद्य दीर्घवंशेषु प्रबध्यानधो निदधानाः प्रयता मृन्मयभाजना आहरन्ति। तानि ग्राममर्यादायां प्रतिष्ठाप्य पाथिकृती [6]विहरण एव पितृमेधान्तम्॥

[पाथिकृदग्निहोत्रादीनामनुष्ठाने विशेषः]

(वृ) **पाथिकृती–धान्तम्**—एष पैतृमेधिकः प्रयोग उक्तः। येन प्रमीतस्या[7]शरीराग्निभिरिति देशान्तरमृतिनिमित्तप्रयोगस्याग्निदाहपर्य-

---

[1] प्रयुक्तैः–घ. [2] पत्न्या–घ. [3] र्थितया–घ. [4] दानीयते–ङ, दानीयस्य शरीर–क, दस्य शरीर. [5] न्तीति–ङ. [6] विहार एव–क. [7] रीरस्याग्नि–क.

न्तत्वा[1]त्पाथिकृदग्निहोत्रादीनामपि तत्प्रयोगविशेषरूपत्वात् पथिकृ-द्विहार एव पितृमेधान्तं कर्तव्यम् । अतः पथिकृत्प्रभृत्याऽऽहवनीयादेरपि धारणम् । तथा पितृमे[2]धेऽप्येतस्मिन्नेव विहार इति वक्ष्यति ॥

(रु) व्याख्याताऽभिवान्यवत्सा । तस्याः पयसाग्निहोत्रं जुहुयादा-शरीरदाहात् । यद्यपि तद्यावज्जीवं श्रुतं, तथापि वचनाद्धूयते । निवर्ततेऽन्यत्सर्वं । बाह्वृच्ये त्वेवमेव मृताग्निहोत्रमुक्तोक्तम् । अथा-प्याहुतेरेव वैनानजुह्वत इन्धीरन्नाशरीराणामाहर्तोरिति ॥

(सू) सर्वं तूष्णीं क्रियेत ॥ ९ ॥ ३ ॥ ३९ ॥ २६७१ ॥

(भा) सर्वं साङ्गं तूष्णीम् ॥

(रु) गतः ॥

(सू) प्राचीनावीती दोहयति ॥ ९ ॥ ३ ॥ ४० ॥ २३७२ ॥

(भा) दोग्धारमपि दोहयति प्राचीनावीती । सर्वस्य मृतहोमान्तस्य पित्रर्थत्वात् । 'उपरि हि देवेभ्यो धारयति' इति लिङ्गात् ॥

(वृ) **दोग्धारमपि—वीती**—दोग्धाऽपि प्राचीनावीती तूष्णीम् ॥

**सर्वस्य—त्वात्**—प्राचीनावीतं सर्वत्र ॥

**उपरि हि—ङ्गात्**—अस्यार्थः ;—अधस्तात्समिद्धारणहेतुत्वेन 'उपरि हि देवेभ्य' इति निर्देशात् देवतार्थ[3]होमाद्भिन्नरूपत्वेनास्यार्थवत्त्वा-भ्युपगमान्मृतहोमान्तं पितृमेधम् । अग्निहोत्रस्याग्निरक्षणार्थताऽपि, तत ऊर्ध्वं पितृमेधः ।

(रु) प्रदर्शनार्थं दोहग्रहणम् । प्राचीनावीत्येव सर्वत्र, पित्रर्थत्वात् । पित्रर्थत्वं चोपरि हि देवेभ्यो धारयतीति लिङ्गात् ॥

---

[1] त्पथि—घ [2] धो ह्येतस्मिन्—ख. ग. [3] होमार्थाद्भिन्न—ख. ग. घ,

[विहारस्य दक्षिणतः कर्तव्यांशाः]

(सू) ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान् कृत्वा दक्षिणाग्रे गार्हपत्यस्य शीते भस्मन्यधिश्रित्य दक्षि[1]णत उद्वास्य सकृदेव सर्वं तूष्णीमुन्नीयाधस्तात्समिधं धारयन् दक्षिणेन विहारमुद्रवति ॥ ९ ॥ ॥ ३ ॥ ४१ ॥ २३७३ ॥

उपरि हि देवेभ्यो धारयतीति विज्ञायते ॥ ९ ॥ ॥ ३ ॥ ४२ ॥ २३७४ ॥

(भा) ये पुरा पूर्वम् । उदगग्रा दर्भा दैवे होमे पश्चात्पुरस्ताच्च तान् दक्षिणाग्रान् [2]कृत्वा । विधिमात्रमधिश्रयणम् । पाकविधिश्च [3]धर्ममात्रम् । तूष्णीमुन्नीयेति पुनर्वचनं लौकिकवा[4]ङ्निवृत्त्यर्थम् । दक्षिणेन विहारं दक्षिणाग्नेरपि दक्षिणतो गच्छति ।

(वृ) विधि–यणम्—शीते भस्मनि विधानात् ।

पाकविधिश्च—प्रतिषेकप्राप्त्यर्थम् । अभिद्योतनं भवति 'यच्छृतꣳ हविरनभिघारितम्' इति वाक्यशेषात् । पर्यग्निकरणं तु रक्षोहननार्थत्वाद्भवत्येव ॥

(रु) ये पुरोदञ्च इति–ये पूर्वमग्निहोत्रे परिस्तरणदर्भेषूदगग्रा इत्यर्थः । तूष्णीमुन्नीयेति पुनर्वचनमादरार्थं वाग्यमनार्थं वा, देवेभ्यो ह्युपरि धार्यते न पितृभ्य इत्यर्थः ॥

[तूष्णीमिति पदप्रयोगोऽग्नेयोंऽशः]

(सू) स उपसाद्य समिधमाधाय सकृदेव सर्वं तूष्णीं जुहुयात् ॥ ९ ॥ ३ ॥ ४३ ॥ २३७३ ॥

---

[1] दक्षिणोद्वास्य–रु. [2] करोति–ग. घ. [3] इदं पदं ङ. पुस्तके नास्ति.
[4] वाद निवृ–क. ट. वाक्यादनि–चा.

(भा) पुनस्तूष्णीं वचनं होमस्य विकल्पेनाहुतिद्वयविधानार्थम् ॥

(वृ) **पुनः–नार्थम्**—अपि वा सोमं पितृमन्तमिति मन्त्रवदाहुतिद्वयविधाने सति प्रधानहोमे तूष्णीकत्वबाधप्रसङ्गात्, तत्परिहारार्थं पुनस्तूष्णीमिति विधानम् ॥

(रु) पुनस्तूष्णीं वचनमुत्तरविधिविकल्पार्थम् ॥

[मन्त्रवत्पक्षे आहुतिद्वयमात्रस्यैव समन्त्रकत्वं अन्यस्यामन्त्रकत्वम्]

(सू) **अपि वा सोमं पितृमन्तं पूर्वस्यामाहुत्यामुपलक्षयेत् । अग्निं कव्यवाहनमुत्तरस्याम् ॥ ९॥ ३ ॥ ॥ ४४ ॥ २३७६ ॥**

(भा) मन्त्रवत्पक्षे 'सोमाय पितृमते [1] स्वाहा' इति पूर्वाहुतिः । 'अग्नये कव्यवाहनाय स्वाहा' इत्युत्तराहुतिः । सर्वं त्वन्यत्तूष्णीमेव ।

(वृ) **सोमाय–हुतिः**—अपि वा सोमं पितृमन्तमिति देवताविधानाद्धोमे च चतुर्थ्यन्तेन निर्देशः ॥

(रु) 'सोमाय पितृमते स्वाहा' इत्युपलक्षयेत्पूर्वस्याम् । 'अग्नये कव्यवाहनाय स्वाहा' इत्युत्तरस्याम् ॥

[तत्र प्राशनोत्सेचनादिनिषेधः]

(सू) **प्राशनोत्सेचनपरिषेचनानि न विद्यन्ते ॥ ९ ॥ ॥ ३ ॥ ४५ ॥ २३७७ ॥**

(भा) प्राशनं चोत्सेचनं च परिषेचनं च प्राशनोत्सेचनपरिषेचनानि, तान्येतस्मिन् होमे न विद्यन्ते, प्राशनादीनि त्रीण्यपि न विद्यन्ते ।

[1] स्वाहा अग्नये–ङ.

[1]उत्सेचनं नाम उच्छिष्टभाजो जिन्वेत्येवमादीन्युदकसाध्यानि विप्रुषां शान्तिरसीत्येवमन्ता[2]नि न क्रियन्ते। चतुर्थी पूरयित्वेत्येवमादीनि विप्रुषां शान्तिरसीत्येवमन्तानि न क्रियन्ते न्यायेन। उत्सेचनानामेव निवृत्तिः। परिषेचनं च सह धारया निवर्तते, धारायाः परिषेचनाङ्गत्वात्। न च प्रक्षालनमाद्भिः अग्निहोत्रहवण्याः, अभक्षितत्वात्। स्रुक्प्रतितपनादि सर्वं [3]तूष्णीम्। अन्त्येऽग्निहोत्रे अग्निहोत्रस्थाल्यां तृणमकृत्वाऽनुप्रहरणं नाक्षितमुत्क्षित्या इति [4]निनयनम्।

(वृ) उत्सेचना-क्रियन्ते—उदकक्षेपणस्यैवमन्तत्वात्।

चतुर्थी—न्यायेन—[5]निनयनानामुत्सेचनशब्देन विधानाभावात्।

(रु) लेपप्राशनादीपि त्रीण्यसि न विद्यन्ते। तथोदकोत्सेचनान्युच्छिष्टभाजो जिन्वेत्यादीनि। तथोभयतः परिषेचने सहधारया च। तदङ्गत्वात्। अन्यत्क्रियते। गृहे प्रमीतस्याप्यर्वाक्पितृमेधादयमेव विधिर्न्यायसाम्याद्द्रष्टव्यः। अत्र भारद्वाजः। आहिताग्निं जने प्रमीतं तैलद्रोण्यामवक्षिप्य शकटेनाहरन्ति। निर्मन्थ्येन वा दग्ध्वा कृष्णाजिनेऽस्थीन्युद्धृत्योपनह्याहतेन वाससा दीर्घवंशे प्रबध्यानधो निदधानाः प्रयता मृन्मयभोजना आहरन्ति। तानि ग्राममर्यादायां प्रतिष्ठाप्याग्नीन् पैतृमेधिकं च भाण्डं निर्हरन्तीति॥

(सू) ब्राह्मणेभ्यो यज्ञायुधानि ददाति॥९॥३॥
॥४६॥२३७८॥

---

[1] उत्सेचनाद्यु—ख. ग. घ. उत्सेचनमु—क. उत्सेचनान्युच्छि—च.
[2] न्तानि क्रियन्ते—क. ग. घ. ङ. च. [3] तूष्णीम्। अग्निहोत्रस्थाल्यां—ङ. च.
[4] निधनं—क. [5] निनयनादुत्से—ख. ग.

(भा) आनीते यजमाने ब्राह्मणेभ्यो यज्ञपात्राणि पत्नी ददाति । न पात्र[1]चयः । उपयुक्तैरपि पात्रैस्तेषां क्रिया लभ्यते, दानविधानात् ॥

(वृ) **आनीते-ददाति**—यज्ञायुधानीत्यविशेषवचनेन सर्वपात्राणां प्रदेयत्वान्मृतहोमे समाप्तेऽग्निहोत्रपात्राणां प्रदानस्य युक्तत्वादानीते यजमान इत्युक्तम् ।

**न पात्रचयः**—आनीते शरीरे [2]विधानविधानात् ।

**उपयुक्तैः-धानात्**—दानविधानस्य दृष्टार्थत्वाय प्रतिग्रहीतॄणां तैः पात्रैः क्रियानुष्ठानं युक्तम् । अतएव निरिष्टकदोषो नास्ति, अन्यार्थतादोषश्च । तस्मादाहिताग्निभ्यः प्रणष्टपात्रेभ्यो दानं युक्तम् ।

(रु) पात्रप्रतिपत्तिकाले तानि पत्नी पुत्रो वा ब्राह्मणेभ्यो ददाति, वचनादेवं ज्ञायते प्रतिग्रहीतुरप्युपयोज्यान्येवेति ॥

(सू) **ददात्येवायस्मयानि ॥ ९ ॥ ३ ॥ ४७ ॥**
**॥ २३७९ ॥**

(भा) अथवा अयस्मयानि लोहमयान्येव ददाति अर्थकृतान्यपि संदंशादीनि ।

(वृ) **लोह-दीनि च**—ददात्येवायस्मयानीति पक्षान्तरम् । पूर्वमविशेषेण सर्वेषां दानविधानात् ।

(रु) यदयोमयमसिदः स्वधितिरित्यादि तद्ददात्येव । ददाति वा चिनोति वा इतरयज्ञायुधानीति भावः । परमतनिरासार्थं वाऽवधारणम् । यथाह भारद्वाजः । पुत्रस्य दृषत्स्यादायसं चेति ॥

(सू) **अपो मृन्मयान्यभ्यवहरन्त्यमैव ॥ ९ ॥ ३ ॥**
**॥ ४८ ॥ २३८० ॥**

---

[1] चयनं-क. [2] पिहिन-क. विधानविधानत्वात्-ख. ग.

(भा) मृन्मयानि चापोऽभ्यवहरन्ति अमैव सहैव सर्वाणि क्षिपन्ति ।

(वृ) अमैव—इति वाक्यसमाप्तिः सहैव सर्वाणि क्षिपति मृन्मयान्यप्सु ।

(रु) अमैव सहैव सर्वाण्यप्सु क्षिपेत् ॥

[छान्दोग्यषड्विंशब्राह्मणव्याख्याकृदुक्तहोमाद्युपपादनम्]

(सू) **पुत्रस्य दृषत्स्यात् ॥ ९ ॥ ३ ॥ ४९ ॥ २३८१ ॥**

(भा) [1]दृषत्पेषकः; पुत्राय प्रदीयते । अन्यैः पात्रैश्च[2]यनम् । यावज्जीवश्चु[3]तेस्तस्य नित्यानि निवर्तन्ते । अग्निहोत्रहो[4]म एव कर्तव्यः; रक्षणवचनात् । अविप्रयुक्तस्या[5]ग्निभिर्मृतस्य काले प्राप्ते हूयत एवाग्निहोत्रमेवंलक्षण[6]मग्निगुप्त्यर्थत्वात् । चतूरात्रमहूयमानोऽग्निर्लौकिकः संपद्यते इति अनुपदकारेणापि चानेन न्यायेन यावदस्थि[7]होमो न क्रियते न तावन्मृतहोमो बद्धः ॥

(वृ) **अन्ये–यनम्**—द्वितीयपक्षे [8]अन्यैः–दारुमयैः पात्रैश्चयः ।

**यावज्जी–र्तन्ते**—दर्शपूर्णमासादीनि शरीरानयनादर्वाक्कालसन्निपातेऽपि यद्यपि पत्नी जीवति तथापि तस्याः पृथक्प्रयोगासंभवान्नित्यानां निवृत्तिः ।

**अग्निहोत्र–चनात्**—अस्यार्थः ;–जीवनाधिकाराभावेऽपि यावदग्नीनां प्रतिपत्तिस्तावद्धोमः कर्तव्यः, अग्निरक्षणार्थत्वात् ।

**अविप्र–क्षणम्**—अग्निसन्निधौ मृतस्यापि यावत्पितृमेधारम्भमग्निहोत्रहोमः पूर्वोक्तप्रकारेण सर्वं तूष्णीमिति प्रकारेण कर्तव्यः ।

---

[1] दृषत्पुत्रस्य दीयते–**च**. [2] चयः–**ङ**. [3] तेः मृतस्य नित्यानि–**च**. [4] होमस्तस्यैव शिक्षण–**च**. [5] स्याग्निभि–**च**. [6] मग्नेर्गु–**च**. [7] यज्ञो न क्रियते ताव–**ग. घ. ङ. च**. [8] अन्यैः पात्रचयः दारुमयैः–**ग. घ.**

**अग्निगुप्त्यर्थत्वात्**—अग्निहोत्रहोमस्य।

**अनुपद-बद्धः**—अभ्यार्थः ;—अनुपदकारः छान्दोग्यषड्विंश-ब्राह्मणव्याख्याकारः। तेन सत्रे दीक्षितमरणे संवत्सरेऽस्थीनि याज[1]ये-दित्यत्र मृतहोम उक्तः॥

(रु) दृषत्, पट्टः। दृषदुपलाश्मादि पुत्रस्य स्यादित्यर्थः। तथा चाश्ममयानीत्येव कात्यायनः॥

[अमृते मृत इति श्रुते कर्तव्यविशेषांशः]

**(सू) यद्यप्रमीतं प्रमीतमुपशृणुयुरग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेत् ॥९॥३॥५०॥ ॥२३८२॥**

(भा) अमृ[2]तो मृत [3]इति श्रूयते यदि पुनर्जीवतीति श्रुत [4]आगतो वा सुरभिमती[5], यदि भ्रियन्तेऽग्नयः। [6]यस्य विनि(न)ष्टाः यस्य वोभावनुगताविति वा[7]। अन्येनापि प्रकारेण पितृमेधार्थो वा संसर्गः। अविनष्टेषु संसर्गेष्टय एव, [8]विनष्टेषु कृत्वाग्न्याधेयं संसर्गेष्टयः। अग्नये सुरभिमते अग्ने सुरभिमन् अग्निं सुरभिमन्तं अग्नेः सुरभिमतः अग्निः सुरभिमानिदम्। [9]'अग्निर्होता निषसादा, साध्वीमकर्देववीतिम्' इति॥

(वृ) **अमृतो-ष्टय एव**—अमृते मृत इति श्रुते पुत्रादिभिः पलाश-वृन्तादिना पितृमेधे कृते संसृष्टेष्वग्निषु अमृत इति श्रुते आगते वा यज[10]मान विनष्टेष्वग्निषु घृतकुम्भादुन्मज्जनजातकर्मादि कृत्वा पुनस्तामेव

---

[1] येयुरित्यत्र—घ. [2] तो यदि मृत इति--घ. [3] यदि श्रूयते पुत्रादिभिः—ङ. [4] आगते वा—क. ग. ङ. घ. च. [5] मते—ज.घ. [6] यदि वि—च. [7] वान्येन प्रकारेणोत्सर्गेष्टयादिना तदाधानं कृत्वा सुरभिमत इष्टिः पितृमेधा—ग. घ. [8] ष्टेषु कृत्वा-क. च. [9] क्वाचित्कः पाठः. [10] माने अविनष्टे—क.

पत्नीमुद्वाहेन संस्कृत्य संसर्गेष्टिं कृत्वा पुनर्विहृत्य सुरभिमते संसर्गेष्ट्य एवेत्यवधारणं आधाननिवृत्त्यर्थम् ; न सुरभिमत इष्टेः ।

**विनष्टेषु–ष्टयः**—पितृमेधे कृते अनुगतेष्वग्निषु आधानं कृत्वा संसर्गेष्टयस्तिस्र एका वा मिथो वेति । अत्रापि घृत[1]कुम्भादुन्मज्जनादि कृत्वा आधाय संसर्गेष्टिं सुरभिमते च कृत्वा व्रात्येन पशुनैन्द्राग्नेन यजेतेति पितृमेधे प्रक्रान्ते [2]असंसृष्टेष्वग्निषु यजमाने जीवतीति श्रुते आगते वा तदन्तं पितृमेधमुत्सृज्य सुरभिमत इष्टिः ।

**अग्नये–भिमान् वीतिमिति**—याज्यानुवाक्ये ॥

(रु) अमृतं मृतमुपश्रुत्य पुनरमरणे निर्णीतेऽग्नये सुरभिमते निर्वपेत् ॥

[पूर्वाहुतिसमानाधिकरणयजमानमरणोन्नयोंऽशः]

(सू) **यदि पूर्वस्यामाहुत्यां हुतायां यजमानो म्रियेत दक्षिणतश्शीते भस्मन्युत्तरामाहुतिं निनयेत् ॥ ९ ॥**

**॥ ३ ॥ ५१ ॥ २३८३ ॥**

**(भा)** हुतायां पूर्वाहुतौ यजमानमरणे दक्षिणतः आहवनीयस्य शान्ते भस्मन्युत्तराहुतिः[3] । कव्यवाहनस्य मृतहोमन्यायेन समाप्तिः ॥

**(वृ) कव्यवाहनस्येति**—मरणादूर्ध्वं मृतहोमप्रयोगस्य युक्तत्वात् प्राजापत्योत्तराहुतिर्न भवति । किन्तु सर्वं तूष्णीमिति । इह तु मन्त्र-प्रयोगस्य प्रकृतत्वात् कव्यवाहनमुत्तरस्यामित्येतद्भवति ।

**मृतहोमन्यायेन**—न च तूष्णीं शेषसमाप्तिः, प्राशनादि निवृत्तिश्च ॥

(रु) उत्तराहुत्यादेः कर्मशेषस्य मृतहोमन्यायेन समाप्तिर्वेदितव्या ॥

---

[1] कुम्भोन्मज्ज–ग. घ. [2] संस–ग. घ. [3] उत्तराहुत्यादेश्शेषस्य मृतहोमन्यायेन समाप्तिर्वेदितव्या.

[तत्र विकल्पः मतान्तरं च]

(सू.) भस्मोत्करं वा गमयेत् ॥ ९ ॥ ३ ॥ ५२ ॥ ॥ २३८४ ॥

(भा) भस्मोत्करं यत्राग्नीनामधिकं भस्मजातं [1]क्षिप्यते तत्रोत्तराहुतिः । उपदेशो गार्हपत्यभस्माऽऽहवनी[2]येन सहा[3]ऽऽनीयते नान्यादिति, न वा समाप्यते होमः ॥

(वृ) भस्मोत्करं वा गमयेदित्यस्यार्थान्तरं गमयेद्वा, गार्हपत्यभस्मचयमाहवनीयभस्मना सह संसृजेत् ॥

नान्यदिति—पूर्वाहुतेरुत्तरं न कर्तव्यमुत्तराहुत्यादि ॥

न वा—होमः—अग्निहोत्रहोमः पूर्वाहुत्यनन्तरं मरणे । किंतु

(रु) यत्राग्नीनां भस्मराशिर्निहितस्तत्र वा निनयेदित्यर्थः ॥

(सू) यैषा पितृमेधे प्रथमाहुतिस्तामेवात्र कुर्यादित्येके ॥ ९ ॥ ३ ॥ ५३ ॥ २३८५ ॥

(भा) यैषा पितृमेधे प्रथमाहुतिः परेयुवांसमिति, तामेवात्रास्यामुत्तराहुतौ कर्तव्यायामग्निहोत्रशेषेणैव जुहुयात्, नाज्येन । [4]प्रेतेऽमात्या इत्या[5]दि कृत्वान्वारब्धे मृतेऽग्निहोत्रशेषेणैव । ततो गार्हपत्ये स्रुवाहुतिप्रभृत्यविकृतम् ॥

केचित्त्वाहुः—आज्येनैव स्रुवाहुतिः । पितृमेधे या तामेवात्रास्मिन् काले प्रेतेऽमात्या इत्येतदादि कृत्वा कुर्यात्, न समापयेदग्निहोत्रमिति ॥

(वृ) यैषा—शेषेणैव—परेयुवांसमिति कृत्वा ॥

[1] लक्ष्यते—ङ. [2] येनैव सह नीयते नान्येनेन—च. [3] समा च सह निनयते इति—ग. घ. [4] पूर्वाहुत्यन्तरं मरणे प्रेते—ग. घ. [5] इत्येतदादि—ग. घ. ङ. च.

**ततो गार्ह—विकृतम्**—ततो गार्हपत्ये आज्येन स्रुवाहुतिप्रभृत्यविकृतः पितृमेधः । यैषा पितृमेध इत्यस्यार्थान्तरमुच्यते ॥

**केचित्त्वाहुः—त्रमिति**—पूर्वाहुतेरूर्ध्वमग्निहोत्रमुत्सृजेत् पितृमेध एवाविकृत इति ॥

(रु) मरणानन्तरं वा पितृमेधमारभ्य यत्प्राक् परेयुवांसमिति स्रुवाहुतेस्तत्कृत्वा तामेवाहुतिमत्रोत्तराहुतिस्थानेऽग्निहोत्रशेषेण जुहुयात् । ततः प्रक्रान्तशेषमेव निवर्तयेन्न होमशेषमित्यर्थः । अथवा पितृमेधप्रसिद्धा यैषाऽऽहुतिस्तामेवाद्याहुतिमत्र कुर्यात्, उपेक्षिताग्निहोत्रशेषमित्यर्थः ॥

[इष्ट्यसमाप्त्यधिकरणसमानकालिकयजमानमरणोऽन्त्योंऽशः]

**(सू) यदि विसंस्थितायामिष्ट्यां यजमानो म्रियेत सर्वतस्समवदाय सर्वा देवता अनुद्रुत्य स्वाहाकारेण जुहुयात् ॥ ९ ॥ ३ ॥ ५४ ॥ २३८६ ॥**

(भा) विसंस्थितायाम्—अपरिसमाप्तायां यदि म्रियते यजमानः । सर्वतः—सर्वेभ्यः प्रधानहविर्भ्यः नाङ्गहविर्भ्यः यद्युत्पन्नानि समवदाय एकस्थानि गृहीत्वा जुह्वां सर्वा देवता अनुद्रुत्य स्वाहाकारेण जुहोति यद्यपि वषट्कारप्रदानाः, अग्नये प्रजापतयेऽग्नीषोमाभ्यां स्वाहा । अग्नय इन्द्राग्निभ्यां स्वाहा । अग्नये महेन्द्राय स्वाहा अग्नय इन्द्रायेति वा । न वैमृधः पृथगिष्टिरित्युपल[1]क्ष्यते, नान्या अङ्गदेवताः । सर्वेभ्यो हविर्भ्यस्सोमेभ्यश्चेति, तत्रोभयस्य वचनात् । [2]इह प्रधानयागार्थदेवतान्येव प्रधानानीति । दर्वीहोम इति न विधिरैष्टिकः । नाप्यङ्ग-

---

[1] युज्यते—ङ. [2] प्रधानदेवतान्येव—ग.

देवतानां होमः। पूर्वेद्युरपि मृते अनिष्पन्नेषु वा हविष्षु तूष्णीमुपचारेण प्रधानहविस्साधनं वचनात्। नान्यत्किञ्चित्॥

(वृ) **यदि तत्र-न**—प्रधानयागात्पूर्वम्। **यद्युत्पन्नानि**—अङ्गहवींषि।

**अनुद्गुत्य**—चतुर्थ्यन्तशब्देनानुद्रुत्य।

**यद्यपि-दानाः**—तथापि स्वाहाकारेणेति वचनात्तेन होमः सर्वान्ते स्वाहाकारः।

**अग्नये-स्वाहा**—इति पौर्णमास्याम्। अमावास्यायां तु--अग्नय इन्द्राग्निभ्यां स्वाहेति। नाङ्गहविर्भ्य इत्यस्यापवादः।

**न वैमृधः-ते**—पाक्षिकपृथक्प्रयोगेऽपि न तस्योपलक्षणम्।

**नान्या-ताः**—उपलक्ष्यन्ते।

**सर्वेभ्यो-चनात्**—अङ्गप्रधानहविषोर्निर्देशात्, इतरथा हविश्शब्दानर्थक्यप्रसंगात्। अतः।

**इह प्र-प्रधानानि**—हवींष्यवदेयानीति श्रुतेः।

**दर्वीहो-ष्टिकः**—स्वाहाकारेण जुहुयादिति श्रुतेः, अत एव

**नाप्य-होमः**—ऐष्टिकविधेरभावात्। **पूर्वे-ते**—उत्तरेद्युः।

**अनिष्ट-वचनात्**—इह प्रधानार्थवचनात् सर्वतस्समवादायेत्यवदाय होमविधिबलात् अनुत्पन्नप्रधानहविस्संपादनमप्याक्षिप्तं भवति।

**नान्यत्किञ्चित्**—कर्तव्यम्। मृते तु जीवदधिकारेष्टेरसंभवात् तूष्णीमुपचारेणेत्युक्तम्। इष्टिविकारेष्वप्येवम्॥

(रु) विसंस्थितायामारभ्यापरिसमाप्तायामिष्ट्यां मरणे यजमानस्य सर्वेभ्यः प्रधानहविर्भ्यो जुह्वां सह गृहीत्वा सर्वाः प्रधानदेवता अनुद्रुत्य दर्वीहोमधर्मेण जुहुयात्। यथा, अग्नये विष्णवेऽग्नीषोमाभ्यां स्वाहेत्यादि। तत्रावस्थाभेदेन संस्थाभेदास्समाम्नाता बाहृच्ये, यथा य आहिताग्नि-

रुपवसथे म्रियेत कथमस्य यज्ञस्स्यादिति । नैनं याजयेदित्याहुः अनभिप्राप्तो हि यज्ञं भवतीति । तथाऽधिश्रितेऽग्निहोत्रे सान्नाय्ये हविष्षु वा म्रियेत का तत्र प्रायश्चित्तिरिति । अत्रैवैतान्युपर्यादध्याद्यथा सर्वाणि संदह्येरन्निति । तथाऽऽसन्नेषु हविष्षु म्रियेत का तत्र प्रायश्चित्तिरिति । याभ्य एव देवताभ्यो हवींषि गृहीतानि भवन्ति ताभ्यस्स्वाहेत्येवैतान्याहवनीये सर्वाहुतिं जुहुयादिति । कात्यायनश्चाह, हविष्येषु चेदाह्रियमाणेषु मरणं दक्षिणाग्नावेनान्संदहेत् । न वा अयुक्तत्वात् । गार्हपत्ये ग्रहणादिप्रागासादनात् आसादनाद्याहवनीये मरणान्तं भवति । संस्थाप्यं वा प्रक्लृप्तत्वादिति । एवं सर्वेष्टिपशुषु द्रष्टव्यम् । सोमेऽप्याह भारद्वाजः यदि यज्ञे यजमानो म्रियेत कथं प्रेतेऽवस्था(प)नमिति, न विद्यत इत्याहुर्मरणान्ता यज्ञा भवन्तीत्यग्नयवभृथं कुर्वीत । यदि यज्ञे पत्नी म्रियेत निर्मन्थ्येन दग्ध्वा मार्जालीये भक्ष्यानुपवपेयुः आयज्ञापवर्गादिति । तथा यदि यज्ञे पत्नी म्रियेत प्रागवभृथादग्नयवभृथं कुर्वीरन् । अवभृथं वा गमयित्वा प्रोक्ष्यैनमभ्युदाहृत्य स्वैराग्निभिर्यथालोकन्दहेयुः एतावदेकाह इति । अग्नय(यज्ञा)वभृथ इत्यवभृथधर्मेणाग्निभिर्दहनमित्यर्थः । शाण्डिल्यगृह्येऽप्युक्तम् । जीवतः कर्मणि विसमाप्ते सति प्रेयान्मरणान्तमेकाहेषु नास्ति तस्य समापनमिति । केचित्तु सोमेषु मृते सर्वेभ्यो हविर्भ्यस्सोमेभ्यश्चेति विधिना सर्वहवींषि जुह्वति ॥

[प्रवासगतयजमानमृतौ तदीयाग्निभिस्तूष्णीं तृणवत्प्रदेशो दग्धव्यः नात्र पैतृमेधिकविधिरित्येतादृशपक्षोपपादनम् ]

(सू.) **यद्याहिताग्निः प्रोषितः प्रमीतो न प्रज्ञायेत यां दिशमभिप्रस्थितस्स्यात्तामस्याग्निभिः कक्षं दहेयुः ॥ ९ ॥ ३ ॥ ५५ ॥ २३८७ ॥**

(भा) प्रवासगतो यदि न ज्ञायेत क्व मृत इति यां दिशं प्रस्थितो भवेत् तां दिशं प्रति यः कक्षः अकृष्टो भूमिप्रदेशस्तृणवान् तं देशं दहेयुरस्य मृतस्याग्निभिस्तूष्णीम्, न [1]पैतृमेधिकविधिना ॥

(वृ) **न पैतृमेधिकविधिनेति**—शरीरतत्प्रतिनिध्याकृतिसंस्कारत्वाभावात् कक्षदहनस्य न पितृमेधविधिः। प्रेतमधिकृत्य विधानात्। अग्नीनां कक्षदहने विनियोगवचनादनेनैव दहनेन मृतस्य संस्कारविधिः कल्प्यते ॥

(रु) यदि प्रोषितो मृत इति न तावज्ज्ञायेत तत्त्वं मृत इति तदा गमनकाले यां दिशं प्रति प्रस्थितस्यात्तस्यां दिशि तदानीं यः कक्षः तमस्याग्निभिस्तूष्णीं दहेयुः ॥

[ तन्मृतावेव षष्ट्युत्तरत्रिशतपलाशदलैः कृष्णाजिने यथासङ्ख्यं पुरुषाकृतिग्रथनपूर्वकं तामग्निभिर्दहेत्पैतृमेधिकविधिनेति वाजसनेयिनां पक्षोपपादनम् ]

(सू) **अपि वा त्रीणि षष्टिशतानि पलाशवृन्तानां तैः कृष्णाजिने पुरुषाकृतिं कुर्वन्ति। पलाशवल्कैः कुशैर्वा सन्धिषु संवेष्ट्य चत्वारिंशता शिरः प्रकल्पयते। दशभिर्ग्रीवां विंशत्योरस्त्रिंशतोदरं पञ्चाशता पञ्चाशतैकैकं बाहुम्। ताभ्यामेव पञ्चभिः पञ्चभिरङ्गुलीरुपकल्पयते। सप्तत्या सप्तत्यैकैकं पादम्। ताभ्यामेव पञ्चभिः पञ्चभिरङ्गुलीरुपकल्पयते। अष्टाभिश्शिश्नम्। द्वादशभिर्वृषणम्। तैः कृष्णाजिने पुरुषाऽऽकृतिं कृत्वा स्नापयित्वाऽल-**

[1] पितृमेधविधिना—ग. ङ.

**कृत्यान्तर्वेदि कृष्णाजिनं दक्षिणाग्रीवमधरलोमाऽऽस्तीर्य तस्मिन्नेनमुत्तानं निपात्य पत्तोदशेनाहतेन वाससा प्रच्छाद्य बान्धवाः पर्युपविशन्ति। अभिमृशन्त्ययमस्यासौ यस्य त इमे अग्नय इति। प्रेतेऽमात्या इत्येतदादि कर्म प्रतिपद्यते। कृत्वा तामस्याग्निभिर्दहेयुरिति वाजसनेयकम् ॥ ९ ॥**

**॥ ३ ॥ ५६ ॥ २३८८ ॥**

(भा) अपि वा त्रीणि शतानि षष्ट्युत्तराणि, त्रीणि शतानि षष्टिश्चेत्यर्थः। पलाशवृन्तानाम्, वृन्ताः—पर्णानि यत्र तिष्ठन्ति। तैर्वृन्तैः कृष्णाजिने पुरुषाऽऽकृतिं करोति। पलाश[1]वल्कैः कुशैर्वा संन्धिषु संवेष्टयन्ति। चत्वारिंशता शिरो रचयन्ति, दशभिर्ग्रीवां, विंशत्योरः, त्रिंशतोदरं, पञ्चाशता पञ्चाशता एकैकं बाहुम्, तेषामेव पञ्चभिः पञ्चभिरङ्गुलीः, अष्टाभिश्शिश्नम्, द्वादशभिर्वृषणौ। स्नापयित्वाऽलंकृत्य अहतेन वाससा प्रच्छाद्यान्तर्वेदि निधाय बान्धवाः पर्युपविशन्ति। अयमस्यासौ यस्य त इमे अग्नय इति। ततः प्रेतेऽमात्या [2] इत्यादिस्सर्वः पितृमेधः। दहनाद्युदक[3]दानान्तमुभयत्र। ये त्वदाह्याः परिव्राजकाः तेषां मरणाद्युदकदानम्। ये च न शक्यन्ते दग्धुम्, तेषामाशौचं तु पूर्वमपि दहनात् दाह्यानाम्।

यजमानमर[4]णोपदिष्टं पत्नीमरणेऽपि, स्वामित्वाविशेषादिति न्यायः। नोपदेशः। अप्रज्ञातेऽपि यजमानमरणे इयमेव पाथिकृती ॥

(वृ) अपि वेत्यादिपितृमेधोक्तप्रकारस्य वाजसनेयकसिद्धतयाऽनुवादः।

[1] दलैः—क. [2] इत्येतदादि—ग. घ. ङ. [3] दानमु—ग. घ. [4] मरणे उप—ङ.

**वेष्टयन्ति**—बहुवचनात् बान्धवैर्ज्ञातिभिस्सह ।

**चत्वारिं–णौ**—एवं कृत्वा तां ।

**अन्त–य**—अन्तर्वेदि दक्षिणाशिरसम् ।

**अयम–य इति**—मन्त्रेण ।

**दहना–त्र**—सन्निधानमरणे दूरस्थमरणे च दग्ध्वा स्नानानन्तरमुदकविधानात् सन्निहितमरणे दहनोत्कर्षेऽपि दहनोत्तरकालमेवानुष्ठानमाशौचान्त्यदिवसे न प्रतिकृष्योदकदानम् ।

**ये न शक्यन्ते दग्धुम्**—अप्स्वुदकादिषु प्रमादान्मृताः ।

**तेषामा–नाम्**—मरणनिमित्तत्वादाशौचस्य दशाहं दशाहमाशौचमिति शवनिमित्तत्वाद्यद्यपि दहनाद्येव कर्तव्यमिति सत्याहिताग्निमरणे । तस्मात्स्मृतेः संस्कारनिमित्ताशौचविषयत्वम् । मरणनिमित्तं मरणाद्येवेति भाष्यकाराभिप्रायः ।

**यजमान–न्यायः**—जने प्रमीतस्येत्यादिषु नैमित्तिकानां यजमानमरणोपदिष्टानां पत्नीमरणेऽपि भाष्यकारेण प्रत्युपदेशात् पत्न्या अपि देशान्तरे मरणसंभवानुज्ञानात् अभिनिम्रोकाभ्युदयेष्वपि पत्न्या सीमालङ्घने नाग्नीनां लौकिकत्वमिति केचित् ।

अन्ये तु यजमानमरणोपदिष्टं पत्नीमरणेऽपीति ग्रन्थस्य शास्त्रान्तराविरुद्धपूर्वाहुत्यनन्तरमरणेष्टिमध्यमरणविषयत्वेनाप्युपपत्तेः पत्न्या अपि सन्निधिमरणे यावद्दहनं मृतहोमप्राप्तेश्च वक्तव्यत्वात् अस्य भाष्यस्य शास्त्रान्तराविरोधेन विषयवर्णना कर्तव्येत्याहुः ।

[उपदेशपक्षीयनिषेध्यविशेषांशोपपादनम् ]

(घ) **नोपदेशः** — स्वतन्त्रकर्तृभूतयजमानप्रयुक्तनैमित्तिकेऽनुमति - कर्तृत्वमात्रत्वात्पत्न्याः न स्वातन्त्र्येण नैमित्तिकप्रयोजकत्वं संभवति ।

तस्यां यावदुक्तमाशीर्ब्रह्मचर्यमिति न्यायात् । अत एव नाग्निभिर्विप्रयोगः पत्न्याः, पत्नीनां बह्वी[1]नामपि [2]तच्च प्रतिषिद्धम् ॥

['अप्रज्ञातेऽपि यजमानमरणे' इत्यादिभाष्याशय-
विवरणम्]

**अप्रज्ञाते-पाथिकृती—**प्रोषितः प्रमीतः इत्यत्राप्येतां जने प्रमीतस्येत्येतस्या इष्टेः प्राप्तिः। पत्न्या यजमानतुल्यनैमित्तिकत्वपक्षे अनेकपत्नीकस्य ज्येष्ठायां विद्यमानायां कनीयस्या मरणेऽग्निभिर्दाहः प्राप्तः, तच्च प्रतिषिद्धम्। ज्येष्ठामरणेऽपि चिन्त्यम् ॥

(रु) पलाशस्य वृन्तानि पलाशवृन्तानि। त्रीणि त्रीणि पलाशानि येषु काण्डेषु तिष्ठन्ति तानि वृन्तानीत्याचक्षते। तेषां षष्ट्यधिकानि त्रीणि शतान्युपक्लृप्तानि भवन्ति। तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तां वा दहेयुः। तस्या रचनाप्रकारः पितृमेधेन दाहश्च ; बाहुल्ये पितृमेधकल्पेषु न पृथक्पृथगुक्तस्तत्रतत्रैव द्रष्टव्यः ॥

[आसादितानां हविषां समीपे कृष्णशकुनेर्गमने
प्रायश्चित्तम्]

(सू) **यदि हवींष्यासन्नानि कृष्णशकुनिरुपर्युपर्यति-पतेत्पक्षाभ्यामाधून्वान इवाभि निषीदेद्वा 'इदं विष्णुर्विचक्रमे' इत्याहुतिं जुहुयात् ॥ ९ ॥ ३ ॥**
**॥ ५७ ॥ २३८९ ॥**

(भा) आसन्नान्यासादितानि। कृष्णशकुनिः—काकः। उपर्युपरि समीपे। यद्यतिपतति गच्छति। आधून्वान इव पक्षाभ्यां वायुर्यदि प्राप्नोति पक्षकृतः अभिनिषीदेद्वा हविषामुपरिष्टाद्यदि तिष्ठति तत इदं विष्णुर्विचक्रम इत्याहुतिः हविषां चोत्पत्तिर्यदि स्पृशति ॥

---

[1] मासिद्ध-ग. घ. [2] तच्च तत्र-घ.

(वृ) अभिनि-तिष्ठति—कृष्णशकुनिः।

ततः-शति—कृष्णशकुनिस्पर्शने व्यापन्नमप्सु प्रक्षिप्य स्रुगादानप्रभृति समन्त्रकं हविरुत्पाद्य यागः॥

(रु) कृष्णशकुनिः काकः। स हविषामासन्नानामुपरि पक्षवायुना वीजमान उप समीपतो गच्छेत्तेषामुपरि निषीदेद्वा तत्र वैष्णव्या जुहुयात्। तत्संसृष्टं हविरप्सु प्रक्षिप्यान्यमुत्पादयेच्च॥

(सू) यद्युच्चैः पतेन्न तदाद्रियेत ॥९॥३॥५८॥ ॥२३९०॥

(भा) यद्युच्चैः पतेत् दूरेण[1] गच्छेत् न तत्रादरः प्रायश्चित्तं नास्ति (सर्वप्रायश्चित्तमपि नास्ति)

(रु) यदि दूरतो गच्छेन्न तत्र प्रायश्चित्तमित्यर्थः॥

(सू) यद्युच्छ्रियमाणो यूपश्चषालं वा पद्येत ब्रह्मप्रतिष्ठा मनस इत्याहुतिं जुहुयात् ॥९॥३॥५९॥ ॥२३९१॥

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने एकादशी खण्डिका

---

(भा) उच्छ्रियमाणो यूपः पतेत् चषालं वा ब्रह्मप्रतिष्ठेत्याहुतिः। उच्छ्रितस्य पतने सर्वप्रायश्चित्तम्॥

इति धूर्तस्वामिभाष्ये नवमप्रश्ने एकादशी खण्डिका

---

(वृ) पतेत्–भूमौ।

प्रायश्चित्तम्–पुनरुच्छ्रयणं च।

इति धूर्तस्वामिभाष्यवृत्तौ नवमप्रश्ने एकादशी खण्डिका

---

[1] णा गच्छेत्–क.

(रु) पद्येत पतेत् ।

इति भट्टश्रीरुद्रदत्तविरचितायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां तृतीये पटले एकादशी खण्डिका

---

[हविश्शेषोद्वासनाभावकालेऽग्नेयोंऽशः]

(सू) यदि हविश्शेषाननुद्वासितानन्याजैरभ्याश्रावयेत् 'यद्वो देवा अतिपादयानि, इत्याहुतिं जुहुयात् ॥ ९ ॥ ३ ॥ ६० ॥ २३९२ ॥

(भा) हविश्शेषेष्वनुद्वासितेषु आश्रावणमनूयाजैरभ्याश्रवणम् ।

(वृ) आश्रावणमनूयाजार्थम् ।

अनूया—णम्—अनूयाजान् प्रतीति विभक्तिव्यत्ययेन तृतीया द्वितीयार्थे ।

(रु) अनुद्वासितेषु हविश्शेषेषु आश्रावणं अभ्याश्रावणम् ॥

[प्रणीतजलस्कन्दनप्रायश्चित्तम्]

(सू) यदि प्रणीतास्स्कन्देयुरुपदस्येयुर्वा 'आपोहिष्ठा मयो भुवः' इति तिसृभिः पुनर्गृहीत्वा 'त्वं म आपः' इत्याहुतिं जुहुयात् ॥ ९ ॥ ३ ॥ ॥ ६१ ॥ २३९३ ॥

(भा) स्कंदनं भूमौ पतनं प्रणीतानाम् । उपदासः—क्षयः । प्राक्संयवनादिति न्यायः । परतोऽपि संयवनात्प्रायश्चित्तमित्युपदेशः ॥

(वृ) प्राक्सं—न्यायः—संयवनार्थत्वात् प्रणीतानाम् , तस्मिन् कृते शेषस्य प्रतिपत्त्यर्थत्वात् । शेषाभावे प्रतिपत्तितोऽप एवेति । एकदेशस्कन्दने नैतत्प्रायश्चित्तम् ॥

परतो—देशः—प्रणीतास्स्कन्देयुरित्यविशेषवचनात् कृतप्रयोजनानामपि संस्कार्य[1]त्वाद्वा ।

[आधानसमानाधिकरणार्काप्रकाशेऽग्नेयोंऽशः]

(रु) उपदासश्शोषणम् ।

(सू) यद्यग्न्याधेये सूर्योऽनाविस्स्यात् 'उद्वयं तमसस्पर्युदु त्यं चित्रम्' इत्याहुतीर्जुहुयात् ॥ ९ ॥ ३ ॥ ॥ ६२ ॥ २३९४ ॥

(भा) आहवनीय आधीयमाने सूर्य आविर्न स्यात् प्रकाशो यदि न दृश्येताभ्रेण [2]च्छादितः तत उद्वयमित्याहुतयस्तिस्रः ।

(वृ) तत उ—स्रः—शिवाजपान्ते । केचिच्छमनहोमान्ते कुर्वन्ति ।

(रु) अनाविस्स्यादुदयकाले प्रच्छन्नो न प्रकाशेत ।

[मरणभीतजनानां दुर्निमित्तदोषविनाशकप्रायश्चित्तम् ]

(सू) यद्येनमुपधावेयुर्गोमायवोऽवादिषुरेकसृकोऽवादीदभिमृतास्स्मः परिधिं नः कुर्वीति पालाशमिध्ममुपसमाधाय 'इमं मे वरुण तत्त्वायामि त्वन्नो अग्ने सत्वं नो अग्ने त्वमग्ने अयासि प्रजापते' इति षडाहुती-

---

[1] त्वात्—ग. घ. [2] णाच्छादितः—ङ, ण प्रच्छन्नः—ग. घ.

**हुत्वा "इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्धमेतम्। शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दधतां पर्वतेन" इति दक्षिणतोऽश्मानं परिधिं दधाति ॥९॥३॥६३॥२३९५॥**

(**भा**) यदेनमाहिताग्निमुपधावेयुर्मरणभीता जनाः गोमायवः—क्रोष्टारः। अवादिषु[1]रस्माद्वयं भीताः स्मः उत्पातात्परित्राहि न इति। एकसृकः एकभरभल्लूकः तेन वा भीता वयमिति यद्युपधावेयुः॥

अन्ये त्वाहुः—गोमायवोऽवादिषुरस्माद्भीता वयं तैरेक[2]सृकेन चेति यद्युपधावेयुः।

अभिम्रियन्ते येषां कुले तत्कुल्याः तेऽभिमृताः यद्येनमुपधावेयुरभिमृता वयं परिधीन्नः कुरु परित्राणमित्युक्ते, आहिताग्निश्शरणागतानां परित्राणार्थं लौकिकेऽग्नौ, तस्य सर्वार्थत्वात्परार्थत्वाच्च कर्मणो नाहवनीये होमः। आहवनीय एवेत्युपदेशः। ब्राह्मणस्य शरणागतस्य पालाशमिध्ममुपसमाधाय इमं मे वरुणेति[3] षडाहुतीः शान्त्यर्थत्वाद्दर्वीहोमविधानेन॥

(**वृ**) **गोमा**—तैः—कृतादुत्पातान्मरणहेतोः भीता वयं परित्राहि न इति।

**एकसृक**—**वेयुः**—गोमायोर्वदनं एकसृकस्यापि वदनं मरणनिमित्तमिति भीता यद्याहिताग्निमुपधावेयुः।

**यद्युपधावेयुरिति**—उभयत्र भक्षणपर आख्यातशब्द इति।

**आहव**-**पदेशः**—यद्येनमुपधावेयुरिति आहिताग्नेः कर्तव्यतया विधानात् तदीयेऽग्नाविति।

---

[1] रस्मात्तैर्वयं भीताः स्मः उत्पातात्। एक—**ग. घ.** [2] रेकेन चेति—**ङ**, वेति—**ग. घ.** [3] त्यादिष—**ग. घ.**

**ब्राह्मण – हुतीः**—क्षत्रियवैश्ययोरिध्मान्तरविधानात्पालाशस्सामान्यविहितो ब्राह्मणस्य ।

**शान्त्यर्थ-नेन**—मरणभीतानां दुर्निमित्तदोषशान्त्यर्थत्वात् । अन्येषु चा[1]द्भुतोत्पातेष्विति प्राप्ते तत्स्थानापत्तेरस्य प्रयोगान्तरस्य ।

**पालाश-हुतीः**—अग्नेरुपसमाधानाद्याज्यभागान्ते "इमं मे वरुण" इत्यादिप्रधानाहुतीर्हुत्वा जयादिपरिषेचनान्ते दक्षिणतोऽश्मानमिति ।

(रु) येषां कुले पुनः पुनर्मरणं प्रवृत्तं स्यात्तेऽभिमृताः । ते यद्येनमुपधावेयुराहिताग्निमेनं शरणं गच्छेयुरेवंब्रुवाणाः, गोमायवः, शिवाः अस्मान्प्रत्यशिवां वाचमवादिषुः, एकसृको वा दुर्वाचमवादीत् । एवं दुर्मिमित्तानि पश्यामोऽभिमृतास्स्मश्च तदस्माकं मरणभीतानां परित्राणार्थं परिधिं कुर्विति तदा ब्राह्मणश्चेदभिमृतः पालाशमिध्मं लौकिकेऽग्नावादीप्तमुपसमाधाय दर्वीहोमविधिनैता आहुतीर्हुत्वा दक्षिणतोऽश्मानं परिधिं दधाति । यस्य दक्षिणतः, अभिमृतानामिति ब्रूयात् । इमं जीवेभ्य इति लिङ्गात् । अभिमृतेभ्य उत्तरया दक्षिणतोऽश्मानं परिधिं दधातीति गृह्ये व्यक्तवचनाच्च ॥

[ तत्र क्षत्रियवैश्ययोर्विशेषः ]

**(सू) नैयग्रोध इध्मः क्षत्रियस्य राष्ट्रमर्यादायाम् ॥**
**॥ ९ ॥ ३ ॥ ६४ ॥ २३९६ ॥**

(भा) [2]एता एव क्षत्रियस्यागतस्य राष्ट्रसीमायां ; वटश्चेध्मः ॥

(वृ) **एता-याम् ;**—[3] आहुतयः ।

---

[1] वाभूतोत्पाते-घ. [2] एतावत्-ख. ङ. [3] यः शरणागतस्य-ग. घ.

(रु) क्षत्रियस्यामृतस्य नैय्यग्रोध इध्मो राष्ट्रमर्यादायामुपसमाधेय इत्यर्थः ॥

(सू) आश्वत्थस्तु वैश्यस्य क्षेत्रमर्यादायाम् ॥ ९ ॥
॥ ३ ॥ ६५ ॥ २३९८ ॥

(भा) वैश्यस्य क्षेत्रसीमायाम् । आश्वत्थश्चेध्मः । 'इमं जीवेभ्य' इति शरणागतानां दक्षिणतोऽश्मा परिधिर्निधीयते ॥

(वृ) परिधि–यते—निखन्यते । परिधिरिति भयहेतुभ्यः परित्राणमित्यर्थः ॥

(रु) तस्य यत्क्षेत्रं तत्सीम्नि आश्वत्थ इध्म उपसमाधेयः, शूद्रस्य तु नेष्ट एवायं विधिः ॥

[गुरुप्रायश्चित्तासम्भवे लघुप्रायश्चित्तम्]

(सू) इष्टेभ्यस्स्वाहेत्यष्टावाहुतीर्दार्शपूर्णमासिकैस्सर्वप्रायश्चित्तैर्विकल्पेरन् ॥ ९ ॥ ३ ॥ ६६ ॥ २३९८ ॥

(भा) शान्त्यर्थं गार्ह्यतन्त्रदर्वीहोमस्येह सूत्रकारेणोपदेशात् ब्रह्म प्रतिष्ठेत्यनुवाकमन्त्राणां विनियोगप्रकरणात् तन्मध्यपाठादेषां होममन्त्राणां; विकल्पन्तेऽष्टौ सर्वप्रायश्चित्तैः प्रकृतिविकृत्योः ॥

(वृ) दार्शपूर्णमासिकैरिति प्रायश्चित्तविशेषणं न दर्शपूर्णमासयोरेव निवेशार्थम् । अतः प्रकृतिविकृत्योरुभयं विकल्पते । महतःप्रायश्चित्तस्यासंभवे लघु प्रायश्चित्तम् ॥

(रु) अष्टावेता आहुतयः प्रकृतिविकृत्योर्ब्रह्म प्रतिष्ठेत्यादिभिर्विकल्प्यन्ते॥

[दुस्वप्नोत्पाताद्युत्पन्नभयेऽनुष्ठेयहोमजपौ]

(सू) यदि दौष्वप्नयमन्यद्वा भयं पश्येत् 'यत इन्द्र भयामहे' इत्याहुती जुहुयात् । जपेदित्येके ॥ ९ ॥
॥ ३ ॥ ६७ ॥ २३९९ ॥

(भा) दुस्स्वप्ननिमित्तं दौष्ष्वप्न्यं अन्यच्चोत्पातं दृष्ट्वा भयं यदि स्यादाहिताग्नेः 'यत इन्द्र भयामहे' इत्याद्याहवनीये [1]होमो जपो वा ॥

**अक्रत्वङ्गत्वादौपासन उभयोर्न्यायः । लौकिके वा सर्वार्थत्वात् ॥**

(वृ) **दुस्स्व–भयम्**—[2]द्वयोर्मन्त्रयोः **अक्रत्व–न्यायः;** उभयोरग्न्योराहिताग्नेरौपासन इति ॥

अथवा 'अक्रत्वङ्गत्वादित्यादि न्यायः' इत्यन्त एकग्रन्थः, औपासन उभयोराहिताग्न्यनाहिताग्न्योर्न्याय इति ।

**लौकिके–त्वादिति**—गृह्यप्रकरणेऽनभिधानादक्रत्वङ्गत्वाच्चाऽऽहवनीयौपासनयोः प्राप्त्यभावाल्लौकिके होमद्वयम् ॥

(रु) यदि दुस्स्वप्ननिमित्तमुत्पातादिनिमित्तं वा भयं पश्येदाहिताग्निस्तदैते 'यत इन्द्रस्स्वस्तिदा' इत्याहुती जुहुयाज्जपेद्वा ॥

[प्रवर्ग्ये ऋत्विजामार्त्विज्यनिमित्तकहोमजपयोर्मतभेदेन व्यवस्थापनम्]

(सू) **सर्वेषां घर्मो रुचां रोचके । तस्मात्प्रवर्ग्येण प्रचर्य प्रवृज्यमानस्य वोपश्रुत्याऽऽभिर्गीर्भिरिति जुहुयात्, जपेदित्येके ॥ ९ ॥ ३ ॥ ६८ ॥ २४०० ॥**

(भा) घर्म आदित्यः । सर्वेषां रुचां सर्वेषां दीप्तिमतां अतिशयेन दीप्यते । तस्मादार्त्विज्यं कृत्वा प्रवर्ग्ये श्रुत्या वा क्रियमाणस्य आभिर्गीर्भिरिति होमः । नैमित्तिकत्वादाहवनीये । [3]न प्रायश्चित्तार्थं, विहितत्वादार्त्विज्यस्य प्रसर्प[4]कत्वस्य च । एतदपि सर्वार्थमनङ्गत्वात् लौकिके च कुर्वन्ति केचित् ॥

---

[1] होमद्वयं जपो वा–**ग. घ.** [2] योरक्रत्वङ्ग–**ग.** [3] न त्वेतत्प्रा–**ग. घ.**
[4] प्रसर्पसंकल्पस्य–**च. ङ.**

(वृ) **घर्म आदित्यः**—'असौ खलु वावैष आदित्यः यत्प्रवर्ग्यः' इति घर्मशब्दवाच्यस्य प्रवर्ग्यस्यादित्यत्वेन संस्तवात् घर्म आदित्यः।

**सर्वेषां–प्यते**—प्रवर्ग्यात्मक आदित्यः।

**तस्मा–होमः**–अस्यार्थः–प्रवर्ग्ये आर्त्विज्ये क्रियमाणे आदित्यरूपप्रवर्ग्यसम्बन्धाद्गिरां दाहशंकया यदतो न ऊनं तदाप्याययेति वाग्वृद्ध्यर्थो होमः इति मन्त्रार्थवादावगतेस्तस्मादित्युच्यते, न हेत्वर्थविवक्षया। अतो नैमित्तिक[1]विवक्षयैवायं होमः।

प्रवृज्यमानस्य वोपश्रुत्येति प्रसर्पकाभिप्रायम्। समीपे प्रवृज्यमानस्य मन्त्रं श्रुत्वा।

**नैमित्ति–होमः**—अस्यार्थः–ऐन्द्रहोमवद्दोषपरिहारार्थत्वे सति दोषस्य सर्वेषां संभवात् लौकिके वा सर्वार्थत्वात्स्यादित्येतत्स्यात्। नैमित्तिकमात्रत्वे सत्याहिताग्नेरार्त्विज्यं कुर्वतः पुरुषार्थत्वात् तस्याऽऽहवनीये होमः।

[2]**न प्रायश्चि–स्य च**—ब्राह्मणस्य प्रवचनयाजनप्रतिग्रहा इति वृत्त्यर्थत्वेन याजनस्य विहितत्वात्, यं यज्ञमागच्छेत्तं प्रसर्पेदिति प्रसर्पकत्वस्य च विहितत्वात् न दोषः। अतो न दोषपरिहारार्थतया प्रायश्चित्तत्वम्।

तदेतत्प्रवर्ग्यार्त्विज्यनिमित्ते नैमित्तिकमाहिताग्नेरार्त्विज्यं कुर्वतस्सोमयाजिनोऽसोमयाजिनश्च सोमभक्षणपर्यन्तार्त्विज्यकरणे परिभक्षमपां पुष्पामित्यादि वक्ष्यति।

एतदपीत्यादिपक्षान्तरम्। **अनङ्गत्वात्**;—प्रवर्ग्येण प्रचर्येत्यविशेषेण विधानाच्चाऽऽ[3]हिताग्नेरनाहिताग्नेश्च कर्तव्यत्वाल्लौकिके होमोऽनङ्गत्वं च। प्रवर्ग्येण प्रचर्येति निमित्तत्वेनाऽऽर्त्विज्यस्य श्रुतत्वात्,

[1] क एवायं होमः–ग. घ. [2] त्येतत्प्रा–ग. [3] च्चाहिताग्नेश्च कर्तव्यत्वाल्लौ–ग. घ.

इतरथा आर्त्विज्यस्य प्रवर्ग्यवत्कृतौ [1] नित्यत्वं स्यात्। नैमित्तिकत्वेनाङ्गत्वानुपपत्तेरनङ्गत्वमेव। अतस्सर्वत्र पुरुषा[2]र्थत्वाल्लौकिके कर्तव्य इत्यन्येषां पक्षः।

(रु) सर्वेषां ज्योतिषां मध्ये घर्मस्तिग्मतरं ज्योतिः। यथोक्तं श्रुतौ, 'रोचितस्त्वं देव घर्म देवेष्वसि' इति। तेन तदभिभावुकं स्यात्। तस्मात्प्रवर्ग्यकर्मण्यार्त्विज्यं कृत्वा अकुर्वन्वा प्रवृज्यमानस्य घर्मस्याभिषवादिप्रभवं शब्दं श्रुत्वा आभिर्गीर्भिरिति जुहुयाज्जपेद्वा॥

[आहिताग्निव्रतलोपप्रायश्चित्तम्]

(सू) यदि होमायोपसमिद्धेष्वहुतेष्वग्निषु यजमानोऽश्नीयात् 'यत्ते वयं' 'यथा ह तत्' इत्याहुती जुहुयात्। समिधौ वाऽऽदध्यात्। जपेदित्येके॥
॥९॥३॥६९॥२४०१॥

(भा) होमाय होमार्थम्। उपसमिद्धे[3]ष्वग्निषु दीप्तेषु अहुतेषु यद्यश्नीयाद्यजमानः। [4]अन्नप्रतिषेधेन पानस्यापि प्रतिषेधः; नेति केचित्। यत्ते वयं, यथा ह तद्वसवः, इत्याहुती आहवनीये; समिधौ वा। तत्र प्रतिमन्त्रं जपो वा। [5]पूर्वं तूपसमिन्धनान्न सायमाहुतावहुतायामित्याद्याहिताग्निव्रतलोपप्रायश्चित्तम्॥

(वृ) अनशन-षेधः — अपोऽश्नातीत्यादिष्वश्नातिपदप्रयोगात्। नेति केचिदिति;— निरुपपदस्याश्नातेरदनीयविषयत्वात्।

यत्ते-नीये—अग्निहोत्रार्थे। समिधो वा; तत्राऽऽहवनीये

---

[1] नित्यत्वान्न-ग. घ. [2] षार्थात्मकत्वा--घ. [3] ष्विद्धमेषु क्षिप्तेषु अहु-घ.
[4] अशन-ग. घ. [5] पूर्वमुपस-घ.

पूर्वं तु—श्चित्तम्—इध्माधानादूर्ध्वं विशेषाम्नानात् होमादूर्ध्वमशने न प्रायश्चित्तम्, होमायेति वचनात् ।

(रु) न सायमाहुतावहुतायामश्नीयात् । एवं प्रातरित्युक्तम् । तदतिक्रमे प्रायश्चित्तमुच्यते । होमायोपसमिद्धेष्विति होमार्थं विहितेष्वित्यर्थः । यदग्ने यानीत्यादिभिस्समिद्धेष्विदं प्रायश्चित्तम् । प्राप्तसमिन्धनाद्व्रातपतीत्यन्ये ॥

[अभिनिम्रुक्तादीनां प्रायश्चित्तकथनम्]

(सू) 'यन्म आत्मनो मिन्दाऽभूत्' 'पुनरग्निश्चक्षुरदात्' इत्येताभ्यामभिनिम्रुक्ताभ्युदितपर्याहितपरीष्टपरिवित्तपरिविन्नपरिविविदानो वा जुहुयात् ॥ ॥ ९ ॥ ३ । ७० ॥ २४०२ ॥

(भा) यन्म आत्मनो मिन्दाऽभूदित्येकावसाना, पुनरग्निरिति द्व्यवसाना च, एताभ्यां होम आहवनीये । अभिनिम्रुक्तादीनां जपो वा सुकरः [1] । केचिल्लौकिके होम इति ।

अभिनिम्रुक्तो यस्य सुप्तस्य सूर्योऽस्तमेति, अभ्युदितो यस्योदेति, पर्याहितो [2] ज्येष्ठे यस्यानाहिते कनिष्ठ आधत्ते, परीष्टः [3] तेनानिष्टे कनिष्ठो नित्यैर्यजते । सोमेनैवेति केचित्, तस्य ऋणश्रुतेः, परिवित्तः यस्मिन्नगृहीतभागे कनिष्ठो भागं गृह्णाति पित्र्यं मातृकं वा न विवाहादिलब्धम् । [4] यस्मिन्नगृहीतदारे कनिष्ठो निविशते विवाहं

[1] रः अनङ्गत्वात्—च. [2] ज्येष्ठः यस्यानाहितेष्वाग्निषु कनिष्ठ—घ. [3] येन—च.
[4] यः यानादीनि-ग. घ.

करोति। परिविविदानः—कनिष्ठो [1]य आधानादीनि करोति ज्येष्ठेनाकृतानि। सोऽपि दोषवत्तरः।

स्मार्तमप्येषां प्रायश्चित्तम्। समुच्चयेन पुरुषापराधेनैतानि कनिष्ठन। ज्येष्ठेऽनधिकृते सति प्रायश्चित्ताम्नानादुभयोरविधानाच्च विशेषेण। याजनं तु विहितं[2], अतस्तत्क्रियते सत्यप्यधिकृते ज्येष्ठे, एकवद्भावश्च[3] न कृतः, न च लिङ्गं नपुंसकम्।

(वृ) एकावसाना—मध्येऽवसानाभावात्।

द्व्यवसाना—मध्येऽन्ते चावसानद्वयम्। सुकरः;—पर्याहितानां होमासंभवाज्जपस्य सर्वेषां सुकरत्वात्। केचिल्लौकिके होम इति—विध्यपराधाभावादनङ्गत्वाच्च।

परीष्टः—श्रुतेः—[4]न नित्ययागविषया परीष्टिः, किंतु सोमविषयैव; ऋणश्रुत्या तस्यावश्यम्भावित्वात् ज्येष्ठस्य तदकरणे कनिष्ठे कृते दोषः। अतो ज्योतिष्टोमाभिप्रायः परीष्टशब्द इति॥

विशेषेणेति—कनिष्ठेन कर्तव्यमिति विधानात् प्रायश्चित्तविधानाच्च। पुरुषापराधाद्यद्येवं यज्ञोऽध्ययनं दानमिति तुल्याधिकारनिर्देशात् ज्येष्ठे असमर्थे तमतिक्रम्य कनिष्ठेन याजनमपि न कर्तव्यमित्याशङ्कयाह॥

याजनं तु—ज्येष्ठे—द्रव्यार्जनापेक्षायां विधानान्नित्यकर्तव्यत्वाभावादवश्यम्भावित्वाभावाज्ज्येष्ठस्य। तेनाकृतेऽप्यार्त्विज्ये द्रव्यार्थितया कनिष्ठेन कर्तव्यमेव। परिवित्त्या(त्ता)दीनामाहिताग्नेरपि प्राप्तानामिह पाठः पर्याहितादितुल्यनैमित्तिकहोमप्राप्त्यर्थः॥

[1] यत्र—च. [2] तमिति श्रुतम्—ङ. [3] श्च कृतः—ग. घ. ङ. च.
[4] न सर्वनित्य—ग घ.

एकवद्भा-सकमिति—अभिनिम्रुक्तादीनां द्वन्द्वसमासे परिविविदान इत्येकवद्भावे सति 'स नपुंसकम्' इति नपुंसकलिङ्गादम्भावे प्राप्तेऽपि सूत्रकारेण सोऽनिर्देशश्छन्दोवत्सूत्राणि भवन्तीति व्यत्ययादिना ॥

(रु) यस्य प्रसुप्तस्य सूर्योऽस्तमेति सोऽभिनिम्रुक्तः। यस्योदेति सोऽभ्युदितः। यस्मिन्ननाहिताग्नौ कनिष्ठोऽग्नीनाधत्ते स पर्याहितः। यस्मिन्नसुतसोमे कनिष्ठः सोमेन यजेत स परीष्टः। यस्मिन्ननात्तांशे कनिष्ठोऽशं गृह्णीयात्स परिवित्तः। यस्मिन्ननूढभार्ये कनिष्ठो दारानुपयच्छते स परिविन्नः। स्वयमुपयन्ता कनिष्ठः परिविविदानः। तत्राभिनिम्रुक्तादिशब्देष्वपि परिविविदान इतिवद्विभक्तिं दत्वा योजनीयम्। पर्याहितादेर्ज्येष्ठस्यैवायं विधिः, न पर्याधात्रादेः कनिष्ठस्य। तस्य परिविविदानत्वेनोपादानात। तेष्वनाहिताग्नीनामौपासने होमो जपो वा। तेषामिह वचनं समानविध्युपात्तत्वादिति द्रष्टव्यम्। परीष्टलक्षणमुक्तं भार्गवेन, अकृतप्रथमे यज्ञ ज्येष्ठे सति करोति तम्। कनिष्ठः परियष्टा स्यात्परीष्टोऽग्रज उच्यते ॥

[अनुष्ठीयमानकर्मणि प्रामादिकभ्रेषसंशयोर्भ्रेषयोर्ऽशाः]

**(सू) अनाज्ञातमिति तिस्रोऽनाज्ञाते जुहुयात्। जपेदित्येके ॥ ९ ॥ ३ ॥ ७१ ॥ २४०३ ॥**

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने द्वादशी खण्डिका

---

(भा) अनाज्ञातमिति तिस्र ऋचः जुहुयाज्जपेद्वा अनाज्ञाते अनाज्ञात प्रायश्चि[1]त्ते कर्मणि सर्वप्रायश्चित्तेन विकल्पः। छन्दोगश्रुतेः। तेषामुक्तम्, महाव्याहृतयोऽनाज्ञातं वा सर्वप्राय[2]श्चित्तमिति ॥

---

[1] त्तकर्मणि सर्व—च. [2] श्चित्तिरिति—ग. घ.

अन्ये त्वाहुः—यत्र न ज्ञायते साधु वा [1]कृतमसाधु वेति तत्कर्मानाज्ञातमिति तत्रैतास्तिस्र ऋचो [2]यदज्ञातमपि जुहुयाज्जपेद्वा ॥

इति धूर्तस्वामिभाष्ये नवमप्रश्ने द्वादशी खण्डिका

इति तृतीयः पटलः

---

(वृ) यत्र न ज्ञा—ज्ञातमिति—क्रियमाणे कर्मणि प्रमादाद् भ्रेष-संभावनासंशये सति तत्कर्मानाज्ञातमिति । संशयितस्य कर्मणस्सा-द्गुण्यार्थमिति । होमाशक्तौ जपः ।

इति धूर्तस्वामिभाष्यवृत्तौ नवमे प्रश्ने तृतीयः पटलः

---

(रु) अनाज्ञाते प्रायश्चित्तविशेषे इत्यर्थः । साधु वा कृतमेतदङ्गं असाधु वेत्यनिर्णीते इत्यन्ये । तत्रैष विधिस्सर्वप्रायश्चितेन विकल्प्यते । यथा महाव्याहृतीः प्रकृत्याऽऽमनन्ति छन्दोगाः । यच्चावगतं यच्चानवगतं सर्वस्यैषैव प्रायश्चित्तिः । तस्मादेतामेव जुहुयात्, अपि वा 'अनाज्ञातं यदाज्ञातम्' इति, अपि वा प्राजापत्यां, 'प्रजापते न त्वदेतानि' इति ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां

द्वादशी खण्डिका

---

[उत्पूतानुत्पूतस्रुग्गताज्यस्कन्दनोऽन्यविशेषांशोप-पादनं सूत्रचतुष्टयेन]

(सू) यस्याज्यमनुत्पूतं स्कन्देत् छिन्दत्प्राणि दद्यात् ॥ ९ ॥ ४ ॥ १ ॥ २४०४ ॥

---

[1] कृतं भवेदसाधु वेति—ग. घ. [2] अनाज्ञातं यदनाज्ञातमिति जु—ङ. च.

(भा) यस्य यजमानस्य[1] अजः—प्रजापतिः तद्दैवत्यमाज्यं अनुत्पूतम्—उत्पवनेऽकृते स्कन्देत् – पतेत् भूमौ । छिन्दत्प्राणि[2] — छिनत्ति दन्तैस्तृणानि, न बालः । यत्प्राणि अजाश्वादि तद्दद्यात् । तदभिन्ददिति केचित् । अन्यत्र दानेषु गवामेव ।

(वृ) अजः—ज्यम् –आज्यशब्दनिर्वचनम्—प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशदित्यारभ्य अयातयाममाज्यमिति प्राजापत्यमिति ब्रूयादिति निर्देशात् प्रजापतेश्च जन्मरहिततयाऽजत्वात्तद्दैवत्यमाज्यमिति । अतोऽनिर्दिष्टदेवताकाज्यहोमेषु प्रजापतिर्देवता ।

अन्यत्रा – मेव — अन्यत्र – आज्यस्कन्दनव्यतिरिक्तविषयेषु निरुपपददानचोदनायां गवामेव दानम् । अत्र तु छिन्दत्प्राणीति प्राणिमात्रनिर्देशादजादयोऽपि गृह्यन्ते ।

(रु) छिन्दत्प्राणीति दन्तैः यत्तृणादीनि छिन्दन्भक्षयति तदेव गवाजादि दद्यात् न बालमित्यर्थः ।

(सू) यद्युत्पूतं चित्रं देयम् ॥ ९ ॥ ४ ॥ २ ॥ २४०५ ॥

(भा) चित्रं विस्मापनीयम् ।

(वृ) चित्रं–यम्—तदपि प्राणि धनं वा भरद्वाजमतात्, तदुत्पू[3]ते दीयते ।

(रु) चित्रं हृदयङ्गमं धनमिति शेषः । तथा चित्रं धनमित्येव भारद्वाजः ॥

---

[1] मानस्य आज्यं घृतम् अजः-घ. ङ. च. [2] छिन्दत् शीर्णादन् तद्दद्यात् अजाश्वादि छिनत्ति दन्तैस्तृणानि यत्प्राणि न बालः—ख. छिन्देत् शीर्णवत्प्राण्यश्वाजादि छिनत्ति दन्तैर्यत्प्राणि तृणानि । न बालं वृद्धं वा तच्छिन्ददिति—ग. छिन्दत् शीर्णदत् प्राणि अजा—ङ. [3] ते स्कन्नेदी-ङ. तत्स्कन्दने दीयते—ग. घ.

(सू) **वरो देय इत्येकेषाम् ॥ ९॥४॥३॥ २४०६ ॥**

(रु) गतः ।

(सू) **यदि स्रुग्गतं यदस्य गृहे पुष्कलं स्यात्तद्द्यात् 'सं त्वा सिञ्चामि' इति तत्संसिञ्चेदभि वा मन्त्रयेत ॥९॥४॥४॥२४०७॥**

(भा) स्रुग्गतं पुष्कलं—बहुमूल्यम् । अध्वर्योर्दानम् । तस्य [1]तत्कर्मकत्वात् । 'संत्वा सिञ्चामि' इति स्रुग्गतस्यैव [2]पुनस्स्रुचि क्षेपः संसेकः [3]अभिमन्त्रणं वा । [4]यदा त्वशुचौ [5]पतितं तदा त्वाभिमन्त्रणमेव ।

(वृ) **पुष्कलं-ल्यम्**—गोमूल्यादधिकमूल्यमश्वादि । 'गौर्वै वर' इत्यादि सामान्यचोदनायाः गोरेव प्राप्तत्वात्तन्मूल्यादधिकमूल्यम् ।

**अध्वर्यो-त्वात्**—छिन्दत्प्राण्याद्यध्वर्योः ।

**स्रुग्गतस्य - सेकः**—तच्छब्दान्नानुत्पूतादेस्संसेचनमभिमन्त्रणं वा । स्कन्नस्य 'संत्वा सिञ्चामि' इति ।

**यदात्व-मेव**—उपादानानर्हत्वात् ।

(रु) यदस्य गृहे पुष्कलं सुलभं यवव्रीह्यादि दद्यात् । ततस्तत्स्रुचः स्कन्नं स्रुचि संसिंचेत् स्रुचि पुनर्निक्षिपेत् । संसेकायोग्यत्वेऽभिमन्त्रयेत ।

**[स्थालीस्थाज्ये स्कन्ने सत्यनुष्ठेयांशः]**

(सू) **देवाञ्जनमगन्यज्ञ इत्येकेषामनन्तरमाज्याद्वदति ॥९॥ ४॥५॥२४०८॥**

---

[1] कर्मकर—**ग. घ.** [2] स्कन्नस्य पुनः—**ग. घ.** [3] सेचनम्—**ग. घ.**
[4] यदा स्वभावशुचौ—**घ.** [5] पतति—**च.**

(भा) देवाञ्जनमगन्यज्ञ इत्यानन्तर्यात् स्रुग्गते विकल्पिते शाखान्तरस्थ इति। अनन्तरमाज्यादिति—आज्यात्स्कन्नात्। आज्याद्वदतीति पुनराज्यग्रहणात् न केवलं स्रुग्गत एवेति केचित्। देवाञ्जनमगन्निति सप्त मन्त्राः। एतैर्यथापूर्वमिति लिङ्गात्। वदति—उच्चारयति।

(वृ) अनन्त–ज्यादिति—आज्ये स्कन्ने इत्यर्थः। विभक्तिव्यत्ययः।

आज्याद्व–केचित्—आज्ये प्रकृते पुनराज्यग्रहणादाज्यमात्रे स्कन्ने प्राप्तिरिति। अतः स्थालीगते स्कन्नेऽपि देवाञ्जनादिप्राप्तिर्विकल्पेन।

देवाञ्ज–न्त्राः—न केवलं प्रथम एव।

एतैर्य–त्—बहुभिरभिमन्त्रणमिह सिद्धमनूद्य यथापूर्वमिति निर्देशात्। अत्र यद्यप्यनन्तरमाज्याद्वदतीति वदनमात्रमुक्तम्, तथाप्युत्तरत्रैतैर्यथापूर्वमभिमन्त्रयेति इह सिद्धाभिमन्त्रणानुवादादन्यत्रापि सप्त मन्त्रानुच्चार्याभिमन्त्रणं कर्तव्यमेकेषां मतेन। तदेतदुपरिष्टात्प्रपञ्चयिष्यते॥

(रु) एकेषां शाखा। आज्यादनन्तरं आज्यमधिकृत्य 'देवाञ्जनमगन्यज्ञ' इत्याज्यस्कन्नाभिमन्त्रणं वदतीत्यर्थः। कुत एतदभिमन्त्रणं वदतीति चेत्तस्यैवानन्तरं वचनात्। 'देवाञ्जनमगन्यज्ञ' इत्येतैर्यथापूर्वमभिमन्त्रयेति लिङ्गाच्च। तथा 'देवाञ्जनमगन्यज्ञ' इत्येतदभिमन्त्रयेत्येकेषामित्येव भारद्वाजः। एतदुक्तं भवति, न केवलं स्रुग्गते सर्वत्रैवाज्ये स्कन्ने 'देवाञ्जनमगन्यज्ञ' इत्येतैः मन्त्रैरभिमन्त्रणं तैस्तैर्विधिभिर्विकल्प इति॥

[तस्यैव प्रतिदिशं मानविधानम्]

(सू.) 'यज्ञस्य त्वा प्रमयाभिमया प्रतिमयोन्मया परिगृह्णामि' इति तत्परिगृह्य 'भूपतये स्वाहा' इति प्राञ्चं प्रादेशं मिमीते। 'भुवनपतये स्वाहा' इति दक्षिणम्। 'भूतानां पतये स्वाहा' इति प्रत्यञ्चम्। 'भूत्यै स्वाहा' इत्युदञ्चम्। 'भूर्भुवस्सुवः' इत्यूर्ध्वम् ॥ ९ ॥ ४ ॥६॥२४०९॥

(भा) यज्ञस्य त्वेति स्कन्नस्यैवाञ्जलिना परिग्रहणम्, न स्रुग्गतस्य। प्रदेशिन्या युक्तोऽङ्गुष्ठः प्रादेशः। तस्य स्थापनं मानं प्रतिदिशं स्कन्नात् ॥

(वृ) न स्रुग्गतस्य—स्थालीगतस्य वा। तत्परिगृह्येति प्रकृतनिर्देशात् ॥

तस्य–न्नात्—तत्परिगृह्येत्युपक्रमात् प्रतिदिशं माननिर्देशात्।

(रु) तत्स्कन्नं परिगृह्य परितश्छिन्नेनापभज्य तस्य देशं तस्योपरि प्रतिदिशं प्रादेशान्मिमीते। तस्मात्प्रतिदिशमित्यन्ये। प्रदेशिन्यङ्गुष्ठयोः प्रसारितयोरायामः प्रादेशः। पूर्वतरविधिविशेषश्चायं, न सर्वविधिविशेषः; प्रासङ्गिकत्वात्तस्य। तेन स्रुग्गते स्कन्ने पुष्कलं दत्वा सं त्वेति संसिच्याभिमन्त्र्य वा ततः प्रादेशः। यदा तु 'देवाञ्जनमगन्यज्ञ' इत्यभिमन्त्रणं तदा प्रादेशा न भवन्ति, न च पुष्कलदानादि। निगदव्याख्यातश्चायमर्थः कल्पान्तरेषु ॥

[अविभागेन स्कन्नप्रायश्चित्तविधानम्]

(सू.) 'भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहा भूत्यै स्वाहा' इति स्कन्नमनुमन्त्रयेत इति सर्वहविषामनवयवेन श्रूयते ॥ ९ ॥ ४ ॥ ७ ॥ ॥ २४१० ॥

(भा) भूपतये स्वाहेति समुच्चीयते स्कन्नप्रायश्चित्तैर्विशेषविहितैरपि, अनवयवेनेति वचनात् । सर्वहविषां च स्कन्दने यानि दर्शपूर्णमासप्रकरणे तत्र पाठात्, नान्यस्थानस्थानां हविषाम् ॥

(वृ) भूपतये–वचनात्—अस्यार्थः–यज्ञस्य त्वेत्यादि भूतानां पतये स्वाहेत्यन्तं स्कन्नप्रायश्चित्तैस्समुच्चीयते । तत्परिगृह्य भूपतये स्वाहेति समानप्रयोगावगमनात् । अतः पुष्कलदानादिपक्षेऽपि यज्ञस्येत्यादिसमुच्चयः ॥

अनवयवेनेति—अनवयवः अविभागः । केचिद्भूपतये इत्यनुमन्त्रणस्य सर्वविषयत्वं यज्ञस्येत्यादेर्देवाञ्जनादिसाहित्यमिति ॥

सर्वह–हविषाम्—पतये स्वाहेति स्कन्नमनुमन्त्रयेतेति दर्शपूर्णमासप्रकरणे पाठात् प्रादेशमानस्य तदेकप्रायश्चित्तत्वात् ॥

ततः सान्नाय्यपुरोडाशयोरप्येतत् स्कन्नप्रायश्चित्तम् । परिग्रहाद्यनुमन्त्रणमात्रं वा । एतेषु स्कन्नप्रायश्चित्तेषु सर्वप्रायश्चित्तं नियतमुक्तं नैमित्तिकान्ते ॥

(रु) सर्वेषामेव हविषामर्थे श्रूयते । न तु कंचिद्विशेषमवयुत्येत्यर्थः । केचित्त्वाहुः, सर्वहविषामित्यैष्टिकसर्वहविरभिप्रायं दर्शपूर्णमासप्रकरणे श्रुतत्वात्, अनवयवेनेत्यनेनापि तेष्वेव विषयकार्त्स्न्यं विवक्षितमिति । तत्र त्वाह भारद्वाजः, भूपतये स्वाहेति स्कन्नमनुमन्त्रयेत्येकेषां न किञ्चन हविरधिकृत्य वदतीति । तच्चेदमविशेषवचनं यत्राप्युक्तं अभिमन्त्रणान्तरं तत्रापि तेन विकल्प्यते । समुच्चीयत इत्यन्ये । यथा ‘देवाञ्जनमगन्यज्ञ’ इत्यादौ । यत्र त्वनुक्तं तत्र नित्यमेवेष्यते । यथा ‘यस्य हविर्निरुप्तं स्कन्देद्यस्य वा देवतायै गृहीतमहुतम्’ इत्यादौ । न बर्हिषि स्कन्ने हविषि प्रायश्चित्तमिष्यते । ‘अस्कन्न९ हि तद्यद्बर्हिषि

स्कन्दति ' इति श्रुतेः। तत्र त्वाह भारद्वाजः ' न बर्हिषि स्कन्ने प्रायश्चित्त-मित्याश्मरथ्यः। यदि भूमिं प्राप्नुयात्कुर्यादेव तत्र प्रायश्चित्तमित्यालेखनः ' इति ॥

[ कपालोपधानाव्यवहितोत्तरकालसमानाधि-
करणादसीयभेदनोन्नेयोंऽशः]

(सू) यदि कपालं भिद्येत ' गायत्रया शताक्षरया संदधामि ' इति तत्सन्धायोपरि गार्हपत्ये धार्य-माणमभिजुहुयात् ' मनो ज्योतिर्जुषताम् ' इति ॥ ९ ॥ ४ ॥ ८ ॥ २४११ ॥

(भा) संधानमुपायेन गायत्रया त्वेति। ' मनो ज्योतिः ' ' या इष्टाः ' इति होमः ॥

**उपायेन**---शर्करादिभिः ॥

**मनो-होमः**---या इति उत्तरार्धर्चः। तस्य पुनर्दर्शपूर्णमास-प्रकरणे पाठात् ॥

(रु) यदि कर्मणि प्रयुक्तं कपालं भिद्येत तत्सन्धानार्थैर्द्रव्यैस्सन्धाय मनो ज्योतिरिति सन्धानलिङ्गया तदभि जुहुयात्। समानोऽयं विधि-रेकदेशभेदेऽपि, यथोक्तं न्यायविद्भिः, अर्थसमवायात्प्रायश्चित्तमेकदेशेऽ-पीति ॥

(सू) अथैनदपोऽभ्यवहरेत् ' अभिन्नो घर्मो जीर-दानुः ' इति ॥ ९ ॥ ४ ॥ ९ ॥ २४१२ ॥

(भा) ब्रह्मणाऽभिमन्त्रणं, भूमिर्भूमिमगात् इति। अपोऽभ्यवहरेत्, घर्म इत्यध्वर्युः ॥

(वृ) अपो-ध्वर्युः—अपोऽभ्यवहरणप्रतिपत्तेः पूर्वमेवाभिमन्त्रणं कर्तव्यमिति, अथ शब्दयोगाच्च ॥

(रु) भूमिर्भूमिमगादित्यध्वर्योर्निवर्तते प्रत्याम्नानान् । ब्रह्मा तु तेनाभिमन्त्रयत एव ॥

[कपालोपधानप्राक्कालिकादसीयभेदने विशेषांशप्रतिपादनम्]

(सू) अथान्यत्संस्कृत्य कपालेष्वपिसृजेत् 'त्रयस्त्रिंशत्तन्तवः' इति यदि प्रागुपधानाद्भिद्येत् ॥ ९ ॥
॥ ४ ॥ १० ॥ २४१३ ॥

(भा) अन्यस्य कपालस्याऽऽसादनमभिमर्शनं प्रोक्षणं च संस्कारः, अनूहेन [1]प्रदेशनात् । अपिसर्गः—क्षेपः । त्रयस्त्रिंशादित्युपधानमन्त्रः ॥

(वृ) अन्यस्य-नूहेन—एकस्मिन्नपि कपाले संविशन्तां शुन्धध्वमित्यनयोरनूहः । संविशान्तामित्यस्य देवानां विशां देवतार्थप्रयुक्तपात्रसंवेशनपरतयाऽभिमर्शनपरत्वान्न पात्रसंख्या विवक्षिता । शुन्धध्वमित्यस्य अपां [2]संशोधनपरत्वान्न पात्रपरता ॥

प्रदेशनादिति—अनुदेशानुवादत्वात्पात्रशब्दस्यान्यपरत्वाद्बहुवचनानादरः ॥

अपिसर्गः—क्षेपः त्रयस्त्रिंशदिति । गायत्र्येति संधानादि त्रयस्त्रिंशदिति क्षेपान्तं प्रागुपधानाद्भेदने ॥

(रु) अन्यत्कपालं दर्भेषु प्रयुज्य तत एकवदूहेन संमृश्यैवं प्रोक्ष्य च त्रयस्त्रिंशदिति भिन्नस्य स्थाने क्षिपेत् । प्रागुपधानाच्चेत्तद्भिन्नं भवति ॥

---

[1] प्रदर्शनात—क. ख. ङ. च. [2] संबोधन—ग. घ.

[ 'एतेनैव' इत्यवधारणलभ्योंऽशः ]

(सू) **अथ यद्युपहितानामेतेनैव मन्त्रेणान्यदुपदध्यात् ॥ ९ ॥ ४ ॥ ११ ॥ २४१४ ॥**

(भा) एतेनैवेत्यवधारणान्नान्यो विधिः । केचित्तु—पूर्ववत्सन्धानादि कृत्वा एतेन मन्त्रेणोपधानं कुर्वन्ति । उपधानमन्त्रस्य समुच्चय[1]प्राप्ताववधारणमिति ॥

[ अवधारणफलितार्थविवरणम ]

(वृ) एतेनैवेत्यवधारणं न सन्धानादिनिवृत्त्यर्थम् । किंतु [2]उपधानमन्त्रेण ध्रुवमसीत्या[3]दिना वा समुच्चयनिवृत्त्यर्थम् । नैमित्तिकमात्रोपदेशस्यापि प्रकृत्यर्थत्वादुभयोस्समुच्चयाशङ्का ॥

(रु) परतस्तूपधानाद्भेदेऽन्यत्संस्कृतमेतेनैव मन्त्रेणोपदध्यादित्येतावान्विशेषः । समानमन्यत्सन्धानादि ॥

(सू) **यस्य वा मन्त्रस्य स्थाने भिद्येत ॥ ९ ॥ ४ ॥ ॥ १२ ॥ २४१५ ॥**

(भा) यस्य वा मन्त्रस्य स्थाने येनोपहितं पूर्वम् ॥

(वृ) **यस्य-पूर्वम्**—येन मन्त्रेणोपहितं पूर्वं तेनैव मन्त्रेण तत्स्थाने पुनरुपदध्यात् ॥

(रु) अथ वा येन मन्त्रेण प्रागुपहितं भिद्येत तेनैवोपदध्यादित्यर्थः ॥

[ पुरोडाशाधिश्रयणपूर्वकालिककपालनाशे आश्विनेष्टिः ]

(सू) **यदि प्रयुक्तानां प्रागर्थकर्मणः कपालं नश्येदाश्विनं द्विकपालं निर्वपेद्द्यावापृथिव्यमेककपालम् । ॥ ९ ॥ ४ ॥ १३ ॥ २४१६ ॥**

---

[1] यत्प्रतिषेधार्थोऽवधा—ङ. च. [2] मन्त्रे—ग. घ. [3] दिना समुच्च—घ.

(भा) अर्थकर्म पुरोडाशाधिश्रयणम्, तस्मात्पूर्वं कपालनाशे इष्टेस्समाप्तौ दक्षिणा, कर्तृभेदात् ॥

(वृ) इष्टेः—समाप्ते—प्रक्रान्ते कर्माणि, विनष्टस्य स्थानेऽन्यन्मन्त्रेणोपधाय कर्म समाप्याऽऽश्विनेष्टिः ॥

(रु) अथ यदि कर्मणि प्रयुक्तानां मध्ये प्रागर्थकर्मणः पुरोडाशाधिश्रयणात्कपालं नश्येन्न दृश्यते तदैतां द्विहविष्कां निर्वपेत् । तस्यां तु ।

(सू) **भार्गवो होता भवति एकहायनो दक्षिणा ॥ ९ ॥**
**॥ ४ ॥ १४ ॥ २४१७ ॥**

(भा) भार्गवः—इमे भृगव इत्येवमन्ताः । एकहायनः—एकसंवत्सरः ।

(वृ) भार्गवो होतेति कर्तृनियमात् एकहायनो दक्षिणेति च नियमात् ।

[1] **भार्ग—मन्ताः—**[2] भृगूणामेवेत्यारभ्य इमे भृगवः इत्येवमन्ताः भृगवः तद्गोत्रजो भार्गवः ।

**एकसंवत्सरः—गौः ।**

(रु) एवमस्यामृत्विङ्नियमात्प्रासङ्गिकत्वाच्च तन्त्रेणैव होतारं भृगुवंश्यमागमयेत् । अविरोधाद्दक्षिणायाश्च समुच्चयः ॥

[इष्टितन्त्रमध्ये शाखान्तरोक्तविशेषांशकथनम्]

(सू) **'मही द्यौः पृथिवी च न' इति द्यावापृथिव्ययर्चा स्रुवाऽऽहुतिमत्र वाजसनेयिनस्समामनन्ति**
**॥ ९ ॥ ४ ॥ १५ ॥ २४१८ ॥**

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने त्रयोदशी खण्डिका

[1] भार्गवान्तर इमे—ग. घ. [2] भृगूणामेवाग्र इत्यारभ्य—घ.

(भा) यदा तु स्रुवाऽऽहुतिस्तदा [1] तन्त्रमध्ये। [2] परतन्त्रश्रवणात् सर्वप्रायश्चित्तम् ॥

इति धूर्तस्वामिभाष्ये नवमप्रश्ने त्रयोदशी खण्डिका

---

(वृ) तन्त्रमध्ये—होमः कर्तव्यः।

परतन्त्रश्रवणात्—परतन्त्रे संभाव्यमानस्य परस्य श्रवणात् तन्त्रमध्य एव होमः, नेष्टिवद्बहिःप्रयोगः।

सर्वप्रायश्चित्तम्—इष्टितन्त्रमध्ये नैमित्तिकाधिकाराद्दर्वीहोमनिवेशनव्यवधानाच्च सर्वप्रायश्चित्तं समुच्चीयते ॥

इति धूर्तस्वामिभाष्यवृत्तौ नवमप्रश्ने त्रयोदशी खण्डिका

---

(रु) अत्र अस्मिन्विषये। परतस्तु श्रवणान्नाशे सर्वप्रायश्चित्तमेव

इति श्रीभट्टरुद्रदत्तविरचितायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां चतुर्थे पटले त्रयोदशी खण्डिका

---

[अहुतैककपालपर्यावर्तनपतनोभयोंऽशः]

(सू) यद्येककपालः स्कन्देत् परि वाऽऽवर्तेत 'प्रजापतेर्वर्तनिमनुवर्तस्वानुवीरैरनुराध्याम गोभिः। अन्वश्वैरनु सर्वैरु पुष्टैरनु प्रजयान्विन्द्रेण देवा नो यज्ञमृजुधा नयन्तु' इति यथास्थानं कल्पयति ॥
॥ ९ ॥ ४ ॥ १६ ॥ २४१९ ॥

---

[1] तन्त्र--ङ. [2] परतस्त्वाधिश्रयाणास्सर्व-ख. परतः श्रवणात्-च.

(भा) [1] अहुतस्यैकपालस्य पर्यावर्तने पतने च यथास्थानं [2] कल्पयति यस्मात्पतितः पुरोडाशः पर्यावृत्तो वा ।

(वृ) **स्कन्दनम्–पतनम्**—यस्मात्पतितः पात्र्यादेः ।

(रु) स्थितस्य स्थानाच्चलनं स्कन्दनम् । पार्श्वान्तरेणावर्तनं पर्यावर्तनम् । यथास्थानं कल्पयति पूर्वस्मिन्नेव स्थाने स्थापयति । समानोऽयं विधिर्हुताहुतस्कन्दने । हुतस्य पर्यावर्तने तु यदि हुतः पर्यावर्तेतेत्यादिविधिना कल्पनं वेदितव्यम् ॥

(सू) **तं यजमानोऽभिमन्त्रयते 'प्रतिक्षत्रे प्रति तिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रति तिष्ठामि गोषु । प्रति प्रजायां प्रति तिष्ठामि भव्ये विश्वमन्याऽभि वावृधे । तदन्यस्यामधिश्रितम् । दिवे च विश्वकर्मणे पृथिव्यै चाकरं नमः' इति । 'अस्कान् द्यौः पृथिवीम्' इत्याहुती जुहुयात् ॥९॥४॥१७॥ ॥२४२०॥**

(भा) 'अस्कान् द्यौः पृथिवीम्, अस्कानजनि' इत्याहुती हुते पर्यावृत्ते स्रुचोऽग्रेण [3] कल्पयेत् ।

(वृ) **कल्पयेत्**—यदि हुतः पर्यावर्तेत स्रुचोऽग्रेणेत्युक्तम्

(रु) गतः ॥

---

[1] आहुत्येक–**घ. च.** अहुतस्य–**ङ.** [2] रचयति–**च.** [3] कल्पनम्–**क. ख. घ. ङ. च.**

[कपाले पत्नीसंयाजाहुतिपतने प्रवृत्तकर्मणस्तन्त्रमध्येऽपि वैश्वानरेष्टेरनुष्ठेयत्वम ]

(सू) [1]वैश्वानरं द्वादशकपालं निर्वपेद्यदि पत्नीस्संयाजयन् कपालमभि जुहुयात् ॥ ९ ॥ ४ ॥ १८ ॥ ॥ २४२१ ॥

(भा) पत्नीसंयाजाहुतिर्यदि कपाले पतति। ततोऽग्निर्वैश्वानरस्तन्त्र-[2]मध्येऽपि भवति। तदेव तन्त्रं यदि कपालानि द्वादश[3] न सन्ति। ततश्शेषाण्यासाद्यन्ते संस्क्रियन्ते च स्रुगादानप्रभृति चतुर्धाकरणान्तं वैश्वानरस्य वैशेषिकम्। आज्येडा[4]न्तां करोति परमाज्येडा[5]यास्तन्त्रेण। उपदेशो नेष्टिमध्य इष्टेः, 'वि वा एतस्य यज्ञ' इति लिङ्गात्।

(वृ) ततोऽग्नि–भवति—दक्षिणादिप्रयोग[6]भेदकाभावात प्रसङ्ग-संभवात्।

तदेव–न सन्ति—प्रवृत्तस्य कर्मणः।

ततश्शेषा–यन्ते च—[7]ततः स्रुगादानादि [8]मन्त्रेणोपधानम्। यदि पूर्वमष्टसङ्ख्यानि कपालान्युपहितानि तदाऽष्टममन्त्रस्याऽऽवृत्तिः। ततोऽर्वाचीनसंख्याकेषूपहितेषु शिष्टमन्त्रैर्विभज्योपधानम्। इतरथा द्वादशसंख्याकेषूपहितेषु।

स्रुगादा–षिकम्—कर्तव्यम्।

---

[1] प्रासङ्गिकत्वमस्यापि तन्मध्यपाताद्दृष्टव्यम्–रु. [2] मध्ये भवति–घ. [3] श सन्ति–च. [4] न्तं कृत्वा करोति–क. ग. घ. ङ. च. [5] यां तन्त्रेण–क. ङ. [6] भेदाभावाद–घ. [7] तत्र स्रु. [8] मन्त्रेण चोप–ग. घ.

**आज्येडा—करोति**—पत्नीसंयाजेषु प्रवृत्तत्वात् तदङ्गत्वादाज्येडायाः प्रक्रान्तं पत्नीसंयाजकर्म साङ्गं समाप्य[1] वैश्वानरप्रारम्भः ।

**परमा—तन्त्रेण**—प्रकृतस्य वैश्वानरस्य च ॥

(रु) प्रासङ्गिकत्वमस्यापि तन्त्रमध्यपाताद्द्रष्टव्यम् ॥

**[स्वमते प्रवृत्तदर्शपूर्णमास्यान्यतरातिपत्तौ पाथिकृतीष्टिमनुष्ठाय वैश्वानरेष्टेः कर्तव्यत्वम्, हिरण्यकेशिमते तु अप्रवृत्तस्य वैश्वानरी, तदन्यस्य पाथिकृतीति विशेषः]**

(सू) **एतामेव निर्वपेद्यो दर्शपूर्णमासयाजीत्युक्तम्**
**॥ ९ ॥ ४ ॥ १९ ॥ २४२२ ॥**

(भा) अतिपत्तौ प्रवृत्तदर्शपूर्णमासस्य पाथिकृतीं कृत्वा वैश्वानरी समान[2]तन्त्रा नानातन्त्रा वा निमित्तस्यैकत्वात् । अप्रवृत्ते वैश्वानरी प्रवृत्ते पाथिकृतीति हिरण्यकेशिनः ॥

(वृ) **अतिप—श्वानरी**—प्रवृत्तदर्शपूर्णमासस्य स्वकालेऽन्यतरातिपत्तौ पाथिकृतीं कृत्वा वैश्वानरीम् ॥

**["नानातन्त्रा समानतन्त्रा वा" इत्यादि भाष्यग्रन्थाशयस्फुटीकरणम्]**

**समान—कत्वात्**—यो दर्शपूर्णमासयाजी सन्नमास्यां वा पौर्णमासीं वातिपादयेदित्युभयोरेकनिमित्तत्वादधिकारैक्यादेकप्रयोगता । नानातन्त्रपक्षस्तूभयोर्नैमित्तिकयोर्निरपेक्षश्रवणात् ॥

(रु) व्याख्यातोऽयं विधिः पथिकृद्विधिना ॥

---

[1] प्यते वै—ग. [2] तन्त्रा वा निमि—ङ. च.

[स्वकाले अननुष्ठिताग्रयणकस्य कोद्रवादिभिस्त-
दशनेऽप्यस्या एवेष्टेरनुष्ठेयत्वम्]

(सू) **एतामेव निर्वपेद्यदकृत्वाऽऽग्रयणं नवस्याश्नीयात् ॥ ९ ॥ ४ ॥ २० ॥ २४२३ ॥**

(भा) यैरपि यागो न क्रियते कोद्रवादिभिः, तेषामपि प्रागशने वैश्वानरी ॥

(वृ) **यैरपि–नरी**—नवद्रव्यमात्राशनस्य प्रतिषिद्धत्वात् ।

(रु) नानिष्ट्वाग्रयणेऽनाहिताग्निर्नवस्याश्नीयात् इत्युक्तम् । तदतिक्रमेऽप्येषैव प्रायश्चित्तिः ॥

(सू) **आनीतो वा एष देवानां य आहिताग्निरदन्त्यास्य देवा अन्नम् । यदकृत्वाऽऽग्रयणं नवस्याश्नीयाद्देवेभ्यो भागं प्रतिक्लृप्तमद्यादार्तिमार्छेत् ॥ ९ ॥ ४ ॥ २१ ॥ २४२४ ॥**

(भा) आनीत आसन्नः । [1]कथम्? अदान्ति भक्षयन्ति आस्याऽऽहिताग्नेरिज्यासु देवताः । स चेदश्नाति नवं, देवेभ्यो [2]भागस्तेन भक्षितो भवति आर्तिं च प्राप्नोति ॥

(वृ) **आनीतः–आसन्नः**—देवानां समीपं नीतः ।
**आर्तिं–प्नोति**—स्वयम् ।

(रु) अथानेन प्रायश्चित्तनिमित्तस्य प्राशनस्य निन्दा प्रदर्श्यते ।

देवानां ह्येष सम्बन्धमानीतो योऽग्नीनाधत्ते । भागलिप्सुभिर्देवैस्स्वीयत्वेन परिगृहीत इति यावत् । तस्मादतः परमस्यान्नं देवा भुञ्जते ।

---

[1] कथमिति चेत्—**ग. घ.** [2] भागः क्लृप्तस्तेन—**घ.**

तत्र यदि तानानिष्ट्वा स्वयं नवमश्नीयात् देवेभ्य एव भागतया क्लृप्तमग्रपाकमाशितवान् स्यात्। ततश्चार्तिं प्राप्नुयात्। तस्मादशननिषेधं नातिक्रामेत्। अतिक्रम्य त्ववश्यमेतां निर्वपेत्। निरुप्य हैनां स्वे काले पुनराग्रयणेन यजेत। अशननिमित्तत्वादस्याः। कालातिक्रमे च पुनः पाथिकृतवैश्वानरौ प्रागेव दर्शितौ ॥

[युग्मस्त्रीपुरुषजन्ममात्रप्रायश्चित्तार्थं मारुतेष्टेरनुष्ठेयत्वम्]

(सू) **मारुतं त्रयोदशकपालं निर्वपेद्यस्य यमौ जायेयातां गावौ वा [1]पुरुषौ वा ॥ ९ ॥ ४ ॥ २२ ॥ ॥ २४२५ ॥**

(भा) मारुतो यमजन्मनि स्त्रीद्वयेऽपि।

(वृ) **मारुतो–येऽपि**—मनुष्यविषये गोविषये च। यद्यपि पुरुषौ वेत्युक्तम्, तथापि विधिवाक्ये यस्य यमौ जायेयातामिति यमजन्ममात्रश्रवणात् जन्मद्वयमात्रं विवक्षितम् ॥

(रु) पुरुषौ मनुष्यजातीयौ।

(सू) **निर्वीर्यतां वै पुरुष आशास्ते। अपशुतां गौः ॥ ९ ॥ ४ ॥ २३ ॥ २४२६ ॥**

(भा) पुरुषो जायमानो निर्वी[2]र्यभावमाचष्टे। अपशुतां च गौर्जायमानः ॥

(वृ) **पुरु–नो**—यमः।
**निर्वीर्य–ष्टे**—पुनरपत्यं न भविष्यतीत्यर्थः।

---

[1] पुरुषौ मनुष्यजातीयौ–रु.　[2] र्यतामा–च.

**अपशु-नः**—यम आशास्ते ।

(रु) वीर्यं प्रजननशक्तिः । आशासनामिच्छा । तथा च तत्कार्यं करोति । अर्थो लक्ष्यते, तदयमर्थः । पुरुषो यमो जातो वीर्यायोपकरोति पशुश्चापशुताम् । तस्मादावर्तव्यं प्रायश्चित्तमिति ॥

**(सू) गायत्री पुरोऽनुवाक्या भवति । त्रिष्टुग्याज्या ॥ ९ ॥ ४ ॥ २४ ॥ २४२७ ॥**

(भा) 'मरुतो यद्ध वो दिवो यावच्छर्म इति' गायत्रीत्रिष्टुभौ ।

(वृ) **मरुतो-भौ**—याज्यानुवाक्ये । मनुष्ययमजनने द्वयोरन्यतरस्य वा पुंस्त्वे जातेष्टिं वैश्वानरीं कृत्वा पश्चान्मारुतो दोषपरिहारार्थः ।

(रु) मरुतोयद्धवो दिवो, यावच्छर्मेति ॥

**(सू) आग्नावैष्णवमेकादशकपालं निर्वपेद्यमन्यस्याग्निषु याजयेयुर्यस्य वाऽग्निष्वन्यो यजेत ॥ ९ ॥ ॥ ४ ॥ २५ ॥ २४२८ ॥**

(भा) 'आग्नावैष्णवः' प्रवासे पराग्नि[1]षु बहुषु सत्सु ममेमे अग्नय इत्यज्ञानात् । यस्य चाग्नयस्तस्य चाग्नावैष्णवः । केचित्त्वाहुः-परदेशे धन उत्पन्ने पराग्निष्वपि यागो लभ्यत इति, [2] न तु तत्प्रायश्चित्तमाम्नानात् । प्रमादे हि प्रायश्चित्तं भवति ॥

(वृ) **आग्ना-ज्ञानात्**—यो यजते पराग्निषु तस्येष्टिः स्वाग्निषु । **यस्य-वैष्णवः**—पराग्निषु होमेऽप्येवम् ।

---

[1] ग्निषु तत्र ममेमे-**घ**. [2] न तस्य प्रायश्चित्ताम्नानात्-**क. ङ.** न तु तव; प्रायश्चित्ताम्नानात्-**च**.

['विप्रोषितयजमानस्य विदेशे धनलाभे पराग्निष्वपीष्टिमनुतिष्ठेत्' इति केचित्पक्षाशयविवरणम्]

**केचित्तु–भूत इति**— अस्यार्थः–प्रोषितस्य यजमानस्य देशान्तरे हिरण्यलाभे सत्येतामेव निर्वपेद्धिरण्यं वित्वा इति हिरण्यलाभानन्तरं कर्तव्यत्वादिष्टेः पराग्नावपि प्रतिनिधिकल्पनयेष्टिः कर्तव्येति ।

['तथा सति साधरणप्रायश्चित्ताम्नानवैफल्यम्' इति तत्खण्ड्यग्रन्थभावस्फुटीकरणम्]

**न तु–वति**—अस्यार्थः–परदेशे घन उत्पन्ने पराग्निष्वपि यागे कर्तव्ये सति साधारणप्रायश्चित्ताम्ना[1]नं न घटते, यस्मात्प्रमादे विदितातिक्रमे प्रायश्चित्तं भवति । न त्वेतन्नैमित्तिकमात्रं ; प्रायश्चित्तप्रकरणत्वात् ॥

(रु) यदि प्रमादवशात्परस्याग्निषु परमनवहिता ऋत्विजो याजयेयुस्तस्येयमिष्टिरुभयोर्यष्टुरग्निमतश्च ॥

[ज्वरादिना पशुमरणे कर्तव्यांशः]

(सू) **रौद्रं वास्तुमयं चरुं निर्वपेद्यस्य रुद्रः पशूञ्छमायेत ॥ ९ ॥ ४ ॥ २६ ॥ २४२९ ॥**

(भा) [2]वास्तुचिल्लिकैः क्रियते चरुः यदा ज्वरेण पशवो म्रियन्ते ।

(वृ) **वास्तु–चरुः**—(वास्तुचिल्लिकैः क्रियते) वास्तुशालिबीजैः क्रियते चरुः । रुद्रशब्दो ज्वरपरः । ज्वरेण पशूनां मरणे रौद्रो वास्तुमयश्चरुः ।

(रु) यस्य पशून् ज्वरो मारयेत्तस्य तच्छान्त्यर्थचरुः । वास्तुर्नाम सस्यविशेषः ॥

---

[1] म्नानं घटते–**ग. घ.** [2] वास्तु . . ल्लैः–**क्रि. ग.**, वास्तुचिल्लकः–**क्रि. क**, वास्तुचिल्लुकैः–**क्रि. घ.**, वास्तुचिल्लकैः **क्रि. ङ.**

[यः स्वर्गकामो निषादस्थपतिः सोऽपि रौद्रं चरुं कुर्यात्]

(सू) एतयैवाऽऽवृता निषादस्थपतिं याजयेत् ॥ ९ ॥
॥ ४ ॥ २७ ॥ २४३० ॥
सा हि तस्येष्टिः ॥ ९ ॥ ४ ॥ २८ ॥ २४३१ ॥

(भा) निषादः पारशवः ब्राह्मणेन शूद्रायामुत्पन्नः । तेषां यस्स्थपतिः महत्तरः । तस्यापि रौद्रो वास्तुमयश्चरुः स्वर्गकामस्य लौकिकेष्वग्निषु ; अशूद्राणामत्या[1]धानप्रतिषेधात् , सर्वकर्मप्रयुक्तत्वाच्चाधानस्य सा[2]हि-तस्येष्टिरिति लिङ्गाच्च ।

[स्वर्गकामस्येति विशेषणदानप्रयोजकविवरणम्]

(वृ) निषादः-ग्निषु—अश्रुताधिकारत्वात् स्वर्गकल्पनया स्वर्गकामस्येत्युच्यते । लौकिकेष्वित्येतदुपपादयति ।

[त्रैवर्णिकानामेवाऽऽधानस्य विहितत्वेन तस्य च निषिद्धत्वेन लौकिकेष्वग्निष्वेव निषादस्थपतिना इष्टिरनुष्ठेया]

अशू-धात्—शूद्रस्य वसन्तादिवाक्यैः त्रैवर्णिका[3]नामाधानस्य विहितत्वादितरेषां निवृत्तेस्तत्प्रतिपादनपरत्वादशूद्राणामिति शूद्रस्य पारशवस्याधानं नास्ति किंच ।

[आधानस्य सदृष्टान्तं त्रैवर्णिकसाध्यसर्वकर्मप्रयुक्तत्व-व्यवस्थापनम्]

सर्व-नस्य—अस्यार्थः-उक्तविधिप्रयुक्तत्वे सत्याधानस्य सकृदुत्पन्नानामग्नीनां सर्वकर्मार्थत्वात् तद्द्वारेणाऽऽधानस्य त्रैवर्णिकसाध्यसर्वकर्मप्रयुक्तत्वात् रथकारवत् स्थपतेराहत्याऽऽधानविधानाभावाच्च ।

---

[1] धाने—प्र. ङ. [2] सा हि तदुद्देशेन विहिता । अतस्तावत्तस्यामस्ति तस्याधिकारः सैव च तस्य यावदर्थमग्निविद्य आक्षेप्स्यतीति भावः । लौकिकाग्नाविष्टिरित्येके तत्र हविष्कृदाधावेति शूद्रस्येत्यादि च न प्रस्मर्तव्यम् । इति पाठान्तरम् । [3] कानामेवाधानस्य—घ.

[वसन्तादिवाक्यविहिताधाने स्थपतेरनधिकाराल्लौकिका ग्राविष्टेरनुष्ठानेऽपि दोषानवतारं निरूप्य बहुत्वस्याविवक्षितत्वव्यवस्थापनम्]

वसन्तादिवाक्यविहिताधानस्यानेककर्माधिकारित्रैवर्णिकानां विहितत्वात् स्थपतेः केवलस्थपतीष्टिमात्रप्रयुक्तत्वेप्याक्षे[1]पासंभवाल्लौकिका[2]ग्राविष्टिः। बहुवचनमनास्थया। इष्टया यक्ष्ये; स्वर्गं लोकमवाप्नवानी-त्युक्त्वा विद्युदादि कर्म। हविष्कृदाधावेत्यादीनि च यान्युपदिष्टानि शूद्रस्य ता[3]न्यस्यामिष्टौ पारशवस्य भवन्ति।

[स्थपतेश्शूद्रापुत्रत्वाच्छूद्रयाजकत्वस्य निषिद्धत्वेनास्यात्रार्त्विज्याभावव्यवस्थापनम्]

तस्य शूद्रापुत्रत्वेन शूद्रधर्मकत्वात्। तस्माच्छूद्रयाजकत्वस्य निषेधात् अस्यामिष्टावार्त्विज्यस्यायुक्तत्वात् अतिक्रान्तानिषेधानामार्त्विज्यम्; न त्वार्यो निषादस्थपतिः। समासबलात्। किञ्च।

['निषादस्थपतिः' इत्यत्र तत्पुरुषसमासस्वीकारे दोषमुद्भाव्य कर्मधारयसमासाङ्गीकारे स्वारस्यमुपपाद्य अस्या इष्टेः निषादमात्रविषयकत्वव्यवस्थापनम्]

**सा हितस्येष्टिरिति लिङ्गाच्च**—अस्यार्थः—निषादाधिपतीनां त्रैवर्णिकानामधिकारपक्षे तस्येष्टिरि[4]त्येतस्याधिकारनिर्देशो नोपपद्यते। तस्मान्निषादस्यैवेष्टिः। कथम्? समासबलाद्विशेषावगतिरिति चेत्। अत्रोच्यते—निषादश्चासौ स्थपतिश्चेति निषादस्थपतिरिति कर्मधारयसमासः। न त्वेव निषादानां स्थपतिः निषादस्थपतिरिति षष्ठीसमासः, कुतः? षष्ठ्यर्थलक्षणाप्रसंगात्।

---

[1] पस्यासंभ—घ. [2] ग्रावपीष्टिः—ग. घ. [3] तान्यस्येत्यष्टौ—ग. घ. [4] त्येकस्या—घ.

[कर्मधारयपक्षे शक्यतावच्छेदकभेदेन पदयोरैकार्थ्या-त्प्राबल्यम्]

कर्मधारयपक्षे प्रवृत्तिनिमित्तमात्रभेदेन शब्दद्वयस्यैकार्थत्वात् बलवत्ता तस्य, अतो निषाद एव स्थपतिः। किंच—

(रु) निषादो नाम ब्राह्मणाच्छूद्रायामुत्पन्नः। क्षत्रियादित्यपरम्। स्थपतिर्महत्तरः। निषादश्चासौ स्थपतिश्चेति निषादस्थपतिः। सोऽपि स्वर्गकामोऽनयेष्ट्या यजेत। ननु शूद्रस्य कर्मानर्हस्य कुतः कर्माधिकारः; कुतश्च तस्याग्निविद्ये; सा हि तदुद्देशेन विहिता। अतस्तावत्तस्यामस्ति तस्याधिकारः। इत्थं च यावदर्थमस्याग्निविद्ये अप्याक्षेप्स्यतीति भावः। लौकिकाग्नाविष्टिरित्येके। तत्र हविष्कृदाधावेति शूद्रस्येत्यादि न प्रस्मर्तव्यम्।

[दक्षिणाद्रव्यविवरणम्]

(सू) **कृष्णाजिनं दक्षिणा कूटं वाऽकर्णो वा गर्दभो हरिणो वा हरिणपृणाका वा श्यामाकपात्रो वा शफ(को)कौ वेति विज्ञायते ॥ ९ ॥ ४ ॥ २९ ॥ ॥ २४३२ ॥**

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने चतुर्दशी खण्डिका

---

(भा) कृष्णाजिनादीनि च [1]तत्संबद्धानि दक्षिणा कूटम्—[2]वस्तु। अकर्णः-छिन्नकर्णो गर्दभः, हरिणः कृष्णमृगः, हरिणपृणाका मृगपोतिका, श्वेतवर्णा वा[3] श्यामाकपूर्णं वा पात्रम्, शफकौ—खुरौ। सर्वेषामुत्तानस्त्वेति प्रतिग्रहः। अनाम्नातमन्त्रत्वात्। केचित्—निरृत्यै गर्दभमिति गर्द-

[1] तत्सम्बद्धानि—च. [2] वास्तु—च. [3] या हरिणपोतिका श्या—घ.

भस्य विशेष[1]संयुक्तं कुर्वन्ति । तथा श्यामाकपात्रस्य विश्वेभ्यो देवेभ्यो धान्य[2]मिति । नात्र पात्रस्य दानमिति ॥

इति धूर्तस्वामिभाष्ये नवमप्रश्ने चतुर्दशी खण्डिका

---

[स्थपतीयद्रव्यदक्षिणाकत्वादिष्टेरपि तदीयत्व-व्यवस्थापनम्]

(वृ) कृष्णा-क्षिणा—तदीयद्रव्याणां दक्षिणात्वात्तस्यैवेष्टिः । न त्वार्याणाम् । कृतकं वस्तु कूटम् ।

[श्यामाकविशिष्टपात्रस्य दक्षिणाभ्युपगम-व्यावर्त्योंऽशः]

सर्वेषा-त्वात्—यद्यपि निरृत्या अश्वतरगर्दभौ इति गर्दभस्यास्ति ; तथापि तस्याश्वतरेण समुच्चितविषयत्वात्सर्वेषामनाम्नातमन्त्रत्वम् ।

विश्वेभ्यो देवेभ्यो धान्यमिति [3] धान्यस्य न भवति ; पात्रस्य श्यामाकविशिष्टस्य दक्षिणात्वात् ।

केचित्तु ;—निरृत्यै गर्दभमिति गर्दभस्य विशेषसंयुक्तं परिपठितस्य मन्त्रस्य विभागेन कुर्वन्ति ।

[पठितमन्त्रैकदेशविभागाविशिष्टानुष्ठान-स्वीकार उपदेशमते]

उपदेशमते दक्षिणामात्रविनियोगव्याख्यानावसरे अश्वतरगर्दभयोर्मन्त्रभेदकरणाद्विशेषसंयुक्तं परिपठितस्येति । परिपठितस्य मन्त्रस्यैकदेशं विभज्य विशेषसंयुक्तं कुर्वन्ति । तथा—

श्यामाक-दानमिति—होमोपकारकत्वाच्छ्यामाकानाम् ।

इति धूर्तस्वामिभाष्यवृत्तौ नवमप्रश्ने चतुर्दशी खण्डिका

---

[1] संयुक्तं परिपठितस्य कुर्व—च. घ. [2] मिति श्यामाकप्रधानत्वान्न तस्य पात्रस्य दानमिति—ग. घ. [3] श्यामाकपात्रस्य न भवति—ग. घ.

(रु) निषादस्य मृगघातकवृत्तेः स्वकर्मार्थसाधनविशेषः कूटम् । अकर्णः कर्णविकरुः । निषादैः कृतपरिचया हरिणवश्यार्थं विसृष्टा हरिणपोतका हरिणपृणाका । पात्रपूरणाः श्यामाकाः श्यामाकपात्रः । शफकः निशितखुरो हरिण इष्यते ॥

इति श्रीमद्रुद्रदत्तविरचितायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
चतुर्दशी खण्डिका

---

[ब्रह्मचारिस्त्र्युपगमनोत्रेयविशेषांशाः]

(सू) [1]यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेत ॥ ९ ॥ ४ ॥ ३० ॥ २४३३ ॥

(भा) ब्रह्मचारिस्त्र्युपगमने—अन्यत्र बुद्धिपूर्वं रेतस उत्सर्गे उत्सर्गलक्षणत्वात् स्त्र्युपगमनस्य । गदर्भः पशुः । न तु स्वप्ने रेतसः उत्सर्गे । तत्र हि स्मार्तं पुनर्मा मैत्विन्द्रियमिति प्रत्यक्षम् ।

[बुद्धिपूर्वकरेतस्स्कन्दनस्य दोषजनकत्वात् भूम्यादिषु तदुत्सर्गेऽप्येतत्प्रायश्चित्तस्यानुष्ठेयत्वम्]

(वृ) ब्रह्मचारिगमस्य—गर्दभेनावकीर्णेत्यवकीर्णमात्रस्य धर्मशास्त्रोक्तत्वात् स्त्र्युपगमनेऽपि पुरुषस्य बुद्धिपूर्वरेतस्कन्दनमेव दोषहेतुः अतो गवादिषु भूम्यादिषु वा बुद्धिपूर्वं रेतस उत्सर्गे भवत्येतत्प्रायश्चित्तम् ।

[ब्रह्मचारिविषयकपशुयागस्यात्रोपदेशे निदानम्]

[2]ब्रह्मचारिविषयत्वेऽपि पशुयागस्य प्रायश्चित्तरूपहविर्यज्ञरूपत्वादितीहोपदेशः ।

---

[1] उपलक्षण—च. ङ. [2] ब्रह्मचारित्वाविषयत्वेऽपि—ग.

किंच वैदिकेषु [1]कर्मसु प्रवृत्तस्य तदङ्गब्रह्मचर्यव्रतः स्त्र्युपगमनेऽपि तत्कर्मसमाप्त्युत्तरकालमेव तत्प्राय[2]श्चि[3]त्तप्राप्त्यर्थं च ।

[अवकीर्णिप्रायश्चित्तस्य स्मार्तस्यानुष्ठाने बीजम्]

**गर्दभः पशुः**—रक्षोदैवत्यः । एतस्मिन् समाप्ते स्मार्तमप्यवकीर्णिप्रायश्चित्तं भवति । पुरुषापराधत्वात् ।

**न तु–प्रत्यक्षम्**—स्वप्नविषयमेवाधिकृत्य विहितम् । प्रयत्नोत्सर्गविषयत्वात्पशोः ॥

(रु) आहिताग्नेर्ब्रह्मचर्यकाले स्त्रियमुपेयुषोऽयं विधिः । आहिताग्न्यधिकारात् । अथवा प्रसिद्धब्रह्मचारिण एव ग्रहणम् । रूढेर्बलीयस्त्वात् । वक्ष्यति च ब्रह्मचारिधर्मेषु 'गर्दभेनावकीर्णो निरृतिं पाकयज्ञेन यजेत' इति । न चैवमस्यानर्थक्यम् । देवताविकल्पार्थत्वात् । आहिताग्न्यधिकारे वचनानुपपत्तिर्देवताभेदे श्रौतप्रयोगविकल्पार्थत्वेनोपपत्तेः । तस्माद्ब्रह्मचर्यार्थत्वेऽपि न दोषः । तदुक्तं भारद्वाजेन, यो ब्रह्मचारी स्त्रियमुपेयादिति कस्यायं वादः आहिताग्नेरित्येकम् । अनाहिताग्नेरित्यपरम् । तत्र त्वाहिताग्नेर्व्रातपत्यादिप्रायश्चित्तं द्रष्टव्यम् । यथोक्तं व्रत्येऽहनि मांसं वाऽश्नाति स्त्रियं वोपैतीति यदि दीक्षितोऽवकिरेदित्यादि ॥

[कपालधर्मरहितपुरोडाशश्रपणम्]

(सू) **भूमावकपालं पुरोडाशं श्रपयेत् ॥ ९ ॥ ४ ॥**
**॥ ३१ ॥ २४३४ ॥**

(भा) [4]न कश्चित्कालधर्मः । भूमिकपाले तु–परिलिख्यैक[5]कपालवदभिमर्शनप्रोक्षणाङ्गाराधिवर्तनाद्यूहनान्यर्थलुप्तानि क्रियन्ते । इह [6]त्वकपालेऽर्थाद्भूमिस्तप्यते ॥

---

[1] धर्मेषु–ग. [2] श्चित्तम् । त प्रा–ग. घ. [3] तत्प्रा–ग. घ. [4] न भूमिकपालधर्मः–ङ. [5] कपालमात्रं अभि–ङ. [6] भूमिकपालेऽर्थाः–ङ.

[नक्षत्रेष्टिवत् यावत्सम्भवं कपालधर्माणा-
मनुष्ठेयत्वम्]

(वृ) भूमिक-क्रियन्ते—नक्षत्रेष्टिषु 'भूमिकपालं निरवपत्' इत्यत्र भूमौ कपालवत्परिलिख्य यावत्सम्भवं कपालधर्माः कर्तव्याः ॥

(रु) अकपालमितिवचनाद्भूमिकपालमित्यवचनाच्च कपालधर्मरहितायां भूमौ पुरोडाशं श्रपयेत् ॥

[आघाराद्यङ्गजातस्याप्स्वेवानुष्ठेयत्वे विनिगमकं,
प्रणयनकाल एवापां प्रणयनं च]

(सू) अप्स्ववदानैः प्रचरेयुः ॥ ९ ॥ ४ ॥ ३२ ॥
॥ २४३५ ॥

(भा) अप आनीय तास्वप्सु अवदानैर्गर्दभस्य प्रचरेयुः। वपाऽपि चावदानग्रहणेन गृह्यते। साऽप्यप्सु। अतस्साङ्गप्रधानदेशे निर्दिश्यत इत्यङ्गान्यप्याघारादीन्यप्स्वेव। अपोऽभ्यवहरन्तीत्यवचनात् नोदकसमीपं गम्यते। इहैव प्रणयनकाले आपः प्रणीयन्ते।

['साऽप्यप्सु' इति भाष्यवाक्योपष्टम्भकयुक्ति-
कथनम्]

(वृ) वपाऽपि-त्यते—अतः साप्यप्सु-आहवनीयकार्ये अपां विधानात्।

[अङ्गविशिष्टस्य प्रधानत्वे निदानम्]

अतस्सह-प्सु—सहाङ्गं प्रधानं 'देशे देशे काले निर्दिश्यते' इति परिभाषासिद्धित्वात्।

[प्रणयनसमये अप्प्रणयने हेतुः]

अपोऽभ्यु-प्रणीयन्ते—निर्ऋतिदैवत्ये त्वापो न सन्ति।

(रु) वपादिभिरवदानैरप्सु चरेयुः। प्रयाजादिभिरप्यप्स्वेव प्रचारः प्रधानसदेशत्वादङ्गानाम्। न चावभृथवद्यत्रापस्तत्र गच्छन्ति अपोऽभ्यवहृत्येत्यवचनात्। तेनाप एवोत्तरवेदिस्थाने स्थापनीया भवन्ति। तत्रावभृथवदेवेध्मादीनामर्थलुप्तानां निवृत्तिः। यथार्थं मन्त्राणामूहश्च द्रष्टव्यः।

[पशुकर्मणो रक्षोदैवत्यत्वेऽनुष्ठेयांशोपपादनम्]

(सू) रक्षो दैवत्यः स्यान्निरृतिदैवत्यो वा ॥ ९ ॥
॥ ४ ॥ ३३ ॥ २४३६ ॥

(भा) यदा रक्षोदैवत्यः तस्य कर्म; रक्षोदैवत्येन पशुबन्धेन यक्ष्ये इत्युक्त्वा [1]लौकिकाग्नि[2]माहृत्य ततो 'विद्युत्' षड्ढोता पश्विष्ट्यादि। उत्तरवेद्यामुपरि यथोदकं तिष्ठति तथोपायः क्रियते। नोपवाजनम्। एवम्प्रकाराण्यर्थ लुप्तानि न क्रियन्ते। अपां [3]नेध्मप्रणयनम्। उद्यतहोमो हूयते। अद्भ्यः प्रणीयमानाभ्योऽनुब्रूही[4]त्युद्यम्य सिकताभिर्नयन्ति। सन्ति संभाराः गुग्गुल्वादयः पौतुद्र[5]वाः, अनिन्धनार्थत्वात्। आपो बाधध्व[6]मित्याद्यूहः। [7]न समिन्धनादि। नेध्म एकविंशतिदारुः; न निर्मन्थ्यः, नोपवाजनम्; एवम्प्रकाराण्यर्थलुप्तानि न क्रियन्ते[8]। आपां पुरीषमसीत्येवमादिबद्धा[9] ऊहाः।

[हौत्राणां मंत्राणामूहप्रकारः]

प्रदेवान् [10]दैवाधियेति हौत्राणामृचामूहः।

---

[1] लौकिकमग्नि—ङ. [2] कोऽग्निरानीयते—ग. घ. [3] प्रणयनकाले नेध्म—ङ. [4] त्तोद्यम्य—ङ. घ. [5] वाश्च—ङ. घ. च. [6] मित्येवमाद्योह—ङ. च. [7] न समिदाधानादि—ख. न निर्मन्थ्य समि—ङ. [8] न्ते सर्वमनर्थलुप्तं क्रियते—च. घ. [9] बन्धा ऊह्याः—च. [10] देव्याः—ङ. च. घ.

[तेषामूहानङ्गीकारपक्षे प्रमाणहेतूपन्यासः]

न वा हौत्राणामृचामूहः । तस्मादृचं नोहेदिति श्रुतेः ।[1]परिगणनाच्च याज्यानुवाक्यावर्जमिति । यासामूहस्तासामभावाद्रक्षोदेवत्यानामाग्नेयीभिर्व्याहृतिभिर्वा यागः । पशुश्रपणो निर्मन्थ्यः । रक्षोभ्यस्त्वा जुष्टमुपाकरोमी[2]त्यादिनिगमाः । अशृता वपा हूयते .[3]न च निकूब्यते ।

[राक्षोघ्नयोः पुरोडाशहविषोः प्रैषाद्युपदेशः]

रक्षोभ्यो गर्दभस्य चन्द्रस्य मेदसोऽनुब्रूहि, रक्षोभ्यो गर्दभस्य चन्द्रस्य मेदसः प्रेष्येति । रक्षोभ्यः पुरोडाशस्य रक्षोभ्यो गर्दभस्य हविषः । होता यक्षद्रक्षांसि गर्दभस्य चन्द्रस्य मेदसो जुषतां हविर्होतर्यज ।

[वपापुरोडाशाद्यङ्गसम्बद्धत्वं याज्यायाः]

ये यजामहे भूर्भुवस्सुववौंषडिति याज्या सर्वत्र । होता यक्षद्रक्षांसि पुरोडाशस्य होता यक्षद्रक्षांसि गर्दभस्य हविष आदन्नद्येति बहुवचने[4] उपदेशः । वपाऽवदानग्रहणेन न गृह्यते । यदि वपा हविरवदानं वा स्कन्देत् इति पृथग्ग्रहणात् । अतो वपा आहवनीये हूयते । मुख्यत्वाच्च तस्याः ।

[अग्निप्रणयनसमानाधिकरणप्रणयनकर्मीभूतास्वप्स्वेवाङ्गजालस्यानुष्ठेयत्वव्यवस्थापनम् ]

अङ्गान्यपि सर्वाणि, सहाग्निना नीतास्वप्सु । पात्रेणावदानहोम एव केवल इति ॥

[उद्यतहोमविधानं विहारे, तत्र हेतुश्च]

(वृ) लौकिकाग्नि–ते—विहारं कृत्वा । ततो विद्युदसि । प्रणीयाग्नीन्–षड्ढोता । उद्यतहोमस्तु हूयते । आहवनीयस्थान-

---

[1] पारगणिताश्च । यासामूहस्तासा–ङ. च. परिगणाश्च यासामूहः–ख.
[2] मीत्येयमादि. [3] न निगूढ्यते–ख., न निरूढ्यते–घ. [4] नेन–च.

स्याग्नेः पुरस्तादुत्तरवेद्यामपां प्रणयनात्तस्य परत्वात् पूर्वो यत्सन्नपरो भवासीति मन्त्रलिङ्गसंभवादुद्यतहोमः कर्तव्यः ॥

**प्रदेव–हः** — प्रदेवानित्यादि ।

**परिगणना–जेमिति** —तथाद्रिँ होतोहन्नङ्गानीति ।

**[यागस्याग्निदेवताकत्वे, रक्षोघ्नाभावेऽपि केवलव्याहृतिभिरनुष्ठेयत्वे च बीजम्]**

**रक्षोदेव–याग**—अग्निस्सर्वा देवता इति सर्वदेवतात्मकत्वादाग्नेयप्राप्तिः । व्याहृतीनां तु याज्यैकदेशत्वेन पूर्वप्राप्तत्वाद्रक्षोदैवत्यानामृचामभावे व्याहृतिमात्रेण यागः ॥

**[सोपपत्तिकं निर्मन्थ्यस्य पशुश्रपणार्थत्वोपपादनम्]**

पशुश्रपणो निर्मन्थ्यः—निरूढविकारत्वेऽप्याहवनीयोल्मुकाभावात् मूलप्रकृतिभूताग्नीषोमीये निर्मन्थ्यं वा कुर्यादित्युक्तत्वान्निर्मन्थ्यः पशुश्रपणार्थः ॥

**[केवलवपाया होमे युक्तिप्रतिपादनम्]**

**अशृता वपा हूयते**—आहवनीयाभावात् शामित्रस्य च हृदयादिश्रपणार्थत्वात् ।

**न च निकूडयते**—अङ्गारनिकूडनस्यापि श्रवण[1]रूपत्वान्नप्सु नि[2]कूडनम् ।

**[प्रैषे 'चन्द्रस्य मेदसः' इत्युक्तौ विनिगमकम्]**

**रक्षोभ्यो–भस्य ह**—अश्ववद्वपाया अभावाच्चन्द्रस्य मेदस इत्युच्यते ।

**ये यजा–सर्वत्र**—वपापुरोडाशाङ्गेषु ।

---

[1] निरूपणत्वा–ग. [2] कूड्यते–घ.

[वपायागस्य प्रधानत्वे, आघाराद्यङ्गानामखिलाना-
माहवनीयेऽनुष्ठेयत्वे च हेतुः]

**मुख्यत्वात्तस्या अङ्गान्यपि**—अस्यार्थः—उपदेशपक्षे अप्स्ववदानैरित्यवदानग्रहणेन वपाया अगृहीतत्वाद्वपायागस्यापि प्रधानत्वात् मुख्यत्वाच्चाङ्गानामाघारादीनां तद्देश एवानुष्ठानमित्याहवनीयेऽङ्गानि।

अतः प्रणयनकालेऽग्निना सह पात्रान्तरेणापो नीत्वा उत्तरवेद्यामग्निं चापश्च पृथक् स्थापयित्वाऽप्सु हृदयादियागः। वपाऽऽघारादिहोमोऽग्नावेव। अग्निधर्माश्च प्रणयनीयमिध्ममादीप्येत्यादयः कर्तव्याः। तदाह—**सहाग्निना केवल** इति॥

(रु) गर्दभ इति शेषः।

(सू) **निरृतिं पाकयज्ञेन यजेत ॥ ९ ॥ ४ ॥ ३४ ॥**
॥ २४३७ ॥

(भा) यदा तु निरृतिदैवत्यः; तदा मारयित्वा गर्दभं पक्त्वा च कुम्भ्यां तूष्णीं लौकिकेऽग्नौ श्रपयित्वाऽभिघार्येति पार्वणवद्विधिः। निरृत्यै स्वाहेति प्रथमाहुतिः। सर्पिष्मच्छेषं शूद्रोऽश्नाति रक्षोदैवत्येऽपि शूद्रोऽश्नातीत्युपदेशः॥

[उपकुर्वाणब्रह्मचारिणः व्रतादिषु गृहस्थस्य
चाग्निनिष्कर्षः]

(वृ) **यदा तु—ग्नौ**—अस्यार्थः—अवकीर्णिपशुयागस्य ब्रह्मचारिणः स्त्र्युपगमनादि[1]रेतःप्रयत्नोत्सर्गनिमित्तदोषपरिहारत्वादुपकुर्वाणस्य ब्रह्मचारिणोऽग्न्यन्तराभावाल्लौकिकाग्निः। गृहस्थस्य व्रतादिषु ब्रह्मचर्यकाले प्रयत्नोत्सर्गे पत्न्या दोषाभावात्सहाधिकाराभावादात्मनो दोषपरिहारार्थं

---

[1] रेतसः—घ.

लौकिक एवाग्निः कर्तव्यः। स्वभार्यया सह गमने तस्यापि दोषस्य विद्यमानत्वादौपासनादिषु कर्तव्यमिति केचित्॥

नायं गृहस्थविषयः, ब्रह्मचारिविषय इत्यन्ये। निरृतिं पाकयज्ञेन यजेतेति॥

श्रपयित्वा-तिः-- अग्निस्स्विष्टकृद्द्वितीयः।

[शूद्रस्य सर्पिष्मच्छेषप्राशने प्रमाणम्]

सर्पिष्म-श्नाति—पार्वणविधौ। तेन सर्पिष्मतेत्युक्तम्। अवकीर्णिपशौ धर्मशास्त्रे तस्य शूद्रः प्राश्नीयादित्युक्तम्। अतस्सर्पिष्मच्छेषं शूद्रोऽश्नाति॥

रक्षो-देशः—अवकीर्णपशुयागशेषभक्षणे शूद्रस्य दृष्टत्वात् [1] स्वपक्षे भक्षणं चिन्त्यम्।

[शिष्टहविषः शूद्राय प्रदानम्, तत्र विनिगमकं च]

(रु) निरृतिदेवत्यपक्षो नायं पशुपक्षः। किं तु पार्वणविधिना लौकिकेऽग्नौ निरृत्यै स्वाहेति दर्वीहोमः कार्य इत्यर्थः। तथाऽवकीर्णिनो गर्दभेज्या लौकिक इति कात्यायनः। तत्र तु हविश्शेषं शूद्राय दद्यात्। यथा वक्ष्यति गर्दभेनावकीर्णो निरृतिं पाकयज्ञेन यजेत, तस्य शूद्रः प्राश्नीयादिति॥

[पुरोडाशक्षामविषयकं प्रायश्चित्तम्, सौत्रनिरृतिशब्दस्य पाप्मार्थकत्वं च, रुद्रदत्तस्तु अलक्ष्मीरूपार्थकत्वमाह]

(सू) यस्य हविः क्षायति तं यज्ञं निरृतिर्गृह्णाति।
तत्संस्थाप्यान्यद्धविस्तद्दैवतं निर्वपेत्॥ ९॥ ४॥
॥ ३५॥ २४३८॥

[1] स्वपक्षेति विशेषभक्षणम्—घ.

(भा) क्षामं हविर्दग्धं यस्य भवति तस्य यज्ञं पाप्मा गृह्णाति। तत्संस्थाप्य प्रतिनिधिनाऽऽज्येन ब्राह्मणभोजनान्तम्। अन्यद्धविरित्यभ्यन्वाधानादिब्राह्मणभोजनान्तं तद्दैवत्यमेव। नान्यानि समानतन्त्राणि। सर्वेहविष्षु क्षामेष्वेष विधिः।

(वृ) तस्य यज्ञं-ति—निरृतिशब्दः पापपरः; 'पाप्मानमेव निरृतिं पूर्वां निरवदयते' इति सामानाधिकरण्यात्।

तत्सम्स्थाप्य-न्तम् — पुरोडाशक्षामविषयत्वात्प्रायश्चित्तस्य। "हविर्नाशे आज्येन ता देवता" इत्याज्यप्रतिनिधिर्वक्ष्यमाणत्वात्तेन तत्संस्थाप्यान्यत॥

सर्वेह-विधिः—सर्वत्र हविःक्षाण इत्यर्थः। हविः क्षायतीति हविर्मात्रनिर्देशात्सान्नाय्येऽपि श्रप्यमाणे कृत्स्ने दग्धे क्षामेष्टिः। अभ्यन्तरदाहादिभिर्नाशादौ सान्नाय्यस्य यस्य सायं दुग्धमित्यादि॥

(रु) यस्य हविः क्षायति विदह्यते तं यज्ञमलक्ष्मीर्गृह्णाति। न स कार्य इति यावत्। ततश्च क्षामस्य हविष आज्यं प्रतिनिधिं कृत्वा शिष्टैश्च हविर्भिः तत्कर्म संस्थाप्य तस्मिन्नेव विहारेऽन्यद्धविस्तद्दैवतं निर्वपेत्। अभ्यन्वाधानादि तेनैव हविषा पुनर्यजेत नान्यैरक्षामैरपीत्यर्थः। तदेव हविर्निर्वपेदित्येव सत्याषाढभारद्वाजौ। दोषयोर्दाहे तु वैशेषिकत्वादार्तिप्रायश्चित्तमेवेष्यते॥

[पुरोडाशदाहे शिष्टेनेज्याविधिः]

(सू) **अथैकेषां। यस्य पुरोडाशः क्षायति तं यज्ञं निरृतिर्गृह्णाति। यदुच्छिष्टं स्यात्तेन प्रचरेद्द्वेष्यांय तां दक्षिणां हविरुच्छिष्टं च दद्यात्। तमेव निरृत्याग्राहयतीति विज्ञायते॥ ९॥ ४॥ ३६॥ २४३९॥**

(भा) एकेषां शाखिनां मतेन पुरोडाशे दग्धेऽन्यदपि [1]विकल्पेन यदुच्छिष्टं दग्धशेषं [2]तेनैवेज्या। यजमानः द्वेष्याय तां दक्षिणां या तस्मिंस्तन्त्रे दक्षिणा हविरुच्छिष्टं दग्धशेषं च द्वेष्याय ददाति, ब्राह्मणाः अयं व ओदन इत्येष मन्त्रोऽनूहेनैव, प्रायश्चित्तानां प्रकृत्यर्थत्वात्। द्वेष्यः प्रतिगृह्णाति मन्त्रेण। प्रायश्चित्तं हूयते नियमेन। नात्र पुनरिज्या। तदेव संस्थाप्यते॥

(वृ) पुरोडाशे-ल्पेन—भवति वक्ष्यमाणम्।

यदुच्छि-ज्या—वरुणग्रहाच्च पादग्रहणं पादग्रहणेन यज्ञार्तिर्निर्दिश्यते।

यजमानः-नूहेनैव—प्रदर्शनार्थमेतत्, ब्राह्मण ओदनमित्येव ब्राह्मणादि।

[पुरोडाशशेषस्यौदनशब्देन दानं प्रतिग्रहश्च, तत्र हेतुश्च]

प्रायश्चि-त्वात्—प्रकृतावूहाभावात्। पुरोडाशशेषस्याप्योदनशब्देन दानप्रतिग्रहणे।

द्वेष्यः प्र-णे—द्वेष्यस्य ऋत्विग्भावेऽप्यस्यापि द्वेष्यस्य दाक्षिणादानविधानात्समन्त्रकं प्रतिग्रहणम्। अथवा प्रक्रान्ते कर्मणि कुतश्चित्कारणात् यमृत्विजं द्वेष्टि यजमानस्तस्मै दानम्' प्रतिग्रहश्च तस्य।

प्राय-मेन—एकदेशस्य दग्धत्वान्नात्र पुनरिज्या। अन्यद्धविस्तद्दैवत्यमित्येकेषां मतेऽनुक्तत्वात् तदेव संस्थाप्यते; प्रकृतकर्म।

---

[1] न्यदवि—क. ग. घ. न्यदिक—च. [2] तेनैव चेज्या—ङ.

[पुनरिज्यानिषेधः]

(रु) **पुरोडाशे क्षामेऽयं विधिः विकल्प्यते । तत्र यदेव क्षामावशिष्टं स्यात्तेनैव यजेत ।** या तु तस्मिंस्तन्त्रे दाक्षिणा तां क्षाम हविश्शेषं च द्वेष्याय दद्यात् ! तथा च कृते यज्ञग्राहिणी निरृतिस्तस्मिन् गमिता भवति । ततश्च स एव यज्ञश्श्रेयान् संपद्यत इति पुनरिज्यापि न कार्येति भावः ॥

[पूर्वोक्तप्रायश्चित्तस्य सर्वदाह एवानुष्ठेयत्वम् ]

(सू) **सर्वदाहे प्रायश्चित्तम् ॥ ९ ॥ ४ ॥ ३७ ॥ २४४० ॥**

**(भा)** [1]क्षामहविःप्रायश्चित्तमुक्तं स्वल्पेऽपि दग्धे स्यात् । अतः सर्वदाह [2]एव प्रायश्चित्तम् , नैकदेशे दग्धे । अग्निपाक्यानां हविषामेकदेशदाहस्या[3]परिहार्यत्वात् । अस्मिंस्तु पक्षे [4]यस्मिन् स्थानेऽदग्धं तस्मादिज्या । सर्वप्रायश्चित्तं तु हूयतेऽन्यत्र गृहीतमिति ॥

(रु) यदेतत्प्रायश्चित्तं तत्सर्वदाह एव भवेत् । नैकदेशदाहे । तस्यावर्जनीयत्वात् । यथोक्तं न्यायविद्भिः, क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् इति ॥

(सू) **[5]यदि वाऽवदानेभ्यो न प्रभवेत् ॥ ९ ॥ ४ ॥ ॥ ३८ ॥ २४४१ ॥**

**(भा)** अथवा [6]यदाऽवदानेभ्यो न प्रभवति तदा प्रायश्चित्तम्[7]–सर्वदाहेऽपि । अवदानस्थानदाहे न प्रभवत्यवदानेभ्यः । यद्यपि सर्वं

---

[1] क्षामप्रायश्चित्तम्–ङ. च. [2] एव सर्वप्रा–च. [3] स्याशक्यप–ङ. [4] यत्स्थानमदग्धं–च. [5] यदव–च. [6] त्तं सर्वदाहेऽसर्वं–घ. [7] दग्धप्रायश्चित्तम्–घ. च.

हविर्देवतार्थम् , तथापि स्थाननियमात्तद्दाहे [1]सर्वप्रायश्चित्तम् । इह तु न्यायः तत्सर्वं देवतार्थं हविः [2]केवलं तत्स्थाननियमोऽतिक्रान्त इति सर्वप्रायश्चित्तम् । अतस्सर्वदाह एव युक्तम् ॥

(वृ) **यदवदा–हेऽपि** — मध्याद्यवदानस्थाननाशे आज्यसंस्था क्षामेष्टिश्च । एतदुपपादयति ? **अवदानेभ्यः** ।

यद्यपि—आग्नेयोऽष्टाकपाल इति **सर्वं–श्चित्तम्** ।

(रु) असर्वदाहेऽपि यदा शिष्टं हविरिज्यार्थेभ्यो न पर्यस्यात्तदापीष्यते । न कथं चिदवदानेभ्यः पर्याप्त इत्यर्थः ।

[सोपपत्तिकं होमस्य निर्वापस्य चाङ्गाङ्गिभावव्यवस्थापनम्]

(सू) **यद्यप्रत्तदैवतं हविर्व्यापद्येत अन्यद्धविस्तद्दैवतं निर्वपेत् ॥ ९ ॥ ४ ॥ ३९ ॥ २४४२ ॥**

(भा) अप्रत्तं देवतायै अप्रत्तदैवतम्—अहुतमित्यर्थः । होमो हि प्रधानम् । [3]निर्वापस्तु होमस्य शेषभूतः । होम[4]स्यापूर्वाधारकत्वात् । व्यापन्नं यदार्याणामभोजनीयमिति वक्ष्यति अन्यद्धविरदुष्टं तद्दैवत[5]मावर्तते, नान्यदैवतम् ॥

(वृ) **अप्रत्तं–धानम्**—प्रधानशब्देन होम एवोच्यते यस्माद्धोमो हि प्रधानम् , तेनापूर्वनिष्पत्तेः ॥

**निर्वापस्तु–तः**—यद्यपि हविषो निर्वापेण देवतासंबंधः प्रतीयते, तथापि होमः प्रधानम् , तस्यापूर्वाधारकत्वादित्यर्थः । निर्वापस्तदङ्गमेव ॥

---

[1] लं तु स्थान—च. [2] अप्रत्तं देवतायै. [3] निर्वपणं तु—ग. [4] स्यापूर्वसाधनत्वात्—ङ. च. [5] मेवावर्तते—च.

[यादृशदेवताकं हविर्नश्यति तन्मात्रस्यैव पुनर्निर्वापविधानं,
अन्यतरस्योभयोर्वा व्यापत्तौ कर्तव्यांशाश्च]

(रु) अप्रत्तं देवतायै यस्यादप्रत्तदेवतम्। अप्रत्तदैवतमिति वा पाठः। तदा तु अप्रत्तं दैवतमवदानं यस्येति विग्रहः। व्यापत्तिर्दोष इति वक्ष्यति सा च नाशादिनाप्ययोग्यस्योपलक्षणार्था। असर्वहविर्विषय च, 'यदि सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा' इत्युत्तरत्र वचनात्। तदास्यां व्यापत्तौ सत्यां यद्दैवत्यं हविर्व्यापन्नं तन्मात्रमन्यन्निर्वपेत्। न तु तत्सहभाव्यव्यापन्नमपि हविरन्तरमित्यर्थः। प्रत्तदैवतस्य त्वप्रत्तसौविष्टकृतस्यापि व्यापत्तौ न पुनरुत्पत्तिः, अप्रत्तदैवतमिति वचनादप्रयोजकत्वाच्च। तथा 'प्राक्स्विष्टकृत' इत्येवाश्वलायनः। तथा अवदानदोषे पुनरायतनादवदानमिति च। सान्नाय्यव्यापत्तौ त्वार्तिप्रायश्चित्तमेवेष्यते वैशेषिकत्वात्। वक्ष्यति च स्रुगादानप्रभृतयो मन्त्रा इति। तद्विकारव्यापत्तिरपि तेनैव व्याख्याता। तत्र त्वाह भारद्वाजः, सान्नाय्यप्रायश्चित्तान्यामिक्षायां न विद्यन्ते। यद्यन्यतरो व्यापद्येत यत एव कुतश्चोत्पाद्य प्रचरेत्। यद्युभयं व्यापद्येत दध्नाज्येन पयसा वा यजुषोत्पूतेन प्रचरेत्। आज्येन वाजिने व्यापन्न इति॥

[निरुप्यमाणान्यहविषि स्रुगादानादिमन्त्रावृत्तिविधानम्]

(सू) [1]तत्र स्रुगादानप्रभृतयो मन्त्रा आवर्तेरन्॥९॥
॥४॥४०॥२४४३॥

(भा) तत अन्य[2]स्मिन्निरुप्यमाणे स्रुगादानप्रभृतयो 'वानस्पत्याऽसि-दक्षाय त्वा' [3]इत्यादयो मन्त्राः सह कर्मणाऽऽवर्तन्ते।

---

[1] तस्मिन् निरूप्य—च. [2] इत्येवमादयः—च. [3] तत उत्तारं मन्त्रैः—क. ख. तदुत्तार—ङ.

(वृ) स्रुगादन-र्तन्ते—अनुष्ठेयप्रकाशकत्वात्करणमन्त्राणाम् । केवल मन्त्राप्रयोगे दृष्टार्थत्वप्रसङ्गात् सह कर्मणा मन्त्राऽऽवृत्तिः ।

(रु) स्रुगग्निहोत्रहवण्यादीयते येन स मन्त्रस्स्रुगादानः । समन्त्राणामेव कर्मणामावृत्तिसिद्धौ मन्त्रवचनमुत्तराविधिविकल्पार्थम् ॥

[विनष्टे हविषि पुनस्समन्त्रकक्रियाभ्यासविधिः, तत्रोपपत्तिश्च]

(सू) यावदन्ते वा व्यापद्येत ॥ ९ ॥ ४ ॥ ४१ ॥ ॥ २४४४ ॥

(भा) यावद्व्यापन्ने हविषि मन्त्रैः कृतं तावत्तूष्णीं कृत्वा तत [1]उत्तरमन्त्रैः करोति । उक्तो मन्त्रः [2]कर्मणा संबध्यत इति । पूर्व एव तु न्यायः । द्रव्यद्वारो हि मन्त्रः । द्रव्यं प्रम्नायते स हि कर्मणा संबध्यते । द्रव्ये विनष्टे[3] पुनर्मन्त्राऽऽवृत्तिः द्वारं विनष्टमिति । क्षिप्तोदके विनष्टं दुष्टं वा हुत्वा सर्वप्रायश्चित्तं प्रकृतिवत् ।

(वृ) यावद्व्या-ध्यत इति—अस्यार्थः ;—ग्राहकगृहीतमन्त्राणां प्रधानकारणाप्रधानकारणाधिकारे साधनभूतकर्मार्थानामनुष्ठेयप्रकाशनद्वारमात्रं, प्रधानार्थत्वनिर्वाहकम् । तत्र मन्त्राणां प्रथमप्रयोगेणैवापूर्वार्थत्वानिर्वृत्तेः पुनः प्रयोगोऽयुक्त इति ।

द्रव्यद्वा-विनष्टमिति—अयमभिप्रायः ।—संस्कृतस्य हविषो यागनिर्वर्तकत्वे हि सति तद्वारेण मन्त्राणां कर्मार्थत्वनिर्वाहः । हविषि विनष्टे तु द्वाराभावेन मन्त्राणां कर्मार्थत्वानिर्वाहात्पुनरपि समन्त्रकक्रियाभ्यासो युक्त इति ।

---

[1] सह कर्मणा—च. [2] प्रधानेन कर्मणा—ङ. च. सह कर्मणा संबध्यन्ते—ख.
[3] ष्टे तु—क.

(रु) यावदन्ते कर्मणि कृते व्यापत्तिर्जाता ततः परभाविन एव मन्त्राः प्रयुज्येरन् । पूर्वभाविनां तु सकृत्प्रयोगादेव सिद्धः कर्मोपकारः। त एवापूर्वप्रयुक्तास्स्वैस्स्वैः कर्मभिरावर्तमानैः सम्पत्स्यन्ते इति भावः ॥

[इडादिष्वपि देवतातृप्त्यादिकम्]

(सू) यदि प्रत्तदैवतमाज्येन शेषं संस्थापयेत् ॥ ९-४ ४२ २४४५ ॥

(भा) हुतं देवतायै प्रत्तदैवतं [1] विधानेन। तस्य दूषणे विनाशे वा आज्येन शेषकार्याणि। इडादिष्वपि देवतातृप्तिः पुरुषसंस्कारश्चेति । केचित्तु स्विष्टकृदिज्यामेव कुर्वन्ति ।

(वृ) हुतं-कार्याणि—दूषणं विनाशश्चोभयं व्यापत्तिः ; इष्टशिष्ट-व्यापत्तावाज्येन शेषकार्याणि स्विष्टकृदादीनि।

इडादि-रश्च—भक्षणेन। यद्यपि मीमांसकैः शेषकार्याणां लोप इत्युक्तम्; तथापि अदृष्टकार्यस्यापि विद्यमानत्वात्तत्सिद्धये प्रतिनिधिनाऽऽज्येन समापनं युक्तमिति सूत्रकाराभिप्रायः।

केचित्तु-र्वन्ति—अदृष्टार्थत्वात्तस्याः।

[बोधायनीयहविर्दोषादिप्रतिपादनम्]

अथ बोधायनोक्ता हविर्दोषा उच्यन्ते—लोहितं कीटकविख्यातं नीलमक्षिकाशातिकामत्कुणचेलाशिरोयुताः कीटा वा पिण्डकारी स्यात् क्षुद्रकीटकापिपीलिकावर्जनम्। श्वमार्जालनकुलमर्कटध्वाङ्क्षग्रामाखु-पुरीषपिकपादकेशमृतनखकुनखिस्वेदासृगृष्टकासांश्रवति विवृतैर्धर्माविहि-

[1] विधानेन हुतम्—घ. प्रधानेन—ङ.

तमन्यैर्वाऽमेध्यैरुपहतं रजस्वलास्पृष्टमप्रयतेन भ्रूणघ्नेन वा दृष्टं तथापपात्रेणामेध्ये वा देशे स्कन्नं दास्या वा नक्तमाहृतं व्यापन्नम् ॥

बहुश्चास्तु ;—कीटपतङ्गैरमेध्यादिवासिभिस्संसर्गे न दोष इति केशादिसंसर्गे तावन्मात्रमुद्धृत्य भस्मादिभिस्संसृज्य प्रोक्ष्य भोज्यमपि हमेध्यं न भवति यथागमं यज्ञ इति स्मृतेरिति केचित् ॥

अन्ये तु तस्यास्स्मृतेर्दारुमयत्वादार्याणां भोज्यं यागेऽप्यदुष्टं वेति । किंच मक्षिकापिपीलिकावर्जमित्यस्य संकोचकं वचनं—पूर्णत्र्यम्बकामक्षिकापिपीलिकेत्यापश्चभ्य उद्धृत्याद्भिरवोक्ष्योत्पूय जुहुयादिति ।

तावन्मात्रमुद्धृत्येत्येतत्स्मृतिप्राप्तम्—यथाऽऽग्निवेश्यवचनम् । अथ हविषामेव द्रव्यसंस्कारकाले व्यापन्नानामौषधेष्वतण्डुलानां प्रक्षालनादि व्रीहिवत्प्रवृत्तिराविष्टकरणादित्यन्ये । अन्नवदत ऊर्ध्वं सोमेऽप्यभिषवात्प्रागेव प्रक्षालनं पशौ च विशसनात्प्रागिति ॥

[मार्जनामिक्षयोर्विषये केशवस्वामिभरद्वाजाद्यभिमतविशेषांशोपपादनम् दोषापरिज्ञानेनानुष्ठितयागोत्तरकालं दोषे ज्ञातेऽपि प्रागनुष्ठितस्य कर्मण अदूष्यत्वं, तत्रोपपत्तिश्च]

अद्भिरन्तर्वेदिप्रस्तरे मार्जयित्वेत्यत्र केशवस्वामिनोक्तम्—दुष्टेन द्रव्येणाज्ञानाददुष्टबुद्ध्या निवृत्ते पुनरदुष्टेन यागः कर्तव्य इति । वाजसनेयके व्यापन्नस्याप्सु प्रहरणमुक्त्वा अदोषो वेत्यादिश्रुतेः कर्कोपाध्यायेन व्याख्या कृता । न कुतश्चन दोषो वा ; बीभत्सन्त इति वचनात् अविज्ञातदोषेण यागे निवृत्ते पश्चाद्दोषज्ञानेऽपि पूर्वकृतं न दुष्यतीति ॥

आमिक्षाविषये भरद्वाजेनोक्तं ;—दधिपयसोर्यद्यन्यतरद्व्यापद्येत पयस एव कुतश्चोत्पाद्य प्रचरेयुरिति । लौकिकं दधि पयो वा उपादाये-

त्यर्थः । तथा यद्युभयं व्यापद्येत आज्येन प्रचरेत् आमिक्षायाः स्थाने आज्येन वाजिन आमिक्षायां न सान्नाय्यप्रायश्चित्तम्, इन्द्राय व्रीहीन्निरुप्येत्यादि ॥

अवदानदोषे पुनरायतनादवदानमित्याश्वलायनः । अत्र हविर्दोषाः केचिद्दर्शिताः । अन्येऽपि धर्मशास्त्रसिद्धा मनुष्यैरवप . . . र्वामेध्यैरित्यादयोऽपि परिहर्तव्याः ।

[प्राक्प्रदानाद्दुष्टत्वे निश्चिते पुनरुत्पत्तिः, तत्र निदानं च]

(रु) यदि प्रत्तदैवतं ततः स्विष्टकृदादि शेषमाज्येन निर्वर्तयेत् । न तु हविरन्तरमागमयेल्लोपयेद्वेत्यर्थः । यदा तु प्रत्तदैवतमपि प्रागेव प्रदानाद्दुष्टमिति ज्ञायते तदा तु पुनरुत्पत्तिरेव । असत्कल्पत्वात्प्रदानस्य । अत्र त्वाह कात्यायनः, अदोषो वा न वै दोषाः कस्माच्च न बीभत्सन्त इति श्रुतेरिति ॥

[विनष्टहविस्समङ्ख्याकप्रधानदेवताकयागविधानम्]

(सू) यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वाऽऽज्येनैता देवताः प्रतिसंख्याय यजेत ॥ ९ ॥ ४ ॥ ॥ ४३ ॥ २४४६ ॥

(भा) सर्वहवींषि—सहाऽऽज्येन नाशो दहनादिभिः, दूषणं केशकूटादि[1]भिरुक्तैः । अपहारः—अपहरणं मनुष्यैः । सर्वहविषां [2]विनाशे आज्येन शेषकार्याणि । आज्यमुत्पाद्य गृहीत्वा च स्रुक्षु मन्त्रैर्यावदन्ते व्यापन्नं [3]तावन्मन्त्रैः स्रुगादानप्रभृतय इति सर्वहविषामुत्पत्ति[4]प्रदर्शनम् ।

---

[1] दभिः—ङ. [2] विनाशे वा—ङ. विनाशे आज्यमुत्पाद्य—च. [3] तन्मन्त्रे स्रुगादा—च. [4] तेः प्र—च.

आज्येनैता देवताः यासां तद्धिनष्टं हविः। प्रतिसंख्याय गणयित्वाङ्ग-प्रधानदेवता यजेत। इडादीनां वाज्यस्थाल्या उत्पन्नं हविर्विनष्टमिति शेषकार्याणा[1]मनिवृत्तिः।

(वृ) सर्वह–मन्त्रैः—पवित्रे कृत्वा स्थाल्याः पवित्रान्तर्हितायां इत्यादि स्फ्यस्य वर्त्मन्थ्सादयत्याज्यमसीत्यवेक्ष्याज्यमुत्पूय सर्वप्रायश्चित्तं कृत्वा स्रुक्षु शुक्रं त्वेत्यादिभिर्गृहीत्वासन्नाभिमर्शनं च कृत्वाऽऽज्येन यजेत।

यावदन्ते–दर्शनं—तत्र स्रुगादानप्रभृति ये मन्त्राः इत्यस्य यत्र हविरन्तरमुत्पाद्यं तत्र तदुत्पत्त्यर्थं धर्मप्राप्त्यर्थत्वात्प्रदर्शनार्थम्। आज्ये व्यापन्ने आज्योत्पत्त्यर्थमपि धर्माः कर्तव्याः। सान्नाय्यस्यादि।

आज्येन–हविः—प्रतिसंख्यायं वा गणयित्वाङ्गप्रधानदेवता यजेत। स्विष्टकृद्ध्रुवातः।

इडादीनां – निवृत्तिः — अस्यार्थः – प्रधानयागार्थमुत्पन्नस्य हविषो नाशेऽपि तद्धविस्साध्यानां सर्वकार्याणां कर्तव्यत्वादाज्येन प्रतिनिधिना सर्वाणि कर्तव्यानीति। शेषकार्याणामप्रयोजकत्वे प्रधानयुक्तद्रव्यसंभवे तेन कर्तव्यत्वात्।

[आज्यानां व्यापत्तौ विशेषः]

(रु) यस्य त्वेकद्विबहुषु तन्त्रेषु यावत्सम्भवं सर्वाण्येवाप्तदैवतानि हवींषि नश्येयुर्दाहादिना दुष्येयुर्वा केशकीटादिना अपहरेयुर्वातानिदस्यवस्तदा यासां हविर्व्यापन्नं ता देवताः प्रतिसंख्याय प्रदर्शनार्थं गणयित्वा ध्रौवाज्येन प्रतिनिधिना यथा प्रकृत्येव यजेत। नोपांशु-

---

[1] णां निवृ–च.

धर्मेण प्रतिनिधेस्तद्धर्मवचनात् पशुधर्माज्यं भवतीतिलिङ्गाच्च। आज्याना-मपि व्यापत्तौ स्वात्स्वाद्योनेः स्वैस्स्वैर्मन्त्रैः पुनर्गृहीत्वा यजेत॥

[विनष्टस्य पुनरिज्याविधानम्]

(सू) **अथान्यामिष्टिमनुल्बणां तन्वीत। यज्ञो हि यज्ञस्य प्रायश्चित्तिः॥९॥४॥४४॥२४४७॥**

(भा) अन्या इष्टिः कर्तव्या अनुल्बणा—अविकृता तैरेव हविर्भिर्यज्ञस्य विनष्टस्य पुरिज्या प्रायश्चित्तिः। उपदेशोऽनुल्बणा—अल्पका उपसद्वत् सा प्रायश्चित्तिः क्रियत इति।

(वृ) **तैरेव–हविर्भिः**—यैः पूर्वं प्रवृत्तं पुरोडाशसान्नाय्यादिभिः।

**यज्ञस्य–त्तिरिति**—एकदेशविकले यज्ञे पुनस्स्वकालानुष्ठाने दोषनिर्हरणात्फलसिद्धेः।

[गुणभूतसर्वहविषामावाहनात्पूर्वमुत्तरं वा सर्वदाहेऽनुष्ठेयांशः]

(रु) अथ संस्थितायामिष्टौ तामेवेष्टिं पुनरनुल्बणामविकृतां कुर्वीत। यतो यज्ञस्यार्तस्य पुनरिज्यैव प्रायश्चित्तिः। तत्र तु सर्वव्यापत्तिविषये सान्नाय्ययोरप्ययमेव विधिः, वैशेषिकत्वादिष्यते। नार्तिप्रायश्चित्तम्। आश्वलायनमतात्त्वावाहनादूर्ध्वमेवायं विधिः, यथा हविषां व्यापत्तावे-वोल्काक्तदेवतास्वाज्येनेष्टिं समाप्य पुनरिज्येति। तथा हविरावृत्तिं प्रकृत्याह प्रागावाहनाच्च दोष इति। तथाद्यन्तगुणभूतानामिति च। गुणभूतानामपि हविषामत्यन्तमावाहनात्प्रागूर्ध्वं च सर्वदाहे हविरावृत्तिः नेज्यावृत्तिरित्यर्थः।

[व्यापन्नपदव्यावर्त्योंऽशः]

(सू) अपो व्यापन्नं हविरभ्यवहरतीति विज्ञायते॥
॥९॥४॥४५॥२४४८॥

(भा) व्यापन्नमप्सु प्रक्षेप्तव्यं, न तु दग्धम्, अधिकं वा निरुप्तम्।

(वृ) व्यापन्न-निरुप्तम्—अपो व्यापन्नं हविरभ्यवहरतीति व्यापन्नस्यैवाप्सु प्रक्षेपः दग्धस्यायागीयत्वेऽपि नाप्सु क्षेपः; व्यापन्नमिति निर्देशात् तथाऽधिकनिरुप्तस्यापीति अभागायै देवतायै निरुप्तस्य नाप्सु त्यागः उत्करे तु द्वयोस्त्यागः, 'यद्वै याज्ञियस्य कर्मणः' इत्युक्तम्।

(रु) व्यापन्नं तु हविरप्सु प्रक्षिपेत्। किमेतद्व्यापन्नं नाम। तत्राह।

[धर्मशास्त्रसिद्धव्यापन्नपदार्थविरणम्]

(सू) यदार्याणामभोजनीयं स्यान्न तेन यजेत॥९॥
॥४॥४६॥२४४९॥

(भा) व्यापन्नस्य व्याख्या ;-यदार्याणामभोजनीयं तद्व्यापन्नं, तेन न यागः कर्तव्यः। असर्वनाशापहारे तेषामेव हविषां पुररुत्पत्तिः।

(वृ) यदार्या-र्तव्यः—अपो व्यापन्नं हविरिति। यद्यप्युपात्तहविर्विषयो व्यापन्नशब्दः, तथाप्यार्याणामभोजनीयामिति नियमार्थम्। धर्मशास्त्रसिद्धमार्याणामभोज्यं व्यापन्नं यथा—कालदुष्टं शुक्तिकादि। संसर्गदुष्टं केशादिस्पृष्टम्। कीटदुष्टं वरकादि। परिग्रहदुष्टं पतितादिद्रव्यम्। न तेन यागः, तदप्सु प्रक्षिप्य शुद्धद्रव्यान्तरेण यागः।

असर्वनाश-त्पत्तिः—अन्यतरहविर्नाशे अन्यद्धविस्तद्दैवतमिति तस्यैव पुनरुत्पत्तिस्रुगादानप्रभृतय इत्युक्तमार्गेण॥

[ भाष्योक्तार्थापेक्षया व्यापत्तिपदार्थे वैलक्षण्यम् ]

(रु) अयमभिप्रायः। यागानर्हतापत्तिर्व्यापत्तिः। सा चार्यभोजनानर्हत्वलक्षणो दोषः। न तेन दुष्टपर्यायेण व्यापन्नेन यजेत। तदप्स्वेव प्रक्षिपेदिति। तथा चापो दुष्टं हविरभ्यवहरन्तीति प्रकृत्याऽऽह भारद्वाजः। कथं दुष्टं हविस्स्यात्, यदार्याणामभोजनीयं न तेन देवान्यजेतेति। तथा शिष्टभक्षप्रतिषिद्धं दुष्टमित्याह कात्यायनः। आश्वलायनस्त्वाह, व्यापन्नानि हवींषि केशनखकीटपतंगैरन्यैर्वा बीभत्सैरिति॥

[अपक्वपुरोडाशस्य यमदेवताकत्वम्]

(सू) यस्य पुरोडाशो दुश्शृतस्तद्धविर्यमदैवत्यं यममेव तद्गच्छतीति विज्ञायते। संस्थाप्य तदन्वाहार्यपचने चतुश्शरावमोदनं पक्त्वा चतुरो ब्राह्मणान् भोजयेत्। तेषां भार्गवः प्राशितॄणामेकः स्यात्॥ ९॥ ४॥ ४७॥ २४५०॥

(भा) यस्य यजमानस्य पुरोडाशो दुश्शृतः—अपक्व इत्यर्थः। तत्पुरोडाशहविर्यमदैवत्यम्। यमो [1] यस्य दैवत्यं भवति। अन्यस्मै हूयमानमपि [2] यममेव गच्छति। नार्थवाद इति श्रुतिः। संस्थाप्य तत्कर्म यत्र दुश्शृतं हविः ब्राह्मणभोजनान्तम्। दक्षिणाग्नौ चतुर्मल्लकमोदनं पक्त्वा चतुरो ब्राह्मणान् भोजयति, ऋत्विग्भ्योऽन्यानपि, भार्गवनियमात्। सर्वप्रायश्चित्तं च आज्यसान्नाय्ययोर्दुश्शृतयोः। नैनत्पुरोडाश इति श्रुतेः सर्वप्रायश्चित्तमव॥

(वृ) यस्य यज—नार्थवादः—इति श्रुतिः।

[1] अस्य देवता भवति—च. [2] तमेव—ख.

[यागात्प्राक्पक्वाभावेऽनुष्ठेयांशविशदीकरणम्]

यममेव तद्गच्छतीति न निन्दा, अर्थवादमात्रम्। किं तु श्रुतिरेव, विज्ञायते इति सूत्रकारेण श्रुत्युपदेशात्। यागात्पुरस्तादपक्व इति विज्ञातेऽन्तरितप्रायश्चित्तं कृत्वा पुनः पक्त्वा होमः।

['ऋत्विग्भ्योऽन्यानपि' इति भाष्यतात्पर्य-विशदीकरणम्]

**संस्थाप्य-प्रायश्चित्तं च**—तेषां भार्गवः प्राशितॄणामेकस्स्यादिति नियमात् प्राकृतेषु ऋत्विक्षु भार्गवनियमाभावादन्यस्यापि भोजनम्। दक्षिणाग्निं प्रणीयौदनपाकं सर्वप्रायश्चित्तं च जपश्चेति वचनात्।

**आज्यसान्नाय्य-त्तमेव**—आज्योत्पत्त्यर्थं लौकिकपाके क्रियमाणे सम्यक्पाकाभावेऽपि नैतत्॥

(रु) पुरोडाशग्रहणात्पुरोडाशतद्विकारेष्वेवायं विधिः। नेतरविकारेषु। यदपक्वं विषमपक्वं वा तद्दुश्शृतम्। ततस्यै देवतायै देवतायै हुतमपि यमदैवत्यं भूत्वा यममेव गच्छति। तस्मात्तदारब्धं कर्म तेनैव हविषा संस्थाप्य ततश्चतुश्शरावं पक्त्वा चतुरो ब्राह्मणान् भोजयेत्। एतदेवास्य प्रायश्चित्तमित्यर्थः। एकस्य भार्गवनियमान्नर्त्विङ्नियमो भोक्तृषु॥

[अदक्षिणाकयागस्य नैष्फल्यम्]

**(सू) योऽदक्षिणेन यज्ञेन यजेत स यज्ञः प्रक्षामोऽनायुः। उर्वरां दद्यात् ॥ ९ ॥ ४ ॥ ४८ ॥**
**॥ २४५१ ॥**

(भा) अदक्षिणो यस्मिन्नैकापि प्रयुक्ता दक्षिणा अदक्षिणस्स यज्ञः। प्रक्षामो दग्ध इत्यर्थः। अनायुः—नास्यायुरिति अनायुष्मान् न फलं यच्छति। उर्वरा भूमिः तस्या दानं प्रायश्चित्तम्। दक्षिणा [1] तुल्यम्॥

[1] मूल्यम्—च.

(वृ) अदक्षिणो-तुल्यम्—दक्षिणामूल्यतुल्या भूमिः प्रायश्चित्तम्। दक्षिणा तुल्यमिति प्रायश्चित्तविशेषणम्। तुल्यमूल्ययुक्तं भवति प्रायश्चित्तम्। अत्र सर्वप्रायश्चित्तम्। एकापि यदा न दीयते इतरा दत्तापि तन्मूल्यतुल्या भूमिर्देया॥

[सोपपत्तिकं सौत्रानायुःपदार्थविवरणम्]

(रु) दक्षिणाविशेषानाम्नाने यदि यत्किंचिदोदनाद्यदत्वा यजेत स यज्ञः प्रक्षामो दग्ध इव भवति निर्वीर्यत्वादनायुरिव च भवति। 'यज्ञ आयुष्मान्स दक्षिणाभिः' इति श्रुतेः। अथवा अनायुरनायुष्यं च यजमानस्य स्यादित्यर्थः। तथाऽनायुर्यजमानस्स्यादिति सत्याषाढ-भारद्वाजौ। तत्राभिप्रेतदक्षिणातुल्यमूल्यामुर्वरां दद्यात्। सर्वसस्याढ्या भूः उर्वरा॥

[शास्त्रचोदितदक्षिणाया अप्रदानोन्नेयविशेषांशः]

(सू) **यद्यादिष्टां दक्षिणामन्तरियादुर्वरा प्रतिष्ठिता देया सा प्रायश्चित्तिः॥ ९॥ ४॥४९॥ ॥२४५२॥**

(भा) आदिष्टदक्षिणा उक्तदक्षिणा इयं देयेति तस्या अन्तराये भूमिः प्रतिष्ठिता शासनबद्धा सस्यवतीति केचित्, सा देया सैव प्रायश्चित्तिः। सर्वप्रायश्चित्तमपि न भवतीति॥

(वृ) आदिष्ट-येति—शास्त्रचोदिता।
तस्या-ये—अदाने।
भूमिः-न भवति—प्रायश्चित्तिरित्युपादानात्।

(रु) अथ यदि बोधितामेव दक्षिणामदत्वा यजेत तत्रापि तत्तुल्योर्वरा-दानमेव प्रायश्चित्तं नेतरदित्यर्थः। प्रतिष्ठिता निरवद्या॥

[भागशून्यदेवताया आवाहननिर्वापोपाकरणाद्यु-
न्नेयविशेषांशप्रतिपादनम्]

**(सू) यद्यभागां देवतामावाहयेदाज्येनैना यथोढां यजेत। पुरस्ताद्वा स्विष्टकृतः॥ ९ ॥ ४ ॥ ५० ॥ ॥ २४५३ ॥**

(भा) अभागा—यस्या भागो नास्ति तां यद्यावाहयेत्। आवाहनं प्रदर्श[1]नार्थम्। यद्यभागां देवतामावाहयेत् गृह्णीयाद्वेत्यैतरेयके। ग्रहणं निर्वापः। अतोऽभागाया [2]उपाकरणेऽपि उपाकृतस्य निरुप्तस्य चाऽभागाया[3]स्त्यागः। आज्येन यागोऽभागाया आवाहिताया उपाकृ[4]ताया वा यथोढां यजेत यस्मिन् क्रम आवाहिता तस्मिन् क्रम इज्यते। स्विष्टकृतो वा पुरस्तात्। आज्यहविष्ट्वादुपांशुयाजविकारः। [5]निगमाश्च यथाक्रमेण ॥

[उपदेशपक्षीयाभिप्रायः]

उपदेशो यागमात्रमेवाभागायाः, न तु निगमाः, पुरस्तात् स्विष्टकृत इज्याविधा[6]नात्।

(वृ) **यद्यभागां—यके**—ब्राह्मणे आवाहनतुल्यतया ग्रहणस्याप्युपादानात्।

**अतोऽभागा—उपाकृताया वा**—अभिभागिनीयमिश्रितं अभागिनीयं त्यक्त्वा आज्येन यष्टव्यमिति केचित्।

**यथोढां—इज्यते**—निर्वापोपाकरणयोरप्येवम् ॥

[हेतुपूरणम्]

**स्विष्टकृतो—विधानात्**—उपहोमतुल्यत्वान्नानिगमाः।

---

[1] प्रदर्शनम्—घ. [2] उपकरणे—ङ. [3] स्त्यागः। अभागा—च. [4] ताय-निरुप्ताया—वा. च. [5] नियमाश्च—ङ. [6] नादिति—ङ.

[आवाहनवचनस्योपलक्षणत्वे प्रमाणानि]

(रु) यद्यबोधितां देवतामावाहयेत्तां यथोढां यस्मिन्क्रम आवाहिता तस्मिन्नेव क्रमे यजेत। हुतेषु वा नारिष्ठेषु साचाज्यहविष्ट्वादुपांशु यष्टव्या। आवाहनवचनं च निर्वापोपाकरणदोहनादिरूपस्य हविर्गणस्यापि प्रदर्शनार्थम्। यद्यभागां देवतामावाहयेद्रुद्धीयाद्वेति बह्वृचश्रुतेः। तनाभागायै निरुप्तमुपाकृतं दुग्धं चैवोत्सृज्य एवमाज्येन यजेत। कात्यायनस्त्वाह अधिकं निरुप्य तच्च यजेन्न वा अचोदितत्वादिति। तत्र भागिन्यभागयोर्मिश्रनिर्वापेऽपि विभागमन्त्रेण विभक्तस्याभागाभागस्य त्यागः॥

[भागिन्यनावाहनेऽनुष्ठेयांशविशदीकरणम्]

(सू) यदि भागिनीं नावाहयेत् यत्र स्मरेत्तदुपोत्थाय मनसाऽऽवाह्य 'यद्वो देवा अतिपादयानि' इत्याहुतिं जुहुयात्॥ ९॥ ४॥ ५१॥ २४५४॥

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने पञ्चदशी खण्डिका

---

(भा) भागिन्या [1] आवाहने अकृते स्मृते पुनरावाह्य [2] मनसा हवि[3]षिक्रम इज्याक्रमः। हविराहुतौ हुतायामाहुतिः; 'यद्वो देवा अतिपादयानि' इति लिङ्गात्। अत्यागे अन्तरितप्रायश्चित्तम् उपाकरणनिर्वापयोरन्तरये मन्त्रेणैव पुनः क्रियाविपर्यास [4] प्रायश्चित्तं च॥

इति धूर्तस्वामिभाष्ये नवमप्रश्ने पञ्चदशी खण्डिका

---

(वृ) भागिन्या–क्रमः—प्रधानयागोपक्रमात्पूर्वस्मरणे प्रायश्चित्तं कृत्वा मनसाऽऽवाह्य हविःक्रम इज्या।

---

[1] तनामाहने स्मृते–च. [2] मनसा हविराहुतौ–च. [3] षिक्रम इति–ख. ङ.
[4] सः प्रा–प्रा.

**हविरा-लिङ्गात्**—भागिनीदेवतास्सन्निहिता अनूद्यातिपत्ति-निर्देशात् योगेन च देवतासन्निधानात्।

**अत्यागे-श्चित्तम्**—आवाहनकालात्यागे क्रमकोपमात्रेऽन्तरित प्रायश्चित्तम्। 'न यद्वो देवा' इति।

**उपाकरण-श्चित्तम्**—उपाकरणनिर्वापयोरन्तरयेऽन्तरितप्राय-श्चित्तं कृत्वा पुनर्मन्त्रेण निर्वापादिप्रधानदेवतावाहनादिविस्मृतौ तद्व्यति-रिक्तप्रधानदेवतायागादूर्ध्वं स्मरणेऽप्यन्तरितप्रायश्चित्तं कृत्वा पुनरावाहनं हविरुत्पत्तिविपर्यासश्च। तथा समानतन्त्रे वैमृधे देवताविज्ञानेऽप्येवम्॥

इति धूर्तस्वामिभाष्यवृत्तौ नवमप्रश्ने पञ्चदशी खण्डिका

---

(रु) भागिन्यनावाहने सति प्रागिज्यायाः स्मृते तदानीमेवोपोत्थाय मनसाऽऽवाह्य 'यद्वो देवा' इत्याहुतिं जुहुयात्। परतस्त्विज्यायाः स्मृतावाहुतिरेव नाऽऽवाहनम्॥

इति श्रीभट्टरुद्रदत्तविरचितायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां पञ्चदशी खण्डिका

---

[प्रयाजात्पूर्वभाव्याहुतिस्कन्दनोन्नेयांशः]

(सू) **यदि पुरा प्रयाजेभ्यो बहिः परिध्याहुतिः स्कन्दे-दाग्नीध्रं ब्रूयादेतां संकृष्य जुहुधीति। तां सोऽञ्ज-लिना जुहोति। तस्मै पूर्णपात्रो देयः॥१॥४॥ ॥५२॥२४५५॥**

(भा) अत्र पूर्वं प्रजायेभ्यः अनारब्धेषु प्रयाजेषु बहिः परिधि स्कन्देदाहुतिः करम्भ[1]पात्रात्, आग्नीध्रं ब्रूयादध्वर्युः। एतामाहुतिं संकृष्य गृहीत्वा जुहुधीति। तामाग्नीध्रोऽञ्जलिना जुहोति। तूष्णीं पात्रस्य प्रतिग्रहः। केचिद्येन पूर्णं तस्य॥

(वृ) अत्र पूर्वं—पात्रादिति — प्रयाजात्पूर्वभाविनोराघारयोर्होमकाले स्कन्दने यदि स्रुग्गतमित्यनेन सिद्धत्वात् करम्भपात्रादिविषयमेतत् तद्धोमस्याग्निपरिमार्गकालभावित्वात्॥

आग्नीध्रं ब्रू—जुहोति—तूष्णीं सर्वस्कन्दने पुनः करम्भपात्रादिकमुत्पाद्याध्वर्युर्जुहोति।

पात्रपरिग्रहः—उत्तानस्त्वेति।

केचित्—तस्य—मन्त्रेण प्रतिग्रहः। 'विश्वेभ्यो देवेभ्यो धान्यम्' इत्येवमादिना प्रतिग्रहः। पूर्णपात्रप्रदाने तत्तद्द्रव्यं प्रधानमिति॥

(रु) यत्र पुरा प्रयाजेभ्योऽप्याहुतिसम्भवः सोऽस्य विधेर्विषयः यथा करम्भपात्रादि। पूर्णपात्रः पात्रपूर्णो व्रीह्यादि॥

[भिन्नपात्रस्याप्सु प्रक्षेपविधिः]

(सू) **यत्किञ्च यज्ञे मृन्मयं भिद्यते तदपोऽभ्यवहरेद्भूमिर्भूमिमगादिति॥९॥४॥५३॥२४५६॥**

(भा) यत्किञ्चेति वचनात् मल्लकादीन्यपि अर्थलक्षणा[2]न्येव भिन्नानि अभिमन्त्रितानि ब्रह्मणा अप्सु क्षिप्यन्ते॥

(वृ) यत्किञ्च—प्यन्ते—मल्लिकादीनि भिन्नानि कार्यासमर्थानि अर्थलक्षणान्यवाचनिकानि दृष्टार्थमुपात्तानि तेषामप्येतत्प्राप्तयर्थं यत्किञ्चेति वचनम्॥

---

[1] पात्रादि—ङ. च. [2] णामि भिन्नानि—ख.

(रु) ब्रह्मणोऽप्यनेनाभिमन्त्रणं प्रतिसंघातव्यम् ॥

(सू) आहवनीये दारुमयाणि ॥ ९ ॥ ४ ॥ ५४ ॥ ॥ २४५७ ॥

(भा) आहवनीये च दारुमयाणि। औपासने लौकिके वा तस्य सर्वार्थत्वादिति न्यायः ॥

(वृ) आहव–णि—तूष्णीं क्षिपेत्।

['औपासने लौकिके वा' इत्याकारकभाष्यतात्पर्य-विवरणम्]

औपासने वा ;—अकर्मकाले भिन्नेष्वौपासने प्रक्षेपः। तस्यापि होमार्थतया आहवनीयसमानार्थत्वात् अकर्मकाले आहवनीयाभावात्। सर्वाधाने :—

लौकिके–न्यायः—तस्य सर्वार्थत्वादिति न्यायाल्लौकिके प्रक्षेपः ॥

(रु) तानि तूष्णीं प्रहरेन्न मन्त्रेण, भूमिर्भूमिमगादिति लिङ्गविरोधात्।

[त्रयीविहितकर्मभ्रेषप्रायश्चित्तम्]

(सू) यद्यृक्तो यज्ञं भ्रेष आगच्छेत् भूरिति गार्हपत्ये जुहुयात्। यजुष्टो भुव इति दक्षिणाग्नौ, यदि सामतः सुवरित्याहवनीये ॥ ९ ॥ ४ ॥ ५५ ॥ २४५८ ॥

(भा) अथ कर्ममध्ये ऋक्तः[1] ऋग्वेदोक्तकर्मणि भ्रेषो भवेत्, अन्यथा-क्रियाभ्रेषः स यद्यागच्छेत् यदि भवेत् भूरिति गार्हपत्ये होमः। एवमुत्तरत्र ॥

---

[1] ऋगुक्ते-ऋग्वेदोक्ते–क. च.

(रु) ऋक्तः ऋग्द्वारतः, ऋग्वेदविहितस्य कस्यचित्कर्मणो मन्त्रस्य वा भ्रेष इत्यर्थः। एवं यजुष्ट इत्यादि ॥

[त्रयीविहितानां युगपद्विनाशोऽग्नियांशः]

(सू) यदि सर्वतः सर्वा जुहुयात् ॥ ९ ॥ ४ ॥ ५६ ॥ ॥ २४५९ ॥

(भा) सर्वतः युगपत विनाशे त्रिभ्योऽपि सर्वा अनुद्रुत्य 'भूर्भुव[1]स्सुवस्स्वाहा' इत्येकाहुतिराहवनीये, बह्वृचश्रुतेः। [2]प्रत्यग्नीत्युपदेशः ॥

(वृ) सर्वतः–श्रुतेः—वेदत्रयविहितानां युगपद्विनाशे सर्वास्तु जुहुयादिति। सर्वा व्याहृतिस्समस्ता। 'यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवस्सुवरिति सर्वा अनुद्रुत्य इति बह्वृचश्रुतेः ॥

प्रत्य–देशः;—युगपद्विनाशेऽपि सर्वाः प्रत्यग्नि पूर्ववद्व्यस्ता जुहुयादिति, सर्वा जुहुयादित्युक्तप्रकारेण सामस्त्यपरत्वात् ॥

(रु) युगपत्सर्वतो भ्रेषे सर्वा व्याहृतीर्जुहुयात्, सर्वाभिर्व्याहृतीभिरेकामाहुतिं आहवनीये जुहुयादित्यर्थः। यथा 'सावित्राणि जुहोति' इत्यादौ। कुत एवं व्याख्यायत इति चेत्, पृथक् सर्वा जुहुयादिति व्याख्याते सूत्रानर्थक्यप्रसङ्गात्। बाह्वृच्ये कल्पान्तरेषु चैवं व्यक्तोपदेशाच्च। बाह्वृच्ये तावद्यथोक्ता आहुतीरुक्त्वोक्तम्, यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवस्सुरिति सर्वा अनुद्रुत्याहवनीय एवेति। भारद्वाजश्चाह अथ यदि सर्वतो भूर्भुवस्सुरवारित्याहवनीये जुहुयादिति। एवं कल्पान्तरेष्वपि द्रष्टव्यम् ॥

---

[1] सुवरित्याहुतिः–ङ. च. [2] अग्नित्रये तिस्र इत्युपदेशः–घ.

[उक्तार्थे आश्मरथ्यालेखनाभिप्रायविवरणम्]

(सू) तदिदं सर्वप्रायश्चित्तं सर्वत्र क्रियेतेत्याश्मरथ्यः। यत्रानाम्नातं तत्र क्रियेतेत्यालेखनः॥
॥९॥४॥५७॥२४६०॥

(भा) तदिदं यथोक्तं सर्वप्रायश्चित्तं एकैकविनाशे अग्नित्रये एकैकम् ॥ यथोक्तं सर्वविनाशे समस्ता आहवनीय इति सर्व[1]त्र विकल्पेन उक्तैः प्रायश्चित्तैरित्याश्मरथ्यः। अनाम्नातपरिपाठितं यत्र प्रायश्चित्तं तत्रेत्यालेखनमतिः आम्नातैस्समुच्चयः। अ[2]नाम्नाते सर्वप्रायश्चित्तमिति सूत्रकारमतिः।

अविज्ञाते कर्ममध्ये स्मार्तकर्मविनाशे भूर्भुवस्सुवरित्येकाहुतिर्बह्वृचश्रुतेः। प्राजापत्यमनाज्ञातं वा, सर्वप्रायश्चित्तेन विकल्पः छन्दोगश्रुतेः

(वृ) तदिदं–श्मरथ्यः—अस्यार्थः–आम्नातैस्समुच्चयः। अनाम्नाते सर्वप्रायश्चित्तं इति सूत्रकारमतिः। सर्वशेषे विहितत्वात् सर्वप्रायश्चित्तस्याम्नातैस्समुच्चयः। अनाम्नाते तदेवेति।

अविज्ञा–हुतिः—अविज्ञाते नाशे स्मार्तकर्मनाशे च सर्वग्रहणात्, बह्वृचश्रुतौ यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवस्सुवरिति।

(रु) तदिदमिति ज्ञेयं सर्वाभिर्व्याहृतिभिरेकाहुतिस्सेत्यर्थः। कुतः आनन्तर्यात्। सर्वप्रायश्चित्तसमभिव्याहाराच्च। सा हि तस्या एव समाख्या शास्त्रेषु प्रसिद्धा, यथा तावद्ब्राह्मण्ये भूर्भुवस्सुवरिति सर्वा अनुद्रुत्येति प्रकृत्याऽऽम्नायते सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतय इति।

---

[1] सर्वविक–घ. ङ. [2] आम्नाते–ङ.

तथा छान्दोग्येऽपि किं सर्वप्रायश्चित्तमिति महाव्याहृतीभिरेव तद्यजान्तीति। एवं सूत्रकारवचनान्यपि तत्र तत्रानुसन्धेयानि। तदिदं सर्वप्रायश्चित्तमनाम्नातप्रायश्चित्ते तावद्विषये नियमेन क्रियते। इतरत्राप्याम्नातैस्सह विकल्पेनेति प्रथमः कल्पः। यत्रानाम्नातो विशेषस्तत्रैवेति द्वितीयः। न केवलमनाम्नाते, किन्त्वाम्नातेऽपि विशेषे तेन तेन समुच्चयनियम इति तृतीयः॥

[उत्पातवीक्षणाभावेऽपि क्वचित् स्मरणादिना भयजननेऽनुष्ठेयांशः]

**(सू)** **यद्येनं विहारे बहिर्वा भयं विन्देत् 'प्रजापतिर्विश्वकर्मा तस्य मनो देवं यज्ञेन राध्यासम्। अर्थे गा अस्य जहितोऽवसानपतेऽवसानं मे विन्द, इत्याहुतिं जुहुयात्॥९॥४॥५८॥२४६१॥**

**(भा)** विहारे यज्ञकर्मणि वर्तमाने। बहिर्विहाराद्भयं विन्देत्। उत्पातं दृष्ट्वा यजमा[1]नो वाऽस्य बिभेति। अन्तरेणाप्युत्पातं यदि तत्रमध्ये तत्रैवाऽऽहुतिः। अ[2]थ बहिर्विहारे कृत्वा विहारं प्रजापतिर्विश्वक[3]र्मेत्याहुतिः भय[4]विमोक्षार्थः।

**(वृ)** **उत्पातं–तम्**—उत्पातः–कृष्णो धूमो दक्षिणां दिशमित्यादिः। बहिर्विहारे गोमायु रुतादि। मनो वाऽस्य बिभेत्यन्तरेणाप्युत्पातम्–उत्पातदर्शनमन्तरेणापि कुतश्चित् स्मरणादिना यदि मानसं भयं भवति।

**यदित–हुतिः**—तत्राऽऽहवनीये आहुतिः।

---

[1] नो मनो वास्य–च. [2] यदि ब–ङ. [3] र्मेति तत्रैवा–ङ. [4] विमोकाय–ङ.

अथ – र्थाः—श्रौतविनियोगरूपत्वादाहवनीयं विहृत्यैव न लौकिके ।

(रु) यद्येनं विहृताग्निं यजमानं विहारविषये बहिर्वा भयमागच्छेत्तदैवेयमाहुतिः । यत इन्द्र भयामहे ततोनो अभयं कृधि । इति चाहुतिद्वयम् । विहृताग्नेस्त्वेतदेव ।

[निरुप्तहविस्स्कन्दनेऽग्नेयांशः]

(सू) यस्य हविर्निरुप्तं स्कन्देत् छिन्दत्प्राणि दद्यात् । यद्युत्पूतं चित्रं देयम् । वरो देय इत्येकेषाम् ॥ ॥९॥४॥५९॥ २४६२॥

(भा) हविषि निरुप्ते स्कन्ने पूर्ववत् छिन्दत्प्राणि ।

(वृ) छिन्दत्प्राणि—अश्वादि । उत्पूतेऽपि पूर्ववत् ।

(रु) निर्वापप्रभृत्योत्पवनात् छिन्दत्प्राणि दद्यात् उभयत्र 'भूपतये' इत्यनुमन्त्रणम् । व्याख्यातश्शेषः ।

[उभयविपर्यासादावन्तरितप्रायश्चित्तादिविधानम्]

(सू) यस्य देवते अवदाने हवींषि याज्यानुवाक्ये वा उपरि हरेयुर्यस्य वा देवतायै गृहीतमहुतं स्कन्देद्देवतान्तरये वा यदस्य गृहे पुष्कलं स्यात्तद्द्यात् ॥ ९ ॥ ४ ॥ ६० ॥ २४६३ ॥

(भा) देवता विपर्यासः आवाहनादिषु अग्नेः पश्चात्पूर्वं प्रजापते रवदानविपर्यासः पूर्वार्धात्पूर्वं पश्चान्मध्यात् हविषि विपर्यासः अग्नीषोमीयस्य पूर्वं पश्चादाग्नेयस्य प्रधानादि करोति । याज्यानुवाक्या-

विपर्यासः—अनुवाक्यां याज्यां करोति याज्यां चानुवाक्याम्। उभयविपर्यासेऽप्येतदेव। यदि पूर्वमन्यस्येज्यां करोति पश्चादाग्नेयस्य। इज्यार्थं वा देवतायै गृहीतमहुतं स्कन्देत् देवतान्तार[1]ये वा अनिज्या [2]यदा एतेषु पुष्कलदानं तन्त्रमध्ये पुनर्देवतेज्यते। अङ्गदेवता[3]पि; प्रधानदेवता[4]श्च। पुष्कलं दत्वा समाप्तेऽपि पुनस्तान्तां प्रयोजयति, प्रधानदेवता [5]त्वङ्गदेवतायाः पुष्कलदानमेव। यदा त्वन्यस्यै देवतायै अन्यद्धविः प्रदीयते तदा त्ववदाननाशे पुनरायतनादवदानमित्येष विधिः। न हि परस्य हविरन्यदेवता भक्षयति।

(वृ) देवतावि–श्चात्—प्रयोगः।

उभयविपर्यासेऽप्येतदेव—अन्तरितप्रायश्चित्तम्। पूर्वं याज्यानुवाक्ययोरेकस्या यथा प्रत्यवस्थाने इतरस्य विपर्यासेऽभिहितम्। इदानीमुभयोर्विपर्यासेप्येतदेव नैमित्तिकमित्युक्तम्। ऋगुत्तराभ्यां तत्तद्देवताभ्यामनुष्ठानेऽप्येतदेव।

यदि पूर्व–यस्य— यागविपर्यासेऽप्येतदेव। याज्यानुवाक्ययोर्यागोपक्रमत्वाद्यागविपर्यासोऽपि सूचितः, अथ वोभयविपर्यासेऽप्येतदित्याद्येकवाक्यम्। याज्यानुवाक्यविपर्यासो यागविपर्यास पति।

इज्यार्थ–स्कन्देत्—पुरोडाशादि।

अनिज्या यथा—देवतायाः स्वक्रमेण।

प्रधानदेवताः—अन्तरिताः।

अङ्गदेवता–मेव—प्रायश्चित्तसमाप्तिः।

यदा–मित्येषः— बह्वृचोक्तः विधिः।

---

[1] ये अनिज्यां—**च.** [2] यदाता—**क. ख.** [3] ता प्रधानदेवतापि दत्वा पुष्कलसमाप्तौ—**च.** [4] तापीज्यते—**घ.** [5] समाप्ते त्व—**ङ. च.**

न हि परस्य–यन्ति—देवतान्तरवाचकयाज्यानुवाक्याभ्यां देवतान्तरयागे सर्वप्रायश्चित्तं कृत्वा पुनरायतनादवदाय स्वकीययाज्यानुवाक्याभ्यां यागः। समाप्ते तन्त्रे पुनस्तन्त्रं प्रयोजयति। प्रधानदेवता स्वकयियाज्यानुवाक्याभ्या........यागादिनिवृत्तिरिति तदेव याज्यान्तरप्रयोगेऽन्तरितप्रायश्चित्तमेवेत्यन्ये। अन्यहोमे भूरिति गार्हपत्ये होमः।

(रु) यस्य देवते विपरिहरेयुः व्यत्ययेन नयेयुः ऋत्विजः, यथा निर्वापावाहनादि प्रथममग्नीषोमयोः कुर्युरथाग्नेरिति। प्रथमं पूर्वार्धादवदायाथ मध्यारित्यवदानाविपर्यासः। तथाऽग्निषोमीयादग्निं यजत्याग्नेयादग्नीषोमावित्यादि हविषाम्। याज्यामनुवाक्यां कुर्यादनुवाक्यां वा याज्यां अचोदितां वान्यतरत्र कुर्यादुभे वा चोदिते इति याज्यानुवाक्ययोः। देवतायै गृहीतमिति इज्यार्थमवत्तमित्यर्थः। देवतान्तरयः स्वक्रमे अनिज्या अनिर्वापो वा। यदस्य गृह इत्यादि व्याख्यातम्। एतेषु निमित्तेषु पुष्कलदानमेव प्रायश्चित्तम्। यदाऽन्यदीयाद्धविषोऽन्यादेवतेज्यते अन्यदीयाभ्यां याज्यानुवाक्याभ्यां तत्र पुष्कलं दत्वा शिष्टादेव पुनरवदाय यजेत। सर्वस्यै हविषो देतार्थत्वात्। अवदानदोषे पुनरायतनादवदानमित्याश्वलायनवचनाच्च। तथा देवतायै गृहीतस्य स्कन्दने भूपतये इत्यभिमन्त्र्य अयमेव विधिरादानायोग्यत्वे। आदानयोग्यत्वे तु तदेवादाय यजेत्। तथा देवतान्तरयेऽप्यसमाप्ते कर्माणि स्मृते तदानीमेवेज्या' निर्वापो वा। समाप्ते त्वग्न्यन्वाधानादारभ्यान्तरितयागार्था पुनरिज्या।

[मतान्तरीयवैकल्पिकाहुतिद्वयविधानम्]

(सू) त्वं नो अग्ने स त्वं नो अग्ने इति सर्वत्रान्तरये विपर्यासे चैते आहुती जुहोतीत्येके॥९॥४॥
॥६१॥२५६४॥

(भा) सर्वत्र उक्ते वाऽनुक्ते वान्तरये विपर्यासे च यस्य देवते अवदाने इत्यनुक्ते वाऽन्तरये विपर्यासे सर्वत्रोक्तविषयेऽन्यत्र चायं विधिः। उक्त-विषये तु पूर्वेण विकल्प्य। तत्र प्रधानान्तरये कृत्वा प्रायश्चित्तं पुनः क्रिया पूर्वत्रैव दर्शिता यदङ्गमप्यनन्तरितमसंस्थिते। तन्त्रे स्मृतं तदुपकारक्षमं च तदपि क्रियते। द्रव्यसंस्कारास्तूपयुक्ते द्रव्ये न क्रियन्ते तदर्थत्वात्। तथा समन्त्रके कर्मण्यमन्त्रकेऽप्रवृत्ते प्रायश्चित्तमेव। न पुनर्मन्त्राप्रयोगः। तादर्थ्यादेव।

पुनः प्रयोगो वा यावदन्ते वा व्यापद्येतेत्यत्रोक्तन्यायात्। अप-वृक्तार्थस्य कर्मणो मन्त्राप्रयोगः कृताकृत इति भारद्वाजः। यजुरन्तरयेऽ-न्वाहारं धानञ्जय्यश्च; [1] यूपादीनां च त्वं नो अग्न इति विक[2]ल्पेनैते न समुच्चयः। पुष्कलेन शाखान्तरोक्तत्वात्।

(वृ) उक्तेवान्ता–दीनाम्––एकादशिन्यादिषु द्वितीयादीनां संस्कार-क्रमविपर्यासे।

(रु) सर्वत्रोक्तविषयेऽन्यत्र चायं विधिः। उक्तविषये तु पूर्वेण विकल्प्यते। तत्र प्रधानान्तरये कृत्वा प्रायश्चित्तं पुनःक्रिया पूर्वत्रैव दर्शिता। यदाऽङ्गमप्यन्तरितमसंस्थिते तन्त्रे स्मृतं तदुपकारक्षमं च तदपि क्रियते। द्रव्यसंस्कारास्तूपयुक्ते द्रव्ये न क्रियन्ते तदर्थत्वात्। तथा समन्त्रके कर्मण्यमन्त्रकर्मप्रवृत्ते प्रायश्चित्तमेव, न पुनर्मन्त्रप्रयोगः। तादर्थ्यादेव पुनः प्रयोगो वादौ यावदन्ते वा व्यापद्येतेत्यत्रोक्तान्न्यायात्। तथा च भारद्वाजः, अप्रवृत्तार्थस्य कर्मणो मन्त्रप्रयोगः कृताकृत इति। द्राह्यायणेन चोक्तम्, यजुरन्तरयेऽन्वाहारं धानंजप्य उपेक्षणं शाण्डिल्य इति। होममन्त्रान्तरये तु पुतर्होमोऽन्यत्र प्रतिनिगद्य होमेभ्यः। तेषु तु नावृत्तिर्याज्याप्राधान्यात्॥

---

[1] स्रुगादीनां–क. [2] नैते आहुती–ङ. च.

[यजमानसम्बन्धिपुरोडाशोत्पतनभेदनान्यतरोऽन्वयोऽशः]

(सू) यस्य पुरोडाश उद्वा पतेत्सं वा विजेत तमुद्वास्य बर्हिषदं कृत्वा 'किमुत्पतसि किमुत्प्रोष्ठाश्शान्तश्शान्तेरिहागहि। अघोरो यज्ञियो भूत्वासीद सदनं स्वमासीद सदनं स्वम्। मा हिꣳसीर्देव प्रेषितः आज्येन तेजसाज्यस्य मा नः किञ्चिन रीरिषः। योगक्षेमस्य शान्त्या अस्मिन्नासीद बर्हिषि' इत्येताभ्यामभिमन्त्रयेताभि च घारयेत्॥ ॥९॥४॥६२॥२५६५॥

(भा) यस्य यजमानस्य पुरोडाश उत्पतेत्, अग्नेः पात्र्या वा देशान्तरं गच्छेत्, संविजेत वा भिद्येत वेत्यर्थः। तमुद्वास्याग्नेः पात्र्या वा बर्हिषि सादयति यदि स्तीर्णं बर्हिरेताभ्यामृग्भ्यां कर्म करोति। किमुत्पतसीत्यभिमन्त्रणं, [1] अभिघारणं च।

(वृ) यस्यय–गच्छेत्—सादयति–भेदनपक्षे। पतनपक्षे तस्माद्देशादपादाय बर्हिषि करोति। एताभ्यां–करोति—एताभ्यामभिमन्त्रयेताभि च घारयेदित्येकेन मन्त्रेण द्वयं न भवति। किं त्वेताभ्यां वक्ष्यमाणं कर्मद्वयं कर्तव्यमिति अतः प्रतिमन्त्रं कर्म। बर्हिस्तरणात्पश्चात्पतनेऽभिमन्त्रणाभिघारणे एव। किमुत्पतसीत्यभिमन्त्रणम्। मा हिंसीरित्यभिघारणम्।

उपदेशो द्वाभ्यामभिमन्त्रणमभिघारणं चेति, मन्त्रद्वयं पठित्वैताभ्यामिति विनियोगात्।

---

[1] द्वाभ्यामभि—च.

(रु) उत्पतेत् कपालेभ्यः पात्र्या वा प्रमादादपगच्छेत्संविजेत भिद्येत वा ततस्तमादाय बर्हिष्यासाद्य किमुत्पतसीति द्वाभ्यामभिमन्त्र्य द्वाभ्यामभिघार्य पुनः स्थाने स्थापयेत्। अस्तीर्णे तु बर्हिष्यभिमन्त्रणाभिघारणे एव क्रियेते नोद्वासनादि ॥

[ पूर्वसूत्रोक्तांशानुष्ठानजन्यफलविवरणम् ]

**(सू) भूत्वा प्रभवति यजमानो यस्यैतां यज्ञे प्रायश्चित्तिं कुर्वन्ति ॥ ९ ॥ ४ ॥ ६३ ॥ २५६६ ॥**

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने षोडशी खण्डिका

---

(भा) भूत्वा–भूतिं प्राप्य। प्रभवति–प्रकृष्टो भवति यजमानः। यस्य यजमानस्यैतत् प्रायश्चित्तं कुर्वन्ति यज्ञे ; नार्थवादः, सूत्रकारेणोपदेशात्।

इति धूर्तस्वामिभाष्ये नवमे प्रश्ने चतुर्थः पटलः

---

(वृ) यस्य–यज्ञे—स भूत्वा प्रभवति। नार्थवादः–फलस्वप्रतिपादनार्थमेव। कुतः–सूत्रकारणोपदेशात्।

इति धूर्तस्वामिभाष्यवृत्तौ चतुर्थः पटलः

---

(रु) भूत्वा भूतिं प्राप्य प्रभवति प्रभुर्भवति समानानामीश्वरो भवतीत्यर्थः। प्ररोचनप्रदर्शनमादरार्थम् ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां चतुर्थपटले षोडशी खण्डिका

चतुर्थः पटलस्समाप्तः

---

[पृषदाज्यस्कन्दनोन्नेयविशेषांशप्रतिपादनम्, शाखान्तरीयमतभेदश्च सूत्राभ्याम्]

(सू.) 'स्कन्ना द्यौः स्कन्ना पृथिवी स्कन्नं विश्वमिदं जगत्। स्कन्नादो विश्वा भूतानि प्रस्कन्नाजायतां हविः'। 'इह गावः प्रजायाध्वमिहाश्वा इह पूरुषाः इहो सहस्रदक्षिणो रायस्पोषो निषीदतु'। 'अयं यज्ञो वर्धतां गोभिरश्वैरियं वेदिस्स्वपत्या सुवीरा। इदं बर्हिरति बर्हीꣳष्यन्येमं यज्ञं विश्वे अवन्तु देवाः'। 'पयस्वतीरोषधयः' इत्येताभिश्चतसृभिः पृषदाज्यं स्कन्नमभिमन्त्र्यापोऽभ्यवहृत्य निर्णिज्य स्रुचं शतमानं हिरण्यं स्रुच्यवधाय। 'इदं विष्णुर्वि चक्रमे' इत्यन्यत्पृषदाज्यं गृहीत्वाश्वेनावघ्राप्याऽऽर्यतेन सादयेत् ॥ ९ ॥ ५ ॥ १ ॥ २५६७ ॥

(भा) पृषदाज्यस्य स्थालीगतस्य स्कन्नस्याज्यवद्विधानं स्रुग्गतस्यापवादः। चतसृभिरभिमन्त्रणम्; भूपतय इति समुच्चीयते। अपोऽभ्यवहृत्य स्क[1]न्नशेषमुद[2]के विद्यमानं न हविर्भवति निर्णेकः—शोधनं; स्रुचः स्रुच्यवधाय शतमानं हिरण्यम्, इदं विष्णुर्विचक्रम इति [3]पञ्चकृत्वः। अन्यत्पृषदा[4]ज्यं स्थाल्यामवघ्राप्याश्वेन स्रुक्साद्यते।

(वृ) पृषदा-न्त्रणम्—निर्णिज्य स्रुचमित्यस्य नैमित्तिकस्य स्रुक्संबंधित्वाद्यदि स्रुग्गतमित्यस्यापवादः। पृषदाज्यस्य हविष आज्यप्रधानत्वादाज्यधर्मप्राप्तेः। अतः स्थालीगतस्यानपवादस्याज्यविधिरेव।

---

[1] स्कन्नशेषः—ख. ङ. [2] केक्षिप्यते विद्य—च. [3] पञ्चकृत्वोऽन्यथा—घ.

[4] ज्यस्था—च.

भूप-यते—सर्पिषामित्यनवयवेनेति वचनात् ।
विद्यमा-वति—स्रुचि शेषस्याप्सु प्रक्षेपविधानात् ।

(रु) स्रुक्संयोगात्स्रुग्गतस्यैवायं विधिः । स्थालीगतस्य त्वाज्यवदेव विधिर्भवति । तत्र स्कन्नं चतसृभिरभिमन्त्र्य स्यन्नशिष्टमप्सु क्षिप्त्वा पुनः स्थाल्याः पञ्चकृत्वो वैष्णव्या गृहीत्वा मन्त्रेण सादयेत् ॥

(सू.) **अथैकेषाम् । पृषदाज्ये स्कन्ने पृषदाज्ये पृषदाज्यमभिगृह्य "मनो ज्योतिर्जुषताम्" इत्याहुतिं जुहुयात् ॥ ९ ॥ ४ ॥ २ ॥ २५६८ ॥**

(भा) स्कन्ने वा पृषदाज्ये भूपतय इत्यभिमन्त्रणं कृत्वा पृषदाज्यस्थाल्यास्तूष्णीं गृहीत्वा स्रुचि 'मनो ज्योतिर्जुषताम्' इत्याहुतिः ।

(वृ) **स्कन्ने वा-हुतिः**—स्कन्ने वेति अथैकेषां पृषदाज्ये स्कन्न इत्यादेर्व्याख्या । स्रुग्गतशेषस्योपरि पृषदाज्यस्थाल्याः तूष्णीं यावदपेक्षितं गृहीत्वा पूर्वं मन्त्रेण गृहीत्वास्य विद्यमानत्वात्तस्योपचयमात्रमभिपूरणम् । अस्मिन्पक्षे 'मनो ज्योतिः' इत्याहुतिमात्रं प्रायश्चित्तम् ; शाखान्तरत्वात् ॥

(रु) अभिगृह्य स्कन्नशिष्टस्योपरि स्थाल्यास्तूष्णीं गृहीत्वेत्यर्थः । तत्र तु भूपतय इति स्कन्नाभिमन्त्रणम् ॥

[सौमिकाभिमन्त्रणे विशेषः]

(सू.) **एवं सोमे स्कन्ने सोमे सोममभिगृह्य जुहुयात् । ॥ ९ ॥ ५ ॥ ३ ॥ २५६९ ॥**

(भा) सोमे तु द्रोणकलशादभिमन्त्रणम् । अग्निहोत्रहोमे त्वाग्निहोत्रिकमेव ।

(रु) सोमस्यात्र प्रासङ्गिकं वचनम् । तत्रापि योनितः सोममभिगृह्य मनस्वतीं जुहुयात् ।

[पृषद्भिः दधिबिन्दुभिः मिश्रितस्याऽऽज्यस्य काकशुनकादिस्पर्शने, जुह्वादीनां तत्स्पर्शे चानुष्ठेयांशोपपादनं सूत्राभ्याम् ]

(सू) "यदपामृक्षच्छकुनिर्मुखेन निरृते तव ।
अग्निष्टत्सर्वँ शुन्धतु हव्यवाड् घृतसूदनः"
इति कृष्णशकुन्यवमृष्टमभिमंत्रयते । अभ्यवहरणादि पूर्ववत् । निर्लिख्यतेऽत्र पात्रम् ॥९॥५॥४॥
॥२५७०॥

(भा) शकुनिः—कृष्णशकुनिः काकः तेनावमृष्टं मुखेन, स्रुग्गतं पृषदाज्य[1]मवमृशेदिति लिङ्गात् । अपोऽभ्यवहृत्येत्येवमादि पूर्वात् निर्लिख्य पात्रमिदं विष्णुरिति[2] गृह्यते[3] शतमाने । यदा त्वन्येना[4]ङ्गेनावमृष्टं, तदा अपो व्यापन्नमिति कृत्वा निर्लिख्य पात्रं पृषदाज्यमन्त्रेणैव ग्रहणं ।

(वृ) शकुनिः–हृणम्—अभिमन्त्रयते हविरन्तरं पृषदाज्यमवमृशेदिति लिङ्गात् ; यदा कृष्णशकुनिः पृषदाज्यमवमृशेदिति शतमाने–हिरण्ये । यदा तु अन्येन मुखादन्येनाङ्गेन ।

(रु) अभिमन्त्रणमन्त्रस्त्वत्र यदपामृक्षदिति भवति, पात्रनिर्लेखनं चाधिकम् । समानमन्यत्पूर्वेणेत्यर्थः ॥ केचित्तु मुखेनेति मन्त्रवर्णात्काकमुखेनापमृष्टस्यैवैतं विधिमिष्ट्वाङ्गान्तरस्पृष्टं व्यापन्नविधिनाऽप्सु क्षिप्त्वा निर्लिखितायां स्रुचि स्वमन्त्रेण गृह्णन्ति ॥

---

[1] अभिमन्त्रयते–च. [2] रित्यन्यद्गृह्यते. [3] तेनेच्छन्नमाने–घ.
[4] नस्पृष्टं–ङ.

(सू) यदवालिक्षच्छ्वपान्मुखेन निरऋते तव । अग्निष्टत्सर्वꣳ शुन्धतु हव्यवाड् घृतसूदन इति श्वापदावमृष्टमभिमन्त्रयते । अभ्यवहरणादि पूर्ववत् । नात्र पात्रं प्रयुज्यते । अन्यस्मिन् गृह्णाति ॥ ९ ॥ ५ ॥ ५ ॥ २५७१ ॥

(भा) शुन इव पादा यस्य पञ्चनखस्य स श्वापदः सृगालमार्जारादिः तेनावमृष्टं मुखेनाभिमन्त्रयते । अपोऽभ्यवहरणादि पूर्ववत् । स्रुचोऽत्र त्यागः । अन्यस्यां स्रुचि हिरण्यमवधायेदं विष्णुरिति गृह्यते । उपदेश उभयत्र, मुखेनान्येन वा स्पृष्टे विधिरेष इति ।

(वृ) शुन इव पा–ष्टम्—श्वपान्मुखेनेति लिङ्गात् ।

अन्यस्यां–स्रुचि—गृह्यते ।

उपदे–रेषः—उभयत्र कृष्णशकुनौ श्वापदे च । मुखेनेति मन्त्रनिर्देशः प्रयाजानुवादः । अवमृष्टशब्दस्य स्पर्शनमात्रपरत्वाच्च श्वापदम.........पृषदाज्यधान्यास्त्यागः । जुह्वादीनामाज्यवतां श्वकाकादिस्पर्शने तत्क्षणमुष्णवारिणा प्रक्षालनं च धर्मशास्त्रसिद्धम् । केवलानां स्पर्शने प्रक्षालनमेव । आलेहनाद्यन्तोपहतौ त्याग एव । शूद्रादिस्पर्शनमात्रे मृन्मयानां काकादिस्पर्शने पुनः पुनः पाकः । शूद्रादिस्पर्शेऽपि प्रक्षालनादि । रजस्वलापतितादिस्पर्शे त्याग एव । अन्यैश्च पात्रं यद्यज्ञकरण.........परित्यज्यते । तत्पात्रमन्यैर्यज्ञसमाप्तये, प्राजापत्यस्मृतेः ।

(रु) शुन इव पादा यस्य स श्वापदः श्वसृगालमार्जारादिः पञ्चनखः । तदवमृष्टं त्वेतयाभिमन्त्र्य स्रुचं च तां त्यक्त्वा पात्रान्तरं संस्कृत्य तस्मिन्

गृह्णाति। समानमन्यत्पूर्वेण। एतेनैव निदर्शनेन पतितोदक्याद्यप्रयतस्पृष्टानां द्वादशमलोपहतानां च त्यागो वेदितव्यः॥

[ काम्यसंज्ञपनसमानाधिकरणपशुध्वनिनिषदनयोः प्रायश्चित्ते ]

(सू) यदि पशुरुपाकृतो वाश्येत 'यदस्य पारे रजसः' इत्याहुतिं जुहुयात्। यस्माद्भीषा वाशिष्ठास्ततो नो अभयं कृधि। प्रजाभ्यस्सर्वाभ्यो मृड नमो रुद्राय मीढुषे' इति जुहुयादभि वा मन्त्रयेत्॥ ९॥ ५॥ ६॥ २५७२॥

(भा) कृत उपाकरणे यदि वाश्येत रवेत्पशुः 'यदस्य पारे' इत्याहुतिः। 'यस्माद्भीषा वाशिष्ठाः' इत्याहुतिः, अभिमन्त्रणं वा पशोः॥

(रु) उपाकरणप्रभृत्यासंज्ञपनाद्यदि पशुः क्रन्देत्तदा 'यदस्य पारे' इति हुत्वा यस्माद्भीषेत्यनया जुहुयात्। अभिमन्त्रयेत वा पशुम्। संज्ञपनदशायां तु इन्द्रस्य भाग इत्यवेक्षणस्यापि समुच्चय इति द्रष्टव्यम्॥

(सू) यद्युवै निषीदेदेतयैव ; 'यस्माद्भीषा न्यषदः' इति द्वितीयाम्॥ ९॥ ५॥ ७॥ २५७३॥

(भा) निषीदेत् यद्युपविशति। प्रयाजेषु तिष्ठति पशाविति नियमात्। उपाकरणाद्युपदेशः सर्वत्र यावन्न म्रियते। मार्य[1]माणस्यानुच्छ्वासनेऽपेक्षणमेव। 'न्यषद' इति [2]विपरिणामो द्वितीयाहुतिरेव। निषण्णेनाभिमन्त्रणम्।

[1] माणस्य तु वा—ङ. च. [2] विपरिणता—ख. ङ. च.

(वृ) निषीदे-शति—प्रयाजात् सर्वप्रायश्चित्तमेव तूष्णीमुपस्थानम् ।

यद्युपविशति-मात्—प्रयाजेषु स्थाननियमात् ।

उपाक-शः—उपाकृत इति प्रकृतत्वात् ।

मार्य-मेव—'इन्द्रस्य भागः' इति सर्वप्रायश्चित्तं च ।

निषण्णेनाभिमन्त्रणम्—द्वितीयामिति स्त्रीलिङ्गनिर्देशादाहुतिरेव, पशुविधिप्रकरणे विशेषपाठाभावात् । 'भीषा न्यषद' इत्येतावन्मात्रं न भवति, किंतु 'यस्माद्भीषाऽवाशिष्ठाः' इत्ययमेव मन्त्रो विपरिणतः निषण्णे द्वितीयहोमार्थ इति ॥

(रु) उपाकृतस्योपवेशने त्वेतयैव यस्माद्भीषान्यषद इति विकृतया द्वितीयामाहुतिं जुहुयात् । समानमन्यत्पूर्वेणेत्यर्थः । केचित्तु तिष्ठति पशाविति प्रयाजेषु नियमात्तत्रैवैतं विधिमिच्छन्ति ॥

[ उत्थापनोत्क्रमणवशादिमन्त्राणां ऊहानूहव्यवस्था त्रिभिस्सूत्रैः ]

(सू) निषण्णे तं मैत्रावरुणदण्डेनोत्थापयेत् ॥ ९ ॥
॥ ५ ॥ ८ ॥ २५७४ ॥

इत्यापस्तम्बश्रौतसूत्रे नवमप्रश्ने सप्तदशी खण्डिका

---

(भा) उत्थापनमन्त्राणां विकृत्यर्थत्वात् स्त्रीपशौ द्विप्रभृतिषु च नोहः । छागे तूहः प्रकृत्यर्थहेतुत्वात् ।

इति धूर्तस्वामिभाष्ये नवमे प्रश्ने सप्तदशी खण्डिका

---

(घ) उत्थापन-नोहः—अस्यार्थः ;-- प्रकृतिभूतस्योस्रस्याभावादुदुस्र तिष्ठेति मन्त्रस्य विकृत्यर्थत्वे सत्यस्य मन्त्रस्योस्रजातीयपशुविधिप्रकरणे विशेषपाठाभावात् वैकृतपशुजातिमात्रोपलक्षणार्थत्वं युक्तमुस्रशब्दस्य सान्नाय्यमन्त्रेष्विन्द्रशब्दवत्। अनेनाभिप्रायेण सूत्रकारेणोच्छागेति छागमुन्मेषेति मेषमित्युच्यते। तस्मादुत्थापनमन्त्राणां विकृत्यर्थत्वादिति बहुवचनोपपत्तेः। अतश्च जातिवाचकपदं युक्तम्। मन्त्राणां विकृतिषूपदेशत्वेऽप्यान्वयात्य ......स्त्रीपशुषु द्विपश्वादिषु च नोहः। पुल्लिङ्गैकवचनान्तानामेव विकृतिषूपदिष्टत्वाद्वैकृतपशूनां वशान्तानामुस्रप्रकृतित्वाभावाच्च। प्राकृतस्य हि वैकृतद्वारान्तरसम्बन्धे सत्यूहो भवति। न पदान्तरान्वितोपदेशमात्रे।

स्त्रीपशौ द्विप्रभृतिषु चोहः—उस्रमेषवशादिमन्त्रणां तज्जातीयपश्वादिष्वनूह एव विकृत्यर्थोत्पन्नत्वात् दक्षिणामन्त्रवत्॥

छागे-तूहः—प्रकृत्यर्थत्वादुच्छागेति मन्त्रस्य अग्नीषोमीयप्रकृतिभूतस्य छागत्वादुच्छागेति छागमित्युपदेशस्य च प्रकृत्यर्थत्वम्। तस्य विकृतावूहः॥

इति धूर्तस्वामिभाष्यवृत्तौ सप्तदशी खण्डिका

---

(रु) निषण्णे त्वयमपरो विशेष इत्यर्थः।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां नवमप्रश्ने

सप्तदशी खण्डिका

---

(सू.) उदुस्र तिष्ठ प्रतितिष्ठ मारिषो मेमं यज्ञं यजमानं च रीरिषः। सुवर्गे लोके यजमानꣳ हि धेहि शं न एधि द्विपदे शं चतुष्पदे ॥ ९ ॥ ५ ॥ ९ ॥ ॥ २५७५ ॥

उच्छागेति छागम्। उन्मेषेति मेषम्। उद्वश इति वशाम ॥ ९ ॥ ५ ॥ १० ॥ २५७६ ॥

(भा) उस्रा गौः मेषोऽविकः वशा वन्ध्या। उच्छाग तिष्ठेत्यग्नीषोमीयार्थत्वात् स्त्रीपशौ द्विप्रभृतिषु चोहः ॥

(वृ) उच्छाग तिष्ठेति मूलप्रकृतिभूताग्नीषोमीयार्थत्वात्समवेताभिधानम्।

(रु) उस्रशब्दस्य गोजातिवचनत्वाद्गव्युस्रेत्यविकृतो मन्त्रः। छागमेषयोस्तूच्छाग तिष्ठ उन्मेष तिष्ठेति विक्रियते। वशायां तु जात्यनादरेणोद्वश इत्येव भवति। तत्रोच्छागेत्यस्य प्रकृत्यर्थत्वाद्विकृतिषु पश्वनेकत्वे स्त्रीपशौ च यथार्थमूहः। नोस्रादीनामूहो विकृत्यर्थमेवोपदेशात् ॥

[ कम्पमानेऽपक्रान्ते पशौ चानुष्ठेयोंऽशः ]

(सू.) यस्माद्भीषाऽवेपिष्ठा इति द्वितीयां वेपमाने ॥ ॥ ९ ॥ ५ ॥ ११ ॥ २५७७ ॥

(भा) वेपमानः—कम्पमानः। [1] द्वितीया विपरिणता यथालिङ्गं सर्वत्र प्रथमा [2] न विकृता ॥

[1] यस्माद्भीषेति द्वितीया—घ. [2] मात्वविकृ—च.

(वृ) वेप–सर्वत्र—वेपमानादिक्रियासु ॥

(रु) पूर्ववद्व्याख्या ॥

(सू) यस्माद्भीषा पलायिष्ठा इति पलायिते ॥ ९ ॥
॥ ५ ॥ १२ ॥ २५७८ ॥

(भा) पलायितः–अपक्रान्तः ॥

(रु) अपक्रमणं पलायनम् ॥

[ संज्ञपनाय यूपे नियमितपशोः उक्तहेतुभिरागमनाशक्तौ रूपवर्णवयोभिस्तुल्यान्यपशूपाकरणपूर्वकयागविधिः ]

(सू) अनागच्छत्यन्यं तद्रूपवर्णवयसं तद्दैवतमुपाकृत्य यजेत ॥ ९ ॥ ५ ॥ १३ ॥ २५७९ ॥

(भा) अनागच्छति पशावन्य उपाक्रियते तुल्यरूपः–तुल्यसंस्थानः, अङ्गसन्निवेशो यस्य तुल्यः, तुल्यवर्णः कृष्णे नष्टे कृष्णवर्णः । द्विवर्षस्य द्विवर्षः । तेनेज्या यावदन्ते वा [1] ॥

(वृ) अनागच्छति–तुल्य—अन्यं तद्रूपवर्णवयसमित्यत्र रूपशब्देन संस्थानतुल्यतोच्यते, न शुक्लादितुल्यता वर्णशब्दस्य पृथगुपादानात् ॥

तेनेज्या–वा—अन्यस्योपाकरणादि कृत्वा यावदन्ते पलायनम् । तत ऊर्ध्वम् क्वचित्तु नोच्यते; यावदन्ते वेति पाठः । तदा उपाकरणादिपक्ष एव ॥

(रु) तस्मिन्नागमयितुमशक्ये सति संख्यानवर्णवयोभिस्तत्सदृशं तज्जातीयमन्यमुपाकुर्यात् । तज्जातीयालाभे प्रतिनिधिरुक्तस्सत्याषाढ-

[1] वेति–च.

भारद्वाजाभ्याम् । अजा अवयः गाव इत्यन्योन्यप्रतिनिधयो भवन्तीति ॥

[ अकाम्यसंज्ञपनोऽन्त्योंऽशः सूत्राभ्याम् ]

(सू) यस्माद्भीषा समज्ञास्था इति द्वितीयामकाम-संज्ञपने ॥ ९ ॥ ५ ॥ १४ ॥ २५८० ॥

य इदमकस्तस्मै नमस्तस्मै स्वाहेति सर्वत्र तृतीयाम् ॥ ९ ॥ ५ ॥ १५ ॥ २५८१ ॥

(भा) अकामसंज्ञपने—अविधानेन यथा म्रियते अन्यस्मिन् काले। स्वकाले मार्यमाणे य इदमकरिति सर्वत्र तृतीया। [1] अनुक्रान्तेषु निमेहनादिष्वपीत्युपदेशः ॥

(वृ) अन्यस्मिन्–काले—संज्ञपनकालात्।

मार्यमाणे—शमित्रा। स्वयं मरणे य इदमकरिति सर्वत्र तृतीया।

अनुक्रान्तेषु वाशनाद्यकामसंज्ञपनान्तेषु तानुक्त्वा य इदमकरिति ब्राह्मणे पाठात्। निमेहनादीनां शाखान्तरोक्तत्वात् ॥

निमेहनादिष्वपीत्युपदेशः—सूत्रकारेण य इदमकरिति सर्वत्र तृतीयामित्येतावत्युक्तेऽपि पूर्वोक्तेषु सिद्धावपि सर्वत्रेति वचनात् ॥

(रु) व्याघ्रादिना मरणमकामसंज्ञपनम्। सर्वत्रेति न केवलमत्रैव। किंतु यत्र यत्र यस्माद्भीषेति द्वितीयाहुतिरुक्ता वक्ष्यते वा तत्र सर्वत्रेयं तृतीयेत्यर्थः ॥

---

[1] अतिक्रान्तेषु—च.

[ प्रथममुपाकृतस्य मृतावप्सु प्रक्षिप्यान्यं पशुं रूपवर्ण-
वयोभिस्तुल्यमुपाकृत्य यागस्यानुष्ठेयत्वव्यवस्था
सूत्रचतुष्टयेन ]

(सू) 'न वा उवेतन्म्रियसे न रिष्यसि, आशानां त्वा' विश्वा आशाः, आपो हि ष्ठा मयोभुवः' इत्येताभिश्चतसृभिरपोऽभ्यवहृत्य अन्यं तद्रूपवर्णवयसमुपाकृत्य यजेत ॥ ९ ॥ ५ ॥ १६ ॥ २५८२ ॥

(भा) [1] आपो हिष्ठान्ताभिः चतसृभिरप्सु प्रक्षेपो [2] मृतस्य पुनश्चोपाकरणं तथालक्षणस्य ॥

(वृ) पुनश्चो--णस्य-- --पूर्वस्य मृतत्वात् ॥

(रु) मृतं पशुमपोऽभ्यवहृत्य पूर्ववदन्येन यजेत ॥

(सू) यस्मान्नीषा निमेहसीति द्वितीयां मूत्रं कुर्वति। यस्मान्नीषा शकृत्करोषीति द्वितीयां शकृत्कुर्वति॥ ॥ ९ ॥ ५ ॥ १७ ॥ २५८३ ॥

(भा) निमेहसीति द्वितीया मूत्रकरणे, शकृत्करोषीति शकृत्करणे ; [3] नैतयोस्तृतीया ॥

(सू) 'ऊर्ध्व ऊषुण ऊतये' इत्युच्छ्रयन्तमभिमन्त्रयते ॥ ९ ॥ ५ ॥ १८ ॥ २५८४ ॥

(भा) उच्छ्रयन्तम्—यदा द्वाभ्यां पादाभ्यामूर्ध्वं तिष्ठति तदा 'ऊर्ध्व ऊषुण ऊतये' इत्यभिमन्त्रयते ॥

---

[1] आपो हिष्ठीयान्ताभिः—ख. घ. आपो हिष्ठा मयोभुवः—क. [2] पः तस्य पुनः—च. [3] न तयोस्तृ—ङ. च.

(रु) तृतीयाहुतिरप्यनयोः पूर्ववत् । द्वाभ्यामूर्ध्वमवस्थापनमुच्छ्र्य-णम् ॥

(सू) **यद्युपपाय्यमानो न पिबेत् 'न वा उवेतन्म्रियसे' इत्युपपाययेत् ॥९॥५॥१९॥२५८५॥**

(भा) पाय्यमानो यदा न पिबेत् तदा न वा उवेतन्म्रियसे इति बलात्कारेण पाय्यते ॥

(रु) अपां पेरुरसीति पाय्यमानस्य बलादनेन स्वयमपाने पाययेत् ॥

(सू) **'गर्भꣳ स्रवन्तीमगदामकर्माग्निर्होता पृथिव्यन्तरिक्षं द्यौर्यतश्चेत्यग्नावेव तं नयत्याप्नोति निरृतिं पराचैः' इति पशूखां स्रवन्तीमभिमन्त्रयते ॥९॥ ॥५॥२०॥२५८६॥**

(भा) स्रवन्तीमभिमन्त्र्यान्या पशूखा क्रियते ॥

(वृ) **स्रवन्ती–यते**—श्रपणसमर्थायामुखायां अन्यस्यासादनप्रोक्षणादि कृत्वा तस्यामवदानानि श्रपयेत् । भिन्नामुखां कार्याक्षमां भूमिर्भूमिमिति ब्रह्माभिमन्त्रितां तेनैव मन्त्रेणाप्सु प्रक्षिपेत् सर्वप्रायश्चित्तं च ॥

(रु) भिन्नां स्रवन्तीमभिमन्त्र्य अन्यामुखां संस्कृत्य निवेशयेत् ॥

[प्रयाजयाज्यापठनोत्तरं मारणाय पशोरुदङ्नयनं]

(सू) **'यर्हि पशुमाप्रीतमुदञ्चं नयन्ति' इत्युक्तम् ॥ ॥९॥५॥२१॥२५८७॥**

(भा) यर्हि–यस्मिन् काले आप्रीतं प्रयाजयाज्यासूक्तासु मारणार्थमुदञ्चं पशुं नयन्ति तस्मिन् काले प्राजहितात्पशुश्रपणमानीयते ।

अग्नीषोमीयार्थं 'प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्त्यन्वनांसि प्रवर्तयन्त्यथवा अस्यैष धिष्णियो हीयते' इति लिङ्गात्। दक्षिणया द्वारा नीत्वा प्राग्वंशस्य पशोः श्रपणं यूपसंचरेण पुरस्तात्पशोर्नयन्ति पशुश्रपणार्थमुल्कं चावहनी[1]यात्। 'अग्निना पुरस्तादेति' इति श्रुतेः। तदेव च निवर्तते। स एव प्राजहित एव स्यात् निर्मन्थ्यं वा तूष्णीं कुर्यात्। [2]पशुश्रपणार्थमेष विधिः सवनीयेऽपि, तत्प्रकृतित्वात्। निरूढे तूल्कामेव प्रत्यक्षविधानात्। अवदाननाशे पुनरालम्भे प्राप्ते प्रत्यवदानमाज्यस्य गृहीत्वा [3]इतरैर्नष्टैर्वा सहेज्या, प्रत्यक्षश्रुतित्वात्, आज्यस्य प्रतिनिधेः, कात्यायनमताच्च। उपदेशो वपाहृदयार्थं पुनरालम्भः। 'आत्मा वपा' 'हृदयमात्माऽभि समेति' इति आत्मसंस्तुतेः। [4]तयोरेव बोधायनमताच्च। शिष्टस्य तूत्करे त्यागः। एकदेशे तु विद्यमाने तेनैव यागः। मात्रापचारे तच्छेषेणेति प्रधानद्रव्यगुणो मात्रा प्रायश्चित्तं क्रियते मात्रानुग्रहार्थम्॥

(वृ) यर्हि–क्तासु—आप्रीतमित्याप्रिशब्दः प्रयाजयाज्यावचनः। अस्य पशोस्संजातमाप्रिसूक्तमित्याप्रीतपशुः; प्रयाजयाज्यासूक्तास्वित्यर्थः। मारणार्थमुदञ्चं पशुं नयन्ति तर्हि तस्मिन् काले प्राजहितात्पशुश्रपणमानीयतेऽग्निरग्नीषोमीयार्थं प्राजहितादित्यत्र हेतुमाह॥

[निरूढ पशुबन्धीय प्रागग्निहरणादेरत्र तत्र च तौल्येऽपि ज्योतिष्टोमिकाहः पठितस्य अनसां प्रवर्तनस्य तत्राभावाद्विशेषमुपपाद्य 'अथवा अस्यैषः' इति श्रौतैतच्छब्दस्य प्राजहित परत्ववर्णनम्]

प्राञ्चमग्निं–इति लिङ्गात्—अस्यार्थः–प्रागग्निहरणं पत्न्या उदानयनं च यद्यपि निरूढे विद्यते; तथापि ज्योतिष्टोमिका-

---

[1] यात रक्षोहननार्थम्–अ. च. [2] उपश्रप–च. [3] इतरैरनष्टैरदुष्टैर्वा–च.
[4] तयोर्बोधा–ख.

इरुक्तस्यान्वनांसि प्रवर्तयन्तीत्यनसां प्रवर्तनस्य निरूढेऽभावादग्नी-षोमीयविषयतां तत्र प्राजहितदेशादनसः पत्न्याश्च प्राङ्निष्क्रमणात् 'अथवा अस्यैषः' इत्येष शब्दः प्राजहितपरः। ततश्च प्राजहिते यजमानस्य प्रजापशुशमनरूपध्यानप्रसङ्गेन तत्क्रोधशमनार्थं तस्मात्पशु-श्रपणावगमादग्नीषोमीयप्राजहिताच्छामित्राहरणं 'तर्हि तस्य पशुश्रपणम्' इति तस्य प्राजहितस्येत्यर्थः॥

दक्षिणया–णार्थम्—सूत्रकारेण पशोः पुरस्तान्नयनं संस्तुत्य शामित्रस्य निर्देशात्। यदाहवनीयात्पशुश्रपणमिति॥

उल्मुकं–यात्—उल्मुकं च रक्षोहननार्थतयाऽऽहवनीयात्॥

['यजमानं वा एतद्विकर्षन्ते' इति निन्दाश्रवणस्य सिद्धवदनुवादात्प्राजहितनिर्मन्थ्यप्रशंसार्थत्वम्]

अग्निना–ते—'अग्निना पुरस्तादेति रक्षसामपहत्यै' इति श्रुतेः। अत उभयोर्विधानादुभयं भवति अत्र 'यजमानं वा एतद्विकर्षन्ते यदाहवनीयात्पशुश्रपणꣳ हरन्ति' इति सिद्धवदनुवादा-न्निन्दाश्रवणस्य प्राजहितनिर्मन्थ्यप्रशंसार्थत्वाद्यदाहवनीयात्पशुश्रपणꣳ हरन्तीत्यनुवादस्य शास्त्रान्तरात्प्राप्तिपूर्वार्थकत्वम्॥

[पूर्वोक्तानुवादस्य 'वचनानि त्वपूर्वार्थत्वात्' इति न्यायमाश्रित्य अनुवादसरूपविधित्वं प्रकल्प्य निरूढाग्नीषोमीययोरुल्मुकोन्नय-विशेषांशप्रतिपादनम्]

अथवा अस्यैवानुवादस्य वचनानि त्वपूर्वार्थत्वादिति न्यायेन अनुवादसरूपविधित्वकल्पनं अतोऽस्यापि प्राकृते निवेशेऽपेक्षित-कल्पितविधित्वात् 'तस्य पशुश्रपणं हरेत्' इत्यनेन तुल्यविकल्पा-संभवात् द्वितीयप्रकृतिभूते निरूढे निवशते। तत्राहवनीयादुल्मु-

कनयनं रक्षोऽवहननार्थं श्रपणार्थं चेति प्रस्तुत्य सूत्रकार उल्मुकं निदधाति स शामित्र इत्युक्तवान् तदेव च निवर्तेत इत्युल्मुकैकदेशमादायाग्निप्रतिनिवृत्तौ तस्यैव रक्षोऽवहननार्थत्वावगमादुल्मुकाग्निरेव रक्षोघ्नम्। निरूढ उल्मुकस्य श्रपणार्थत्वादेकदेशः प्रतिनिवर्तते। अग्नीषोमीये तु प्राजहिताच्छामित्रहरणात् कृत्स्न उल्मुकः प्रतिनिवर्तते ॥

['सवैव स्यात्' इति श्रुतिवाक्यार्थवर्णनम्]

**स वैव स्यादित्यस्यार्थः**;—स एव प्राजहित एव स्याच्छ्रपणार्थ इति। निर्मन्थ्यविधित्सया पुनर्विधानम्। निर्मन्थ्यं वा तूष्णीं कुर्यात्पशुश्रपणमिति लौकिकारणिभ्यां अवकीर्णपशावपि निर्मन्थ्यस्य पशुश्रपणार्थत्वेन भाष्यकारोपदेशः ॥

अत्र प्राजहितनिर्मन्थ्योल्मुकानां विकल्प इति केचित्। अन्ये तु निर्मन्थ्योल्मुकयोर्निरूढ एव निवेश इति ॥

[सवनीयेऽप्यस्यावश्यानुष्ठेयत्वम्]

**एष विधिस्सवनीयेऽपि तत्प्रकृतित्वात्**—अग्निषोमीयप्रकृतित्वात्। निरूढे तूल्मुक एव प्रत्यक्षविधानात् अस्मिन्नेव ब्राह्मणे यदि पशोरवदानं नश्येदित्यादि पठितम् ॥

अस्य व्याख्या;—अवदाननाशे पुनरालम्भे प्राप्ते प्रत्यवदानमाज्यस्य गृहीत्वा उत्तरैरदुष्टैरनष्टैर्वा सहेज्येति ॥

नश्यतीति नाशदोषापहाराणामुपलक्षणम्। तुल्यत्वात् प्रत्यक्षश्रुतेनाज्यस्य प्रतिनिधेर्न पुनरालम्भः। कात्यायनमताच्च। एवमाज्यस्य प्रतिनिधेर्दुष्टाङ्गैस्सहेज्याप्रतिनिधेर्योगः ॥

**उपदेशो-संस्तुतेः** ;—तयोः प्रधानत्वादवश्यं सम्पाद्यत्वात् ।

**शिष्टस्य तूत्करे त्याग इति** ;—वपाहृदयनाशे इतराङ्गेषु विद्यमानेषु पश्वन्तरालम्भेऽपि पूर्वसिद्धाङ्गैरेव यागः । पुनरालब्धस्य पशोर्वपाहृदयव्यतिरिक्तावयवजातस्य तूत्करे त्यागः 'यद्वै यज्ञियस्य कर्मण' इत्युक्तम् ॥

**एकदेशे-गः**—हृदयाद्यवदानानामेकदेशेषु विद्यमानेषु द्व्यवदानपरिमाणाभावेऽपि तेनैव यागः ॥

**मात्रापि-ण** ;—समाप्नुयादिति न्यायात् । प्रधानद्रव्यगुणो मात्रा । अतो गुणसंभवेऽपि प्रधानमुपादेयमिति प्रायश्चित्तं तु क्रियते । मात्रानुग्रहार्थम्—मन्त्रवैकल्यदोषपरिहारार्थम् ॥

(रु) यर्हिपशुमित्यारभ्य ये पशुं विमथ्नीरन्नित्यतः प्राग्यदुक्तं ब्राह्मणे तत्रैवानुसन्धातव्यमित्यर्थः । तत्र हि दैक्षं पशुं प्रकृत्योक्तम् । यर्हिपशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणꣳ हरेदिति । यर्हि यस्मिन् काले पशुमाप्रीतमिष्टप्रयाजम् संज्ञपनार्थमुदञ्चं नयन्ति, तर्हि तस्मिन् काले तस्य तस्मात्प्राजहितात्पशुश्रपणं शामित्राग्निं हरेरित्यर्थः । पशुश्च 'यजमानं वा एतद्विकर्षन्ते यदाहवनीयात्पशुश्रपणꣳ हरन्तीत्याहवनीयाद्धरणं निन्दित्वोक्तं स वैव स्यान्निर्मन्थ्यं वा कुर्यात् । स एव प्रस्तुत एव योनिस्स्यान्निर्मन्थ्यो वेत्यर्थः । पूर्वत्रात्र च तद्वृत्ताभ्यां प्राजहितपरामर्श इत्येतदपि प्राञ्चमग्निं प्रहरन्तीत्यादि ब्राह्मणपर्यालोचनयैव प्रत्येतव्यम् । बोधायनश्चाह, स वैव स्यादिति पुराणगार्हपत्यमभ्युपविशतीति । समानोऽयं विधिस्सवनीयेऽपि । तत्प्रकृतित्वात् । निरूढपशौ त्वाहवनीयादेवाऽऽहर्तव्यः । पुनश्चोक्तं ब्राह्मणे ; यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येत्सैव

ततः प्रायश्चित्तिरिति । यदि पशुसम्बन्ध्येकमनेकं वाऽवदाननाशे दोषादिना अवदानयोग्यं स्यात्तस्य ध्रौवादाज्यमवद्येदित्यर्थः । यद्य द्धविस्तस्याज्यं प्रतिनिधिरिति । कृत्स्ननाशे पुनरालम्भः । केचित्तु वपाहृदययोर्नाशेऽपि पुनरालम्भमिच्छन्ति, तयोः पश्वात्मसंस्तवौ ' यथा ' आत्मा वपा, पशोर्वा आलब्धस्य ' हृदयमात्माभिसमेति ' इति च । तदयुक्तं विशेषानुपदेशात् । अर्थवादमात्रत्वाच्चात्मप्रवादस्य ' तदुक्तं कात्यायनेन अवदानहानौ नाम्रियेत हृदयनाशेप्यन्यं पशुमालभेते-त्येके, हृदयं पशुरिति श्रुतेः । सर्वेषां वाज्यस्य यजेदर्थवादमात्रं पशुवचनमिति । यदि मतम् अनवदानत्वाद्वपाया न तत्रायं विधि-रिति तदुपोत्तरसूत्रे निरसिष्यते । वपादीनां मात्राहीनत्वेप्येकदेशे विद्यमाने तेनैव यजेत न प्रतिनिधिना द्रव्यप्राधान्यात् । यथोक्तं मात्रापचारे तच्छेषेण समाप्नुयादिति ॥

[आलब्धपशोरपहरणे अपहर्त्रार्तिजनकहोमविधिः]

(सू.) ये पशुं विमथ्नीरन् यस्तान् कामयेतार्ति-मार्छेयुरिति कुविदङ्गेति नमोवृक्तिवत्यर्चाऽऽग्नीध्रे जुहुयात् आहवनीये शामित्रे वा निरूढपशुबन्धे ॥ ॥९॥५॥२२॥ २५८९॥

(भा) ये पशुं विमथ्नीरन्—विलोप्य[1] हरेयुः । तान् कामयेत आर्ति ते प्राप्नुयुरिति कुविदङ्गेति स जुहोति । नमोवृक्तिवत्येति ज्ञानार्थम् । एकादशावदानान्यवद्यतीति परिसंख्यानात् ॥

(वृ) ये पशुं जुहोति ;— उपाकृतस्य पशोर्बलात्प्रमथ्य हरणे तेषा-मार्तिप्राप्त्यर्थो होमः ।

नमो वृक्ति-र्थम्—पशावाहनीये शामित्रे वा होमः ॥

(रु) यदि दस्यवः पशुं विमथ्नीरन् जीवन्तं मांसावस्थं वा बलात्कारेण हरेयुः। तांश्च यजमानः यदि कामयत आर्तिं प्राप्नुयुरिति तदाऽनया जुहुयात्। तदलाभे तु पलायितविधिरेव भवति ॥

[वपाहविरवदानान्यतरस्कन्दनोऽन्नेयविशेषांश-
प्रतिपादनम्]

(सू.) यदि वपा हविरवदानं वा स्कन्देत् 'आत्वा ददे यशसे वीर्याय चास्मास्वग्निया युयं दधाथेन्द्रियं पयः' इत्यादाय "यस्ते द्रप्सो यस्त उदर्षो दैव्यः केतुर्विश्वं भुवनमा विवेश स नः पाह्यारिष्टयै स्वाहा' इत्याहुतिं जुहुयात् ॥९॥
॥ ५ ॥ २३ ॥ २५८९ ॥

(भा) यदि वपाहविरवदानं वा स्कन्देदिति—'एकादशावदानान्यवद्यति' इति परिसंख्यानात्। वपास्कन्दने न स्यात्प्रायश्चित्तम्। अतः पृथग्वपाग्रहणं अप्स्ववदानैश्चरेयुरिति त्ववदानग्रहणेन यथा वपा गृह्येतेति ॥

उपदेशस्तु पृथग्वपाग्रहणावदानैरेवाप्सु प्रचारः। वपा त्वग्नौ हूयते। 'आत्वा ददे' इत्यादाय यथास्थानं स्थापयति। ततो 'यस्ते द्रप्सः' इत्याहुतिं जुहोति ॥

[वपायाः पार्थक्येन कथने निदानं, तत्र युक्ति-
प्रदर्शनं च]

(वृ) यदि वपा—ह्येतेति—अस्यार्थः—एकादशावदानान्यवद्यतीत्यवदानशब्दस्यैकादशस्वेव प्रवृत्तत्वाद्वपायामप्येतत्प्रायश्चित्तप्राप्त्यर्थं वपाहृदयादिसमानधर्मकत्वदर्शनादप्स्वेव वपाचारः ॥

[उपदेशपक्षाशयः]

**उपदेशस्तु**—अत्र पृथग्ग्रहणादिति–अप्स्ववदानैश्चरेयुरित्यप्सु हृदयादिभिरेव याग इति ॥

[शुचावशुचौ च प्रदेशे स्कन्दनेऽनुष्ठेयांशस्य सोपपत्तिकं व्यवस्थापनम्]

**आ त्वा ददे—पयति**—अस्यार्थः–वपाहृदयादीनां स्रुच्यवदानात् प्राक् शुचौ भूमौ स्कन्दने 'आ त्वा ददे' इत्यादाय यथा स्थानं स्थापयति। ततो 'यस्ते द्रप्सः' इत्याज्यहोमः। प्रजापतिर्देवता। 'भूपतये' इत्यभिमन्त्रणम्। केचित् स्रुगतेऽप्येवमेव। केचित् स्रुगते पुष्कलदानं भूपतय इति चेच्छन्ति। यस्य वा देवतायै हविर्गृहीतमित्युक्तत्वादिति ॥

न्यायस्तु वपाहृदयादिष्वयमेवापवाद इति अशुचिदेशे स्कन्दने यदि पशोरवदानं नश्येदित्येतत् इति हविरतिरेकमात्रस्य निमित्तत्वादष्टापदीति सूत्रकारनिर्देशः प्रदर्शनार्थः। "अष्टापदी ह्येषेति" श्रुतिश्च प्रदर्शनार्था।

[विशसनस्य पूर्वमुत्तरं वा अनुबोधनेऽनुष्ठेयांशः]

**अनुबोधनं–जानाति**—कथम्—पशुपुरो–दर्शनात् यस्मादनुबुध्यैव गर्भिणीति गर्भपुरोडाशनिर्वापसम्भवः। अतः प्राग्विशसनाद्गर्भज्ञानसम्भवः। पशुपुरोडाशनिर्वापानन्तरं। गर्भपुरोडाशनिर्वापश्रवणात्। विशसनस्य निर्वापोत्तरकालं हविष्कृता वाचं विसृज्य पशुं विशास्तीति वाग्विसर्गकालत्वात्। अनुबुध्यैव "धाता रातिस्सूर्यो देव" इत्याहुती।

विशसनकाले बोधनं चेत् सर्वाण्यङ्गान्यनुद्धृत्य धाता रातिरित्याहुतिरिति। विप्रुषः स्फोटका हिरण्यस्याग्निकरुक्मवत्।

अष्टापद्यामष्टौ-स्फोटका—अष्टापदी ह्येषेति हेतुवचनाद्याव-त्पदं हिरण्यस्य विप्रुषः कार्याः ॥

इति धूर्तस्वामिभाष्यवृत्तौ नवमे प्रश्ने अष्टादशी खण्डिका

---

(सू) कोशेऽवधाय द्वितीयेऽवधाय तृतीयेऽवदधाति ॥ ९ ॥ ५ ॥ २४ ॥ २५९० ॥

(भा) [1]ततः कोशे अवदधाति ; तत्कोशे [2]द्वितीये तृतीये च ॥

(रु) विकृतिषु स्त्रीपशुरालब्धव्या, यद्यष्टापदीत्यनुबध्येत गर्भिणीत्यर्थः। गर्भपादैस्सहास्या अष्टौ पादा भवन्तीति कृत्वा गर्भप्रदर्शनार्थत्वाच्च। गर्भद्वित्वादिना द्वादशपद्यादावपि समानोऽयं विधिः। तत्र प्राक्संज्ञपना-दनुबोधे तामुत्सृज्यान्यामुपाकुर्यात्। परतस्त्वनुबोधे धाता रातिस्सूर्यो देव इत्याहुती हुत्वा अष्टाप्रूडष्टबिन्दुकं हिरण्यमुष्णीषेण दीर्घवाससा-ऽऽवेष्ट्य तत्कस्मिंश्चित्सापिधाने कोशेऽवधाय तमपि कोशमन्यस्मिन्कोशे तथा कृत्वा तमपि तृतीये कोशेऽवदधाति ॥

(सू) विबिलानिव कोशान् कृत्वाथैनामध्वर्युरभि-मन्त्रयते 'यस्यास्ते हरितो गर्भ' इति ॥ ९ ॥ ५ ॥ ॥ २५ ॥ २५९१ ॥

(भा) तानि षट् विगतबिलानि कृत्वा[3]भिमन्त्रयते 'यस्यास्ते हरितो गर्भ' इति ॥

(वृ) तानि षट्-कृत्वा—आधारचारकोशबिलाद्बहिर्भूतान्। अथ गर्भिणीमभिमन्त्रयेत 'यस्यास्ते हरितो गर्भ' इति ॥

---

[1] तत्कोशे—ङ. च. [2] शं—च. [3] त्वा गर्भिणीं मन्त्रयते—च.

(रु) तान्कोशान्विगतबिलानिव दृढापिहितान्कृत्वा दक्षिणार्थे निधाय ततो गर्भिणीमभिमन्त्रयते 'यस्यास्त' इति ॥

(सू) **'आ वर्तन वर्तय' इति प्रदक्षिणं गर्भमावृत्य 'वि ते भिनद्मि तकरीम्' इत्युल्बमाछयति ॥ ९ ॥ ५ ॥ २६ ॥ २५९२ ॥**

(भा) 'आ वर्तन वर्तय' इति उदरस्थं गर्भमावर्तयति । 'वि ते भिनद्मि तकरीम्' इति वस्तिपुटमाच्छिनत्ति । द्वि[1]बहुष्वनूहः, मन्त्रावृत्तिरेव ॥

(वृ) **द्विबहु—रेवेति**—अष्टपद्यादिषूपदेशप्राप्तस्य मन्त्रस्य नोहः । वि ते भिनद्मीत्येकवचनात् पर्यायेण वस्तिपुटकाभेदे समवेताभिधान-सम्भवात् आवृत्तिरेव मन्त्रस्य ॥

(रु) विशसनकाले पशोरुपस्थनिर्गमानुगुणमावृत्य तदावरकमुल्बं भेदं छयति छिनत्ति ॥

(सू) **'बहिस्ते अस्तु बाल्' इत्यन्तरा सक्थिनी गर्भं निरस्य शूले प्रणीक्ष्य शामित्रे निहृत्य श्रपयति ॥ ॥ ९ ॥ ५ ॥ २७ ॥ २५९३ ॥**

(भा) बहिस्ते अस्तु बालित्यन्तरा गर्भमाकर्षति । पर्यायेण शूले लङ्गयित्वा गर्भं शामित्रे निहृत्य श्रपयति ॥

(वृ) **बहिस्ते अस्तु—येण**—गर्भानेकत्वे सर्वमन्त्राणामेकवचनान्ता-नामावृत्तिरेव । 'यस्यास्ते हरितो गर्भ' इत्यादीनाम् ।

---

[1] बहुष्वप्यनूहः—च.

शूले-श्रपयति—हृदयश्रपणान्ते ॥

(रु) तत ऊर्वोर्मध्येन गर्भं निस्सार्य शूले प्रणीक्ष्य शूलाग्रप्रोतं कृत्वा निहृत्य श्रपयति। गर्भश्रपणानुगुणमग्निसमीपे शूलं निखाय शामित्रे श्रपयतीत्यर्थः ॥

[गर्भसम्बन्धिरसधारणार्थमधस्तात्पात्रधारणविधिः]

(सू) 'उरुद्रप्सो विश्वरूप इन्दुः' इति गर्भरसाय पात्रमुपोहति ॥ ९ ॥ ५ ॥ २८ ॥ २५९४ ॥

(भा) उरुद्रप्स इति पात्रनिधानं रसार्थम् ॥

(वृ) उरुद्र-सार्थम्—पच्यमानस्य गर्भस्य निष्यन्दमानरसधारणार्थमधस्तात्पात्रं धारयति ॥

(रु) शूलाग्रे शीर्यमाणाद्गर्भात्क्षरतो रसस्य धारणार्थमधस्तात्पात्रमुपयच्छति ॥

[पशुपुरोडाशाद्यनुष्ठानक्रमस्य सोपपत्तिकं विशदीकरणम्]

(सू) पशुपुरोडाशं निरुप्य गर्भपुरोडाशं निर्वपति भक्ती द्यावापृथिव्यमेककपालम् ॥ ९ ॥ ५ ॥ २९ ॥ २५९५ ॥

पशुपुरोडाशेन प्रचर्य गर्भपुरोडाशेन प्रचरति भक्ती द्यावापृथिव्येन ॥ ९ ॥ ५ ॥ ३० ॥ २५९६ ॥

(भा) पूर्वं ज्ञातायां[1] पशुपुरोडाशं निरुप्य तद्देवत्यं गर्भपुरोडाशं निर्वपति भक्ती द्यावापृथिव्यमेककपालं निर्वपति। नान्यो गर्भपुरोडाश

[1] ताया—ङ. ख. च.

इत्युपदेशः; हिरण्यकेशिमतिश्च। पशुपुरोडाशेन प्रचर्येति पुनर्विधानात् गर्भपुरोडाशो विष्णवे शिपिविष्टाय भक्ती द्यावापृथिव्यस्त्वधिक इति। केचित् दर्वीहोमत्वे[1] विष्णवे शिपिविष्टाय जुहोतीति गर्भपुरोडाशस्यानुत्पत्तिस्तद्दैवतस्य गर्भिणीदैवतेषु॥

[उक्तार्थे प्रमाणोपन्यासः]

(वृ) **पूर्वं-निर्वपति**—तद्दैवत्यं पशुदैवत्यम्। निरुप्य पशुपुरोडाशं भक्ती द्यावापृथिव्यमेककपालं गर्भपुरोडाशं निर्वपति 'अथो अनयोर्वा एष गर्भ' इति गर्भस्य द्यावापृथिवीसम्बन्धप्रतिपादनात्।

**नान्यो-तिश्च**—सम्बन्धस्य द्यावापृथिवीयपुरोडाशसम्पत्तेस्तद्दैवत्यो गर्भपुरोडाशो नान्य इति न सम्पाद्यो द्यावापृथिव्यपिण्डस्यान्यो गर्भपुरोडाश इत्युपदेशो हिरण्यकेशिमतिश्च।

['पशुपुरोडाशेन प्रचर्य' इत्यादिसूत्रस्य सोपपत्तिकं तात्पर्यविशदीकरणम्]

**पशुपुरो-धिक इति**—अस्यार्थः;—पशुपुरोडाशं निरुप्य गर्भपुरोडाशं निर्वपतीत्यनेनैव सिद्धे यागे पशुपुरोडाशेन प्रचर्य पशुपुरोडाशेन प्रचरति भक्ती द्यावापृथिव्येनेति वचनात् द्यावापृथिव्यादन्यो गर्भपुरोडाशः। स च विष्णुशिपिविष्टदेवत्यः, गर्भावयवे तुल्यदेवतात्वदर्शनात्।

गर्भस्य दक्षिणपादं प्रच्छिद्य विष्णुं शिपिविष्टं यजतीति अतो गर्भिणीदेवत्यः पशुपुरोडाशः। विष्णवे शिपिविष्टाय गर्भपुरोडाशः। द्यावापृथिव्योऽधिक इत्युपदेशो हिरण्यकेशिमतिश्च।

---

[1] मत्वात वि—च.

['जुहोतीति गर्भपुरोडाशस्यानुत्पत्तिः' इति भाष्याशयप्रतिपादनम्]

केचित्—दर्वीहोम–जुहोति दैवतेषु—जुहोतिचोदनाद्दर्वीहोमदेवतात्वाद्विष्णुशिपिविष्टदेवताया गर्भपुरोडाशस्य देवतात्वानुपपत्तेर्गर्भपुरोडाशस्य पशुपुरोडाशधर्मकतया यागरूपत्वाद्यागान्वितदेवता युक्ता ।

अतो विष्णोश्शिपिविष्टस्य गर्भपुरोडाशस्य देवतात्वानुपपत्तिरिति उपदेशपक्षो युक्त इति केचित् । ननु विष्णवे शिपिविष्टाय जुहोतीति दर्वीहोमगर्भपुरोडाशस्यापि दर्वीहोमत्वं विष्णोर्देवतात्वासम्भवात्तन्न गर्भेण पशोर्दैवतेषु सौविष्टकृतेषु चावदीयमानेषु ॥

(रु) पशुपुरोडाशनिर्वपनकाल एव चेत् ज्ञाता गर्भिणीति तदा तन्निरुप्यानन्तरं गर्भपुरोडाशमनुनिर्वपति । पुरस्तात्तु ज्ञाने यदैव जानीयात्तदैव निर्वपेत् । स च भक्तीद्यावापृथिवीभ्यां निरुप्यते न गर्भदेवतायै । न चास्यैककपालधर्माः, शेषस्योत्तरत्र प्रतिपत्तिविधानात् , इतरथा सर्वहुतत्वेन शेषासम्भवात् । पश्वजादिभिर्गर्भपुरोडाशस्य पशुपुरोडाशेन सह प्रचारवचनात्तत्प्रशंसार्थं पुनः क्रमवचनम् । पशुपुरोडाशेन प्रचर्य ततो भक्ती द्यावापृथिव्येन गर्भपुरोडाशेन प्रचरति । न तु तेन समवदायेति भावः ॥

[संस्कारस्य विभिन्नदेवताकत्वे वैलक्षण्यम्]

(सू.) पशोर्दैवतान्यवद्यन् गर्भस्य पुरस्तान्नाभ्या अन्यदवदाय दैवतेष्ववदधाति । उपरिष्टादन्यत्सौविष्टकृतेषु ॥ ९ ॥ ५ ॥ ३१ ॥ २५९७ ॥

(भा) पुरस्तान्नाभ्या अन्यदवद्येदुपरिष्टादन्यदिति गर्भस्यापि वषट्कारप्रदानत्वात् अन्यदैवत्योऽपि संस्कारो गर्भिणीदेवतायां भक्ती द्यावापृथिव्योर्वचनात् स्यात् । पुनः वचनात् गर्भपुरोडाशेन प्रचरतीति पशुपुरोडाशन्यायेनैव प्रचारः । उच्चैर्द्यावापृथिवीभ्यां पुरोडाशस्यानुब्रूहीति[1] । न त्वेककपालधर्मा गर्भपुरोडाशस्य शीते भस्मनि प्रतिपत्तिविधानात् । इतरथा हि सर्वेषु तत्स्यात् ।

[तत्र हेत्वाद्युपन्यासः]

भक्ती द्यावापृथिव्येनेति पुनर्वचनं गर्भद्वित्वे बहुत्वे च एक एव यथा स्यादित्येवमर्थम् । गर्भिणीपशोर्दैवतान्यवदाय पुरस्तान्नाभ्या उदरादुपरिष्टान्नाभ्या वस्तिशिरसः सौविष्टकृतान्यवदाय 'पुरस्ताद्वै नाभ्यै प्राण उपरिष्टादपान' इति लिङ्गात् ॥

[प्रथमपक्षेऽनुपपत्त्युपपादनम्]

(वृ) पुरस्ता-त्त्वात्—पुरोडाशयागेऽपि गर्भसम्बन्धिनो विष्णोर्दैवतात्वसम्भवः । यद्येवं तर्हि पशोर्दैवतावदानैस्सह गर्भावयवानामासादनसाधनत्वे गर्भस्यापि पशुरेव देवता । अतः प्रथमपक्षो नोपपद्यते ।

[पशुपुरोडाशयोरेकदेवताकत्वे निदानम्]

अन्यदेव-त्स्यात्—अस्यार्थः—यद्यपि यद्दैवत्यः पशुस्तद्दैवत्यः पुरोडाश इति पशुदेवतासंस्कारार्थं अवीवृधेतां पुरोडाशेनेति मन्त्रलिङ्गात् ।

अथापि भक्तिद्यावापृथिव्यस्य देवतान्तरत्वेऽपि वचनाद्गर्भदेवतासंस्कारत्वं सौत्रामणिपशुपुरोडाशानामिव । अस्मिन्पक्षे गर्भपुरोडाशेन प्रचरतीति किमर्थमुच्यते ।

---

[1] ति प्रैषः.

**पुनर्वच-ब्रूहीति**—न त्वेककपालधर्मो गर्भपुरोडाशस्येति पुनर्वचनप्रयोजनमिदम्। अनुवाक्याप्रैषे पशुपुरोडाशशब्द उच्चैः प्रयोग इडान्तसंस्कारः।

[एककपालधर्मपक्षे वैजात्यम्]

**न त्वेक-वचनात्**—गर्भं गर्भपुरोडाशं चोत्तरेण गार्हपत्यस्य शीते भस्मन्युपवपतीति। इतरथा हि सर्वहुतस्स्यात्; एककपालधर्मपक्षे सर्वहुतो भवेत् भस्मनि प्रतिपत्त्यसंभवः।

**भक्ति द्या-वमर्थः**—भक्तिद्यावापृथिव्येत्येकवचनात्। 'द्यावा नः पृथिवी' 'प्र पूर्वजे' इति द्यावापृथिव्यस्य याज्यानुवाक्ये।

[पशुपुरोडाशयाज्यानुवाक्ययोः केचिन्मते वैलक्षण्यम्]

केचित्तु;— द्यावापृथिव्यां धेनुमित्यत्र पशुपुरोडाशयाज्यानुवाक्ये कुर्वन्ति।

'स इत्स्वपा भुवनेष्वास' 'भूरिं द्वे अचरन्ती' इत्येते।

**गर्भिणी प-उदरात्**—पशोर्दैवतान्यवदाय गर्भिण्युदरे नाभ्याः पुरस्तान्मन्त्रेणावदाय तेषु क्षिपति।

**उपरिष्टा-दायेति**—सौविष्टकृतान्यङ्गान्यवदाय नाभ्या उपरिष्टात् अवदाय तेषु क्षिपति।

[श्रौतयोः पुरस्तादुपरिष्टात्पदयोः सोपपत्तिकं द्वेधाऽर्थविवरणम्]

**पुरस्ताद्वै-लिङ्गात्**—अस्यार्थः;—'पुरस्तान्नाभ्या अन्यदवद्येदुपरिष्टादन्यत्' इति द्वयोर्दैवतेषु प्राप्तिमाशङ्क्य सूत्रकारोऽन्यथा व्याचष्टे। उपरिष्टात्सौविष्टकृतस्येति। तत्र हेतुमाह भाष्यकारः—'पुरस्ताद्वै

नाभ्यै प्राण' इति। नाभ्याः पूर्वभागस्य प्राणसंस्तवादेकादशावदाना-न्यवद्यति। दश वै पशोः प्राणा इति दैवता........मपि प्राणसंस्त-वात्तस्यैव पूर्वभागवत्तस्य विशेष इत्यभिप्रायः।

अथवा;—पुरस्तान्नाभ्या जठरादुपरिष्टाद्वस्तिशिरस इति देश-व्यवस्थार्थवादलिङ्गम्। प्राङ्मुखावस्थितस्य पशोरुदरं पूर्वभागः स भाग ऊर्ध्वसंचरात्प्राणः अपानपायुस........चराद्वस्तिशिरःप्रदेशोऽपानः। उपरिष्टात्पश्चादित्यर्थः॥

(रु) पशोर्दैवतेष्ववत्तेषु गर्भस्य नाभ्या ऊर्ध्वमेकमवदाय दैवतेषु क्षिपति। तथा अधस्तान्नाभ्या अवदाय 'पुरस्ताद्वै नाभ्यै प्राण उपरिष्टादपानः' इति लिङ्गात्॥

[त्रेधा गर्भरसप्रक्षेपः, एकपदीत्याहुतिदक्षिणा-
दानादिकं च]

(सू) **त्रैधं गर्भरसं व्यानयति दैवतसौविष्टकृतेषु**
॥ ९ ॥ ५ ॥ ३२ ॥ २५९८ ॥

(भा) यूष्णोपसिच्येति कृत्वा त्रेधा गर्भरसः क्षिप्यते॥

(रु) यूष्णस्समुच्चयार्थश्चकारो भिन्नक्रमो योजनीयः। समासोपात्त-त्वात्। दैवतादीनां समुच्चेयान्तराभावाच्च। यूष्णोपसिच्य त्रिषु गर्भ-रसं व्यानयतीत्यर्थः॥

(सू) **एकपदी द्विपदीति पुरस्तात्स्विष्टकृतो जुहोति**
॥ ९ ॥ ५ ॥ ३३ ॥ २५९९ ॥

(भा) नारिष्ठान् हुत्वा एकपदीत्याहुतिः॥

(रु) पुरस्ताद्वनस्पतेरिति वचनात्तस्य पुरस्तादेवेयमाहुतिः॥

(सू.) **अष्टाप्रूड्ढिरण्यं दक्षिणा ॥ ९ ॥ ५ ॥ ३४ ॥ ॥ २६०० ॥**

(भा) वनस्पतेरपि स्विष्ट[1]कृद्विकारस्य पुरस्तात्ततोष्टाप्रुषो [2]दानादि ॥

(वृ) **वनस्प–पुरस्तात्**—पुरस्तात्स्विष्टकृतो जुहोतीति स्विष्टकृद्विकारभूतवनस्पतेरपि पुरस्तादाहुतिः ॥

(रु) अत्राध्वर्यवे अष्टाप्रूड्ढिरण्यं सकोशं ददाति ॥

**ततोष्टा–नादि**—वरादि च पशुदक्षिणा च ॥

[यागस्य देवतोद्देश्यकद्रव्यत्यागात्मकत्वं, जुहोतेस्तद्विषयकत्वं च]

(सू.) **गर्भस्य दक्षिणं पूर्वपादं प्रच्छिद्य विष्णुं शिपिविष्टं यजति 'प्र तत्ते अद्य शिपिविष्ट नाम' इत्युत्तरया वा ॥ ९ ॥ ५ ॥ ३५ ॥ २६०१ ॥**

(भा) गर्भस्य दक्षिणं पूर्वपादं प्रच्छिद्य विष्णोश्शिपिविष्टस्य यागः। प्र तत्ते अद्येति दर्वीहोमन्यायेन। विष्णवे शिपिविष्टाय जुहोतीति श्रुतेः। भारद्वाजमताच्च। उत्तरया वा 'किमित्ते' इति। यजतिचोदितत्वात् याज्या[3] इति केचिदाहुः, तदनुपपन्नम्। 'अभिचरन् दशहोतारं जुहुयात्' इति। जुहोतिचोदितं सामान्येन यजतिना निर्दिशति। दशहोत्राऽभिचरन् यजेतेति। एवमिहापि ॥

(वृ) **गर्भस्य–चिदाहुः**—अस्यार्थः—विष्णवे शिपिविष्टाय जुहोतीति श्रुतौ यद्यपि जुहोतिनिर्देशाद्दर्वीहोमत्वम्, तथापि सूत्रकारेण

[1] कृद्विकारस्य–च. [2] ददाति–च. [3] ज्ये पते इति–च.

विष्णुं शिपिविष्टं यजतीति यागनिर्देशात् 'प्र तत्ते अद्य' 'किमित्ते' इति याज्यानुवाक्ये। एवं सति याज्ये इति याज्यानुवाक्ये इत्यर्थः।

तदनु-निर्दिशति—सूत्रकारः।

दशहो-यजेत—देवतोद्देशेन द्रव्यत्यागात्मकत्वाद्यागस्य तद्विषयत्वाज्जुहोतेः। एवमिहापि युक्तम्॥

(रु) यजतिरत्र जुहोत्यर्थः। विष्णवे शिपिविष्टाय जुहोतीति लिङ्गात्। अभिचरन्दशहोतारं जुहुयादिति श्रुतस्य जुहोतेर्दशहोत्राभिचरन्यजेतेति यजतिना निर्देशदर्शनाच्च। तथा किमित्ते विष्णविति जुहोतीत्येव कल्पान्तरकाराः। अतो दर्वीहोमधर्मेण जुहोति॥

[गर्भतत्पुरोडाशयोः कुत्रचिदुपवपनप्रतिष्ठापन-
प्रच्छादनादिविवरणम्]

(सू) 'मरुतो यस्य हि क्षये' इति गर्भं गर्भपुरोडाशं चोत्तरेण गार्हपत्यस्य शामित्रस्य वा शीते भस्मन्युपोह्य 'मही द्यौः पृथिवी च नः' इति शीतेन भस्मनाभिसमूह्य 'एतं युवानम्' इति पञ्चभिरुपतिष्ठते॥ ९॥ ५॥ ३६॥ २६०२॥

(भा) 'मरुतो यस्य हि क्षये' इति पुरोडाशस्य चोत्तरेण गार्हपत्यस्य शीते भस्मन्युपवपनं प्रतिष्ठापनं प्रच्छादनं च। 'मही द्यौः पृथिवी च न' इति 'एतं युवानम्' इति पञ्चभिश्चोपस्थानम्। सर्वमुस्त्रस्य यौगपद्येन पञ्चभिरिति वचनात्॥

(वृ) मरुतो-वचनात्—अस्यार्थः;—एतं युवानमित्यादिमन्त्रेषु केषाञ्चित् गर्भमात्राभिधायकत्वात् तेषां व्यवस्थितप्रयोगे प्राप्ते पञ्चभिस्सकृदुपस्थानस्य चोदितत्वात् उभयोस्सह प्रयोगो भस्मनिधानादिषु॥

(रु) अभिसमूहनं प्रच्छादनं। एतं युवानमित्युपस्थाय ततः स्विष्टकृदादिकर्म प्रतिपद्यते ॥

[ गर्भिणीप्रायश्चित्तस्य सार्वत्रिकत्वं, इति कश्चिदभिप्रैति, अनाम्नातायां गर्भिण्यां तस्यानुष्ठेयत्वमित्यन्यो मुनिः, पक्षद्वयेऽप्युपपत्त्यादिविशदीकरणादिकम् ]

(सू) तदिदं गर्भिणीप्रायश्चित्तं सर्वत्र क्रियेतेत्याश्मरथ्यः। यत्रानाम्नातं तत्र क्रियेतेत्यालेखनः ॥
॥ ९ ॥ ५ ॥ ३७ ॥ २६०३ ॥

(भा) तदिदं गर्भिणीप्रायश्चित्तं निमित्तैः कर्माङ्गत्वात् सर्वत्र, यत्राप्या[1]-म्नाता 'आदित्यां मलूहां गर्भिणीमालभते' इति। तत्रापीत्याश्मरथ्यमतिः। 'वि वा एतस्य यज्ञ ऋध्यते यस्य हविरतिरिच्यते' इति हविरतिरेकस्यानिष्टत्वात्प्रायश्चित्तेन समृद्धिराम्नाता; तस्मादनाम्नातायां गर्भिण्यामित्यालेखनमतिः।

[विशसनात्पूर्वमुत्तरं चावश्यानुष्ठेयांशानां सोपपत्तिकं निष्कर्षः]

यदा गर्भिणीति विजानाति पुरा विशसनात् ततः करोत्याहुत्याद्यभिमन्त्रणान्तम्। गर्भिण्यां [2] विशस्तायां गर्भस्यावर्तनं न शक्यते कर्तुमिति पशुपुरोडाशस्य [3] निर्वपणकाले गर्भपुरोडाशस्य निर्वपणं, हविष्कृता वाचं विसृज्य पशोर्विशसनाद्यवदानोद्धरणान्तम्।

यदा तु विशस्तायामेव जानीते गर्भिणीति तदाप्यवदानेषु गृहीतेषु आहुतिहोमादिगर्भनिर्हरणान्तं कृत्वा पशोर्निष्टपनादि।

[1] प्यनाम्नाता—ङ. [2] ण्यामपि शस्तायाम्—घ. [3] निर्वपणे एककपालगर्भपुरोडाशस्यापि निर्वपणम्—च.

हृदयश्रपणान्ते कृतेऽन्यस्मिन् शूले बहूनपि गर्भान् निहत्य श्रपयति। [1]पात्रोपोहनान्तं कृत्वा [2]यद्यकृतो गर्भपुरोडाशः ततो निर्वपणादिहविरावपनान्तं तस्मिन्नेवोलूखले कृत्वाऽवहननादि सह प्रतिपद्यते। पशुपुरोडाशेन प्रचर्य गर्भपुरोडाशेन प्रचारः। पुरस्तान्नाभ्यास्सौविष्टकृतेषु गृहीतेषूपरिष्टान्नाभ्या अवदानम्। स्विष्टकृदन्ते यूष्णोपसेके कृते गर्भ[3]रसस्य व्यानयनम्। [4]हुत्वा नारिष्ठानेकपद्यादिहोमः। पुरस्ताद्वनस्पतेर्हिरण्यदानादि। पञ्चभिरुपस्थानादि; पञ्चभिरुपस्थानान्तं कृत्वा वानस्पत्यादिपाशुकं प्रतिपद्यते॥

[चोदिताचोदितविभागाभावे कारणम]

(वृ) तदिदं–ध्यमतिः—गर्भिण्यालम्भननिमित्तककर्माङ्गत्वात् चोदिताचोदिताविभागो नास्तीति।

विना–खनमतिः—हविरतिरेकेण प्राप्तदोषपरिहारार्थत्वाच्चोदितायां दोषाभावात् प्रायश्चित्तानुपपत्तेरनाम्नाते प्रायश्चित्तमित्यालेखनमतिः।

यदा जा–णान्तम्—धाता रातिरित्याहुत्यादि 'यस्यास्ते हरितो गर्भः' इत्यभिमन्त्रणान्तम्॥

यदा विशस्ता–पनादि—पशोरुपवेषादानादिनिष्टपनान्तादि।

हृदय–डाशः—विशसनात्पूर्वं गर्भज्ञानपक्षे ततो निर्वापादि हविरावपनान्तं तस्मिन्नेवोलूखले कृत्वाऽवहननादि।

[गर्भपुरोडाशनिर्वापोत्तरं हविष्मति पूर्वस्मिन्नेवोलूखलेऽनुष्ठेयांशाः]

सह प्रतिपद्यते—पशुपुरोडाशस्य हविरावपनान्ते हविष्कृता वाग्विसर्गे कृते पशोर्विशसनादिगर्भश्रपणान्ते गर्भपुरोडाशनिर्वपणे कृते

---

[1] रसापात्रो–घ. [2] यद्यहुतो गर्भ–घ. [3] रसस्यानयनम्–ङ. [4] त्रेधा कृत्वा हुत्वा–घ.

पूर्वस्मिन्नेवोलूखले हविष्मति गर्भपुरोडाशहविरावपनान्तं कृत्वाऽव सहावघातादि प्रतिपद्यते ।

**पशुपु-चारः**—गर्भरसव्यानयनं हुत्वा नारिष्ठान्;—त्रेधा कृत्वा हुत्वा नारिष्ठान् ।

**एकद-स्वते**—हूयते होम इत्येकैवाहुतिः । न सूत्रान्तरवदाहुतिबहुत्वमिति ।

**हिरण्यदानादि** – अष्टाप्रूड्डिरण्यदानादि ॥

(रु) गर्भिणिप्रायश्चित्तमिति ह्रस्वश्छान्दसः । यथा गर्भिणयो भवन्तीति । यत्रादित्यां मलूहां गर्भिणीमालभत इत्यादौ आम्नाता गर्भिणी तत्रापि निमित्तगताविशेषात् कर्तव्यमेवैतन्नैमित्तिकमित्याश्मरथ्यमतम् । आलेखनस्तु मन्यते 'वि वा एतस्य यज्ञ ऋध्यते यस्य हविरतिरिच्यते' 'रक्षांसि वा एतत्पशुं सचन्ते यदेकदेवत्य आलब्धो भूयान्भवति' इति । यथा चोदितादतिरेकदोषनिमित्तत्वश्रुतेर्यत्रानाम्नाता गर्भिणी तत्रैव कर्तव्यमिति ॥

[यूपविरोहणप्रायश्चित्तम्]

**(सू.) यद्यनपवृक्तार्थो यूपो विरोहेत् । तस्मिन् त्वाष्ट्रं साण्डं लोमशं पिङ्गलम् । बहुरूपं सवनीयसोपालम्भं कुर्यात् ॥ ९ ॥ ५ ॥ ३८ ॥ २६०४ ॥**

**त्वाष्ट्रं चरुमत्र वाजसनेयिनः समामनन्ति ॥ ॥ ९ ॥ ५ ॥ ३९ ॥ २६०५ ॥**

(भा) अर्थो नियोजनं पशोः यूपस्य । [1] तस्मिन्ननपवृक्ते गवामयनादिषु, यदि विरोहति यूपः तस्मिन् विरूढे [2] यः पर्यायेणागच्छति पशुरित्युपदेशः ।

---

[1] तस्मिन्नेव प्रवृत्ते—ङ. [2] यदास्य—ङ. च.

[ तन्निमित्तकत्वाष्ट्रदेवताकपश्वालम्भनविधानम् ]

न्यायस्तु तस्मिन् विरोहणे निमित्ते उपालम्भनस्य चोदितत्वात् अन्यस्मिन्नपि यः पशुः तस्य त्वाष्ट्र [1] उपालम्भः। सवनीयग्रहणं च प्रदर्शनार्थम्; तस्मिन्नेव त्वाष्ट्रोऽपि, [2] उपालम्भेन चोदितत्वात्।

[ प्रक्रान्तपशुलक्षणादिकम् ]

सहाण्डाभ्यां साण्डः। अन्येभ्यः पशुभ्यः अतिशयेनेत्यर्थः। लोमशः पिङ्गलश्च। बहुरूपो नानारूपः। तस्य सवनीयेन समानसंस्था, चरुः पुरोडाशस्यानुनिर्वाप्य इत्युपदेशः। पशुना सह समान[3]तन्त्रस्य हविषि हुते चरोरपि स्विष्टकृदिडं च समानं [4] उत्कर्षपक्षश्च पिष्टलेपफलीकरणादीनाम्॥

(वृ) नियोज-स्येति--पशोर्नियोजनं यूपस्यार्थः। अप्रयोजनमस्मिन् अपवृत्ते गवामयनादिषु दीर्घसत्रेषु।

यदि विरोहति यूपः--सर्वसुत्यान्तेऽपवृत्तार्थत्वान्मध्ये विरोहणनिमित्तम्।

[ उपदेशमुखमतपोषकयुक्त्यादिविवरणम् ]

तस्मिन् वि-पदेशः—पशुः सवनीयः एकादशिन्याऽपहारे क्रियमाणे तस्मिन् विरूढे यः पशुः सवनीयो विरोहणोत्तरकालमागच्छति तेन सहोपालम्भस्त्वाष्ट्रः।

तस्मिन् त्वाष्ट्रमिति--तस्मिन् यस्सवनीयस्तस्योपालम्भ इत्यर्थः।

[1] उपालम्भेन—च. [2] उपालम्भने [3] तन्त्रस्तस्य—च. [4] नं पशुना—ङ. च.

**न्यायस्तु-पालम्भः**—निमित्तानन्तरं नैमित्तिकस्य कर्तव्यत्वा-द्विरोहणानन्तरं यूपान्तरेऽपि सवनीये प्राप्ते तस्योपालम्भः[1]।

**तस्मिन् त्वाष्ट्र इति**—तस्मिन् निमित्ते सतीत्यर्थः।

**सवनीय-नाथम्**—'यस्य यूपो विरोहति' इत्येतावन्मात्र-श्रवणात् पश्वन्तरेऽपि सहोपालम्भः।

**तस्मिन्नेव त्वाष्ट्रोऽपि**—यस्य पशोर्यूपः तस्मिन्नेव त्वाष्ट्रोऽपि उपालम्भेन चोदितत्वादेतस्मिन्नेव यूपे प्राप्ते।

**सहाण्डाभ्यां-त्यर्थः**—पश्वन्तरेभ्योऽतिशयादयुक्तः।

**तस्य-संस्था**—पश्वन्तरेण वा। यदि पश्वन्तरेण उपालभ्यः।

**चरुः पु-देशः**—औषधहविष्ट्वेन धर्मतौल्यतया पशुना सह समानतन्त्रम्;-सवनीय.........पालभ्यमित्युक्तया त्वाष्ट्र चरुमत्रेति निर्देशात्प्रधानत्वाच्च पशोस्तन्त्रत्वात्तस्य हविषि हुते चरोरपि होमः।

**स्विष्टकृदि-पक्षश्च**—लभ्यते सवनीयसमानतन्त्रत्वात् सवनीय-पुरोडाशवदुत्कर्षेदित्यपि पक्षे उपालभ्यते।

**पिष्टलेप-दीनाम्**—समानतन्त्रत्वात्। विरोहणनिमित्तमागामि-सवनीयेन समानतन्त्रश्चरुरारब्धव्यः। तन्त्रमध्यनिपाताभावान्न प्रासङ्गि-कता, अत उत्कर्षपक्षः॥

इति श्री धूर्तस्वामिभाष्यवृत्तौ नवमे प्रश्ने एकोनविंशी खण्डिका

(रु) अहर्गणेषु यद्यसमाप्तकार्यो यूपो विरोहेत् तदा तस्मिन्नेव यूपे तत्कालपर्यागतस्य पशोः प्रसङ्गन्यायेन त्वाष्ट्रं पशुमुपालभ्य कुर्यात्॥ गतः॥

[1] उपलभ्यत इति—घ.

[एकेषां मतोऽन्यविशेषांशनिरूपणम्]

(सू) त्वाष्ट्रीरेवात्र स्रुवाहुतीर्जुहोतीत्येके ॥ ९ ॥ ५ ॥
॥ ४० ॥ २६०६ ॥

इत्यापस्तम्बश्रौतसूत्रे नवमे प्रश्ने एकोनविंशी खण्डिका

---

(भा) स्रुवाहुतिरनन्तरं दोषात् 'त्वष्टा दधत्तन्नस्तुरीपम्। त्वष्टा [1]वीरं पिशङ्गरूपः'[2]।

(वृ) स्रुवाहुतिरनन्तरं दोषात् विरोहणानन्तरमेव तन्त्रप्रातिकर्षाभावात् 'त्वष्टा दधत्तन्नस्तुरीपं त्वष्टा वीरमिति त्वाष्ट्रीस्तिस्रः' ॥

इति धूर्तस्वामिभाष्ये वृत्तौ च नवमे प्रश्ने एकोनविंशी खण्डिका

---

(रु) त्वष्टा दधदिन्द्राय, तन्नस्तुरीपं, त्वष्टा वीरमिति त्वाष्ट्र्यः ॥

इति श्रीभट्टरुद्रदत्तविरचितायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
नवमे प्रश्ने एकोनविंशी खण्डिका

---

[यूपस्य सुषिरादिमत्त्वेऽनुष्ठेयांशक्रमः]

(सू) यदि यूपस्सुषिरस्स्यादतीसारेण यजमानो म्रियेत। वैष्णव्या व्याहृतिभिः प्राजापत्यया च हुत्वा तं संवृश्चयाग्नौ प्रवृज्यान्यं साधयेत् ॥ ९ ॥
॥ ५ ॥ ४१ ॥ २६०७ ॥

---

[1] प इति—ङ. च. [2] रूपं पि—च.

**(भा)** सुषिरो यूपो यस्य मध्य आकाशः। अतीसारोऽतिस्रसनमुदरस्य, तत्र प्रायश्चित्तम्। 'इदं विष्णुर्विचक्रमे' इति वैष्णवी भूर्भुवस्सुवरिति व्याहृतयः 'प्रजापते न त्वदेतानि' इति [1]प्राजापत्या च, आभिर्हुत्वा यूपं भित्वाऽऽहवनीये क्षिपति। [2]अथान्यस्य साधनमत्यन्यानगामित्यभिमन्त्रणादि यूपाहुति[3]श्च न पुनः प्रत्यक्षोपकारकत्वात् ॥

**(वृ)** **सुषिरो–उच्यते**–प्रथमभावित्वात् भूर्भुवस्सुवरिति व्याहृतयः।

**अथान्यस्य–रकत्वात्**—दृष्टोपकारकत्वात् अत एव तत्पश्चर्थः यूपान्तरस्याप्युपकरोतीति। तक्षणादिवद्दृष्टोपकाराभावात् ॥

**(रु)** यूपश्चेत्सुषिरवान्स्यात्—अतिस्रवणेनोदरस्य यजमानो म्रियेत। तत्रेदं विष्णुरिति वैष्णव्या व्याहृतिभिः प्रजापते न त्वदिति प्राजापत्यया च हुत्वा तं यूपं छित्वाऽऽहवनीये प्रदीप्य यूपाभिमन्त्रणादिविधिनान्यं निर्दोषमाहरेत्। न यूपाहुतिरावर्तते अप्रत्यक्षत्वात्, यूपाहुतिं हुत्वाऽग्निष्ठप्रथमानिति लिङ्गाच्च ॥

**( सू )** **यदि क्रिम्णः क्रिमय एनं भक्षयेयुः। पूर्ववत्प्रायश्चित्तम् ॥ ९ ॥ ५ ॥ ४२ ॥ २६०८ ॥**

**(भा)** क्रिम्णः—[4]क्रिमिभिर्वर्णादिभिर्भिन्नः। तस्याप्येतदेव ॥

**(वृ)** **क्रिम्ण–न्नः**— क्रिमिभिर्घुणादिभिर्यो भक्षितः ॥

**(रु)** क्रिम्णः क्रिमिणः यद्यन्तर्वार्क्षाः क्रिमयस्स्युरित्यर्थः। एवं यजमानम् ॥

---

[1] यर्चाभिर्हुत्वा–**क**. त्या एताभिर्हुत्वा–**च**. [2] अन्यस्य–**ख**. [3] तिस्तु पुनरप्रत्यक्षोपकारत्वात्. [4] क्रिमिरेणादिभिः–**क**.

[ वैष्णवीरहितव्याहृत्यादिप्रायश्चित्तविधिः ]

(सू.) यद्याव्रश्चनमास्कन्देत्पत्न्येनमतिचरिष्यतीति विद्यात्। व्याहृत्यादिसमानमुत्तरम् ॥ ९ ॥ ५ ॥ ॥ ४३ ॥ २६०९ ॥

(भा) आव्रश्चनः—यूपस्य मूलम्। [1]तस्योपरि यदा पतति तदा पत्नी व्यभिचारं करिष्यतीति जानीयात्। उपदेशस्तु आव्रश्चनं भेदनं यूपस्य तद्यदा शब्दं करोति तदा एतत् प्रायश्चित्तम्। धातूनामनेकार्थत्वात्; वैष्णवीवर्जं व्याहृत्यादिप्रायश्चित्तम्।

(वृ) आव्रश्चनं यूपस्य मूलम्;—यस्यां भिन्नम्। धातूनामनेकार्थत्वात्। स्कन्दतिश्शब्दकरणे वर्तते।

(रु) यूपश्छिन्नः पतन्प्रतिवल्शाव्रश्चने स्वमूल एव यदि पतेत् तदा पत्नी दुर्वृत्ता स्यात्। तत्र वैष्णवीवर्जं व्याहृत्यादि सर्वमुत्तरं कर्म समानं पूर्वेण ॥

[दक्षिणाप्रत्यङ्मुखपतनविशरणशाखासक्त्याद्युन्नेयांशः]

(सू.) यदि दक्षिणा पतेत् प्रत्यङ्वा सं वा शीर्येत शाखासु वा सज्येत यजमानो म्रियेत वैष्णव्याः स्थाने यामी ॥ ९ ॥ ५ ॥ ४४ ॥ २६१० ॥

(भा) दक्षिणा अग्नेर्यदि पतेत् भेदनाद्वा दक्षिणस्यां दिशि प्रतीच्यां संशीर्येत भज्येतेत्यर्थः। अन्यवृक्षस्य शाखासु यदि [2]लग्न स्यात्। ततो यजमानस्य मरणं वैष्णव्यास्थाने यामी यमो दाधार पृथिवीमिति तुल्यं व्याहृत्यादिप्रायश्चित्तम्।

---

[1] यस्माच्छिन्नस्तस्योपरि—घ. च. [2] लग्नस्स्यात्—घ.

(वृ) **दक्षिणा-दिशि—बुद्धिपूर्वम् ।**

(रु) दक्षिणामुखः पतेत्प्रत्यङ् वा पतेत्संशीर्येत भज्येत वा पतितः, पतित्वा शाखासु वा सज्येत वृक्षान्तरस्य तत्र वैष्णव्यास्स्थाने यमो दाधारेति याम्री स्यात् । सर्वमन्यद्व्याहृत्यादि समानं पूर्वेण ॥

[पाथःपतनोन्नेयांशः]

(सू) **यद्यप्सु पतेदप्सु म्रियेत । वैष्णव्यास्थाने वारुणी समानमुत्तरम् ॥ ९ ॥ ५ ॥ ४५ ॥२६११ ॥**

(भा) अप्सु आच्छिद्यमानो बुद्धिपूर्वं यदि पतेत्; ततोप्सु म्रियेत यजमानः 'अव ते हेडः' 'उदुत्तमं' इति वारुणी । समानं व्याहृत्यादिप्रायश्चित्तम् ।

(रु) व्याख्यातः पूर्वेण । उदुत्तममिति वारुणी ॥

[बलात्कारापहरणोन्नेयांशः]

(सू) **यदि प्रासहा हरेयुः सर्वस्वं जीयेत वैष्णव्याः स्थाने ऐन्द्री । समानमुत्तरम् ॥ ९ ॥ ५ ॥ ४६ ॥ ॥ २६१२ ॥**

(भा) यदि प्रासहा—प्रसह्य जना बलात्कारेण यूपं नयेयुः सर्वस्वं जीयेत यजमानः । सर्वं धनम् । इन्द्रं वो विश्वतस्परीत्यैन्द्री वैष्णव्यास्स्थाने । समानं व्याहृत्यादि सर्वत्रान्ययूपसाधनान्तम् (परम्) यावत्सर्वादीनि शकलानि हृतानि ।

(वृ) **यावत्स-तानि—**चषालकरणान्तं सर्वादीनीति बहुवचनं प्रथमपरापातिनमभिप्रेत्य ।

(रु) यदि केचिद्यूपं प्रासहा प्रसह्य हरेयुः तदा हीनधनस्स्याद्यजमानः। तत्र वैष्णव्यास्स्थान ऐन्द्री स्यादिन्द्रं वो विश्वतस्परीति। शेषं पूर्ववत् ॥

[यूपाग्रमूलयोर्नीरसत्वेऽनुष्ठेयांशः]

(सू.) यदि मूल उपशुष्कस्स्यान्न पितृभ्यो यथापुरं करिष्यतीति विद्यात्। यदि मध्ये क्षुधा मरिष्यति। यद्यग्रे न स्वर्गं लोकं गमिष्यतीति। यद्यग्निष्ठा विच्छिद्येत यजमानो म्रियेत यदि पूर्वा पत्नी। एतद्वा विपरीतम्। यदि दक्षिणा [1]माहिषेयः पुत्रः। यद्युत्तरान्वग्ज्येष्ठः। यदि दक्षिणपूर्वा ब्रह्मा। यदि दक्षिणापरा होता यद्युत्तरापराऽध्वर्युः। यद्युत्तरपूर्वाऽग्नीध्रः॥ ९ ॥ ५ ॥ ४७ ॥ २६१२ ॥

(भा) मूले यदा शुष्को भवति तदा विजानीयात्। यदा पितृभ्यस्तेन श्राद्धं पूर्वं समृद्धं कृतम्। तत्तथालक्षणं पुनर्न करिष्यतीति विजानीयादध्वर्युः। यदि मध्ये शुष्को यूपः क्षुधाऽस्य मृत्युर्भवतीति विजानीयात्। यद्यग्र उपशुष्को यूपो न गमिष्यति स्वर्गं लोकमिति जानीयात्। अग्निष्ठाऽग्निरग्नेस्समीपे तिष्ठत्यपरतो या सा यदि तक्ष्यमाणे यूपे भिद्येत न शक्यते समीकर्तुम्। ततो यजमानस्य मरणम्। पूर्वया विच्छेदे पत्न्या विपर्यासो वा। दक्षिणायां ज्येष्ठायाः पुत्रस्य मरणम्। उत्तरस्यां ज्येष्ठपुत्रादनन्तरस्य, दक्षिणपूर्वायां ब्रह्मणः। दक्षिणापरायां होतुः, उत्तरपूर्वायामाग्नीध्रस्य ॥

---

[1] माहिषेयः—ज्येष्ठाया ज्येष्ठः पुत्रः।

(धू) **मूले यदा–दध्वर्युरिति**—यथा पुरं करिष्यतीति परस्मैपद-निर्देशात्। अस्मादर्थविरहादध्वर्योरेव वेदनं कर्माङ्गं नैमित्तिकमिति केचित्। दोषोऽस्तीति विज्ञानमात्रमित्यन्ये।

**यदि म–जानीयात्**—गमिष्यतीतीतिकरणादेतयोरपि जानीयादित्यनुषज्यते।

**अग्निष्ठा–कर्तुमिति**—कथञ्चिच्छेदसमाधानेन अश्रिसंपादने न दोषः। समीकरणाशक्यार्थभिन्ना नाम दोषाश्रिरिति ततो यजमानस्य मरणं भविष्यति।

**पूर्वायाः–पत्न्याः**—पूर्वाश्रिविच्छेदे पत्न्या मरणम्।

**विपर्यासो–वेति**—पूर्वाया विच्छेदे यजमानमरणम्। अग्निष्ठाश्रिते पत्न्या इति।

**दक्षिण–ब्रह्मणः**—ऋत्विजो वा मरणम्।

(रु) यदि मूलभागे यूपश्शुष्कस्स्यात्तदैवं जनो यजमानं जानीयात्। न यथापूर्वं श्राद्धं करिष्यत्यृद्धिविगमादिति। यदि मध्ये शुष्कस्स्यात् क्षुधा मरिष्यतीति विद्यात्। यद्यग्रे न स्वर्गं लोकं गमिष्यतीति विद्यात्। किंच यदि तक्ष्णोऽकौशल्यादग्निष्ठा विच्छिन्ना स्याद्यजमानो म्रियेत। यदि पूर्वाश्रिः पत्नी म्रियेत। एवमुत्तरेष्वप्यनुषङ्गो द्रष्टव्यः। माहिषेयो ज्येष्ठाया ज्येष्ठः पुत्रः। तस्यानन्तरोऽन्वग्ज्येष्ठः। यस्मादेते शुष्कत्वादिषु दोषास्तस्मात्तेष्विदं प्रायश्चित्तमाह॥

[पूर्वसूत्रोक्तानां प्रायश्चित्तम्]

(सू) **शुष्कादिषु सर्वेषु याम्यादि समानमुत्तरम्।**
**॥९॥५॥४८॥२६१४॥**

(भा) मूल उपशुष्कस्स्यादित्यादीनां प्रायश्चित्तमुच्यते :—यमो दाधार पृथिवीमिति वैष्णव्यास्स्थाने यामी व्याहृत्यद्यान्ययूपकरणान्तं समानम् प्रायश्चित्ते कृते दोषो न भवति ।

(रु) यदुक्तं वैष्णव्यास्स्थाने यामी समानमुत्तरमिति तदेवात्र स्यादित्यर्थः

[ प्रधानाद्याहुतौ यस्मिन् कस्मिंश्चिदग्नौ नीलधूमवातयोरभिमुखगमनप्रसव्यावेष्टनोन्नेयविशेषांशाः ]

(सू.) यदि लोहिन्यो लेखाः प्रसव्यं यूपं परिहरेयुर्न साहस्रं क्रतुमाहरिष्यतीति विद्यात् । श्वेताश्चेत्प्रदक्षिणं क्षिप्रं साहस्रं क्रतुमाहरिष्यतीति । यद्याहुतौ हुतायां कृष्णो धूमो दक्षिणां दिशमभिनिहन्याद्वातो वा प्रसव्यं धूममावेष्टयेद्यजमानो म्रियेत सर्वप्रायश्चित्तं जुहुयाज्जुहुयात् । ॥ ९ ॥ ॥ ५ ॥ ४९ ॥ २६१५ ॥

विंशी खंडिका

---

(भा) यदि लोहिन्यो लेखाः प्रसव्यं यूपं [1]परिहरेयुः साहस्रम्—सहस्रदक्षिणं क्रतुमाहरिष्यतीति विजानीयात् न यक्ष्यतीत्यर्थः । श्वेताश्चेल्लेखाः प्रदक्षिणं यूपं वेष्टयेयुः सहस्रदक्षिणेन क्रतुना क्षिप्रं यक्ष्यतीति विजानीयात् । वि[2]ज्ञानमात्रमेव अनुक्तत्वात्प्रायश्चित्तस्य । यद्याहुतौ प्रधानाहुतौ अङ्गाहुतौ वा यस्मिन् कस्मिन्नग्नौ कृष्णो धूमो

[1] वेष्टयेयुः—च. [2] विज्ञानमेवात्र—च.

नीलधूमः [1]अभिनिहन्यादभिमुखो गच्छेत् दक्षिणां दिशं वा वातो वा प्रसव्यमावेष्टयेत् धूममित्यर्थः ततो यजमानस्य मरणं विजानीयात् यदि न क्रियते प्रायश्चित्तम् तदा सर्वप्रायश्चित्तं होतव्यम् सर्वा व्याहृतीरनुद्रुत्य भूर्भुवस्सुवस्स्वाहेत्याहवनीय [2]एव। बह्वृचानां प्रतिवेदं प्रत्यभिप्रायश्चित्तम् विधाय यदि वा यज्ञ ऋक्त आर्तिस्स्याद्भूरिति गार्हपत्य एव जुहुयाऽथेति पश्चादाह—यद्यविज्ञाता सर्वव्यापद्भा भूर्भुवस्सुवरिति[3] सर्वा अनुद्रुत्याहवनीय एव [4]जुहुयाऽथेति। अतस्समस्ता व्याहृतयस्सर्वप्रायश्चित्तमेकाऽऽहुतिः। अनुद्रुत्येति वचनात् आहवनीय एव उपदेशस्तु एकैकव्याहृतौ एकैकस्मिन्नग्नौ पूर्ववद्धोमः जुहुयाज्जुहुयादिति। द्विरुक्तिः प्रपाठकसमाप्त्यर्था।

इति धूर्तस्वामिभाष्ये नवमप्रश्ने पञ्चमः पटलः नवमः प्रश्नस्समाप्तः

---

(वृ) अध्वर्योर्विज्ञानमेव लोहिनी रेखा वेष्टनदोषपरिहारार्थम्।

इति कौशिकेन रामाग्निचिता कृतायां धूर्तस्वामिभाष्यवृत्तौ नवमे पञ्चमः पटलः

नवमः प्रश्नः समाप्तः

---

(रु) यदि काश्चिद्रक्तवर्णा लेखाः प्रसव्यं यूपं वेष्टयन्त्यो दृश्येरन्नन्तरा यजमानस्सहस्रदक्षिणेन क्रतुना यक्ष्यतीति विद्यात्। अथ श्वेतास्सत्यः प्रदक्षिणं चेद्वेष्टयेयुस्तदा क्षिप्रमेव तेन यक्ष्यतीति विद्यात्। ज्ञानं चात्र

---

[1] न्याद्दक्षिणामुखो—ङ. दक्षिणाभिमुखो—च. [2] एवम्—क. [3] रित्याहवनीय एवा—ङ. [4] जुहुयायेति—ख जुहुवाथेति—घ जुहुयादिति—क.

प्रीत्यप्रीतिफलमात्रम् । न प्रायश्चित्तार्थम् ; तस्यानुपदेशात् । अन्यथा क्रत्वाहरणस्येष्टत्वेन तद्धितत्वेन च ज्ञानस्य प्रायश्चित्तार्थत्वायोगाच्च । आहुतौ प्रकरणात्पश्वाहुतौ हुतायाम् । सामान्यनिर्देशात्सर्वस्यामाहुतावित्येके । यदग्नेः कृष्णवर्णो धूम उत्थितो दक्षिणां दिशं प्रतिगच्छेत् । अथवा यं कंचिदप्याहुतिसमुत्थं धूमं वातः प्रसव्यमावेष्टयेत्तद्यजमान मरणं सूचयेत् । अतस्तत्परिहारार्थं सर्वप्रायश्चित्तं जुहुयात् । सर्वप्रायश्चित्तं च प्रागेव व्याख्यातम् ॥

इति विंशी खण्डिका

इति श्रीभट्टरुद्रदत्तप्रणीतायां आपस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां पञ्चमः पटलः

इति नवमः प्रश्नः

---

## दशमः प्रश्नः

हरिः ओ(४)म्

[ सोमयागस्यावसरसङ्ख्याऽऽरम्भणीयत्वम् ]

(सू) **सोमेन यक्ष्यमाणो ब्राह्मणाना*र्षेयानृत्विजो वृणीते यूनः स्थविरान्वाऽनूचानान् ऊर्ध्ववाचोऽनङ्गहीनान् ॥ १० ॥ १ ॥ १ ॥ २६१६ ॥**

---

* आर्षेयान्—अत्र स्वानृषीन् ये विदुः ते आर्षेया इति भाष्यम् तस्य चायमर्थः । तदधीते तद्वेद इत्यनेनाऽऽर्षेयशब्दो व्युत्पन्नः । अत्र ऋषीन् इत्यस्य वेदान् इत्यर्थः । स्वकीयान् वेदान् ये जानन्ति ते आर्षेयाः, त एव शुश्रुवांसः वेदतदर्थज्ञा इति फलितार्थः । इति भाष्यकृतामाशयः इति प्रतिभाति ॥

(भा) उक्तानि दर्शपूर्णमासादीनि नित्यनैमित्तिकानि च प्रायश्चित्तानि नित्यानामङ्गभूतानि । सोमोऽप्यृणसंस्तुतो नित्यो ब्राह्मणस्य ।

[ओषधिविशेषस्य सोमस्य कर्मनामधेयत्वे हेतुः]

स इदानीमुच्यते । सोम ओषधिविशेषः, तत्साधनत्वात्कर्मनाम सोम इति । तेन यागं करिष्यामीति ब्राह्मणानार्षेयानृत्विजो वृणीते ॥

[आर्त्विज्यं केषाम्]

ननु ब्राह्मणानां धर्मशास्त्रसिद्धमार्त्विज्यम्, यज्ञो याजनमिति । क्षत्रियस्य वाजपेययाजिनः प्राप्तम, पुनर्वचनात्; परिभाषायाम-ब्राह्मणस्यार्त्विज्यं प्रतिषिध्यते 'ब्राह्मणानामार्त्विज्यम्' इति । इह त्वनृत्विजामपि ब्राह्मणानामेव चमसाध्वर्यूणां वरणासिध्यर्थम् । आर्षेयो व्याख्यात आधाने प्रवरे ॥

[आर्षेयशब्दव्युत्पत्तिं प्रदर्श्य तत्र श्रुतिं प्रमाणी-कृत्यानूचानादिसौत्रपदार्थविवरणम्]

स्वानृषीन् ये विदुस्त आर्षेयाः, शुश्रुवांसो वा, 'एष वै ब्राह्मण ऋषिरार्षेयो यश्शुश्रुवान्' इति श्रुतेः । तानृत्विजो वृणीते— ऋतौ याजयन्तीत्यृत्विजः । युवानः—तरुणाः, स्थविराः—वृद्धाः । तयोर्ग्रहणं याजनसमर्थस्यापि मांसभक्षणप्रतिषेधात् ब्रह्मचारिणो माभूत् ॥ केचि[1]न्मिश्रणप्रतिषेधार्थं वचनमाहुः । आचार्येणोक्तं ये शिष्येभ्यः प्रतिपादयन्ति तेऽनूचानाः । त्रिस्थानकरणसमर्था वाग्येषां त ऊर्ध्ववाचः । अनङ्गहीना—अविकलाङ्गाः । तानृत्विजो वृणीते ॥

---

[1] केचिद्यूनः स्थविरानिति—क.

[अनूचानार्षेयपदयोः एकार्थकयोः पुनरुक्तौ फलम्]

ननु स्मृतौ[1] नाननूचानमृत्विजं वृणीत इति प्रतिषेधात् सिद्धेऽनूचानस्यैवार्त्विज्ये इह पुन[2]र्वचनं वेदानूचानार्थम्; न केवलं कर्मानूचानार्थम्। अग्न्याधेये आर्षेयवचनात्सिद्धे इह पुनर्वचनं देवभूतेऽ[3]ष्वृतिक्षु आर्षेया एव ब्राह्मणाः कर्तव्या इत्येवमर्थम्।

[शाट्यायनोक्तस्य ऋत्विजां त्रैविध्यस्य प्रतिपादनम्]

शाट्या[4]यनके त्रिप्रकारा ऋत्विज उपदिष्टाः देवभूताः पितृभूता मनुष्यभूताश्चेति। कर्मणि कर्मणि च देवभूताः, पितृभूताः पितृ[5]मातृसन्ततिकाः, मनुष्यभूता अग्न्याधेयप्रभृति यावज्जीवं ये सकृदेव वृता भवन्ति॥

[सङ्गत्युपपादनपूर्वकं नित्यान्यनित्यानि नैमित्तिकानि च विभज्य तल्लक्षणकथनम्]

(वृ) आदौ तावत्परिभाषायामेकविंशतिर्यज्ञा व्याख्येयतया प्रतिज्ञाताः। तेषु पाकयज्ञास्सप्त गृ[6]ह्येषु व्याख्याताः। शेषेषु हविर्यज्ञास्सप्त कर्माणि 'अथातो दर्शपूर्णमासौ व्याख्यास्याम' इत्यारभ्य 'यथाऽन्वारम्भणीया' इत्येवमन्तेनोक्तानि दर्शपूर्णमासादीनि, पिण्डपितृयज्ञाधानाग्निहोत्राग्रयणपशुबन्धचातुर्मास्यानि। नित्यानि; अकरणेप्रत्यवायवन्त्यृणसंस्तुतानि। दाक्षायणयज्ञा[7]स्तु गुणविकृता अपि नित्यापूर्वनिर्वर्तकत्वात् नित्या एव। तथा नैमित्तिकानि च; पुनराधानप्रवासादीनि चोक्तानि। 'श्रुतिलक्षणं प्रायश्चित्तं' इत्यारभ्य

---

[1] स्मृतावननूचानस्यार्त्विज्यं नाननू—ग. (ङ. ?)　[2] चनमनर्थकम्, न कर्मवेदानूचानार्थं, न केवलं कर्मानूचान इति—च.　[3] तेषु वरणीयेषु ऋत्विक्षु—ग (ङ ?)
[4] बोधायनेनापि—ग.　[5] पितृपितामहसन्ततिकाः—ख.　पितृमातृसन्ततिजाः—ग. च.
[6] केचिद्युवस्थविर मिश्रप्र—च.　गृह्ये—ग.　[7] यज्ञादयः स्वगुण--च. यज्ञादयस्तु--ग.

'सर्व प्रायश्चित्तं जुहुयात्' इत्यन्तेन तेषां हविर्यज्ञानां प्रायश्चित्तानि चोक्तानि। अन्यानि च यान्य[1]नित्यानि प्रसक्तानुप्रसक्तया वचनसौकर्यादिना वा। नच नित्यैर्दर्शपूर्णमासादिभिस्सह नित्योऽपि सोमो नैमित्तिकेभ्यः प्रा[2]गुक्तः। यानि नित्यानामङ्गभूतानि तानि नैमित्तिकानि नित्यानां हविर्यज्ञानामङ्गभूतानि उपकारकत्वात्। उपकार्योपकारकयोर्मध्येऽन्यस्य सोमस्यायुक्तम् वचनम्॥

[सोपपत्तिकं सोमस्य नित्यत्वव्यवस्थापनम्]

ननु नित्यनैमित्तिकयोरुपरिष्टाद्वचनात्स्वर्गादिकामनायोगाच्चानित्यस्सोमः। स च हविर्यज्ञविकारेष्वैन्द्राग्नादिष्विष्टिषु वायव्यादिषु पशुबन्धेषु वा उपजीवकेषूपजीव्यसन्निधाने प्रतिपत्तिसौकर्याय व्याख्यातेषु व्याख्येयः? मैवम्;—सोमोऽपि दर्शपूर्णमासवद्दणसंस्तुतो नित्यो ब्राह्मणस्य; त्रैवर्णिकस्य वा। कथम्? 'जायमानो वै ब्राह्मणस्त्रिभिर् ऋणवा जायते, ब्रह्मचर्येणर्षिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः' इत्यत्र यज्ञशब्देन सोमोऽपि गृह्यते। यतोऽयमाचार्यो 'यज्ञं व्याख्यास्याम' इति प्रतिज्ञाय तद्विशेषतया 'सर्वैरग्निष्टोमः' इत्यग्निष्टोमनामानं सोममुद्दिशति। तथा 'स त्रयाणां वर्णानाम्' इति वदन् ब्राह्मणशब्दस्त्रैवर्णिक[3]वाचीति व्याचष्ट॥

[कुत्रचिद्विवृतपदस्य अन्यत्राविवरणे निदानम्]

यत्त्वयं भाष्यकारो ब्राह्मणशब्दावत्र प्रसिद्धावुपादत्ते तदेतत्पदद्वययुक्तं वाक्यविशेषमस्मिन्नर्थे प्रमाणत्वेनोपन्यस्यति परिभाषायां व्याख्यात[4]त्वाच्च न व्याचष्टे; तस्येदं प्रयोजनम्; परिभाषाप्रभृति-

---

[1] यान्यनियतानि—च. [2] युक्तः कुतस्तानि नैमित्तिकानि? नित्यानां—क.
[3] वाचक इति—च. कस्य-ग. [4] व्याख्या प्रयोजनम्--ग.

प्रायश्चित्तपर्यन्तं यदुक्तमत्रापेक्षितं तत्तत्र यथाव्याख्यातं तथैव प्रतिपत्तव्यमिति । यथा 'दीक्षणीयायास्तन्त्रं प्रक्रमयति' इत्यत्र न व्याख्यातस्तन्त्रशब्दः; 'तन्त्रमित्यङ्गसमुदायः' इति दर्शपूर्णमासयोर्व्याख्यातत्वात्, अतः पूर्वं यथोक्तमव[1]गच्छत एवोत्तरत्राधिकार इति दर्शितं तेनेदं च परिहृतम् ॥

[हविर्यज्ञप्रतिपादनोत्तरं कथनीयस्य परिभाषायां सामान्यतोऽभिहितस्य चास्यात्रोक्तौ बीजं विशदीकृत्य सौत्रपूर्वखण्डार्थविवरणम्]

ननु सोमोऽपि नित्योऽस्तु? आधानानन्तरमग्निहोत्रदर्शपूर्णमाससोमानां विकल्पतोऽनुष्ठानप्राप्तेस्तत्रैवायं व्याख्यायतामिति; कथम्? यद्यपि सोमो न हविर्यज्ञप्रकृतिकः; तथाऽपि तदङ्गानां दीक्षणीयादीनामिष्टीनां, अग्नीषोमीयादीनां, मैत्रावरुणाद्यामिक्षापयस्ययोस्सवनीयानां च नानाबीजानां दर्शपूर्णमासाद्यपेक्षा विद्यत एव, अतस्तत्र प्रस्मर्तव्यमिति । एवं चोक्ते हेतुहेतुमद्भावश्च पूर्वोत्तरयोरुक्तो भवति । अतस्स नैमित्तिकानां नित्यानां हविर्यज्ञानामुपरिष्टा[2]द्वक्तव्यः । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्येनान्यत्रोत्पन्नस्य नित्यस्य सोमस्याधिकारिवि[3]शेषेण स्वर्गं प्रति विनियोगः । अतस्स इदानीमुच्यते; स नित्यः पूर्वापेक्षया इदानीमेतदाश्रयनैमित्तिकेभ्यः काम्येभ्योऽपि पुरस्तादुच्यते परिभाष्यते परिभाषायां सामान्येनोक्तोऽत्र विशेषतश्चोच्यते सूत्रकारेण;—'सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयान् वृणीते' इत्यन्तं वाक्यम्; तद्व्याख्यायते—तत्र[4] सोम ओषधिविशेषः (सोमपदार्थः ओषधिविशेषः) न चन्द्रो देवता वा यागकरण[5]त्वश्रुतेः । न

---

[1] मुपग--च. [2] रिष्टादेव-च. [3] विशेषण--क. [4] ततः सोमः-च.
[5] करणश्रुतेः-ग.

चोद्भिदादिवद्यागसामानाधिकरण्यान्नाममात्रमनर्थकम्; अश्वात्मके निष्पत्रे सक्षीरेऽभिषवादियोग्ये पेयरसस्रुति[1]लताविशेषे तत्र तत्र[2] मन्त्रार्थवादेभ्यस्सोमशब्दावगतेः व्रीह्यादिवद्यागसाधनमेव ॥

[आयुर्वेदोक्तसोमलतालक्षणानुवादः, तत्साधनकयागविधानं च]

तथाऽऽयुर्वेदे ;—

श्यामलाऽऽम्ला च निष्पत्रा क्षीरिणी त्वचि मांसला ।
श्लेष्मला[2] वमनी वल्ली सोमस्स्याच्छागभोजनम् ॥ इति ।

अतो [3]ऽपूर्वार्थस्तत्साधनको यागो विधीयते । अतः करिष्यामीति 'विभाषोपपदेन प्रतीयमाने' इति परस्मैपदं संकल्पितवान् ॥

**ननु–याजनमिति**—तस्मादत्र ब्राह्मणपदग्रहणस्य प्रयोजनं वक्तव्यम् ॥

**क्षत्रिय–प्राप्तम्**—आर्त्विज्यम् 'तस्माद्वाजपेययाज्यार्त्विजीनः' इति तदत्र पुनर्वचनात्प्रतिषिध्यत इति चेन्न तत्र ।

**पुनर्वचना–र्त्विज्यम् इति**—अतः किमिह ब्राह्मणग्रहणस्य प्रयोजनम् ?

[सोपपत्तिकं सौत्रब्राह्मणपदफलप्रतिपादनम्]

**इह तु सदस्य–र्थ्यर्थम्**—इह तु सदस्यसप्तदशा ऋत्विजो वक्ष्यन्ते, तेभ्योऽन्ये दश चमसाध्वर्यवश्च, तेषामनृत्विजामपि ब्राह्मणानामेव चमसाध्वर्यूणां वरणसिध्यर्थं ब्राह्मणग्रहणम् ॥

---

[1] स्रुतिमल्लता–**क.** [2] शामनी--**ख.** शामवी खल्वी--**च.** [3] अपूर्वत्वात्त–**ख. ग. च.**

[अन्यत्र विशेषणत्वेन विनियुक्तपदस्य अवयवशक्त्याऽन्य-
विशेषणत्वव्यवस्थापनम् ]

कथमृत्विजां विशेषणं ब्राह्मण[1]शब्दश्चमसाध्वर्यून् विशिंषेत् ? ऋतौ याजयन्ती त्यृत्विज इति यौगिकार्थपरिग्रहात् तेषां चोन्नयनहोमादिकर्तृत्वेन च याजयितृत्वं विद्यत एव योगतः, [2]तत्र रूढिपरित्यागे ब्राह्मणग्रहणानर्थक्यं तेषां अवरणीयत्वं च हेयः ॥

[स्वर्षिवेदितृत्वस्यैवाऽऽर्षेयशब्दाभिधेयत्वव्यवस्था]

स्वानृषीन्–इति श्रुतेः—'तदधीते तद्वेद' इत्यार्षेयशब्दस्समर्थः तत्र ऋषिर्वेदः ॥

तानृ–के—ऋतौ याजयन्तीत्यृत्विजः ॥

[सौत्रयोः युवस्थविरपदयोः ग्रहणफलम् ]

युवा–णा—न तु जीवद्वंश्याः ॥

स्थवि–द्धाः—न परिबृढाः 'बलविज्ञायः स्थविरः प्रवीरः' इति दर्शनात् इह युवानः स्थविरा वा याजयितुं शक्नुवन्ति नान्ये बालाः अतस्तयोर्ग्रहणं स्मृतिषु ॥

[विहितानुष्ठानासमर्थस्य ब्रह्मचारिण आर्त्विज्याभाव-
व्यवस्थापनम् ]

याज–भूत्—आर्त्विज्यमिति युवादिशब्दं गृहस्थविशेषवाचकं मन्यन्ते । अयमभिप्रायः—मांसाभक्षणे च कर्मलोपपतितत्वप्रसङ्गः क्रतुवैकल्यं स्यादिति ॥ नन्वेवमपीदानीमन्यतः प्राप्तस्यायमनुवादस्स्यात् तथा च व्यक्तिलाघवाभ्यां गृहस्थानित्येवावक्ष्यत्सूत्रकारः—उच्यते ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् । इति मांसमभक्षयता

---

[1] शब्दोऽनृत्विजः चमसाध्वर्यून्–क. ग. [2] अत्र–ग.

ब्रह्मचारिणाऽपि भुक्ते श्राद्धमविकलं दृष्टम्। तथा नियममतिक्रामताऽपि द्रव्या[1]र्जनेऽनुष्ठितस्य क्रतोर्नापराधो दृष्ट इति ब्रह्मचारिणो मांसभक्षणाभक्षणाभ्यां न क्रतोरपराध इत्यार्त्विज्यं प्राप्तं प्रतिषिध्यते[2]। न चायमाचार्योऽत्यन्तलाघविक इति ॥

अत्र :—

[तस्याप्यार्त्विज्यानुज्ञा केषांचित्पक्षे]

**केचिन्मि–हुः**–युवस्थविराणां तैर्गुरूकरण[3]प्रयोजनमुक्तं भवति ब्रह्मचारिनिषेधो न कृतः मिश्रप्रतिषेधोऽप्यर्थसिद्धः। विषमशक्तीनां युवस्थविराणां सह प्रचारे दुरनुष्ठानत्वात् ॥

[भाष्योक्तानूचानपदार्थविशदीकरणम्]

**आचार्ये–नूचानाः**—आचार्येण सकल्प[4]रहस्यवेदाध्या[5]यिनोक्तं तादृशं वेदं ये शिष्येभ्यः प्रतिपादयितुं शक्नुवन्ति 'ताच्छील्यवयोवचनशक्तिषु चानश्विधानात्' तेनूचानाः ; ॥

**त्रिस्थान–वाचः**—'उरः कण्ठाश्शिरः' इति त्रिस्थानकरणसमर्था वाग्येषां ते ऊर्ध्ववाचः। न तु स्वरहीनाः ॥

[अनुष्ठानोपयुक्ताङ्गानां स्वस्वविषयव्यापारशक्तत्वोपपादनम्]

**अनङ्ग–लाङ्गाः**—अनुचितस्य तस्य स्मृतितो निषिद्धत्वादनुष्ठानोपयुक्तमत्राङ्गं विवक्षितम्। तस्माच्चक्षुरादीनां पाण्यादीनां च स्वस्वविषयव्यापाराशक्तिवैकल्यम्। न कर्णनासाङ्गुलिच्छेदादि तान्–एवंगुण विशिष्टान् ऋत्विजो वृणीते इति पूर्वेण सम्बन्धः ॥

---

[1] र्जनेनानुष्ठित–ग. [2] इति मतम्–ग. [3] करणार्थस्य प्रयो–ग. [4] सकलरहस्य–क. च. [5] दाध्यापयित्रोक्तं–ग.

**ननु स्मृतौ-नूचान इति-अस्यार्थः**—द्वावनूचानौ कर्मानुचानो वेदानूचान इति ; यावान् कर्म[1]ण्यनूचानस्तावान् वेदानूचान इति " उभयो[2]रप्यनूचान आर्त्विजीनो विशिष्यते " इति वचनात्तयोर्वेदानूचानोऽशक्तेरर्थान्निषिद्धः। इतः केवलकर्मानूचानश्शक्तत्वात्प्राप्नुवन्निह पुनर्वचनेन प्रतिषिध्यते कथं ?[3] उभाविमावनूचानशब्दमृत्विक्षु समर्पयतः, अविरोधान्न बाधविकल्पाविति अनङ्गहीनानित्यत्रिकलवाचामार्त्विज्ये सिद्धे ऊर्ध्ववाग्ग्रहणमादरार्थम्। अतोऽङ्गान्तरेषु किञ्चिद्वैकल्येऽप्यन्यालाभेऽनुज्ञायते ॥

नन्वग्न्याधेये 'चत्वार आर्षेयाः प्राश्नन्ति' इत्यार्षेयवचनादार्षेयाणामार्त्विज्ये सिद्धे इहार्षेयानिति पुनर्वचनं किमर्थम् ?

**अग्न्याधेये-त्येवमर्थम्-भवति, नानर्थकम्; अस्यार्थः ;**—[4] पितृभूतेषु मनुष्यभूतेषु चर्त्विक्षु ये आधाने वृतास्त एव सोमेऽपि भवन्ति। तद्विषये इदमनर्थकम् ते चत्वारः अन्ये उद्गात्रादयः अनुक्तविशेषणा एव देवभूतेषु सर्व एवानुक्ताविशेषणाः अत उभयार्थं वचनमिति ॥

ननु यथाऽनूचानपदमुभयविधमनूचानत्वं ग्रहीतुं पुनरुक्तम्। एवं स्वर्षिवे[5]दितृत्वं शुश्रुवस्त्वं च समुच्चेतुं पुनर्वचनं किमिति न[6] स्यात् ? नैवम्; यतोऽशुश्रुवाननूचानो [7]नास्ति। अतए[8]वानूचानप्रयोजनाभिधानानन्तरमिदमुक्तं क्रमोल्लङ्घनेन। अतएव स्वर्षिवेदितृ[9]त्वमेवार्षेयपदार्थो विशिष्यत इति ॥

एवं त्रिविधा ऋत्विज इत्यत्र किं प्रमाणम् ?—**शाट्यायनके-श्रुति।**

---

[1] यावान् कर्मानूचानः-ग. [2] उभयत्राप्यनू-च. [3] कथं ताविमावनू-च.
[4] देवभूतेषु-च. [5] स्वर्षिवेत्तृत्वं-ग. [6] न स्यात ? एवं तर्हि अशुश्रु-ग. ङ.
[7] चानोऽस्ति-ग. [8] अत इहस्ववेदितृत्वमयमेवाऽऽर्षेय-च. अत इह स्वर्षिवे-क.
[9] वेत्तृत्व-ग.

तेषां लक्षणानि कानि ? **कर्मणि कर्मणि–भूताः**—कर्मणि कर्मणि येऽ[1]न्ये भवन्ति सकृदेव[2] सङ्गृहीतास्ते देवभूताः देवा हि तान् कर्मणि–कर्माणि घटयन्ति यादृच्छिकत्वात् ॥

**पितृभूता–जाः**—पितृभ्यां हि ते प्रहिताः । पितृपितामह-सन्ततिकाः इति वा पाठः । तदाऽयमर्थः—सन्ततिरानुपूर्वी तत्र ये तथाऽनूपूर्व्येणर्त्विज इति ॥

(रु) उक्ता नित्या हविर्यज्ञा उक्तानि चैषां प्रायश्चित्तानि । अथेदानीं सोम आरभ्यते ।

**[ सोमस्य नित्यत्वम्, तत्र हेतवश्च ]**

सोऽपि नित्यः, त्रिभिरृणवा जायत इत्यृणसंस्तवात्, तथा सोमान्तान् यज्ञाननुक्रम्य नैयमिकं ह्येतदृणसंस्तुतमिति वसिष्ठवचनात् । सूत्रकृताप्यग्नीनाधाय कर्माण्यारभते सोमावराध्यानि यानि श्रूयन्त इति गृहस्थस्याश्रमान्तरं प्रेप्सतोऽप्यावश्यकतयोपदेशात् । तथा 'वसन्ते वसन्ते सोमेन यजेत' इति दर्शपूर्णमासवदभ्यासविधानात्, तथा सोमपीथविच्छेदे प्रायश्चित्तवचनात्, तथा सर्वेषु ब्राह्मणेषु कल्पेषु च नित्यैस्समभिव्याहाराच्च । तस्मान्नित्य एव सोमः ।

**[ज्योतिष्टोमस्य दर्शपूर्णमासोत्तरकालमनुष्ठेयत्वे अन्वयव्यतिरेकाभ्यां भारद्वाजाद्युक्तप्रमाणोपन्यासः]**

स च ज्योतिष्टोम इति वक्ष्यते । न चासावनिष्टदर्शपूर्णमासेनाहर्तव्य इति प्रायः कल्पान्तरकाराणां मर्यादा । तत्र भारद्वाजस्तावत्, न दर्शपूर्णमासाभ्यामनिष्ट्वा सोमेन यजेतेति । तथा तस्य नानुप्रक्रान्तयोर्दर्शपूर्णमासयोराहार इति सत्याषाढः । कात्यायनेनाप्युक्तम्; दर्श-

---

[1] येऽन्येऽन्ये न—**च.** [2] ननु देवादौ सं—**क. ग. च.**

पूर्णमासाभ्यामिष्ट्वाऽन्येन यजेतेति । ब्राह्मणे च, यो दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्ययमेव कल्पस्स्तुतः । आश्वलायनस्त्वाह, दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेन । ऊर्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्येके, प्रागपि सोमेनैक इति ।

[ विशेषस्सूत्रकारमते ]

सूत्रकृतोऽप्यनियम एव क्रमस्याभिप्रेतो विशेषावचनात् ॥

[विच्छिन्नसोमपीथस्य सोमानुष्ठाने विशेषाः, तत्र हेतवश्च]

विच्छिन्नसोमपीथेन त्वग्नीनाधाय दर्शपूर्णमासाभ्यामिष्ट्वा व्रात्यं च पशुमालभ्य ततस्सोमाय दीक्षितव्यम्, अनालब्धे तस्मिन् सोमानधिकारात् । तदालम्भस्त्वनिष्ट्वापि दर्शपूर्णमासाभ्यां लभ्यते सत्स्वग्निषु सत्यां च सोमपीथेच्छायां तन्निरोद्धुरभावात् ॥

नन्वसौ सान्नाय्यप्रकृतिः, कथमकृतायां प्रकृतौ करिष्यते ? किमियं राजाज्ञा अकृतायां प्रकृतौ विकृतिः न कार्येति ? न तावदस्याः प्रकृत्यनुष्ठानापेक्षमनुष्ठानं विकृत्यनुपदिष्टाकाङ्क्षितप्राकृतविध्यन्तस्य वेदनमात्रापेक्षत्वात् । न च सान्नाय्याग्नीषोमीयविकाराधिकरणन्यायादेष नियमश्शङ्कनीयः, तस्यातद्गोचरत्वात्, तत्र हि 'नासोमयाजी सन्नयेत्' इति सान्नाय्यस्य सोमोत्तरकालवचनात् प्रकृतिवद्विकृतिः कर्तव्येति न्यायाच्च । तद्विकाराणामपि सोमोत्तरकालभावित्वमेव व्युत्पाद्यं न तु प्रकृतिविकृत्योः पौर्वापर्यम् । न च शास्त्रीयोऽयं नियमः, तत्र शास्त्रानुपलम्भात् । विपरीतानुज्ञैव तु शास्त्रादवसीयते । अग्न्याधेयस्येष्टिविधानादतिरात्रस्य प्रथमयज्ञत्वविधानात्, असोमयाजिनः पशुविधानाच्च । तथा दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेनेति । तस्माद्येषामेतदुपसंख्यानं त एवात्र प्रमाणं प्रष्टव्या इति सिद्धम् ।

[अनारब्धदर्शपूर्णमासस्य कर्तव्यविशेषाः, तत्र हेतू च]

अनारब्धदर्शपूर्णमासस्यापि व्रात्यपशिज्या लभ्यत इति तत्रान्वारम्भणीया नियता, प्रकृत्यर्थेनाप्यकृतत्वात्। कृता हि सा तदर्थेनेति विकृतिषु तदक्रियायां हेतुवचनाच्च। सर्वथाऽपि तात्रात्सिद्धं विच्छिन्नसोमपीथस्यानालब्धव्रात्यपशोर्न सोमदीक्षेति।

[श्रुत्यादिप्रमाणोपन्यासपूर्वकं विच्छिन्नसोमपीथ-शब्दार्थवर्णनम्]

कोऽयं विच्छिन्नसोमपीथो नाम। ननूक्तोऽयं ब्राह्मणे 'ऐन्द्राग्नं पुनरुथ्सृष्टमालभेत य आ तृतीयात्पुरुषाथ्सोमं न पिबेद्विच्छिन्नो वा एतस्य सोमपीथ' इति। तत्र च 'त्रयः प्राञ्चस्त्रयः प्रत्यञ्चः' इत्यादौ प्राक्तनोक्ता, दीक्षावेदननामसुब्रह्मण्यादौ नामभिः कीर्त्यमाना च, पित्रादीनां त्रिपुरुषी। तस्यां चरमः प्रपितामहस्तृतीयोऽभिप्रेतः। न त्वात्मनस्तृतीयः पितामहः। कुतः? सोमपानोद्यतस्यात्मनस्तद्विच्छेदाभावात्। 'एतत्ते तत ये च त्वामन्वेतत्ते पितामह प्रपितामह ये च त्वामनु इति तिसृषु स्रक्तीषु निदधाति, तस्मादा तृतीयात्पुरुषान्नाम न गृह्णन्ति' इत्यादौ व्यक्तार्थत्वाच्च। विध्यर्थत्वमप्यत एव निदर्शनादवगन्तव्यम्। तदयमर्थो भवति, यस्य पित्रादयस्त्रयः पुरुषास्सोमं न पीतवन्तस्स सोमपीथार्थी पशुमालभेतेति।

[कात्यायनमते विशेषः]

कात्यायनमतात्तु द्विपुरुष(विच्छेदेऽपि)विच्छित्तावपीष्यते यथाऽऽह 'वसन्तेऽग्निष्टोमः, ऐन्द्राग्नं पुनरुथ्सृष्टमालभ्य द्विपुरुषास्सोमपीथिनः' इति। कः पुनरुत्सृष्टः? छागः पुनरुथ्सृष्टः इति भारद्वाजः। बोधायनस्त्वाह 'पुनरुथ्सृष्टोऽनड्वान्' इत्यवशीर्णगव एष उक्तो भवतीति। लिङ्गं चात्र भवति 'पुनरुथ्सृष्ट इव ह्येतस्य सोमपीथ' इति॥

[ दुर्ब्राह्मणेनानुष्ठेयांशकथनपूर्वकं तल्लक्षणादिकथनम् ]

दुर्ब्राह्मणस्य तु ऐन्द्राग्नेनेष्ट्वाऽऽश्विनोऽप्यालभ्यः, यथोक्तं ब्राह्मणे 'आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणस्सोमं पिपासेत्' इति। कोऽसौ दुर्ब्राह्मणः। तमाह बोधायनः 'यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषं। स वै दुर्ब्राह्मणो नाम यश्च पौनर्भवो भवेत्' इति। तत्र वेदश्च वेदी चेति चकाराभ्यां व्यक्तं समुच्चयावगमादुभयविच्छेद एव भवत्याश्विनो नान्यतरस्य विच्छेदे ॥

[ भारद्वाजकल्पोक्ततल्लक्षणादिकथनम् ]

भारद्वाजस्त्वाह, विलुप्तसावित्रीको दुर्ब्राह्मण इति। तस्मिंस्तु त्रिपुरुषमुभयाविच्छेदेऽपि भवत्येवाश्विनः। ऐन्द्राग्नस्तु नेष्यते, निमित्ताभावात् ॥

[ विशेषणमध्यप्रयुक्ताख्याततात्पर्यविशदीकरणम् ]

**मनुष्यभूता**—**न्ति**—तत्र वरणं नाम लौकिकमानमनं उत्तरो मान्त्रसंस्कारः। सर्वविशेषणानामादावन्ते वाऽऽख्याते प्रयोक्तव्ये वृणीत इति मध्ये यत्प्र[1]युक्तं [2]तस्येदं प्रयोजनम्—चमसाध्वर्यूणामुत्तराणि विशेषणानि नावश्यानीति। अतो मांसभक्षणप्रतिषेधनिमित्तं ब्रह्मचारिण आर्त्विज्यप्रतिषेधमाह भाष्यकारः, चमसाध्वर्यूणां मांसभक्षणप्रसङ्गाभावात्। युवस्थविरग्रह[3]णेन परिसंख्यानं ब्रह्मचारिणाम्। इदं चापरं प्रयोजनम्—[4]असम्भवेऽपि ब्राह्मणत्वमार्षेयत्वं चावश्यापेक्षितमिति सङ्कल्पात्पश्चाद्वरणात्प्राक् तदर्थमिदं कर्तव्यम् ॥

सोम ओषधिविशेषस्तत्साधनत्वात्कर्मणोऽपि नाम। तेन यक्ष्यमाण आगूर्याप उपस्पृश्य चर्त्विजो वृणीते। आगूरणं तु याजमान

---

[1] युक्ते—क. ग. च. [2] तस्मिन्नेतत्प्रयोजनं—क. [3] णेन न परि—ग.
[4] अभावेऽपि—च.

एव व्याख्यातम् । ब्राह्मणानामार्त्विज्यमित्यनेनैव सिद्धे पुनर्ब्राह्मण-वचनमादरार्थम् । अथवा 'तस्माद्वाजपेययाज्यार्त्विजीन' इति श्रुतेः । क्षत्रियस्यापि वाजपेययाजिनः प्राप्तिरत्र शङ्किता निरस्यते । आर्षेयो ब्रह्मौदने व्याख्यातः ।

[ युवस्थविरादिपदप्रयोजनम् ]

बालवृद्धयोरपि प्रायः क्रियासु पाटवं न स्यादिति युवस्थविर-ग्रहणम् । अथ कोऽनूचानः? मार्गादनपगतोऽनूचान इति भारद्वाजः । तस्य च नाननूचानमृत्विजं वृणीते इत्यनेन सिद्धस्यापि पुनर्वचनमाद-रार्थम् । ऊर्ध्ववाचः पटुस्थानकरणाः अनङ्गहीना अन्यूनाङ्गाः अन्यूनानतिरिक्ताङ्गाः इत्याश्वलायनद्राह्यायणौ ॥

[सोमप्रवाकेनानुप्रैयोंऽशः]

(सू) तेभ्यस्सोमं प्राह ॥ १० ॥ १ ॥ २ ॥ २६१७ ॥

(भा) केभ्यः ऋत्विग्भ्यः ; यान् वृणीते मन्त्रैः चमसाध्वर्युवर्जानृत्विजो वृणीत इति सोम[1]प्रवाकैराख्यातव्याः । 'अध्वर्युर्वा ऋत्विजां प्रथमो युज्यते' इति लिङ्गात् अध्वर्युप्रथमानां सोमप्रवाक आचष्टे । सोम-प्रवाकोऽन्यः सर्वा दिशस्सक्षीरदृतय इति साद्यस्के दर्शनात् । उपदेशस्तु यजमान एवेति ॥

(वृ) तेभ्यः-ऋत्विग्भ्यः—न पूर्वप्रकृतेभ्यश्चमसाध्वर्युभ्यः । कुतः ; यान्—न्त्रैः—तत्सम्बन्धित्वाद्वरणस्य[2] । ब्राह्मणेभ्यस्तेभ्यस्सोमं प्राहेति प्रकृतानेव हि तान् वृणीते इत्यत्रापि परामृशति ॥

ननु कुतस्तत्र चमसाध्वर्युनिवृत्तिरवगम्यते ?—

---

[1] वाकैरेकैकवेदप्रवक्तृभिः त्रिभिः पृथक्पृथगाख्यातव्याः--क. च. [2] रणस्य तेभ्यस्सोमं-ग. ङ.

[चमसाध्वर्यूणामपि वरणसद्भावः]

**चमसाध्व–वृणीते**––इत्यवचनात्। तान् वृणीते इत्यत्र तच्छब्देन सदस्यं सप्तदशमित्य[1]न्तेन सामानाधिकरण्यादेव वचनसम्पत्तिः मन्त्रेण [2]वरिष्यमाणेभ्य एव सोमस्य वक्तव्यत्वात्। चतुर्णां वरणपक्षे चतुर्भ्य एवाऽऽह। सदस्यवरण[3]पक्षे सदस्याय च॥

ननु यदि चमसाध्वर्यूणां वरणं नास्ति 'रश्मयो मे चमसाध्वर्यवः' इति कथमुपपद्यते? उच्यते; अस्ति वरणं चमसाध्वर्यूणामपि किंतु सप्तदशेभ्यः पृथग्भावात् 'तान् वृणीते' इति तच्छब्देनानभिधानादृ[4]त्विग्भ्योऽपि पृथग्भूतास्तत्संस्का[5]रान् न लभन्ते॥

[पार्थक्येन ऋत्विग्वरणप्रकारविशदीकरणम्]

**सोम–आख्यातव्याः**—देवदत्तस्य सोमो भविष्यति तत्र भवता आध्वर्यवं कर्तव्यं ब्रह्मत्वं कर्तव्यमित्येवमाख्यानप्रकारः। वरणार्थत्वादाख्यानस्य। अत्र च ऋत्विजां द्वेधा क्रमः प्रतीयते अध्वर्यु[6]प्रथमो होतृप्रथमश्च; अनु[7]क्रमवरणमन्त्रक्रमाभ्याम्। तत्र—

**अध्वर्युर्वा–आचष्टे**—ननु क्रमनियामकानां श्रुत्यादीनां मध्ये न लिङ्गं पठ्यते? सत्यम्;—अत्र पाठादेवोभौ क्रमौ नियतौ, तत्राध्वर्युप्रथमस्य क्रमस्यात्र विनियोगे [8]लिङ्गप्रमाणमेकम्; अत्रैकवचनादेको द्वौ बहवो वाऽर्थां[9]द्ग्राह्या इत्युक्तं भवति॥

**सोमप्र––नात्—**सोमेन यक्ष्यमाणप्रकृताद्यजमानादिति। कुतः;

[1] मित्यनेन—च. [2] परिभाष्यमाणेभ्यः—क. [3] सदस्यपक्षे सदस्यवचनम्—च. [4] ग्भ्यो बहिर्भूताः—ग. च. [5] रं न लभन्ते—ग. च. [6] प्रथमक्रमो होतृप्रथमक्रमश्च—ङ. थमको होतृप्रथमकश्च—ग. च. [7] क्रमण—च. [8] लिङ्गं प्रमाणमेव—ग. च. [9] र्थतो ग्राह्या—ग. ङ.

सर्वादिश–नात्—सोमप्रवाका [1]विधावन्तीति सोमप्रवाकानां ज्योतिष्टोमप्रकृतिके[2] साद्यस्क्रे सिद्धवदनुवाददर्शनात् ॥

['उपदेशस्तु' इत्यत्र तुशब्दव्यवच्छेद्योंऽशः]

उपदे–वेति—तुशब्दात्पूर्वपक्षो व्यावर्त्यते । इह प्राप्तौ तत्रानुवादकौ, प्राप्तिश्च तत्रानुवादत्व[3]निश्चयादिति प्रकृत एव यजमानः सोमप्रवाको युक्तः । अस्मिन्पक्षे सोमप्रवचनसमर्थ एवाधिकुर्वीत[4], तच्चायुक्तम्; सोमस्य नित्यत्वात् । अशक्तौ सोमप्रवाकोऽन्यो [5]गृह्यत इत्यर्थसिद्ध इति ॥

[कल्पान्तरसंवादपूर्वकं शेषपूरणप्रयोजनम्, सूत्र-
फलितार्थकथनं च]

(रु) सोमप्रवाक इति शेषः । कुत एतत् । साद्यस्क्रेष्वश्वरथा-स्सोमप्रवाका विधावन्तीति लिङ्गात् । कण्ठोक्तत्वाच्च कल्पान्तरेषु । यथाह भारद्वाजः सोमप्रवाको यत्रास्मै सोमम्प्राहेति । तथा सोम-प्रवाकं परिपृच्छेदित्याश्वलायनः । एवमन्यत्रापि द्रष्टव्यम् । तदय-मर्थो भवति यजमानप्रहितस्सोमप्रवाकस्तंतं यथोक्तगुणमुपेत्य सोमं प्राह । सोमेनासौ यक्ष्यते स याजयितव्यस्त्वयेति ॥

[अन्योन्यं प्रश्नप्रतिवचने]

(सू.) **तं पृच्छति क ऋत्विजः? के याजयन्ति? कच्चि-न्नाहीनः? कच्चिन्न न्यस्तमार्त्विज्यम्? कच्चि-त्कल्याण्यो दक्षिणाः? इति छन्दोगब्राह्मणं भवति ॥ १० ॥ १ ॥ ३ ॥ २६१८ ॥**

[1] काः संचरन्तीति–क. च. [2] तिके सिद्धव–ग. ङ. [3] निश्चयादित्यन्योन्या-श्रयात्प्रकृत–क. निश्चयादिति भावः । प्रकृत–ग. [4] त सोमस्य–ग. च. [5] ग्राह्य इत्यर्थसिद्ध इति–च.

(भा) तं—सोमप्रवाकं, पृच्छति स ऋत्विक्; के ऋत्विजः? देवदत्तादयः। के याजयन्ति? इति पृष्टे [1]एकस्मिन् क्रतौ ये भविष्यन्त्यृत्विजस्तानाचष्टे। कच्चिन्नाहीन इति पृष्टे नाहीनो ज्योतिष्टोम इति प्रतिवचनम्। कच्चिन्न न्यस्तमार्त्विज्यमिति पृष्टे न न्यस्तमार्त्विज्यं यजमानदोषेणेति प्रतिवचनम्। कच्चित्कल्याण्यो दक्षिणाः? इति पृष्टे सन्ति कल्याण्यो दक्षिणास्सुरूपा बहुमूलाश्चेति सप्तप्रभृतिषु दक्षिणाकल्पेषु अन्यतमपक्षमाश्रित्य प्रतिवचनम्। अनित्यः प्रश्न इत्युपदेशः। वेदत्रयोक्तस्य नित्य उप[2]संहार इति न्यायः॥

(वृ) तं सो–त्विक्—यजमानमन्यं वा वक्ष्यमाणप्रकारेण पृच्छति स ऋत्विक्पृथक्पृथक्॥

**के ऋत्विजः**—आधानादिष्विति शेषः।

**देवदत्तादयः**—इति प्रतिवचनमर्थसिद्धमाह सोमप्रवाकः।

**के याजयन्ति–ष्टे**—वर्तमानोपदेशात्।

**एकस्मिन् क्रतौ–चष्टे**—विष्णुमित्रादय इति अयं क्रतुः।

**कच्चिन्ना—चनम्**—अग्निष्टोमादिसंस्थास्वपि तस्य तदात्मकत्वात्।

**कच्चिन्न न्य–चनम्**—न न्यस्तमार्त्विज्यं कार्यमिति स्मृतेः।

**कच्चित्कल्या–चनम्**—छन्दोगब्राह्मणवचनात्।

[उपदेशपक्षाशयस्फुटीकरणम्]

**अनित्यः प्रश्न इत्युपदेशः**—अस्यार्थः—अनेकवेदशाखागतानपेक्षितान् विधीन् संगृह्य वदन् सूत्रकारो न क्वचिद्विकल्पाभि-

---

[1] एतस्मिन्—क. ख. [2] स्यापि नित्य उपसंहरतीति न्यायः—ख. नियम्य उप—ख.

प्रायमन्तरेण वेदं शाखां वोपादत्ते । अतोऽत्र छन्दोगब्राह्मणं भवतीति वचनाद्वैकल्पिकः प्रश्न इति ।

[सोपपत्तिकं तन्मते प्रश्नानित्यत्व व्यवस्थापनम]

ननु [1]पूर्वमृत्विजामपरिज्ञाने पितृभूता मनुष्यभूता ऋत्विजो यद्युपरुध्यन्ते तदा दोषस्स्यात् । तथा [2]सर्वार्त्विज्ये वर्तमानानामज्ञाने यद्यहीनैः याजयेयुः । क्रतु[3] विशेषाज्ञानेऽप्य[4]हीनैर्याजयेयुः । प्रायश्चित्तीयत इति दोषस्स्यात् । तथा न्यस्तमार्त्विज्यं न कार्यमिति स्मृते र्दोषस्यात् । दक्षिणाविशेषाज्ञाने पश्चाद्विवादस्स्यात् । अतः कथमनित्यः प्रश्नः ? न ; सोमप्रवाकः प्रथम[5]मित्थं प्राह—[6]प्रवक्तव्यं ब्रूयात् ;—देवदत्तस्य ज्योतिष्टोमो भविष्यति यज्ञदत्तादय एनम याजयन् विष्णुमित्रादयो याजयिष्यन्ति । न किञ्चिदार्त्विज्यं यजमानदोषेण न्यस्तम् । कल्याण्यो दक्षिणास्सप्तप्रभृतयो भविष्यन्ति । [7]तद्भवता आध्वर्यवं कर्तव्यमिति । एवं सति प्रश्नानित्यत्वमुपपद्यत एव । छन्दोगमते आम्नातत्वात्प्रश्नवाक्यानाम् । [8]अर्थाज्ञानेऽपि प्रश्नः कर्तव्यः । दृष्टार्थत्वात्प्रश्नस्य । [9]ज्ञाने मा भूदित्यनित्यः ॥

[न्यायमते सहेतुदृष्टान्तं प्रश्ननित्यत्वव्यवस्था]

वेदत्रयो-न्यायः—अस्यार्थः ; शाखासु विकल्पः वेदेषु समुच्चय इति न्यायाद्याजुर्वेदिकानामस्माकं छन्दोगब्राह्मणस्य वेदान्तरत्वादुपसंहारो[10]ऽवश्यं कार्यः, अतो नित्यः प्रश्नो राजक्रयवत् ॥

---

[1] पूर्वर्त्विजा-ग. [2] सदाऽऽर्त्विज्ये-च. [3] क्रतुविशेष-च. [4] यदि हीनै-क. ख. [5] प्रथममेवेत्थं-ग. [6] प्रव्यक्तम्-च. [7] तत्र भवता—ग. च. [8] मंत्रत्वात् ज्ञातेऽपि—च. [9] ज्ञाते मा भूदित्यर्थः—ग. ङ. [10] आवश्यक उपसंहारः—ग

(रु) तं सोमप्रवाकं पृच्छति स स ऋात्विक् के पूर्वमाधानादिषु कर्मस्वृत्विजः, के चाद्य याजयन्तीत्यादि । सोऽपि यथायथं प्रतिब्रूयात् ॥

[पूर्वं वर्तमानर्त्विक्परीक्षाफलादिकम्]

तत्र पूर्वर्त्विक्परीक्षा तावत् पतितयाजकत्वादियजमानदोषशङ्कानिरासार्था । वर्तमानर्त्विक्परीक्षा च संभक्षणानर्हत्वशङ्कानिरासार्था । अहीनादिपरीक्षा तु तत्र याजननिषेधादेव । यथोक्तमाश्वलायनेन, न्यस्तमार्त्विज्यमकार्यमहीनस्य नीचदाक्षिणस्येति छन्दोगब्राह्मणवचनमादरार्थम् । विकल्पार्थमित्येके ॥

(सू.) अथ जपति महन्मेऽवोचो भर्गो मेऽवोचो यशो मेऽवोचः क्लृप्तिं मेऽवोचो भुक्तिं मेऽवोचस्सर्वं मेऽवोचस्तन्मावतु तन्माविशतु तेन भक्षिषीयेति ॥ १० ॥ १ ॥ ४ ॥ २६१९ ॥

(सू.) पद्वा नामासि स्रुतिस्सोमसरणी सोमं गमेयमिति पन्थानमातिष्ठते ॥१०॥१॥५॥२६२०॥

(सू.) देवो देवमेतु सोमस्सोममेत्वृतस्य पथा विहाय दौष्कृत्यमित्यभि प्रव्रजति ॥ १० ॥ १ ॥ ६ ॥ ॥ २६२१ ॥

(सू.) पितरो भूरिति दक्षिणावृत्तः पितॄनुपतिष्ठते ॥

(सू.) तान् वृणीते चतुरस्सर्वान्वैकैकशः ॥ १० ॥ ॥ १ ॥ ८ ॥ २६२३ ॥

(सू.) अध्वर्युं प्रतिप्रस्थातारं नेष्टारमुन्नेतारमित्यध्वर्यून् । ब्रह्माणं ब्राह्मणाच्छंसिनमाग्नीध्रं पोतार-

मिति ब्रह्मणः। होतारं मैत्रावरुणमच्छावाकं ग्रावस्तुतमिति होतॄन्। उद्गातारं प्रस्तोतारं प्रतिहर्तारं सुब्रह्मण्यमित्युद्गातॄन् ॥ १० ॥ १ ॥ ॥ ९ ॥ २६२४ ॥

['अग्निर्मे होता' इतिसूत्रोक्तक्रमेण अध्वर्यूद्गातृहोत्रादीनां वरणप्रकारविवरणम्]

(भा) सूत्रक्रमेणाध्वर्युं प्रतिप्रस्थातारमिति सोमप्रवाको वृणीते। यद्यकरिष्यन्नमस्सोमाय राज्ञे इति प्रब्रूयात्। अथ करिष्यन् 'महन्मेऽवोच' इति चातुस्स्वर्येण सोमप्रवाकस्य प्रतिमन्त्रणम्, तल्लिङ्गत्वात्। पद्धा नामासीति यजमानस्य [1]गृहपन्थानमातिष्ठते। देवो देवमेत्विति गच्छति। पितरो भूरिति प्राचीनावीत्युपतिष्ठते। तान्—तेनानीतान् यजमानः चतुरस्सर्वान्वा ऋत्विजः 'अग्निर्मे होता' इति मंत्रक्रमेण वृणीते। ऐकैकश इति वचनात् 'आपो मे होत्राशंसिन[2]' इति 'देवदत्तो मानुष' इत्येकमेकं वृणीते। अथवा अनाम्नातमंत्रा-[3]नृत्विजः अध्वर्यून् ब्रह्मणो होतॄनुद्गातॄनिति वचनादध्वर्य्वादिमंत्रैरेकमेकं वृणीते। मा भूत्संस्कारहानिरिति। आम्नातमन्त्रास्तु यौगपद्येन 'आपो मे होत्राशंसिनः, देवदत्तयज्ञदत्तविष्णुमित्रा मानुषाः' इति भरद्वाजमतात्, उपदेशाच्च। प्रतिप्रस्थात्रादीनामनाम्नातमन्त्राणां 'प्रतिप्रस्थातारं त्वां वृणीमहे' इत्येवंविधं वरणम्।

(वृ) सूत्र—णीते—सोमप्रवाकेनावेदितः प्रत्युक्तो वा।

[1] गृहं गन्तुं पन्थानं—च. [2] शंसिनो देवदत्तो मानुषः इत्येकमेकं वृणीते—ग. च. [3] मंत्रान् प्रतिप्रस्थातृप्रस्तोतृ—ग. प्रतिप्रस्थातृग्रावस्तुत्—ग. उन्नेतृसुब्रह्मण्यानृत्विज एकैकशो वृणीते—क. च.

**यद्य-यात्**—'नमस्सोमाय राज्ञे' इत्युक्त्वा नाहं करवाणीति ब्रूयात्।

**अथ करिष्यन्-मंत्रणम्**—कुर्यात्। जपतीति चोद्यते; कुतः प्रतिमंत्रणम्, 'महन्मेऽवोचः' इति।

**तल्लिङ्गत्वात्**—जपतिचोदना तु जपधर्मस्य चातुस्स्वर्यस्य प्राप्त्यर्था॥

**पद्वा-तिष्ठते**—प्रपद्यते।

**देवा-गच्छति**—यजमानाभिमुखः प्रीतमना गच्छति; 'महन्मेऽवोचः' इति प्रीतिलिङ्गात्।

यजमानगृहं प्राप्य; **पितरो-ष्ठते**—स्वान् पितॄन्;—

**तान्-ते**—ऐकैकम्; न तु सूत्रक्रमेण; मत्राणां सूत्रकारपाठ-क्रमस्य विवक्षितत्वात्। यद्यप्यनादेशे समाख्यानादाध्वर्यवम्; तथापि यजमान एव वृणीते। 'अग्निर्मे होता' इत्यादिमंत्रलिङ्गात्, तस्मान्न प्रकृतस्सोमप्रवाकोऽपि।

ननु [1] तान् वृणीते चतुरो वेत्येव सूत्रमस्तु न सर्वान्वेति वक्तव्यम्? मैवम्; येषां मंत्रस्तेषामेव वरणमन्येषां वरणं माभूदिति सर्वेषां वरणप्राप्त्यर्थं वक्तव्यम्॥

['ऐकैकशः' इत्याकारकसौत्रपदफालितपक्षत्रितयं विशदी-कृत्य तद्ग्रन्थाशयप्रकटनम]

**ऐकैकश-वृणीते**—अस्यार्थः;—इह हि त्रयः पक्षाः मंत्रवतां होत्रध्वर्युब्रह्मोद्गातृहोतृकाणामेव मंत्रेण वरणमितरेषाममंत्रकमित्येकः।

---

[1] प्रकृते—ङ.

सर्वेषां मंत्रे[1]णेत्येकः। आदित[2]श्चतुर एवेत्येकः। तत्र चतुरो वेति पक्षे एकैकश इति सूत्रमनर्थकम्; अग्निर्मे होतेत्यादिष्वेकवचन[3]लिङ्गात्। मंत्रवतां वरणपक्षे तु आपो मे होत्राशंसिन इति बहुवचन-[4]लिङ्गात् होतृकाणां मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकाग्नीध्रपोतृनेष्टॄणां युगपद्वरणे प्राप्ते एकैकश इति वचनात् एक मेकं वृणीते। 'आपो मे होत्राशंसिन' इत्यनेनैवा[5]विकृतेन मन्त्रेण[6] 'देवदत्तो मानुषः' इत्येवं 'असावसौ' इति वरणीयनामनिर्देशात्तस्य चैकत्वादिति॥

['अथवा' इति कल्पान्तरानुधावने बीजमुद्घाट्य तत्कल्पतात्पर्यविवरणम्]

ननु अप्शब्दस्य नित्यं बहुवचनान्तत्वात्तत्सामानाधिकरण्यकृतं होत्राशंसिन इति बहुवचनं न होतृबहुत्वकृतं, होत्राशंसिन इत्य[7]न्तस्य देवतादेशनत्वात्। असौ मानुष इत्यस्य प्रदर्शनार्थत्वे ऊहप्रसङ्गात् प्रकृतावूहनिषेधाच्च प्राप्तमेकैकशो वरणम्, अतस्स्पष्टार्थमेव स्यादत आह;—

**अथवा-वृणीते-अस्यार्थः**—सर्वान् वेति पक्षे प्रथमं मन्त्र-क्रमेण प्रथमं चतुरो होतॄन् वृत्वा अथाध्वर्यून् ब्रह्मण उद्गातॄनिति वर्गशो वरणं प्राप्नोति। अल्पीयांसो मन्त्रा भूयांसि कर्माणीति। तत्रैकैकश इति वचनादाम्नानक्रमेण होत्रादीन्[8] मैत्रावरुणपर्यन्तान् वृत्वा प्रतिप्रस्थात्रादिद्वितीयानच्छावाकपर्यन्तान्। एवं तृतीयान्

---

[1] मंत्रवरणमित्येकः—ग. [2] तश्चतुर्णामेवेत्येकः—ग. [3] नाल्लिङ्गात्—ग.
[4] नाल्लिङ्गात्—ग. [5] नैवाविकृतेन—च. [6] न देवदत्तो मानुष इत्येवम्—क. ग. ङ.
[7] इत्यस्य—च. [8] होत्रादिमैत्रावरुण—ग.

चतुर्थान् सुब्रह्मण्यान्तानिति वर्गान्त[1]रीयाणामपि ब्राह्मणाच्छंस्यादीनां होतृकाणामापो मे होत्राशंसिन इत्येव[2] तत्तत्स्थाने वरणम्। होत्रम्—हवनसाधनं याज्यादि आशंसन्ति उच्चैश्शंसन्तीति वषट्कर्तृवाचकत्वात् पूर्वगणितेभ्योऽन्यासंभवाच्च अन्यलिङ्गमन्त्राणामपवादकत्वात् अन्यान् प्रतिप्रस्थात्रादीनध्वर्य्वादिमन्त्रैः॥

[ऊहतदभावव्यवस्थापूर्वकमेकैकश इति पदप्रयोजनविवरणम्]

(वृ) ननु[3] तत्र 'आदित्यो मे प्रतिप्रस्थातेत्यूहः प्रसज्येत? मैवम्; अध्वर्यून् ब्रह्मणो होतॄन् उद्गातॄनिति वचनात् समाख्यानादध्वर्य्वादिमन्त्रैरेवाविकृतैर्वृणीते! यदि समाख्या[4]नादनूहः जात्यभिप्रायेणाभिधानसमुच्चयाद्युगपद्वरणं कस्मान्न स्यादत आह—एकमेकं वृणीते एकैकश इति वचनादिति॥

[प्रकारान्तरेण तत्प्रयोजनवर्णनम्]

ननु 'सर्वान् वृणीते' इति वरणेन सर्वेषां सम्बन्धः न तु मन्त्रैः—अतः प्रतिप्रस्थात्रादीनां वरणेन मन्त्रप्राप्तिः अत एव तत्रैकैकश इति वचनमनर्थकं सत् प्राचीनपक्षसामान्यं लभते अत आह—

**माभूत्सं-रिति-अस्यार्थः**—पूर्व[5]मेवागतानामिदं द्वितीयवरणं संस्कारार्थं भवति। स च संस्कारः 'ऋत्विजो वृणीते' इति सर्वशेषश्रुत्यावगम्यते 'अथ वरणाः' इति मन्त्र[6]वरणशेषाः प्रतीयन्ते श्रुत्यैव। एवं समन्त्रको[7] वरणसंस्कारः सर्वशेषस्सकृदेव श्रूयमाणः

---

[1] वर्गान्ते त्रयाणामपि—ग. [2] इत्येवमेव—ग. [3] ननु आदित्यो—ङ.
[4] समाख्या सामान्या—ग. [5] पूर्वमानमनार्थं द्वितीय—क. [6] मन्त्रा वरणशेषाः—ग.
[7] सर्वतो वरणसंस्कारः—च.

कस्यचिद्वि[1]नामाभूदिति प्राप्ते मन्त्रैर्युगपद्वरणे प्राप्ते[2] एकैकश इति वचनमर्थवदिति ॥

एवं तर्हि मन्त्रलिङ्गाविरोधाय सर्ववरणपक्षे[3] शेषत्वाच्चैकैकश इति वचनस्यानाम्नातमन्त्रः प्रतिप्रस्थात्रादय एकैकशो वरणीयाः ॥

(वृ) **आम्नात-द्येन**—वरणीयाः ; कथं यौगपद्येन वरणम् ?

**आपो मे-षा इति**—नात्रोहः[4] नामधेयग्रहस्यामन्त्रत्वात् । 'होतृकान् युगवद्वृणीते' इति भरद्वाजमताच्च ॥

[कारणान्तरानुधावने निदानं, तदाशयविशदीकरणं च]

नन्वेकैकश इति वचनं भर[5]द्वाजमतप्रतिषेधेनार्थवदस्तु ; मैवम्

**उपदेशाच्च**- आपो मे होत्राशंसिनस्ते मे होत्राशंसिनो देवयजनं मे दत्तेति होतृकानिति दर्शनात् इहापि सहैव वरणोपदेश इत्येष उपदेशपक्षः । सर्ववरणपक्षे यावन्मन्त्रवरणपक्षे च भवति । तत्र यावन्मन्त्रपक्षे उपदेशमते—

[भाष्योक्तवरणक्रमस्फुटीकरणम् 'वृणीमहे' इति बहुवचनतात्पर्यविवरणं च]

**प्रतिप्रस्थात्रा-वरणम्**—अध्वर्युप्रतिप्रस्थातृनेष्टून्नेतृ[6]नध्वर्यूनित्येवंप्रकारेणोपदेशेऽपि सङ्ख्यावर्गीया[7]णां प्रतीतावपि यदयमाचार्यः अध्वर्युं प्रतिप्रस्थातारं नेष्टारमुन्नेतारमित्यध्वर्यूनित्येवंप्रकारेणोपदिशति । अतो मन्त्रवरणात्प्रागेवाध्वर्युं त्वां वृणीमहे इत्येवंप्रकारं वरणं सर्वेषां

[1] कस्यचिद्धीनो मा भू-ग. च. [2] प्राप्तेर्युगप—क. च. [3] सर्ववरणपक्षशेषत्वात्-ग. च. [4] नात्रोहनम् , नामधेयग्रहणत्वादनुमन्त्रणत्वात्—च. ग्रहणत्वादमन्त्रत्वात्—क. [5] द्वाजप्रतिषेधे—ङ. [6] अध्वर्युप्रतिप्रस्थानृनध्वर्यूनित्येवं—च. [7] सङ्ख्यावर्गीयनामप्र—च. वर्गवर्गीयानामप्रतीतौ-

विदधातीति[1] गम्यते । अतः प्रतिप्रस्थात्रादीनामनाम्नातमन्त्राणामेतद्वरणं प्राप्नोत्येव । वृणीमहे इति बहुवचनं तु 'पाणिग्रहणाद्धि सहत्वं कर्मसु, तथा पण्यफलेषु द्रव्यपरिग्रहेषु च' इति वचनात् अस्मदो द्वयोश्चेति पत्नीयजमानाभिप्रायम् ॥

[जपविषये द्राह्यायण, भारद्वाजयोः अभिप्रायः]

(रु) अथ यदि याजयिष्यन्भवति ततो जपतीत्यर्थः । तथा च द्राह्यायणः । सोमप्रवाकमकरिष्यन्नमस्सोमाय राज्ञ इत्युक्त्वा प्रत्याचक्षीत । महन्मेऽवोच इति करिष्यन्प्रातिमन्त्रयेतेति । भारद्वाजमतात्त्वयाजयिष्यतोऽपि नित्यो जपः । यजमानगृहगामिनं पन्थानं प्रतिपद्यते ॥

तानागतान्सर्वानपि वक्ष्यमाणैर्मन्त्रैर्यजमान एकैकं वृणीते । महर्त्विज एव वा चतुरः । अथ तानेव सर्वाननुक्रामति ॥

[चमसाध्वर्यूणामृत्विग्धर्मराहित्यम् ]

अनुक्रमणादियत्ताऽवधृतेति चमसाध्वर्यूणामृत्विग्धर्मा महन्म इत्यादयो न भवन्ति । तथाऽध्वर्यून्होतॄनिति वर्गशोऽभिधानात्सर्वेऽध्वर्यवस्तमुद्गातार इत्यादिषु वर्ग्या एव सिद्धाः । वर्ग्याणां क्रमविशेषवचनात् 'यदप्रतिरथं द्वितीयो होताऽन्वाहाऽपति' इत्यादयश्च सिद्धाः । वरणक्रमस्तु वक्ष्यमाण एव, न त्वयम् । न च 'अध्वर्युर्वा ऋत्विजां प्रथमो युज्यते' इत्यनेनापि क्रमेण वरणमिति युक्तम् सूत्रविरोधात् मन्त्रविरोधाच्च ॥

[क्रमान्तराविरोधे सूत्रकृदभिप्रायः]

सूत्रकृतस्तु क्रमान्तराविरोधे मन्त्रक्रम एव बलीयानित्यभिप्रायः ॥

---

[1] तीत्यवगम्यते—ग. च.

(सू) सदस्यं सप्तदशं कौषीतकिनस्समामनन्ति ॥

(भा) कौषीतकिमतात्सदस्यवरणम् ; इतरथा षोडशैवर्त्विजः प्रतिहर्त्रन्ताः ॥

[सदस्यस्यैवात्र वैकल्पिकत्वम्]

(वृ) कौषी–णम्—पाक्षिकं शाखान्तरीयत्वात् । [1]अतोऽस्माकं मते सदस्याभावादाकाशो मे सदस्य इति मन्त्रस्य लोपः[2] । उद्गातारं [3]वृत्वा 'आपो मे होत्राशंसिन' इत्येवं ; सदस्यमित्यस्य वरणेन नान्वयः ; किं तु समाम्नानेन । अतः कौषीतकिमतात्सदस्य एव विकल्पते न वरणमात्रं तन्मतात् ॥

इतरथा–हर्त्रन्ताः—तन्मते सदस्यसहितास्सप्तदश चमसाध्वर्यव ऋत्विजः ; पाठादेव[4] सदस्यस्य सप्तदशत्वे सिद्धे पुनस्सप्तदशत्वग्रहणात्तस्य प्रयोजना[5]भावात् ॥

(रु) सप्तदशवचनात्सोऽपि ऋत्विग्धर्मान् लभते ॥

[उपद्रष्टुर्लक्षणं, अनुज्ञाकर्तॄणामपि ऋत्विक्शब्दबोध्यत्वं च]

(सू) स कर्मणामुपद्रष्टा भवति ॥ १० ॥ १ ॥ ११ ॥ ॥ २६२६ ॥

(भा) स च कर्मणामुपद्रष्टा ॥

(वृ) सच–द्रष्टा—सदस्यस्तस्मिन् [6]पक्षे वृत इतरैरनुष्ठीयमानानां विस्मृतानां विकल्पानां चोपदेष्टा भवति । अनेन 'स कर्मणामुपद्रष्टा

---

[1] अतोऽर्थाद्गम्यते सद–च. [2] लोपात्–च. [3] द्गातारं त्वां आपो–च. [4] प्रागेव सदस्यस्य सप्तदशत्वे सिद्धे–च. [5] प्रयोजनान्तराभावात्–ग. च. [6] पक्षे इतरैरनु–ख. च.

भवतीत्येतत्सूत्रं व्याख्यायते । वृतेनार्त्विजा कर्मणि [1]किञ्चित्कर्तव्यम् । अत्रो[2]पदर्शनमात्रेण [3]किञ्चित्काराभावात्तत्कार्य[4]मुपदेशः किञ्चित्कारो गृह्यते [5]उपद्रष्टृत्वं काले काले बोधयितृत्वमिति । ननु ऋतौ याजयतीत्यृत्विक्; स चाध्वर्य्वादिवत् कर्मानुष्ठातैव भवितुमर्हति ;— मैवम् ; अनुज्ञानादिकर्ताप्यृत्विक् ; यथा ब्रह्मा ॥

(रु) उपद्रष्टा साध्वसाधुनोरनुसन्धाता ॥

[चतुर्णामृत्विजां वरणपक्षे ब्रह्माध्वर्यूद्गातृहोतॄणां वरणविधिः]

**(सू) यदि चतुर आद्यान् ॥ १० ॥ १२ ॥ १ ॥२६२७॥**

**(भा)** चतुरः-होताऽध्वर्युः ब्रह्मा उद्गाता च । इतरे त्ववृताः कर्म कुर्वन्ति सह चमसाध्वर्यु[6]भिः, सदस्यश्च ॥

**(वृ) चतुरः—होता**—यदि चतुरो वृणीते तदा [7]आद्यान् मन्त्रक्रमेण ये आदौ भवन्ति, ते होताऽध्वर्युर्ब्रह्मोद्गाता च व्रियन्ते । न प्रतिप्रस्थात्रादयः । कुतः? 'अन्ताल्लोपो विवृद्धिर्वा' इत्यादितश्चतुर्णां वरणे प्राप्ते यत्पुनराद्यानित्याह तत उभयथाऽऽद्यत्वं ग्राह्यम् । तदुभयवर्गादित्वं मन्त्रपाठक्रमादित्वं च सङ्गृहीतं भवति । इतरत्रानुक्रमाद्यत्वमेव, समुच्चयायोगात् ॥

[सूत्रघटकाद्यशब्दसङ्ग्राह्यांशविशदीकरणम्]

· **इतरे-वन्ति**—अस्मिन्पक्षे इतरे त्ववृता एव मन्त्रेण कर्म कुर्वन्ति ; पूर्वं 'अध्वर्यु त्वां वृणिमहे' इत्येवं प्रकारेण सर्वेषां

---

[1] किञ्चित्कर्म कर्तव्यम्-**क.** [2] अतो दर्शनमा-**क.** तत्रोपदर्शन-**ख. च.** [3] कर्मभिः किञ्चित्काराभावात्-**क. च.** [4] भावात् न कार्योपदेशः-**ख. च.** [5] उपदेष्टृत्वं-**ग. च.** [6] ध्वऽर्य्वादिभिः-**ख.** [7] आद्यानुमन्त्रक्रमेण-**ग.**

वृतत्वात् । चतुरो वेति वरणमात्रप्रतिषेधेन [1] ऋत्विक्प्रतिषेधायोगात् [2] तत्तत्कर्मणामवश्यानुष्ठेयत्वाच्च[3] । ते चाऽवृता एव स्वकर्म कुर्युरित्यर्थः। यदि 'चतुर आद्यान्' इति चमसाध्वर्युपर्यन्तेषु मन्त्रेषु [4]समं पठितेषु आदितश्चतुर्णामुपादान[5]मितरस्य [6]परिसङ्ख्यानार्थम् ॥

यद्यपि शाखान्तरीय[7]त्वात् नास्मच्छाखीये सदस्यः; तथाऽऽप्याद्यांश्चतुर इति परिसंख्यानेन सन्निहितस्सदस्यश्च[8] परिसंख्यातः। स चाऽवृत एव कर्म कुर्यात् । यथा तद्वरणमन्त्रस्य मध्ये पाठात्क्रतुविशेषोऽङ्गीकृतः, तथा प्रतिषेधोऽपि ॥

(रु) यदि चतुरो वृणीते प्रतिवर्गमाद्यान्महर्त्विजो वृणीते । इतरे त्ववृता एव कुर्युः ॥

[वरणे उपांशुत्वोच्चैस्त्वादिविवेचनं, मतान्तरीयाशयविवरणं च]

(सू) अथ वरणाः ॥ १० ॥ १ ॥ १३ ॥ २६२८ ॥

**अग्निर्मे होताऽऽदित्यो मेऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो म उद्गाताऽऽकाशो मे सदस्य आपो मे होत्राशंसिनो रश्मयो मे चमसाध्वर्यव इत्युपांशु देवतादेशनम् । असौ मानुष इत्युच्चैः ॥ १० ॥ ॥ १ ॥ १४ ॥ २६२९ ॥**

इत्यापस्तम्बश्रौतसूत्रे दशमे प्रश्ने प्रथमा खण्डिका

---

[1] ऋत्विक्तुप्रतिषेधा—ग. [2] गात्कर्मणामवश्या—क. ग. त्कर्तृकर्मणामवश्या—ख. [3] त्वात्—ख. [4] सम्पठितेषु—ग. [5] इतरत्र सर्वस्य—च. [6] परिसङ्ख्या भवतीति—च. सङ्ख्या न भवतीति—ग. [7] यत्वादस्मच्छाखायामाद्यांश्चतुर इति—च. [8] सदस्यः। स चावृत—च.

(भा) अग्निर्मे होतेत्युपांशु । देवदत्तो मानुष इत्युच्चैः । एवमितरान् सदस्यं वृत्वा होतृकांस्तन्त्रेण वृणीते । मैत्रावरुणस्यार्थिनां मुख्यत्वात् । ततोऽध्वर्य्वादिमन्त्रैरर्धिनस्तृतीयिनः पादिनश्च ये न [1]गृहीता होतृकेषु । न चायमूहो भरद्वाज[2]पाठात् । केचिच्चतुर्णां वरणे ऋत्विजामेष नियम इति चमसाध्वर्युवरणे । चतुर्णां वरणे तु तत्पुत्रशिष्यादयः प्रति[3]प्रस्थात्रादीन्यार्त्विज्यानीति बैजवापिः ॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने प्रथमा खण्डिका.

---

(वृ) **अथ-वरणाः**—अत्राथशब्दः ' अध्वर्युं त्वां वृणीमहे ' इत्येवंप्रकारवरणानन्तयार्थः ; पूर्वानुक्रमणबाधार्थो वा ॥

**वरणाः**—वरणमन्त्राः पठ्यन्ते, एभिः व्रियन्त इति वरणाः । अग्निर्मे होता देवदत्तो मानुष इति होतुः, आदित्यो मेऽध्वर्युः यज्ञदत्तो मानुष इत्यध्वर्योः, एवं चन्द्रमा मे ब्रह्मेत्यादयः पञ्च ॥

**[प्रत्यभिवादनमन्त्रे शर्मान्तस्य नाम्नोऽनिर्देशे हेतुः]**

**अग्निर्मे-इत्युच्चैः**—तत्राग्निर्मे होतेत्येवमन्तं देवतादेशनमुपांशु वदेत् । ' देवदत्तो मानुष ' इत्येवमुच्चैः । एवमुत्तरत्राप्यसावित्यस्य स्थाने होत्रादीनां पितृ[4]कृतनामनिर्देशः । न नाक्षत्रमन्यद्वा निर्दिशति । यत्र तयोर्निर्देश इष्टस्तत्राह नक्षत्रनाम च निर्दिशति, कर्मनामधेयेन चाऽऽमन्त्रयत इत्येवम् । तथा न शर्मान्तं[5] प्रत्यभिवादनमन्त्रे, नाम्नोऽन्ते प्लुतविधाने एचोऽप्रगृह्यस्येत्यनियतवर्णान्त [6] नाम दर्शनात् ॥

---

[1] न वृताः-ख. [2] द्वाजमतात्-ख. [3] प्रस्थातृत्वादीन्या-ख. [4] धृतनाम-क.
[5] तथा नशर्मान्तरं प्रत्य-च. [6] वर्णान्तानामद-च.

[इतरशब्दार्थविमर्शनं, मन्त्रतन्त्रवरणीयर्त्वि-
ग्विवेचनं च]

**एवमितरान्**—वृणीते ; चतुर्णां वरणपक्षे उद्गात्रन्तान्। यावन्मन्त्रवरणपक्षे सर्ववरणपक्षे चोद्गातारं वृणीते सदस्यं वृत्वेतरान् मैत्रावरुणादीन्[1] अर्धिनस्तृतीयिनः पादिनश्च। यद्यपि सदस्यस्सप्तदशः, तथाऽपि मन्त्रपाठक्रमस्य विवक्षितत्वात्।

**होतृका-णीते-मन्त्रैः**—ततो यावन्मन्त्रवरणपक्षे सर्ववरणपक्षे चोपदेशमतादिहैव प्रति[2]प्रस्थात्रादीनां 'प्रतिप्रस्थातारं त्वां वृणीमहे' इति प्रकारेण॥

**अर्धिनः-नश्च**—होतृकेष्वनन्तर्भूतान् वृणीते। अत्रोपदेशमतात् अन्यत्र तेषां तूष्णीं आनमनार्थं कर्मैव कुर्यात्। एकैकशश्च होतृकान् वृणीते, न तेषां[3]वरणे क्रमनियमः सर्ववरणपक्षे उपदेशमते होतृकांस्तन्त्रेण मैत्रावरुणेन सह वृत्वा ततोऽध्वर्य्वादिमन्त्रैरर्धिनस्तृतीयिनः पादिनश्च वृणीते ये न गृहीता होतृकेषु॥

[4]अत्रैवोपदेशादन्यत्रैकैकशो वरणे 'आपो मे होत्राशंसिन' इति मैत्रावरुणं वृत्वा, 'आदित्यो मेऽध्वर्युः' इति प्रतिप्रस्थातारं वृत्वा, 'आपो मे होत्राशंसिन' इति ब्राह्मणाच्छंसिनं, 'पर्जन्यो मे' इति प्रस्तोतारं, 'आपो मे' इत्यच्छावाकं, नेष्टारमाग्नीध्रं चैकैकशः। ततः 'पर्जन्यो मे' इति प्रतिहर्तारं। पुनः 'अग्निर्मे' इति ग्रावस्तुतं 'आदित्यो मे' इत्युन्नेतारं 'आप' इति पोतारं 'पर्जन्य' इति सुब्रह्मण्यं इति॥

---

[1] णादीन् द्वितीयिमः-**पा. च.** [2] प्रस्थात्रादीन्-**ग.** [3] तेषां मते-**क.** तेषामानते: क्रम:-**ग. ङ.** [4] तत्रैवोपदेशा-**च.**

सर्ववरणपक्षे यावन्मन्त्रवरणपक्षे च वरणीयान् सर्वान् ऋत्विजो वृत्वा ततश्चमसाध्वर्यूंस्तन्त्रेण वृणीते 'रश्मयो मे चमसाध्वर्यवो देवदत्त यज्ञदत्तविष्णुमित्रा मानुषाः इति ॥

[केचिन्मतेऽध्वर्युवर्गीयाणां वरणप्रसङ्ग-
तादवस्थ्यम् ]

**केचित्-कुर्वन्ति**—केचिच्चतुर्णां वरणपक्षे ऋत्विजा[1]मेष नियम इति न चमसाध्वर्युवरणं कुर्वन्ति। तेषामाद्यशब्दस्याध्वर्युवर्गीयाणां वाचकत्वात्तेषामेव वरणप्रसङ्गो दुर्वारः। मन्त्रपरत्वे तु चमसाध्वर्यवः परसङ्ख्याता एव ॥

[बैजवाप्याचार्यमतोन्नेयविशेषांशोप-
पादनम् ]

**चतुर्णा-वापि**—तेषां वशवर्तिनः प्रतिप्रस्थात्रादीनि तत्तद्व-र्गीयकर्तव्यान्यार्त्विज्यानि कुर्वन्तीति बैजवापिराचार्यो मन्यते। तन्मते होत्रादिषु चतुर्षु[2] आर्त्विज्यनिवेशात्तद्वशवर्तिनां पुत्रादीनामाशौचादि-[3]सन्निपातेऽन्य आगमयितव्यः प्रयोगार्थे। दशैव चमसाध्वर्यवः। अनृत्विजामपि तेषां वरणपक्षे नाशौचादिभिरनधिकारः श्रौतसंस्कारा-वरुद्धत्वात् ॥

[चमसाध्वर्यूणां नियमितऋत्विगन्तःप्रविष्टत्वतदभावयोः
सोपपत्तिकं व्यवस्थापनम्]

ननु 'अर्धमासाश्च मासाश्च। चमसाध्वर्यवोऽभवन्'। इति दर्शनात्ते चर्त्विज एव। न, 'अहोरात्रे पशुपाल्यौ। मुहूर्ताः प्रेष्या

---

[1] त्विजां केषां नियम इति—च. [2] चतुर्ष्वेवार्त्विज्य—ग. च. [3] समवाये—च.

अभवन्।' इत्येवमादीनामपि तत्रो[1]पादानात्। तेऽप्यृत्विजस्स्युरिति चेत्; सप्तदशसङ्ख्या विहन्येत ॥

ननु 'सदस्यं सप्तदशं' इति सदस्यस्य सप्तदशत्वाविधानार्थम्; 'यजमानसप्तदशा' इति यजमानस्य सप्तदशत्वविधानार्थं; नर्त्विक्सङ्ख्याविधानार्थमिति चेत्; नैवम्; क्रमार्थत्वे[2] प्रयोजनाभावात्। वरणे पञ्चदशस्सदस्यः तानू[3]नप्त्रे यजमानः प्रथमः सह वाऽन्यैर्भवति। तथा चमसाध्वर्युप्रसर्पकसदस्येभ्यः इति प्रसर्पकैस्सह पाठ उपपद्यते, ऋत्विग्भिस्सह चमसाध्वर्युप्रभृतीनामपेक्षितानां विश्वसृजामयनेऽ[4]नुक्रमात्। इहापि राजक्रयप्रभृति[5]पालनार्थं पशुपालो ग्राह्यः। व्रतं भृणुतेत्यादि प्रैषार्थ[6]निर्वर्तनार्थं सनीहारादयोऽनुक्तलक्षणा[7] एव। व्रतप्रद[8]श्चान्यो ग्राह्यः। शमिता च निषिद्धजातिजः। ध्रुवगोपो राजपुत्रः। यज्ञारम्भे[9] प्रसर्पकास्सदस्याश्च षट् पञ्च वा 'सदस्या ऋतवोऽभवन्' इति 'येनर्तवः पञ्चधोत क्लृप्ताः। उत वा षड्धेति च; दोग्धा च दर्शपूर्णमासवत्प्रवर्ग्या[10]द्यर्थम्। सोमविक्रयी च। एते सर्वे ब्राह्मणा एवेत्युपदेशः। एते सर्वे ऋत्विग्वरणसमय एव ग्राह्याः, अवचनादनियता इति केचित् ॥

इति धूर्तस्वामिभाष्यवृत्तौ दशमे प्रश्ने प्रथमा खण्डिका

———

[1] मन्त्रोपादानात्-ग. [2] क्रमार्थत्वप्रयोज-च. [3] तानन्नु यजमानः प्रथमः-ग. [4] क्रमणात्-ग. ङ. [5] पावनार्थम ?-ङ. [6] पावनार्मेम-च. भवनार्थम-च. [6] र्थे निर्वचनार्थम-क. च. [7] णास्त एव-ग. च: [8] प्रदश्च ग्राह्य:-ग. [9] उत वा षड्वात्मनसोतक्लृप्ता इति-च. [10] प्रवर्ग्यार्थं सोमविक्रयीति-च.

(रु) मन्त्रा इति शेषः। अग्निर्म इत्यादिनो *पांशु देवता आदिश्यासौ इत्युच्चैः; निगदेत् †इति शेषः।

[होत्रादीनां समासतो वरणाकथनम्]

यद्यप्येकैकश इत्युक्तं तथापि होत्रकाणां समासत एव वरणम्। यथा विष्णुरुद्रकृष्णा मानुषा इति। तथा अमी मानुषा इति होत्रकानिति सत्याषाढः अनन्तरमाम्नातान् प्रतिप्रस्थात्रादीनमन्त्रं वृणीते। अथवा तानपि मन्त्रैरेव अध्वर्य्वादिसमाख्यानात्। क्रमश्चैषां सत्रदीक्षान्यायादध्वर्य्वादि क्रमेण व्यवस्थापनीयः।

[ऋत्विग्वरणानन्तरं तेषां मधुपर्कदानम्]

ऋत्विजो वृत्वा मधुपर्कमाहरेदित्याश्वलायनवचनात्। आचार्यो-यर्त्विजे श्वशुरायेति स्वयमभिधानात् ऋत्विजां मधुपर्कः कार्यः। भारद्वाजश्च ब्रह्मचारिण ऋत्विजः प्रचरन्ति तेषां संस्थिते कर्मण्यशन-प्रसिद्धिरित्याह। तथा न स्त्रियमुपेयुराक्रतोरपवर्गादित्याश्वलायनः॥

इति श्रीभट्टरुद्रदत्तप्रणीतायां आपस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमप्रश्ने प्रथमा खण्डिका

---

(सू) स्वर्गकामो ज्योतिष्टोमेन यजेत। एककाम-स्सर्वकामो वा युगपत्कामयेताहारपृथक्त्वे वा॥
॥ १० ॥ १ ॥ १५ ॥ २६३० ॥

---

* "करणवदशब्दममनःप्रयोगमुपांशु"
—इति तल्लक्षणम् तैत्तिरीयप्रातिशाख्ये ॥

† "अव्यवहितोत्तरवृत्तित्वप्रकारकानुसन्धानविशेष्यः"
—इति शेष इत्यत्रत्यस्यार्थः ॥

(भा) 'त्रिवृत्पञ्चदशस्सप्तदश एकवि ँ शः। एतानि वाव तानि ज्योती ँ षि। य एतस्य स्तोमाः। स ज्योतिष्टोमः[1]'। एककाम-स्सर्वकाम आहार एकैकं कामम्; त्रयाणामेकफलत्वात्॥

[ज्योतिष्टोमस्य चतुष्टोमत्वम्, तस्य च फलसम्बन्धव्यवस्था]

(रु) त्रिवृदादय एकविंशान्तास्स्तोमा यस्य स ज्योतिष्टोमः। तस्य च नित्यत्वादफलार्थिनापि कर्तव्यस्यैव सतो दर्शपूर्णमासादिवत्फल-सम्बन्ध इति द्रष्टव्यम्। व्याख्यातं चैतद्दर्शपूर्णमासयोरेककाम इत्यादिनैव॥

(सू) **वसन्ते ज्योतिष्टोमेन यजेत॥ १० ॥ १ ॥ १६ ॥ २६३१ ॥**

(भा) तस्य च वसन्तः कालः॥

(रु) कालविधिः॥

(सू) **अग्निष्टोमः प्रथमयज्ञः॥ १० ॥ १ ॥ १७ ॥ २६३२ ॥**

(भा) प्रथमे त्वाहारेऽग्निष्टोम एवानुष्ठेयः 'एष वाव प्रथमयज्ञो यज्ञानाम्' इति श्रुतेः। अग्नेः[2] स्तुतौ यज्ञायज्ञीयस्तोत्रपरिसमाप्तिः सोऽग्निष्टोमः॥

[अधिकारिविवेचनम्]

(वृ) सोमस्य ज्योतिष्टोम इति नामान्तरम्।

---

[1] ष्टोमः। तेन स्वर्गकामो यजेत—**क. ख.** [2] अग्निष्टुतौ यज्ञायज्ञियस्य स्तोत्रे परि—**क. ख.**

**त्रिवृत्पञ्च-स्तोमाः**—सामविशेषा भवन्ति । स ज्योतिष्टोमः [1] स तथोक्तस्सोम एव न केवलं तेन नित्याविकारिणा यष्टव्यः। एककामः सर्वकामो वा यजते। तत्र य एककामः स स्वर्गकामः तेन यजेत, न पश्वादिकामः । सर्वकामस्तु युगपदेकस्मिन्नेवाहारे कामयेत । [2] दीपस्तु स्वविषयं सर्वं युगपत्प्रकाशयत्येव ॥

[फलविशिष्टप्रयोगाणां याथाकाम्येनानुष्ठेयत्वव्यवस्था]

**आहारपृथक्त्वे वा**—आहारे आहारे वा एकैकं फलं कामयेत। एकस्य करणस्यैकफलत्वात् । वास्यादि सर्ववृक्षच्छेदनसमर्थमपि पर्यायेण करोति। न पुनर्युगपदिति। कामे[3]नापि[4] नित्यापूर्वं सिध्यतीति व्याख्यातमेव। न [5]चाभ्यासपक्ष एव फलार्थिनः प्रयोगाः, याथाकाम्येनानुष्ठेया एव ॥

[भाष्यस्थनिपातस्य यथाक्रमत्वे भिन्नक्रमत्वे चार्थमुपपाद्य वसन्तकालत्रैविध्योपवर्णनम्]

**तस्य च वसन्तः कालः**—तस्य च ज्योतिष्टोमस्य। चकारो भिन्नक्रमः, कालान्तरसमुच्चयार्थः । 'सोमेन यक्ष्यमाणो नर्तुं सूर्क्षेत्' इति । उदगयनं[6] त्वपेक्षते ऋतुमात्रबाधात् । अथ वा चकारो यथाक्रम एव। तस्य काम्यस्य नित्यस्य चेति। ततश्च पुनर्ज्योतिष्टोमग्रहणप्रयोजनमुक्तं भवति। ज्योतिष्टोममात्रस्य कालसम्बन्धविधानार्थत्वात्। कालान्तरं तु तत एव वचनात् सिध्यतीति। स कालो वसन्तस्त्रिविधः, फाल्गुनादयस्त्रयो मासा इत्येकः।

---

[1] स ज्योतिष्टोम इति दर्शनात्। यस्य ज्योतिस्संज्ञकाः स्तोमाः सामविशेषा भवन्ति स तथोक्तः—ग. च. [2] दीपवत्सर्वकामः स्वविष—क. [3] कामनानित्येन नित्या—ग. [4] नापीत्यनेन नित्या—च. [5] चाद्यपक्ष एव—ङ. [6] नं चावेक्षते ऋतुमात्रानाधानात्—च.

चैत्रादिद्वाविति द्वितीयः। मेषादिद्वाविति तृतीयः। 'फल्गुनी पूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य' इति दर्शनात्। शुक्लपक्ष[1] मारभ्य[2] वसन्तः प्रवर्तते। तत्र यदोत्तरफल्गुनीभ्यां पौर्णमासी सम्पद्यते, तदैव वसन्तः प्रवर्तते, न पूर्वफल्गुनीभ्यां योगे ; 'एषा वै प्रथमा रात्रिस्संवत्सरस्य। यदुत्तरे फल्गुनी। एषा वै जघन्या-रात्रिस्संवत्सरस्य। यत्पूर्वे फल्गुनी' इति च दर्शनात्। तथा 'चित्रापूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य' इति दर्शनात्॥

[पक्षद्वयोपष्टम्भकप्रमाणोपन्यासः]

'मधुश्च माधवश्च वासन्तिकावृतू' इति च द्वितीयः। मेष-वृषभराश्योर्यदा वर्तते सूर्यस्स तृतीयः सौरः। 'येनर्तवः पञ्चधोत क्लृप्ताः। उत वा षड्धा मनसोत क्लृप्ताः' इत्यादित्यस्य ऋतुकल्पकत्व-दर्शनात्। 'पर्वभिश्चातुर्मास्येषु मासान् संचष्टे' इति विशेष-वचनाच्च॥

[संस्थासामान्यस्यापि ज्योतिष्टोमत्वमिति पूर्वपक्षः]

तेषु यमाश्रित्यारभते तत्र सुत्यैव कार्या, नात्र सहाङ्ग प्रधानम्। देशे काले कर्तरीति निर्दिश्यत इति भवति नियमः। संवत्सरदीक्षाकल्पानामुक्तत्वात्। एकादिदीक्षाकल्पेषु संभवेऽपि वचनस्यैकरूपत्वात्तथा नियम एव। यथोक्तानिर्वच[3] नानुगमादग्निष्टोमादयस्सप्त संस्थाः ज्योतिष्टोमा एव। अतो यथाकाम-मनुष्ठेया इति चेत् ; न

---

[1] तच्छुक्ल–च. [2] माश्रित्य–क. ग. [3] चनादग्नि–च.

[प्राथमिकप्रयोगोत्तरमेषां याथाकाम्येनानुष्ठेयत्वमिति राद्धान्तः]

**प्रथमे–म एव श्रुतेः**—[1]कामिनाऽकामिना [2]वाऽभ्यस्यता सकृत्प्रयुञ्जानेनापि। अयं विशेषः प्रथमाहार इव द्वितीयादि[3]ष्विच्छया- ऽनुष्ठानम्, वचनस्यार्थवत्त्वात्। अयमाचार्योऽग्निष्टोममुक्त्वा 'उक्थ्य- ष्षोडश्यतिरात्र' इत्यनुक्रामति। तथा ऽन्यत्रापि 'अग्निष्टोमो ऽत्यग्नि- ष्टोम उक्थ्यष्षोडशी वाजपेयोऽतिरात्रो ऽप्तोर्यामः' इति। ततो- ऽनुक्रमणेनैवानुष्ठाने प्राप्ते [4]यथाऽऽह 'अग्निष्टोमः प्रथमयज्ञ' इति। तत उत्तरत्र क्रमनियमो बाधित एव। न केवलं ज्योतिष्टोमसंस्थां प्रत्येष नियमः; अन्याभ्योऽप्ययमेव। प्रथमप्रयोगानन्तरं ते यथाकामं प्रयोज्याः। न चेयमग्निष्टो[5]मस्य प्रथमयज्ञ इति संज्ञा क्रियते। 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इत्युत्तरत्र व्यवहारार्थम्। न चाग्निष्टोमः प्रकृतादन्यो ज्योतिष्टोमात्पुरतः कर्तव्यत्वेन विधीयते॥

(वृ) **अग्निस्तुतौ–ष्टोमः**—इति निरुक्त्या ज्योतिष्टोमनिरुक्त्यनु- गमाच्च[6] प्रकरणाच्च तदवान्तरविशेषोपपत्तेः॥

(रु) यज्ञायज्ञियस्य स्तोत्रे अग्निस्तुत्या यस्य संस्था सोऽग्निष्टोमः प्रथममाहर्तव्यः। न तूक्थ्यादयस्तद्गुणविकाराः; न चान्येऽहीनैकाहा इत्यर्थः॥

[अग्निष्टोमस्य ज्येष्ठयज्ञत्वप्रतिपादकश्रुतिकथनम्]

तथाऽग्निष्टोमं प्रस्तुत्य ब्राह्मणं, 'तस्मादाहुर्ज्येष्ठयज्ञ' इत्यादि 'स ह्येतेनाग्रेऽयजत' इत्यन्तम्। तथा 'एष एव प्रथमो यज्ञानाम्, य एतेना-

---

[1] नाभ्यस्यता—च. [2] मिना वाऽभ्यासात्प्रयु—ग. [3] द्वितीयादिष्वनुष्ठानम्
[4] यदाऽऽह—ग. च. [5] मःप्रथमयज्ञ इति—च. [6] माच्च तदवा—च.

निष्ट्वाऽथान्येन यजते कर्तपत्यमेव तज्जीयते वा प्र वा मीयत इति छन्दोगाः ॥

(सू.) **अतिरात्रमेके समामनन्ति ॥ १० ॥ १ ॥ १८॥ ॥ २६३३ ॥**

(भा) केचित्तु शाखिनोऽतिरात्रं पूर्वं पठन्ति ॥

(वृ) **केचित्तु-पठन्ति**—शाखान्तरीयत्वाच्छ्रुतिपाठयोर्न बलाबल-चिन्तेति ॥

(रु) गतः ॥

[ अभ्यासस्यानित्यतायां मानं, ज्योतिष्टोमचोदना-विरोधराहित्ये निदानं च ]

(सू.) **वसन्ते वसन्ते ज्योतिष्टोमेन यजेत। तस्य तिस्रो दक्षिणा इति छन्दोगब्राह्मणं भवति ॥ १० ॥ ॥ १ ॥ १९ ॥ २६३४ ॥**

(भा) [1] यास्त्वन्यास्संस्था उक्थ्यषोडश्यतिरात्राप्तोर्यामाश्च ताः प्रथमप्रयोगे न लभ्यन्ते। अभ्यासे तु कामसंयोगेन प्रथमेऽपि लभ्यन्ते। अनित्यस्त्वभ्यासः 'अपुनर्भक्ष्योऽस्य सोमपीथो भवति' इति लिङ्गात्। छन्दोगमतात्त्वभ्यासः। तिस्रश्च दक्षिणाः; अभ्यासपक्षे तु न ॥

(वृ) **यास्त्वन्या-भ्यन्ते**—यद्यपि ज्योतिष्टोमेन यजेतेति सह शिष्टानामप्यासां एकप्रयोगाननुप्रवेशेन क्रमविशेषस्याश्रुतत्वात् न ज्योतिष्टोमचोदनाविरोधः।

---

[1] यावत्य: संस्थाः—**च.**

**अभ्यासे-भ्यन्ते**—उक्थ्यादयस्संस्थाः। अभ्यासविधानात्प्रागेव विधानादभ्यासस्य मतान्तरीयत्वाच्च।

ननु वेदेषु समुच्चय इति न्यायात् अभ्यासमाश्रित्यैवाहारपृथक्त्वे वाऽग्निष्टोमः प्रथमयज्ञोऽ[1]तिरात्रं पूर्वमेके इत्याह[2]।

**[ सोपपत्तिकमभ्यासनित्यत्वनिश्चायकप्रमाणशून्यत्वोपपादनम् ]**

**अनित्य-लिङ्गात्**—वसन्ते वसन्ते ज्योतिष्टोमेन यजेतेत्येव कालसम्बन्धेनाभ्यासे च सिद्धे वसन्ते ज्योतिष्टोमेन यजेतेत्यारम्भसामर्थ्याच्च। तथा यस्सर्वकामस्स एवाहरे[3] एकैकं कामं साधयेत्। योऽकामस्स न कुर्यादेव। तथा [4]अभ्यासप्रतियोगिकेऽग्निष्टोमातिरात्रयोः पृथक्त्वे कश्चित् क्रत्वन्तरं प्रथमं कुर्यादेव। तदा चैष वाव प्रथमो यज्ञानामिति विरुध्यते। तस्माद्वैकल्पिके नित्याभ्यासे गुणफलन्यायेन नित्यापूर्वसाधनत्वाविशेषात्। उक्थ्यादिगुणेन पशुवीर्यादिसाधिकास्संस्थाः तत्फलकामिना प्रथमेऽपि प्रयोगे प्रयोक्तव्याः, दाक्षायणयज्ञादिवत्।

ननु 'वसन्ते वसन्ते ज्योतिष्टोमेन यजेत' इति नित्यवच्छ्रूयते। छन्दोगमताद्दक्षिणामात्रविकल्प इति [5]चेन्न, छन्दोगमतात्त्वभ्यास[6]स्तिस्रश्च दक्षिणास्तस्येति तच्छब्देनैकवाक्यताऽवगम्यते। 'ऐन्द्राग्नं पुनरुथ्सृष्टमालभेत य आ तृतीयात्पुरुषाथ्सोमं न पिबेत्' इत्यसोमपान एव प्रायश्चित्तदर्शनात्। 'यो यज्ञविभ्रष्टस्स्यात्' इत्यनेनाभ्यासस्य नित्यताऽवगन्तुं न शक्यते। यद्यन्येनाभ्यासो नियतोऽवगम्यते वचनेन प्रक्रमेण वा तदा तद्वैषो[7]ऽग्निष्टुतो निमित्तं भवितुमर्हति।

---

[1] अतिरात्रमेके पूर्वे समामनन्तीत्याह—च. [2] इत्याद्याह—ग. [3] हारे आहारे—ग. च. [4] भ्यासे गुण—ग. [5] चेत्तन्न—ग. [6] भ्यासः। अनभ्यासे च तिस्रश्च—ग. [7] तत्पक्षोऽनुष्ठितो—ग.

[ नित्यत्वज्ञापकप्रमाणानां तात्पर्यविशदीकरणम् ]

ननु ;—प्रति संवत्सरं सोमः पशुः प्रत्ययनं तथा ।
कर्तव्याऽऽग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ॥

इति नित्यत्व[1]वचनमिति चेत् न ; चातुर्मास्याभ्यासवत् , प्रत्ययनपशुवच्च विकल्पः, समानविषयत्वात् । इयांस्तु विशेषः ;—' यो वै सोमं भक्षयित्वा । सवत्सरꣳ सोमं न पिबति । पुनर्भक्ष्योऽस्य सोमपीथो भवति ' [2]इति प्रारभ्य सान्नाय्येन तदर्थनिर्वृत्त्या पुनर्भक्ष्यत्ववचनात् अशक्तिविषयोऽनभ्यास इति । ' अभ्यासे तु कामसंयोगेन लभ्यन्ते ' इत्येतद्भाष्यं केचिदेवं वर्णयन्ति सप्तदशस्य पुनः करणेऽभ्यासवचनात् अग्निष्टोमातिरात्रयोश्च प्रथमप्रयोगात्तयोरेवाभ्यासप्राप्तौ उक्थ्यषोडश्यतिरात्राप्तोर्यामाणामभ्यासपक्षो न लभ्यते इति कृत्वा तस्मिन्नपि पक्षे तासामपि संस्थानां पश्वादिफलकामनयोः प्राप्तिरुच्यत इति । इह पुनः ज्योतिष्टोमग्रहणमग्निष्टोमस्यातिरात्रस्य चैवाभ्यासो मा भूदिति । वसन्तग्रहणं वसन्तमात्रमेव ग्राह्यमिति । यदि संवत्सरे संवत्सर इत्युच्येत ; यस्यां तिथौ प्रथमप्रयोगः तस्यामेव तिथावभ्यासः कर्तव्यस्स्यात ; तथा मा भूत् वसन्ते कस्यांचिदनिषिद्धायां तिथौ यजेतेति ॥

(रु) पुनर्ज्योतिष्टोमग्रहणाद्द्वितीयादिप्रयोगेषूक्थ्यादिसंस्था लभ्यन्ते । तस्य प्रतिवसन्तमाहार्यतयाभिमतस्य प्रथमाहारप्रभृति तिस्रो दक्षिणाः । द्वितीयाहारप्रभृतीत्यन्ये ।

[ अभ्यासस्यानित्यत्वं, तत्र हेतवश्च ]

छन्दोगब्राह्मणमित्यनेन अभ्यासस्यानित्यत्वं दर्शितम् । न चेत्पूर्वतमसूत्रानर्थक्यप्रसङ्गात् । तस्य तिस्र इति व्यतिरेकवचनायोगाच्च । लिङ्गञ्च ' अपुनर्भक्ष्योऽस्य सोमपीथो भवति ' इति ॥

---

[1] नित्यत्वे वचन—ग. [2] तीति सान्नाय्य—ग.

[ प्राथमिकप्रयोगे बृहत्साम्नो निषेधः ]

(सू) **रथन्तरसाम्ना बृहत्साम्नोभयसाम्ना वा प्रथमं यजेत ॥ १० ॥ १ ॥ २० ॥ २६३५ ॥**

(सू) **न रथन्तरसामानमकृत्वा बृहत्सामानमाहरेदित्येके ॥ १० ॥ १ ॥ २१ ॥ २६३६ ॥**

(भा) प्रथमप्रयोगे बृहत्साम्नः प्रतिषेधः । अभ्यासपक्षे तु रथन्तरसामानमकृत्वा बृहत्सामा न लभ्यते ॥

(वृ) **रथन्तर-भ्यते**—अतः प्रथमे प्रयोगे बृहत्सामा न लभ्यते । तथा तृतीये प्रयोगे बृहत्सामा । यद्यपि प्रथमेऽपि प्रयोगे रथन्तरसामा; [1] अव्यवहितपूर्वकाले रथन्तरसाम्नः कर्तव्यत्वात् । प्रथमो रथन्तरसामा द्वितीयो बृहत्सामा तृतीयो रथन्तरसामा चतुर्थो बृहत्सामेत्येवं व्यत्यासेन प्रयोग इत्यर्थः । एषोऽभ्यासपक्ष एव; समाना[2]धिकरणत्वेनैककर्तृकत्वात् । न फलार्थतया पुनःपुनराहारे [3] क्रत्वन्तरे वा; तत्राधिकारभेदेन कर्तृभेदात् । बृहत्साम्नस्तु रथन्तरापेक्षया व्यत्यासेन रथन्तरसामोभयसामा च विनापि बृहत्सामानं सर्वदा भवतः । बृहत्सामा तु द्वितीयादौ [4] लभ्यते ॥

(रु) रथन्तरं होतुःपृष्ठं यस्य स रथन्तरसामा । तेन सोमेनेत्यर्थः । गतः ॥

[ सोमयागकालनिष्कर्षः, अमावास्याशब्दार्थश्च ]

(सू) **यदीष्ट्या यदि पशुना यदि सोमेन यजेतामावास्यायां वैव पौर्णमास्यां वा यजेत ॥ १० ॥ ॥ १ ॥ २२ ॥ २६३७ ॥**

---

[1] व्यवहित. [2] समानाधिकारत्वेनैक-ग. च. [3] क्रत्वन्तराहारे वा-ग. च.
[4] न लभ्यते-ग.

(भा) वसन्ते याऽमावास्या पौर्णमासी वा स सोमकालः। अङ्गाङ्गिभावादुभयोश्श्रुत्योः। इष्टिपशूनां तु प्रकृतिकाल[1]सिद्धत्वात्कालस्य पुन[2]र्वचनम् ॥

(वृ) **अमावास्या**—अपरपक्षपञ्चदश्याश्चरमक्षणः, तस्याल्पत्वात् साङ्गप्रधानानु[3]ष्ठानार्थं तद्युक्तमहोरात्रं गृह्यते, एकावयवत्वात् तादृशि।

**वसन्ते–स सोमकालः**—[4]अङ्गकालस्तु तदनुरोधेन पुरस्ताद्ग्राह्यः। माभूद्वसन्तोऽपि स्वतन्त्रः कालः। विशेषणविशेष्यभावेन।

**अङ्गाङ्गिभावादुभयोश्श्रुत्योः**—नाष्टदोषो विकल्पो ग्राह्यः। तस्मात्पर्वविशेषणत्वाद्वसन्तस्य सोमपूर्वाधाने न पर्वणोः प्रतिषेधः; नाङ्गवशवर्तीनि प्रधानानि भवन्तीति ॥

**[पुनरुक्तयुग्नेयविशेषांशोपपादनम्, अन्वारम्भणीयाश्विनैन्द्राग्नादीनामनुष्ठेयकालव्यवस्थापनं च]**

**इष्टिपशू–वचनम्**—'दर्शपूर्णमासाविष्टीनां प्रकृतिः; प्रकृतिवद्विकृतिः कर्तव्या' इति [5]चोदनेन प्रकृतिसिद्धत्वात्कालस्य [6]द्व्यहसाध्यत्वे अमावास्याविकाराणां प्राप्त्यर्थम्? प्राप्ते सद्यस्कालार्थं वचनमिदमत्र पूर्णमासविकाराणां नियमार्थम्; 'यद्यसद्यस्कालः पशुः, सद्यस्काला वरुणप्रघासा' इति दर्शनात्। नैमित्तिकानां तु निमित्तानन्तरमित्युक्तमेवेष्टिपशुसोमानाम्। तस्मादाधानानन्तरमेव निमित्तस्य विद्यमानत्वादैन्द्राग्नः पशुः कार्यः। अग्निहोत्रपूर्वे आधाने सायम्प्रातरग्निहोत्रं हुत्वा

---

[1] साध्यत्वात्–**ख.** [2] वचनम्–**ख.** [3] नासमर्थत्वात्–**ग.** [4] पौर्णमासी पूर्वपञ्चदश्याश्चरमक्षणः। तद्युक्तमहोरात्रम्; तत्र प्रातः स्वल्पायामपि पञ्चदश्यां प्रत्यासन्नतरत्वात् पूर्वस्या रात्रेः पश्चिमाद्भागाद्विप्रकृष्टतरमपि संधिमदहोरात्रं गृह्यते एकावयवित्वात्। तादृशी वसन्ते याऽमावास्या पौर्णमासी वा'। अयं ग्रन्थो **ग** पुस्तके नास्ति. [5] चोदकेन–**ग.** [6] अहकालसाध्य–**क.**

अन्वारम्भणीयां कृत्वैन्द्राग्नः पशुः यदा पुनरग्निहोत्रमेव संवत्सरं जुहोति तदा [1]न सम्भवत्येव। यदा इष्टिपूर्वकमाधानं तदा सेष्टि सान्वारम्भणीयं पौर्णमासीमपवृज्याथैन्द्राग्नः पशुः भवति। यदा तु संवत्सरं दर्शपूर्णमासावेव यजेत तदा न सम्भवत्येव परस्तात्तु भवत्येव। आश्विनस्तु सोमपिपासायां सोमात्पुरस्तात्पर्वणि कर्तव्यः। यदा पुनस्सोमपूर्वाधानं पर्वणि तदोभयमपि पुरस्तात्कृत्वा सोमात्सोमारम्भः। तदधिकारसम्पादकत्वात्तयोः ॥

[ऐन्द्राग्नाश्विनयोस्सोमविच्छेदनिमित्तकत्व-
दौर्ब्राह्मण्यनिमित्तकत्वोपपादनम्]

**केचित् अद्यतनविभक्तेरभावात्** सोमाधानेऽपि पर्वणि ऐन्द्राग्नाश्विनौ समानतन्त्रौ नानातन्त्रौ वा कृत्वा दर्शपूर्णमासादिभिरनिष्ट्वा सोममारभेतेति। [2]तस्मिन्पक्षे अग्निहोत्रं तु हूयतेऽग्निधारणार्थम्। सोमादनन्तरं च [3]दशहोत्रा सन्निहितं पुरुषार्थमग्निहोत्रमारब्धव्यमिति। तत्रैन्द्राग्नो वेदवेदिसम्बन्धे [4] विद्यमानेऽपि सोमविच्छेदनिमित्तो भवति 'ऐन्द्राग्नं पुनरुत्सृष्टमालभेत य आ तृतीयात्पुरुषात्सोमं न पिबेत्' इति श्रुतेः। आश्विनस्तु दौर्ब्राह्मण्यनिमित्तकः—

**यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम्।**
**स वै दुर्ब्राह्मणो नाम न सोमं पातुमर्हति ॥ इति।**

वेदवेदिविच्छेदस्य दौर्ब्राह्मण्यनिमित्तकत्वात् सोमविच्छेदस्यापि [5]वेदवेदिविच्छेदान्तर्गतत्वात्। 'आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणस्सोमं पिपासेत्' इत्यनेनैव चरितार्थत्वात्। आश्विने कृते

[1] न भवत्येव—ग. ङ. च. [2] ततोऽस्मिन् पक्षे—ङ. [3] दशहोतृसहितम्—क. ख. ग. च. [4] सम्बन्धेष्वपि सोम—ग. ङ. च. [5] वेदिविच्छेद.

नैन्द्राग्नः कर्तव्यः । निमित्तभेदादुभावपत्त्युपदेशः । अन्वारम्भणीयां[1] कृत्वा सह वा नाना वा कर्तव्यौ ॥

## [सोमपूर्वकाधाने उपदेशमते विशेषः]

केचित्तु ;—

सावित्रीमात्रसारोऽपि [2]नासौ दुर्ब्राह्मणो भवेत् । इति स्मृतेः ।

'यस्य पिता पितामहो वाऽ[3]नुपनीतौ स्याताम्' इति दर्शनात् । तत्राश्विनो नित्यः । ऐन्द्राग्नश्च सोमविच्छेदानिमित्तो[4] नित्यः । यस्य पुनस्सावित्र्यविच्छेदः तस्याश्विनो न भवतीति । सोमपूर्वाधानेऽग्नीषोमी[5]यस्योपाल[6]म्भ इत्युपदेशः तदाऽग्नीषोमीयतन्त्रान्तर्भावस्तयोः । तदानीमपि तयोर्नि[7]मित्तमविहितमेवेति ॥

## [पर्वणोरनुष्ठेयांशप्रतिपादनम्]

(रु) यदहः क्षीणः पूर्णो वा स्याच्चन्द्रमाः तदहरमावास्यापौर्णमासीशब्दाभ्यामुच्यते तथा व्युत्पत्तेः । स कालस्सर्वेज्यानाम् । इष्टीनां तु कालस्य प्रकृतिसिद्धत्वात् सद्यस्कालत्वार्थं वचनम् । ताश्च साङ्ग प्रधानामिति न्यायेन सन्धिमत्येवाहानि साङ्गप्रधानास्सन्तिष्ठन्ते । तथा काम्येष्टीः प्रकृत्य सत्याषाढः 'सद्यस्कालास्सान्नाय्यवत्यस्तु व्यहकाला' इति । पशुस्तु व्यहकालोऽपि यद्यसद्यस्काल इति लिङ्गात् । बोधायनश्च 'इष्टिपशुबन्धाः सोपवसथास्सद्योयज्ञा वा' इति । प्रकृत्यविरोधश्चाग्रयणे दर्शितः ॥

---

[1] णीयामकृत्वा—ग. [2] न हि दु—च. नैव—ग. [3] नुपेतौ—ग. [4] निमित्तः । यस्य—च. [5] येनो—च. [6] पालम्भस्यापि—ग. च. [7] मि विहित—च. यवि.

[देवयजनसदसद्भावाभ्यां स्वपरमतयोर्वैलक्षण्यम्]

(सू) देव वरुण देवयजनं मे देहीति यजमानो राजानं देवयजनं याचेत् ॥ १० ॥ १ ॥ २३ ॥ ॥ २६३८ ॥

(भा) देवयजनयाच्ञा विद्यमानेऽपि स्वदेवयजने। केचित्त्वाहुः;— यस्य न विद्यते देवयजनं स राजानं याचेदिति ॥

(वृ) देव-जने—नित्या; राजक्रयवत्संस्कारत्वात् ॥

[परमतपोषकयुक्त्याद्युपपादनम्]

**केचित्त्वा—याचेदिति** — अस्यार्थः;—सङ्कल्पानन्तरमेवात्र 'राजानमाहृत्य पयसौदनेन परिवेविषन्त्याक्रयात्' इति वचनात्पूर्वमेवाहृतस्य राज्ञः क्रयस्संस्कार इत्यवगन्तुं शक्यते। [1]यद्वा कौत्साद्राजानं क्रीणीयादित्यस्वामिनस्सकाशादपि क्र[2]यविधाने संस्कारत्वेनोपपद्यते। इह त्वविद्यमानदेवयजनो यः स राजानमेव याचेदिति नियमा[3]द्विधेर्लाघवं स्यादिति। तेषां मतेऽविद्यमानदेवयजनो याचेदेव। न क्रीणीयात्, राजानमेव याचेन्नान्यम्; इति च नियमद्वयविधानमेकत्र[4] विध्यपवादप्रसङ्गश्च दुर्वारः। देवयजनं मे देहीति मन्त्रलिङ्गात् देवयजनस्य याजमानत्वे सिद्धे पुनर्यजमानग्रहणं प्रत्यगाशिषो मन्त्रान् जपतीति जपमात्रं याजमानम्; करणं[5] त्वाध्वर्यवं स्यादिति। **अथवा** यजमानमात्र[6]विधानार्थम्, तस्माद्यस्य न विद्यते देवयजनं, यस्य च विद्यते, यस्य च प्रतिग्रहो निषिध्यते राज्ञो[7] वैश्यस्य च तस्याऽपि याच्ञा नित्येति ऋत्विग्भिस्सह गत्वा याचितव्यम् ॥

---

[1] यथा कौत्सा—ग. तद्वा—च. [2] क्रयविक्रयदानसंस्कारत्वेनैवोप—ग. च. [3] मावगतेर्लाघवं—ग. [4] कविध्य—ग. [5] करणं चा—च. [6] मानमन्त्रस्य. [7] राज्ञोऽपि वैश्यस्य तच्छान्तित्वे ऋत्विग्भिस्सह—च.

(रु) विद्यमानेऽपि नित्या याच्ञा, तद्वतो राज्ञोऽपि याच्ञा-वचनात् ॥

[सौत्रयोर्यत्तत्पदयोः फलम्, आशिषः काल-विवेचनं च]

(सू) स यदि ददाति देवयजनवान् भूया इत्येन-माह यदि न ददाति यदहं देवयजनं वेद तस्मिस्त्वा देवयजन आक्षिणोमीति ॥ १० ॥ १ ॥ ॥ २४ ॥ २६३९ ॥

(भा) यदि न ददाति तदा[1] तमाह यदहं देवयजनं वेदेति ॥

(वृ) यदि न ददाति—यदि ददातीत्येव सिद्धेऽपि यत्तच्छब्द-मुच्चरति तस्येदं प्रयोजनम्—याचित एव यदि सश्रद्धं ददाति तदैव देवयजनवान् भूया इत्याशीः । यदि निर्ब[2]न्धाद्वाऽनुव्याहारभयाद्वा तदा नाशीः ॥

(धू) यदि न-वेदेतीति—यदि न ददाति स ततो दाना[3]न्निमित्तादेन-माहेति पूर्वेण सम्बन्धः । तत एनमाह यदहं देवयजनं वेदेत्यनु-व्याहरिष्यतः प्रतिज्ञामन्त्रार्थः ॥

(रु) उत्तरवाक्येऽप्याहेत्यनुषङ्गः ॥

[ऋत्विक्करणकशापप्रतिपादनम्]

(सू) अथैनमनुव्याहरन्ति मन उपावधीर्मनस्त्वा हास्यतीति ब्रह्मा । वाचमुपावधीर्वाक्त्वा हास्य-

---

[1] तत एनामाह—क. ख. [2] निबन्धनादिना अनु—ग. च. [3] दाननिमित्ता-देन—ग.

**तीति होता। प्राणमुपावधीः प्राणस्त्वा हास्यतीत्यध्वर्युः। चक्षुरुपावधीश्चक्षुस्त्वा हास्यतीत्युद्गाता। आत्मानमुपावधीरात्मा त्वा हास्यतीति सदस्यः। प्रजामुपावधीः प्रजा त्वा हास्यतीति यजमानः। अङ्गान्युपावधीरङ्गानि त्वा हास्यन्तीति होत्रकाः। भूतान्युपावधीर्भूतानि त्वा हास्यन्तीति सर्व ऋत्विजः ॥ १० ॥ १ ॥ २५ ॥ २६४० ॥**

इत्यापस्तम्बश्रौतसूत्रे दशमे प्रश्ने द्वितीया खण्डिका

---

(भा) ऋत्विजोऽस्य शापं प्रयच्छन्ति ब्रह्मादयो मन उपावधीरित्येतैर्मन्त्रैः। सर्वे ऋत्विजो यैरपि पूर्वमनुव्याहृतं तेऽपि। न चानुव्याहारदोषः वचनकृतत्वात्। अन्यं राजानं पुनर्याचति यावल्लभ्यते ॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने द्वितीया खण्डिका.

---

(वृ) **अथैन–रन्ति** — अथशब्दोऽर्थकृत्यप्रतिषेधार्थः समक्षवाची वा; 'अनेकार्था निपाता' इति। अनुव्याहारश्शापः, न तु यजमान[1]न-व्याहारः।

**ऋत्विजोऽस्य**—यजमानस्यारब्धदेवयजनस्य अदात्रे राज्ञे। ब्रह्मादीनामुत्तरत्रोपादानान्न यजमानप्रेष्याः। ब्रह्मादीनामुपादानं मन्त्र-

---

[1] यजमानव्याहारमनुव्याहारः--ग.

विशेषसम्बन्धार्थं ब्रह्मादय एव; नाध्वर्य्वादयो होत्रादयो युगपद्वा। याजमान[1]स्य मन्त्रमध्ये पाठः क्रमविशेष[2]विवक्षाहेतुरिति।

[भाष्यगतमन्त्रपदतात्पर्यवर्णनं, मन्त्राणां सावधानेनोच्चारणीयत्वे मानं च]

**मन उपा–मन्त्रैः**—मन्त्रत्वेऽध्ययनादेव सिद्धे यत् मन्त्रग्रहणं करोति भाष्यकारस्तदे[3]व स्मारयति।

मन्त्रो हीनस्स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

इति, 'प्रत्यगेनमभिचारस्तृणुते' इति च, तस्मादवहितैरुच्चारयितव्या इति।

**सर्व ऋ–तेऽपि**—ऋत्विङ्मात्रग्रहणे ये[4] यजमानम[5]नुव्याहृतवन्तस्त एव स्युः।

**न चानु–दोषः**—यजमानस्यर्त्वि[6]जां वा।

**वचनकृतत्वात्**—देवयजनयाच्ञायां प्रवृत्तेन नै[7]तावत्येव विरमितव्यम्।

[प्रार्थनायाः प्राप्त्यवधिकत्वम्]

**अन्यं–भ्यते**—मन्त्रेण; वरुणलिङ्गकत्वान्मन्त्रस्य। स[8]कृदेव वरुणो या[9]चित इति न मन्तव्यम्; विनियोगानुरोधेन मन्त्र-

[1] याजमानमन्त्रस्य मध्ये–ग. च. [2] क्रमविशेषस्य विवक्षितत्वे हेतुः–ग. [3] तदेतत् स्मारयति–ग. च. [4] येनानुव्याहृतवन्त–ग. [5] मननुव्याहृत–च. [6] जां च–घ. [7] न तावत्येव–ग. [8] न तु देव–ग. [9] याचितव्य इति मन्तव्यम्–ग.

पदैर्वर्तितव्यत्वात् गार्हपत्ये इन्द्रशब्दवत् देवनकर्तृत्ववरणीयत्वाका[1]रेण अत्रापि लाभालाभयोः पूर्ववदेव । [2]यावल्लभ्यते यावल्लाभः; एवमेव याच्ञा कर्तव्या विद्यमानदेवयजनस्य राज्ञा दानं नाम तस्यैवाभ्यनुज्ञा कार्या । राज्ञो विषयवासिनां च सर्वेषां क्षेत्रादावन्यथा स्वत्वं परस्वरा[3]द्यादानं विद्यत एव तथा[4]विषस्वाम्या[5]पेक्षया देयं प्रतिग्राह्यं च ॥

इति श्रीकौशिकरामाग्निचिद्वृत्तौ दशमे प्रश्ने द्वितीया खण्डिका

---

(रु) एनं अदातारम् । अनुव्याहारः शापः । सर्वे उक्ता अनुक्ताश्च । तमेव शप्त्वा ततोऽन्यं याचते ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमप्रश्ने द्वितीया खण्डिका

---

[देवयजनप्रार्थनामन्त्राः]

(सू) राजा देवयजनं याचति अग्निर्होता स मे होता होतर्देवयजनं मे देहीति होतारम् । आदित्योऽध्वर्युस्स मेऽध्वर्युरध्वर्यो देवयजनं मे देहीत्यध्वर्युम् । चन्द्रमा मे ब्रह्मा स मे ब्रह्मा ब्रह्मन् देवयजनं मे देहीति ब्रह्माणम् । पर्जन्य उद्गाता स म उद्गातोद्गातर्देवयजनं मे देहीत्युद्गातारम् ।

---

[1] रेण राजनिवृत्तेः । तत्रापि—ग. च. [2] यावल्लाभमेव या—ग. च. [3] स्वराबाधेन वि-ग. च. [4] तथाऽपि परस्वाम्यपेक्षया—च. [5] स्वस्वापेक्षया—ग.

आकाशस्सदस्यस्स मे सदस्यस्सदस्य देवयजनं मे देहीति सदस्यम्। आपो होत्राशंसिनस्ते मे होत्राशंसिनो होत्राशंसिनो देवयजनं मे दत्तेति होत्रकान्। रश्मयश्चमसाध्वर्यवस्ते मे चमसाध्वर्यवश्चमसाध्वर्यवो देवयजनं मे दत्तेति चमसाध्वर्यून् ॥ १० ॥ १ ॥ २६ ॥ २६४१ ॥

(भा) राजा च[1] पुनः स्वानृत्विजो देवयजनं याचति अग्निर्होतेत्येतैर्मन्त्रैः ॥

(वृ) राजा च पुनः—मन्त्रैः—स्वानृत्विजः—चमसाध्वर्युसहितान् ॥

(रु) राज्ञो होत्रादीनामनुज्ञापनमेव याचनम् ॥

[देवयजनप्रार्थनां निषिध्य देवतासामान्योपस्थानविधिः]

(सू) अपि वा न देवयजनं याचेद्देवता एवोपतिष्ठेत। सक्षेदं पश्य विधर्तरिदं पश्य नाकेदं पश्य रमतिः पनिष्ठर्तं वर्षिष्ठममृता यान्याहुः। सूर्यो वरिष्ठो अक्षभिर्विभात्यनु द्यावापृथिवी देवपुत्रे ॥ १० ॥ ॥ १ ॥ २७ ॥ २६४२ ॥

(भा) न वा देवयजनयाच्ञा; सर्वेषां देवानामेवोपस्थानम्; या[2] मन्त्रवर्णेषु देवताः 'देवयजनꣳ ह्येष पृथिव्या आगच्छति यो यजते' इति लिङ्गात् ॥

---

[1] यजमानः स्वानृत्विजः—क. ग. च. [2] यास्तु—च.

(वृ) न वा–याच्ञा—किं राज्ञः ; न हि, सर्वेषामेव । पुनर्देवयजनग्रहणेन देवयजनयाच्ञामात्रनिषेधात् । अलब्धदेवयजनस्य याच्ञा अर्थप्राप्ता[1] निषिध्यते । सा नियमा न निषिध्यते अपि वेत्यपिशब्दः तादर्थ्यम् । देवतानामेवोपस्थानम् अस्मिन्[2] पक्षे याच्ञैव ; अन्यत्रैवकारस्यार्थवत्त्वात् । कासां देवतानाम्—

या मन्त्रवर्णेषु–वताः—ता[3]सां न वास्तुदेवताः, न सौमिक्यः, प्रकरणाल्लिङ्गस्य बलीयस्त्वात् ॥

(रु) अयं कल्पस्त्रयाणामपि ॥

[सोपपत्तिकं देवयजनाध्यवसानस्य याजमानत्वव्यवस्थापनम् ]

(सू) 'एदमगन्म देवयजनं पृथिव्या' इति देवयजनमध्यवस्यति ॥ १० ॥ १ ॥ २८ ॥ २६४३ ॥

(भा) अध्यवसानं याजमानमेव । 'इन्धनव्रतनाध्यवसानसन्निपाते'* इति सूत्रकारवचनाच्च ॥

(वृ) अध्यव–व—एदमगन्मेति यद्यपि बहुवचनम् ; तथाऽपि 'देवयजनꣳ ह्येष पृथिव्या आगच्छति यो यजते' इति लिङ्गात् देवयजनाध्यवसानम् याजमानम् ; नार्त्विज्यम्[4] ।

ननु अर्थवादिकाल्लिङ्गाद्विनियोजकमन्त्रलिङ्गं बलीयः[5] ।कन्न? मैवम् ; न केवलार्थवादिकाल्लिङ्गात् ; अपि तु ;—

इन्धन–नाच्च—देवयजन[6]देशान्तरगमनम् ; एदमगन्मेति लिङ्गात् । बहुवचनं तु सपत्नीयाभिप्रायम् ॥

*'घृतानुषिक्तां पूर्वामादधाति' इति सूत्रशेषः । इदं च सूत्रं षोडशप्रश्नीयम् ॥

[1] प्राप्ता तु नि--ग. च.   [2] नित्यपक्षे–क.   [3] न सौमिकीः–च.   [4] नर्त्विजाम्–च.   [5] यः , मैवम्-क. ग.   [6] यजनस्य–क.

(रु) अध्यवस्यति सहाग्निभिर्वासार्थं अनुप्रयायावस्येदित्यर्थः। अवस्यतेस्तथा दर्शनात्। एदमगन्म देवयजनमिति मन्त्रवर्णाच्च। दीक्षितस्य प्रयाणमध्यवसानं चोपरिष्टाद्वक्ष्यति। न चात्र वास्तोष्पतीयावसितहोमौ; कर्मार्थप्रयाणत्वात्। अत्रापि भवत इति केचित्॥

[देवतोपस्थानानन्तरमपि प्राग्वंशस्य कर्तव्यत्वव्यवस्था]

**(सू) प्राग्वंशस्य मध्यमं स्थूणाराजमारभ्य जपतीति वाजसनेयकम्॥ १०॥ १॥ २९॥ २६४४॥**

(भा) [1]कृतप्राग्वंशस्य चाध्यवसानम्, [2]स्थूणाराज[3]मालभ्येति वचनात् 'पूर्वया द्वारा प्राग्वंशं प्रविश्य' इति (२०-२-२) अश्वमेधे वचनात्। अथ कर्मक्रमः;—शोधयित्वाऽऽत्मानं वैराणि च प्रशाम्य सङ्कल्पं कुर्यात्। समाप्तिसिद्ध्यर्थं च; कृत्वा प्राणायामं प्रातःकाले सोमेन यक्ष्ये, ज्योतिष्टोमेनाग्निष्टोमेन रथन्तरसाम्ना द्वादशशतदक्षिणेन स्वर्गं लोकमवाप्नवानीति सङ्कल्पः। विद्युदसि। ततस्सोमप्रवाकप्रस्थापनम्। तेनानीतानामध्वर्युप्रभृतीनामर्घ्यादिपूजां कृत्वाऽग्निर्मे होतेति मन्त्रक्रमेण ततो मधुपर्को भोजनान्तः 'पुनर्यज्ञविवाहयोश्च' इति श्रुतेः। ततो देवयजनयाच्ञा देवतोपस्थानं वा। ततो नान्दीश्राद्धं ततोऽध्यवसानं देवयजनस्य आज्यं पशवः पुरोडाशीया एते मे यज्ञार्था इति तस्य पृथक्करणम्॥

(वृ) कृतप्राग्वंश–नम्—अकृतप्राग्वंशस्य कृतप्राग्वंशस्य चाध्यवसानं भवति विकल्पेन।

---

[1] अकृत—ख. [2] प्राग्वंशस्य मध्यमं स्थू—क. ग. च. [3] मालभ्य जपतीति वच—च.

**प्राग्वंशं-वचनात्**—यदा दीक्षणीयायाः पुरस्तादुपरिष्टाद्वा प्राग्वंशं करोति, तदा कृतेऽपि प्राग्वंशेऽध्यवसानं विकल्पेन कर्तव्यमिति।

ननु अत्र 'देवयजनाध्यवसानमेके समामनन्ति' इति [1]वचनाद्यदाऽध्यवसानं तत्र स्थूणालम्भप्रकारमध्यवसान[2]मस्तु, नान्य[3]दध्यवसानं वचनाभावात ; मैवम् :—

**पूर्वया-दर्शनात्**—पुरस्तादेव दीक्षणीयायाः। तस्माद्देवतोपस्थानानन्तरमपि प्राग्वंशः कार्यः।

[ पातकसामान्यस्य निष्कृतेरवश्यानुष्ठेयत्वव्यवस्थापनम् ]

**शोधयित्वाऽऽत्मानम्**—कृच्छ्रचान्द्रायण[4]पावनजपकूश्माण्ड-गणहोमप्राणायामगायत्रीजपतिलहोमतीर्थयात्रासेतुदर्शनादिभिः विद्वद्ब्राह्मणैरनुज्ञातः।

**वैराणि च प्रशाम्य**—किमर्थम् ? अधिकारसिद्ध्यर्थम् ; न [5]ह्यशुचेरधिकारोऽस्ति ! शुचिना कर्तव्यमिति स्मृतेः। पूतः कर्मण्यो भवतीति श्रुतेश्च। [6]पातकानां द्विजातिकर्मभ्यः पतन[7]हेतूनां निष्कृतिरवश्यं कर्तव्या। तथा वैरिणोऽपि 'निर्वैरस्सर्वभूतेषु यज्ञेष्वधि कुर्यात्' इति स्मृतेश्च।

---

[1] नादध्यवसानं-च. [2] सानं तु. [3] नान्यदाऽध्यवसानवचना-ग. [4] पावमानजप-च. [5] ह्यशुचेरत्राधिका-क. ग. च. [6] सपातका-च. [7] हेतुत्वात्तेषां-क. ग. च.

[अभिचरिता द्विविधः ; सर्वजनवैरी, अल्पजनवैरी चेति। तत्र आद्यस्यानधिकारात् द्वैतीयीकस्यैवानुष्ठान-योग्यत्वव्यवस्थापनम् ]

ननु यद्यभिचरेदित्येवमाद्यभिचरितुः प्रयोगा दृश्यन्ते। कथं [1]वैरिणो नाधिकारः? उच्यते ; अभिचरितुरपि सर्वजनवैरिणोऽ[2]नाधिकार एव, शास्त्रस्यानन्यगतिकत्वात्। अभिचरि[3]तुरल्पवैरिण एवाधिकाराभ्यनुज्ञा। न केवलमधिकारसिद्ध्यर्थं शोधनं प्रशान्तिश्च ;

[अज्ञातप्राचीनपापापनोदनायैव कूश्माण्ड-गणहोमादेरनुष्ठेयत्वनियमः]

**समाप्तिसिद्ध्यर्थं च** — प्रारीप्सितकर्मणोऽविघ्नपरिसमाप्त्यर्थं तत्कार्यसिद्ध्यर्थं च ; यतः पापानि श्रेयांसि प्रतिबध्नन्ति जन्मान्त[4]रार्जितान्यपि विरुद्धाश्च विघातमाचरन्ति दृष्टादृष्टोपायैः। [5]अतः प्राचीनानामज्ञातानां च पापानामपनुत्तये कूश्माण्ड[6]गणहोमः कार्यः। 'कर्मादिष्वेतैर्जुहुयात्पूतो देवलोकान् समश्नुते' इति नित्यवद्वचनात्। ततः परिसरवर्तिनस्सर्वानाहूय सत्कृत्याभ्यनुज्ञा कर्तव्या। 'यदेवा-ब्राह्मणोक्तोऽश्रद्दधानो यजते + शंयुमेव तस्य बार्हस्पत्यं यज्ञस्याऽऽशी-र्गच्छति' इति लिङ्गात्। एतत्सर्वं सोमपूर्वाधाने आधानात्पूर्वमेव, ऐन्द्राग्नाश्विने तु पश्चात्।

[अनुष्ठेयकर्मणस्सङ्कल्पप्रकारः]

यः पूर्वमाहिताग्निः स दर्शपूर्णमासाग्निहोत्रपिण्डपितृयज्ञाऽऽग्रयणपशुचातुर्मास्यानां विच्छेदक्रमेण श्रौतं स्मार्तं[7] च कर्म

---

[1] वैरिणापि—ग, रिणोऽनधिका—ग. च. [2] कारपरशास्त्र—च. [3] आभिचरितव्यविषये वैरि—ग. च. [4] जन्मान्तरजाता—ङ. [5] ततः—ग. [6] णहोमः—ग. च. [7] च नैमित्तिकं च कृत्वा—च. च नैमित्तिकं च कृत्वा आधानं—ग.

कुर्यात्। नैमित्तिकानां प्रायश्चित्तं कृत्वा सन्धानं च कृत्वा दशम्यादिषु पर्वणि च वा प्रातरग्निहोत्रं हुत्वा यजनीये चेत्पक्षापवर्गमासापवर्गयोस्तां पौर्णमासीममावास्यां[1] कृत्वा अपरेणाग्निं पत्न्या सह दर्भेष्वासीनो दर्भान् धारयमाणो यज्ञरूपं विष्णुं मनसा[2] ध्यायन् कृतप्राणायामः प्रातःकाले मध्याह्ने वा सङ्कल्पं कुर्यात्। कथम्?;—

[सौत्रयोः सोमज्योतिष्टोमपदयोः सोपपत्तिकं तात्पर्यमुपपवर्ण्य 'यक्ष्यमाणः' इत्यस्यानुवाद्यसरूपत्वव्यवस्थापनम्]

**सोमेन—कल्पः**—यद्यप्यग्निष्टोमग्रहणेनैव ज्योतिष्टोमत्वं सोमत्वं च सिद्धं भवति; तथाऽपि सोमज्योतिष्टोमशब्दावप्युभावुच्चारयितव्यौ; यतोऽयं सूत्रकारः प्रयोगसमवायार्थमग्निष्टोम एव[3] व्याख्येयौ "सोमेन यक्ष्यमाणः" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्याह। न हि [4]प्रयोगकर्तुर्नाम्नामुच्चारणे प्रयोजनमस्ति; अदृष्टार्थत्वादस्य। रथन्तरग्रहणमुपलक्षणार्थम्; बृहत्साम्नेति च पक्षे लभ्यते। सप्तदक्षिणादिकल्पानामुपलक्षणत्वाद्द्वादशशतदक्षिणेनेति। यद्यपि सूत्रकारेण सप्तादयो दक्षिणाकल्पा उक्ताः; तथाऽपि राजक्रयादौ द्वादशशतदक्षिणाकल्पाश्रयणेन प्रयोगस्योक्तत्वात्.। प्रयोगकथनं[5] तथैव कर्तव्यमिति तं पक्षमाश्रयते कामानां कामनमिति सङ्कल्पाद्बहिर्भूतस्य कामना[6]देशस्यात्र सङ्कल्पान्तर्भावो नियतानेकफलसाधनत्वाद्व्यवस्थासङ्कल्पेनैव भवति मुमुक्षोर्न फलनिर्देशः। तत्रापि केचित्कुर्वन्तीति प्रपञ्चितं[7] पुरस्तात्। अभ्यासे कामसंयोगे वायं संस्थाविशेषमुपादत्ते। अग्निष्टोमस्थाने तन्निर्देशः।

---

[1] स्यां वा कृत्वा—**च.** [2] प्राणायामं कृत्वा—**च.** [3] वक्तव्यौ—**ग. च.**
[4] प्रयोगं कर्तुं र्ना—**च.** प्रयोगार्थानामुच्चारणे—**ग.** [5] करणं—**क.** [6] कामनिर्देश—**ग. च.**
[7] समवस्ताद्—**ग.**

तथा यत्पृष्ठसाम तद्रथन्तरस्थाने यो दक्षिणाकल्पस्स द्वादशशतदक्षिणास्थाने यत्फलं तत्स्वर्गस्थाने[1] इति च सर्वविशेषणानाम्[2]। अत एव यक्ष्य इति पदं प्रयोज्यम्। यतः 'सोमेन यक्ष्यमाणः' इत्यनुवादोऽनुवाद्य सरूपो भवति ॥

['विद्युदसि' इति पदप्रयोगोऽग्नेर्योऽशः,
आम्नातमन्त्रक्रमेण ऋत्विग्वरणं च]

**विद्युदसि**—इत्यपामुपस्पर्शनम्। ततस्सोमप्रवाकवरणम्। ततस्सोमप्रवाकप्रस्थापनम्; ऋत्विजां [3]ग्रहं प्रति 'सोमप्रवाक सोममृत्विग्भ्यः प्रब्रूहि' इति यस्य सोमप्रवचनमृत्विग्भ्यः तस्य तस्य गृहं गत्वा क्रत्वङ्गत्वात्पृथक्पृथक्, तेनाध्वर्य्वादीनां संवादः; 'क ऋत्विजः श्रीरामशर्मादयः' इत्यादि। ततो जपः यथास्थानमभिप्रव्रजनं पितॄणामुपस्थानं प्राचीनावीतिभिः, तेन सोमप्रवाकेणैवंप्रकारेणाऽऽनीतानामध्वर्युप्रभृतीनां चतुर्णां सर्वेषां वाऽर्घ्यादिपूजां कृत्वा 'अध्वर्युं त्वां वृणीमहे' इत्येवं प्रकारेण सर्वान् वृत्वाऽग्निर्मे होतेति मन्त्रक्रमेण होत्रादीनां चतुर्णामाम्नातमन्त्राणां सर्वेषां वा पूर्वोक्तप्रकारेण वरणम्।

**ततो मधुपर्को**—गृह्योक्तविधिना।

**नान्दीश्राद्धम्**—अभ्युदयफलत्वात्, नेत्युपदेशः, सूत्रकारेणानिबन्धनात्।

**ततो यज्ञार्थद्रव्यनिर्देशः-आज्यं**—इति तस्य[4] पृथक्करणम् शेषा[5]द्ब्राह्मणानिति ॥

---

[1] र्गस्थाने। न च-ग. [2] नामन्तत एव—क. ग. च. [3] ग्रहणं प्रति—ग.
[4] द्रव्यस्य-ग. [5] शेषाद्ब्राह्मणाभु—क. ग.

[यज्ञार्थादितरस्य दीक्षितान्नस्य भोज्यत्वव्यवस्था]

ननु दीक्षणीयानन्तरं दीक्षितो भवति दीक्षितान्नं हि निषिद्धं भवति 'नान्नमश्नीयादिति न; यज्ञार्थे निर्दिष्टे शेषाद्भुञ्जीरन्निति यज्ञार्थादितरस्य भोज्यत्वात् । सम्भारयजुरर्थद्रव्यस्यापि पृथक्करणं कर्तव्यमितीह निर्देशः ।

उपदेशो दीक्षणीया[1]प्रधानाहुतेरनन्तरमिति निषेधे दीक्षितशब्दानुवृत्तेः । यज्ञशब्दस्तु वर्तिष्यमाणयागाभिप्राय इति यज्ञमात्राभिप्रायत्वेऽ[2]तिप्रसङ्गादिति । एतत्सर्वं याजमानम् ॥

(रु) समारोप्याग्नीन्देवयजनं प्रपद्य प्राग्वंशस्य पृष्ठ्यधारकं प्रधानस्तम्भमालभमानो जपतीत्यर्थः । तथाह कात्यायनः । समारोप्याग्नी शालास्तम्भं पूर्वार्धे गृहीत्वा अरणिपाणिराह एदमगन्मेति । प्राग्वंशस्य करिष्यमाणत्वात् वक्ष्यमाण एवात्र वेति पक्षेऽयं मन्त्रः । केचिदत एव वचनात्प्रागेव करणमाहुः ॥

[संभारयजुर्होमे आहुतिसंख्यानियमः]

(सू) ततस्सम्भारयजूंषि जुहोति ॥ १० ॥ १ ॥ ३० ॥
॥ २६४५ ॥

(भा) ततोऽग्निं विहृत्य सम्भारयजुषां होमः "अग्निर्यजुर्भिः" इत्यानुवाकेन ॥

(वृ) ततो-केन—एकविंशतिराहुतयः स्वाहाकारान्तैर्वाक्यैरादित एकविंशतिकृत्वो गृहीत्वाऽऽज्यं प्रत्याहुति वा । प्रथमान्तास्तृतीयान्ताश्च देवता उत्तमस्य [3]श्रद्धाह्वया इत्युपदेशः । अग्नयदिति

---

[1] याय:—ग. [2] त्वेऽन्यत्रातिप्र—क. यार्थेऽन्यत्रातिप्र—ग. [3] मह्यं श्रद्धया इत्युपदेशः—ग.

श्रद्धाभिस्समभिव्याहारात् ताश्च देवताः प्रसिद्धाः । 'अग्निर्यजुर्भिस्त इमं यज्ञमवन्तु' इति लिङ्गाच्च । 'अग्निर्यजुर्भिः' इत्येषोऽनुवाक आम्नातः । ततो विभज्य सम्भारयजूंषि जुहोति इति सूत्रेऽन्वयः । सम्भारयजूंषीति नाम उत्तरत्र व्यवहारसम्प्रत्ययार्थम् ॥

(रु) विहृत्याहवनीयं सम्भारयजूंष्याह ॥

[अन्यथाप्रतिपत्तिनिरासायानुवाकपदग्रहणम्]

**(सू) 'अग्निर्यजुर्भिः । सविता स्तोमैः ।' इत्येषोऽनुवाक आम्नातः ॥ १० ॥ १ ॥ ३१ ॥ २६४६ ॥**

(भा) सम्भारयजूंषि व्याचष्ट इत्यादौ 'अग्निर्यजुर्भिः' इत्यादीनां सापेक्षत्वात्प्रकाशशक्तेः 'त इमं यज्ञमवन्तु' इत्यनेन नैरपेक्ष्यदर्शनात् सर्वेषु वाक्येषु तदन्वयो मा भूदित्याम्नातग्रहणम् । वाक्यशो विभाग इति ज्ञापनार्थं 'सविता स्तोमैः' इत्येवमन्तोपादानम् । 'अग्निर्यजुर्भिः' इत्येतावत्युपात्तेऽनुवाकादिग्रहणार्थता प्रतीयेत; यत्नान्तरस्य प्रयोजनत्वाद्विभागार्थतेत्येवमादि चिन्त्यम् ॥

(रु) अस्मिन्यानि यजूंषि तानीत्यर्थः ॥

[सोमदेवताऽऽराधनं, आहवनीयोपस्थानं च]

**(सू) अत्र राजानमाहृत्य परिवेविषन्त्याक्रयात् ॥ ॥ १० ॥ १ ॥ ३२ ॥ २६४७ ॥**

(भा) सोमस्यार्घ्यपाद्याचमनीयादिषोडशोपचारार्थं पूजां कृत्व पयसौदनेन परिवेविषन्त्याक्रयात् ॥

(वृ) सोमस्या–क्रयात्—सम्भारयजुरर्थेऽग्नौ विद्यमाने स्थित एवाऽऽहरणं [1]सोमस्य वचनात् 'नमस्सोमाय राज्ञे' इति मन्त्रेण। सोमस्यार्घ्यपाद्यादिषोडशोप[2]चारात्मिकां पूजां कृत्वा पयसौदनेन परिवेविषन्त्याक्रयात्। क्रयादर्वाक्। राजानमाहृत्येति वचनाद्राजवदुपचारस्य कर्तव्यत्वात्। [3]परिवेषणे तु हविर्निवेदनं देवताप्रतियोगिकमिति देवताराधनं शास्त्रोक्तमिहातिदिश्यते। तस्मात्प्रत्यहं [4]द्विजकर्तव्यमाहरणं च सयजमाना ऋत्विजः समानकर्तृकत्वात् सोमाप्यायने दृष्टत्वात्॥

(रु) अस्मिन्काले आक्रयात् अद्यप्रभृत्यहरहः परिवेविषन्ति भोजयन्ति पयसोपसेकेन॥

इति श्रीभट्टरुद्रदत्तविरचितायां आपस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमे प्रश्ने तृतीया खण्डिका।

---

(सू) "स्वे दक्षे दक्षपितेह सीद। देवानाꣳ सुम्नो महते रणाय। स्वासस्थस्तनुवा संविशस्व। पितेवैधि सूनव आ सुशेवः॥ शिवो मा शिवमाविश सत्यं म आत्मा श्रद्धा मेऽक्षितिः तपो मे प्रतिष्ठा सवितृप्रसूता मा दिशो दीक्षयन्तु सत्यमस्मि" इति पुरस्ताद्दीक्षणीयाया आहवनीयं यजमान उपतिष्ठते। सप्तहोतारं मनसाऽनुद्रुत्याऽऽहवनीये सग्रहं हुत्वा॥ १०॥ १॥ ३३॥ २६४८॥

इत्यापस्तम्बश्रौतसूत्रे दशमे प्रश्ने तृतीया खण्डिका।

---

[1] सोमस्यात्र वचनात्—ग. [2] षोडशोपचारयुक्तां—च. चारादिकां—क.
[3] वेषणं तु—ग. [4] द्विः कर्तव्य—घ.

[दीक्षणीयाया उपस्थानस्य चानुष्ठेयकालनिष्कर्षः,
उपदेशन्यायविदादिपक्षोभयविशेषांशाश्च]

(भा) अग्निपरित्यागः। सप्तहोत्रर्थस्य प्रण[1]यनम्। सप्तहोता। तस्य त्यागः। दीक्षणीयार्थस्य प्रणयनम्। तस्य 'स्वे दक्षे' इत्युपस्थानम्। 'महते रणाय' इति मन्त्रलिङ्गात्। 'पुरस्ताद्दीक्षणीयाया' इति वचनात्। यदाऽप्युत्तरत्र दीक्षणीया; तदा तस्याः पुरस्तादेवो[2]पस्थानम्। यदा त्वजस्राः तदा सप्तहोतुः पुरस्ताद्वोपस्थानम्। एकत्वादग्नेः सूत्रकारेणानुक्रमणात्। दीक्षणीयाग्नेस्तु धारणम्। हिरण्यकेशिसङ्कर्ष-वचनाद्देवतापरिग्रहार्थत्वाच्च दीक्षणीयायाः। उपदेशस्सम्भारयजुषां पुरस्ताद्विद्युदसीति [3]क्रतुकाम ऋत्विग्देवयजनलब्धेरनित्यत्वात्। न्याय-विदस्तु यत्र लब्धिस्तत्र गच्छन्ति। यदा न लभ्यते तदा 'यो यक्ष्य इत्युक्त्वा न यजते' इति त्रैधातवीयां कुर्वन्ति। सप्तहोता दशहोत्रादिव-न्नारम्भार्थः, 'दीक्षिष्यमाणः' इति श्रुतेः। दीक्षाऽऽवृत्तौ 'वसन्ते वसन्ते' इत्यावर्तते॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने तृतीया खण्डिका

---

[परिभाषासिद्धस्याऽऽहवनीयप्रणयनस्य पौनरुक्त्याऽऽ-
शयोक्तिः, सप्तहग्रहणनिरूपणं च]

(वृ) ततः अग्निपरित्यागः—[4]सप्तहोत्रर्थस्याहवनीयस्य प्रणयनम्। 'स्वे दक्षे' इत्युपस्थानम्। 'अर्थायार्थायाग्निं प्रणयति' 'आहवनीये प्रदानम्' इति च परिभाषया आहवनीयप्रणयने सिद्धे पुनराहवनीय-

---

[1] सप्तहोत्रर्थस्य प्रणयनं, त्यागश्च ततो दीक्षा—ख. ग. [2] स्ताद्देवतोपस्थापनम्—ख.
[3] तत्र क्रमः—ख. क्रतुकामस्य—ग. [4] अत्र सप्त—ग.

ग्रहणाद्दक्षिणाग्नेरपि प्रणयनमाहवनीयाङ्गत्वात्। आहवनीय एवाग्निहोत्रपक्षेऽपीतरेषां प्रणयनविधानात्, सप्तहोतार[1] मैन्द्रग्रहे मनसा-करणवर्जम् अनुद्रुत्य न वाक्य[2]शः। 'यत्र होमार्था[3]स्सग्रहा' इति सग्रहे सिद्धे सग्रहग्रहणं होतृमात्रस्य मनसाऽनुद्रवणं मा भूदा[4]ख्यान-भेदादिति॥

त्यागश्चाग्नेस्सदक्षिणाकस्य — नित्याहार्यपक्षेऽ[5]न्वाहार्यपचनस्य।

ततो दीक्षणीयार्थस्य प्रणयनम्; न सङ्कल्पो न विद्युत् कामश्च, सोमार्थे कृतत्वात्; वपनं करिष्यमाणत्वात्। तस्य—अग्नेः॥

[ उपस्थानमन्त्रोऽन्नेयविशेषांशप्रतिपादनम् ]

स्वे दक्षे-लिङ्गात्— उपस्थानमन्त्रे महत रणाय-स्तोत्राय इह सी[6]देति बहिष्पवमानादिस्तोत्रपर्यन्तं सीदेत्यग्नावेवोपपद्यत इत्य[7]भिप्रायः। एवं जानतस्सू[8]त्रकारस्यानुक्रमणं भज्येतेति चेत्? न; पुरस्ताद्दीक्षणीयाया इति वचनात्पाठक्रमो बाध्यते। अन्यथा पुरस्ता[9]दित्याद्यनर्थकं स्यात्; न [10]चानर्थकम्; 'दीक्षिष्यमाणः सप्तहोतारं मनसाऽनुद्रुत्याऽऽहवनीये जुहुयात्' इति वचनात्। सैवाऽऽहु[11]तिर्दीक्षणीयायाः यथा "आग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाणः' इति तस्याः पुरस्तादेव त[12]दर्थं प्रणीतमग्निं, न सम्भारय[13]जुरग्निमिति न लिङ्गविरोधः। स एवाऽऽहवनीयः पुनः पुनः कर्मणि व्याप्रियते। 'सर्वक्रतूनामग्नयस्स-

---

[1] सप्तहोतारं सग्रहं—ग. [2] न वाक्यशेषः—च. [3] मास्सग्र—ख. च. [4] भूदाख्याभेदा—ख. ग. च. [5] नान्वाहार्य—च. [6] देति वचनं ब—क. ग. च. [7] इति भावः—ग. [8] जानतः पाठक्रमस्यानुक्रमणं—क. [9] स्तादिति पदमनर्थकं—ग. [10] नानर्थकम्—क. [11] याम, आ—च. [12] दर्थं न सम्भार—च. र्थं प्राणयनमग्नेः—ग. [13] जुरर्थं, नच लिङ्गविरोधः—क. ग.

कृताहिताः' इति वचनात्। नात्राऽऽहुतिशब्दः ; प्रत्युत होमशब्दोऽत्रापूर्वो दर्वीहोमो जुहोतिचोदन इति ॥

**यदाऽप्युत्तरत्र दीक्षणीया**—'अत्र दीक्षणीयामेके समामनन्ति' इति तदा अव्यवहितपुरोभावस्य विवक्षितत्वात्। यदा त्वजस्रा एवाग्नयस्सोमपूर्वकाधाने, बह्वृचमतात् ॥

ननु सर्वदैकत्वमुक्तम् ; न ; अन्यमाहवनीयं प्रणीयेति दर्शनात्, कर्मणि कर्मण्यन्योऽग्निरिति। तदेवाऽऽधानवृत्तौ प्राप्तायामावृत्तिप्रतिषेधपरं वाक्यं। सर्वक्रतूनामिति।

**सूत्रकारेणानुक्रमणादिति**—अव्यवहितपुरस्तात्कालो न भवति सप्तहोतृव्यवायेन सूत्रकारेणानुक्रमणात् व्यवायोऽनुज्ञायते 'दीक्षिष्यमाण' इति प्रत्यक्षश्रुतिकृतासत्तेर्बलीयस्त्वाच्च ॥

[लिङ्गासाङ्गत्यशङ्का, तत्र दृष्टान्तादिकं च]

ननु 'महते रणाय' इति लिङ्गं दीक्षणीयाग्नावपि[1] न सङ्गच्छते प्रणयनपक्षे दीक्षणीयार्थस्य पृथक्त्वात्। सम्भारयजुरादिवत् सोमार्थाग्नेरभावात् 'धारयत्याहवनीयम्' इति पशौ दर्शनाच्च ;

[दीक्षणीयाया देवतापरिग्रहार्थत्वं, तत्र मानं, सामान्योक्तेर्विशेषतो विकल्पादिकं च]

उच्यते—

**दीक्षणी-वचनात्**—न च तयोर्मतेन धारणं पाक्षिकम् ; देवतापरिग्रहार्थत्वाद्दीक्षणीयायाः 'यजमानाय परिगृह्य देवान्। दीक्षयेदꣳ हविरागच्छतं नः।' इति मन्त्रलिङ्गादन्वाधानस्थानीयत्वात्।

---

[1] णीयाद्दावपि न सङ्गच्छते-क. ग. च.

न च 'अर्थायार्थायाग्निं प्रणयति' इति सामान्यवचनमेतद्विषयेण सङ्कर्षवचनेन विकल्पते। यत्तु 'धारयत्याहवनीयम्' इति पशौ दर्शनं तत्र विशेषवचनाभावाद्भवत्येव॥

उपदेश-रनित्यत्वात्—'यक्ष्यमाणोऽप उपस्पृशति'[1] इति वचनात्॥

न्यायविदस्तु—एवमे[2]वाऽऽचक्षते॥

यत्र लब्धि-द्भन्ति—इष्टिम्; उपदेशपक्षे ऋत्विजो देवयजनं च सम्पाद्य सङ्कल्प्य ऋत्विजो वृत्वा[3] देवयजनं याचेत्। यदा सङ्कल्पानन्तरमेव कामो विद्युच्च[4]। यदा पुनस्सङ्कल्प्यर्त्विजो देवयजनं चान्विच्छन्ति तदा लाभानन्तरं विद्युत्तदा तस्मिन्मते न त्रैधातवीया विद्युच्च पुरस्तादनित्यपदार्थाङ्गीकारात्। यदि लभन्ते[5] एकोपक्रमत्वात्ततो यक्ष्यामीत्येवंरूपत्वेन निमित्तानिश्चयात्॥

सप्तहोता-र्तते—उपक्रमार्थो न ह्यावर्तते, एकोपक्रमत्वादिति [6]वचनात् न प्रवर्तते।

इति श्रीरामाग्निचिद्वृत्तौ दशमप्रश्ने तृतीया खण्डिका

———

[दीक्षणीयाया दीक्षाद्यर्थकत्वे वाक्यशेषमन्त्रलिङ्गविवरणम्]

(सू) दीक्षणीयायास्तन्त्रं प्रक्रमयति। आग्नावैष्णवमेकादशकपालं निर्वपति आग्नावैष्णवं वा घृते चरुम्॥ १०॥ १॥ ३४॥ २६४९॥

---

[1] स्पृशेदिति-ग. च. [2] वं व्याचक्षते-क. [3] 'वृत्वा-र्त्विजः' इत्यन्तं क पुस्तके नास्ति. [4] विद्युतः-ग. [5] लभ्यन्ते-ग. [6] 'वचनात्' इत्यन्त एव पाठः-ङ.

(भा) दीक्षिष्यतेऽनयेति दीक्षणीया। सा चोभयार्था। दीक्षार्था देवतापरिग्रहार्था च, वाक्यशेषमन्त्रलिङ्गाभ्याम्; 'आग्नावैष्णवमेकादश-कपालं निर्वपति दीक्षिष्यमाणोऽग्निस्सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चारभतेऽग्निरवमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादश-कपालं निर्वपति देवता एवोभयः परिगृह्य' इति च, तथा—'यजमानाय परिगृह्य देवान्। दीक्षयेदꣳ हविरागच्छतं नः।' इति च।

[चरुपक्षेऽनुष्ठेयांशविशेषविशदीकरणम्]

(वृ) दीक्षि-या—कर्मनाम। ननु देवतापरिग्रहार्थेत्युक्तम्? सत्यम्;—

**सा चोभयार्था**—कुतः;

**वाक्यशेषमन्त्रलिङ्गाभ्याम्**—को वाक्यशेषः?

**आग्नावैष्णव-परिगृह्येति**—किं लिङ्गम्?

**यजमानाय-न इति च**—तन्त्रमित्यङ्गसमुदायः; तमुपक्रमते। प्रकृतिवदनुक्तं सर्वम्। इमामूर्जामिति यथातिथि दैक्षणीयꣳ हविः, नाशनम्, पौर्णमासतन्त्रं, नोभावग्नीपक्षेऽन्वाधानयाजमाननिवृत्तिः, नान्वाहार्यस्थाली, न ब्रह्मवरणम्। चरुपक्षे स्थालीकपालानां स्थाने दृषदुपले तु प्रयुनक्ति, न वा प्रणीताप्रणयनम्, निर्वापणकाले आग्नावैष्णवमेकादशकपालं निर्वपति, तद्दैवतं चरुं वा पुनराग्नावैष्णव-मिति घृते चरुमित्येतावत्युक्ते आदित्य एवेति सन्देहस्स्यादिति॥

(रु) न दीक्षणायाङ्गं सप्तहोता, किं तूपस्थानं सप्तहोता चोभय-मपि दीक्षाङ्गम्। अतो दीक्षणीयोत्कर्षे उपस्थानमुत्कृष्यते। पुरस्ता-दिति वचनान्न सप्तहोता। सप्तहोतुश्च पृथगग्नित्वं दर्शितमेव, ततश्च सप्तहोत्रर्थमग्निं प्रणीय स्वे दक्षे इत्युपस्थाय सप्तहोतारं हुत्वा सोमार्थं

प्रणीय दीक्षणीया । न च महते रणायेति लिङ्गात्सोमार्थस्यैवोपस्थानम् सप्तहोत्रर्थस्यापि महारणार्थत्वात् । न ह्युते तस्मिन्महारणस्संपद्येत । अमहारणार्थत्वेऽपि सूत्रकारोक्तक्रमबाधेन लिङ्गादरो न युक्तः । लिङ्गादरे वा सप्तहोतापि सोमार्थ एवाग्नौ स्यात् । न सौत्रक्रमभङ्ग इत्यास्तां तावत् । अथवा परतस्सप्तहोतुरुपस्थानेऽपि न सौत्रक्रमबाधः । पुरस्ताद्दीक्षणीयाया इति वचनात्, अव्यवहितपूर्वभावस्यैव च स्फूर्तेः पुरस्ताच्छब्दार्थत्वाच्च । यथा पुरस्तादनूयाजानां, पुरस्तात्स्विष्टकृत इत्यादौ । दृष्टं चाव्यवधानार्थत्वं दीक्षणीयोत्कर्षपक्षे । सप्तहोतारं हुत्वेति तु पूर्वकालमात्रमेव क्त्वाप्रत्ययेन; नाव्यवधानमित्यविरोधः । सर्वथा न लिङ्गात्सौत्रक्रमबाध इति सिद्धम् । गतः ।

[चरुपुरोडाशयोरेव कामनाविशेषनियामकत्वम्]

(सू.) **पुरोडाशो ब्रह्मवर्चसकामस्य, घृते चरुः प्रजाकामस्य ॥ १० ॥ १ ॥ ३५ ॥ २६५० ॥**

(भा) [1] नित्य एव पक्षे कामः पुरोडाशस्य चरोश्च ।

(वृ) **नित्य–रोश्च**—नित्ये पुरोडाशे चरौ कामः न व्यवस्था [2] । यद्वा उभयोः कामसम्बन्धोऽत्र हेतुः, एवं च व्यवस्था ; यदि ब्रह्मवर्चसकामः तत्र पुरोडाश एव, न तु ब्रह्मवर्चसकामस्यैव पुरोडाश इति । एवं प्रजाकामस्य चरुरेव, न तु प्रजाकामस्यैव चरुरिति ।

(रु) नित्ययोरेव कामोऽपि ।

[समासनिर्देशोऽन्नेयांशः]

(सू) **आदित्यं घृते चरुं द्वितीयं प्रजाकामपशुकामस्यैके समामनन्ति ॥ १० ॥ १ ॥ ३६ ॥ २६५१ ॥**

[1] नित्ये पक्षे–ग. [2] न व्यवस्थोभयोः–ग.

(भा) आदित्यस्तु प्रजाकामपशुकाम एव; समासकरणात् ।

(वृ) **आदित्यस्तु–णात्**––आदित्यस्तु चरुः[1] पुरोडाशश्च द्वितीयः प्रजाकामपशुकामस्यैव नान्यतरकामस्य समासनिर्देशात्तयोः कामसंयो[2]गेऽप्यर्थान्तरत्वाद्वितीयो भवत्येव ।

(रु) प्रजापश्वोरेकैकस्य फलत्वम् । अनन्तरोक्तयोरेव कामयोर्देवतान्तर-विकल्पनात् कामिपदाभ्यासाच्च ।

['ब्रह्मवर्चसकामस्य' 'पशुकामस्य' इत्यादिकाम्यविषये प्राप्तप्राकृतसङ्ख्याबाधस्यापवादत्वेनायं विधिः, पुनरुक्तेश्च काम्यद्वयार्थत्वं, सङ्ख्याबाधोपपादनं च]

(सू) **पञ्चदश सप्तदश वा सामिधेन्यः ॥ १० ॥ १ ॥**
**॥ ३७ ॥ २६५२ ॥**

(भा) काम्यद्वये[3] पञ्चदश सप्तदश वा सामिधेन्यः । वैश्वानरादीना-मपि पुनर्व[4]चनात् ।

(वृ) **काम्य–धेन्यः**––विधीयन्ते ब्रह्मवर्चसकाम्ये च तन्त्रे[5] ।

**वैश्वा–चनात्**––पञ्चदश सामिधेन्यो दर्शपूर्णमासयोः सप्त-दशेष्टिपशुबन्धानां यत्र श्रूयन्ते इति दर्शपूर्णमासाविष्टीनां प्रकृतिरिति च परिभाषायामुक्तत्वात् ब्राह्मणराजन्ययोः पञ्चदश सप्तदश वा सामिधेन्यः प्राप्ता एव, नित्ये प्रयोगे तु 'सप्तदशानुब्रूयाद्वैश्यस्य' 'सर्वाणि छन्दांꣳस्यनुब्रूयाद्बहुयाजिनः' 'अपरिमितमनुब्रूया' दिति विहितानां वैश्यादीनामपि पञ्चदशत्वादिविधानं सिद्ध[6]मेव, अविशेष-विधानात्सप्तदशेष्टिपशुबन्धानामिति । काम्ये तु 'चतुर्विंꣳशतिमनु-

---

[1] पुरोडाशस्य च द्वितीयः. [2] संयोगे इत्यर्थान्तरत्वात्–ग. [3] ये सर्वत्र पञ्च–ख.
[4] प्राप्तत्वात् पुनर्वचनादिति च–क. [5] तन्त्रेऽन्यत्र वैश्यादीनां–क. [6] सममेव–ग.

ब्रूयाद्ब्रह्मवर्चसकामस्य ' ' अष्टाचत्वारिंशतमनु ब्रूयात्पशुकामस्य ' ' ब्रह्मवर्चसकामस्येति ' च काम्यविषये प्राप्तस्य प्राकृतसङ्ख्याबाधस्यायमपवादः, पुनर्वचनं नित्यविषये वैश्यस्यापि पञ्चदशसंख्याप्राप्तौ पञ्चदशसामिधेन्यो दर्शपूर्णमासयोरित्यविशेषवचनाद्बहुयाजिनोऽपि प्राप्तैव, ' पञ्चदशानुब्रूयात् ' इति पुनर्वचनात् । अतः काम्यद्वयार्थं वचनमिति ।

ननु सप्तदशेष्टिपशुबन्धानामिति वचनात्सर्वेषां सप्तदशसामिधेन्य एव प्राप्ताः, न पञ्चदश, दर्शपूर्णमासाविष्टीनां प्रकृतिरित्यस्य पुरस्तादपवादत्वात् । तथाऽपि त्रयोविंशतिदारुरिध्म इति पशौ वचनस्य प्रकृतिप्राप्तसङ्ख्यानिवर्तकत्वाल्लि[1]ङ्गादन्यत्रोभयमपि प्राप्नोति । अस्तु वा, काम्येऽपि पञ्चदशत्वसप्तदशत्वे प्राप्नुतः, कुतस्तदर्थं वचनम् । यदीदं वचनं नित्ये प्रयोगे लब्धावकाशं तदा कामायत्ताश्चतुर्विंशतिमुखसङ्ख्या [2] बाधकास्स्युः ।

(रु) गतम् ।

[विहरणाजस्रदीक्षणीयोत्कर्षपक्षोन्नेयाविशेषांशप्रतिपादनम्]

(सू) **प्राग्वंशमेके पूर्वं समामनन्ति, दीक्षणीयामेके ॥**
**॥ १० ॥ १ ॥ ३८ ॥ २६५३ ॥**

(भा) परित्यज्याग्निं सप्तहोत्रर्थमन्यं [3] सोमार्थं प्रणीय प्राग्वंशो वा क्रियते, यद्यकृतः ; स्वे दक्ष इत्युपस्थानं कृत्वा दीक्षणीया ।

(वृ) **परित्यज्याग्निं** — प्राग्वंशमेके पूर्वमित्यस्मिन्पक्ष एव प्रयोगः ।

**प्राग्वंशो-यतो**—दीक्षणीयां प्रत्येव पूर्वत्वात्, अग्निस्तु सोमार्थत्वेन दीक्षणीयानन्तर्भावात् ।

---

[1] कत्वलिङ्गा—क. [2] ङ्ख्यादिबाध—क. [3] न्यं प्रणीय—क.

ननु सप्तहोतारं हुत्वा दीक्षणीयेति क्त्वाप्रत्ययेन सप्तहोतृदीक्षणीययोरानन्तर्यश्रुतेः सप्तहोतुः पूर्वं प्राग्वंश इति चेन्मैवम्; अजस्रपक्षाश्रयोयं क्त्वाप्रत्ययः।

यद्य-स्वेदक्ष-या--स्वे दक्ष इत्युपस्थानस्य सप्तहोतुः पुरस्तादुपदेशात् तस्माद्यद्यकृतं स्वे दक्ष इत्युपस्थानं विहरणपक्षे तदा सोमार्थं प्रणीयानुपस्थाय प्राग्वंशो विकल्पेन, अजस्रपक्षे उपस्थानं कृत्वा सप्तहोतारं हुत्वा दीक्षणीया ; दीक्षणीयोत्कर्षे उपस्थानोत्कर्षस्योक्तत्वात्। अन्यामिति पुनर्वचनात् स्थालीस्थं वार्य[1]यनार्थम्. अत्र विशेषश्चरुपक्षे घृतप्रणय[2]नं स्यात्।

(रु) दीक्षणीयायाः पश्चात् प्राग्वंशं वक्ष्यति, तस्यायं विकल्पः।

[दीक्षणीयाया आज्येडाप्राशनान्तत्वोपपादनम्]

(सू) **पत्नीसंयाजान्ता दीक्षणीया सन्तिष्ठते ॥ १० ॥**
**॥ १ ॥ ३९ ॥ २६५४ ॥**

(भा) सा पत्नीसंयाजान्ता सर्वेषाम्; 'तस्मादेता एतदन्ता इष्टयस्सन्तिष्ठन्ते' इति लिङ्गात्। वर्तमानायां दीक्षणीयायां पुनर्दीक्षणीयावचनात्। यदाऽपि त्रैधातवीया तदाऽपि पत्नीसंयाजान्ता। नापि ब्रह्मा निष्क्रामति।

(वृ) **सा पत्नी-षाम्**—ऋत्विजां यजमानसहितानां नाध्वर्योः; सन्तिष्ठेते दर्शपूर्णमासावितिवत्। **लिङ्गात्**—इष्टिसंस्थानलिङ्गात्।

**यदा-या**—'यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयामिष्टिं निर्वपेत्' इति।

---

[1] लीस्थाभ्नास्ययनार्थ—ङ. [2] कुण्डलितपाठः—ग. पुस्तके नास्ति.

तदाऽपि-न्ता---सन्तिष्ठते ;-अस्यार्थः;-'तस्मादेता एतदन्ता इष्टयः' इत्यातिथ्यान्ते वचनात् दीक्षणीयाद्यातिथ्यान्तानामिष्टीनां पत्नीसंयाजान्तभ्र[1]मो भवति, तन्निवृत्तये वाच्यं, यदा दीक्षणीयानन्तरं दैवात्सोमविघाते प्रायणीयाद्यननुष्ठाने सत्येव त्रैधातवीया भवति; तदाऽपि दीक्षणीया पत्नीसंयाजान्ता न प्रकृतिसंस्था ; न चार्वागुपर[2]न्तव्यमिति। पत्नीसंया[3]जान्ता —आज्येडाप्राशनान्ता। सम्पत्नीयस्तु पुरस्ताद्धूयत एव ।

(रु) आज्येडान्ता; संपत्नीयोऽपि पुरस्ताद्देवपत्नीनाम्। इडासूक्तयोर्याजमाने विशेषः प्रकृतावेव दर्शितः ।

[ऊहानूहत्रैधाकरणादीनां निष्कर्षः]

(सू) धारयति ध्रौवमाज्यम् ॥ १० ॥ १ ॥ ४० ॥ ॥ २६५५ ॥

(भा) ध्रौवं तत्स्थमेव धारयन्ति नान्यस्मिन्पात्रे ।

(वृ) ध्रौवं-पात्रे—'यद्दीक्षणीयाया ध्रौवमाज्यं' इति पुनर्वचनात्। स्थालीस्थं चाप्यायनार्थम्। अत्र विशेषः-चरुपक्षे घृतप्रणयनं प्रणीतावत्क्रमेण न युगपत्। यावत्सम्भवमनूहः। तदर्थं पात्रान्तरप्रयोगः, 'ब्रह्मन् घृतं प्रणेष्यामी'त्यूहो द्रष्टव्यः। 'देवस्त्वा सवितोत्पुनातु' इत्युत्पवने त्रैधाकरणमिति ।

[उपांशुनाऽनुष्ठेयकर्मकलापविशदीकरणम्]

(सू) यदग्नीषोमीयात्तेनोपांशु चरति ॥ १० ॥ १ ॥ ॥ ४१ ॥ २६५६ ॥

---

[1] जान्तभ्रमो भवति-क [2] गुपरमितव्यम्. [3] पत्नीसंयाजः आज्येडाप्राशनान्तः—ग.

(भा) यदग्नीषोमीयात्पूर्वं प्रधानं [1]दक्षिणीयादि, तदुपांशु । अङ्गानि यथा प्रकृति । अग्नीषोमीये तु पशौ यावत्या वाचा कामयेतेति बह्वृचानां श्रुतेरनियमः ॥

(वृ) यदग्नी–तदुपांशु—कर्तव्यम् ।

अङ्गा–प्रकृति—विकृतौ चोद्यमानं प्रधानगामीति ॥

अग्नीषामी–नियमः—प्रधान एव पुरोडाशहविः पुरोडाशे । यथाप्रकृतीत्युपदेशः । पशोरङ्गत्वात्सम्भारयजुषःप्रभृतीमि स्वराः कथं न स्युः; 'सप्तहोतारं मनसाऽनुद्रुत्य' इति विधानाद्दीक्षणीयाप्रभृतीति गम्यते ॥

(रु) चरन्तीति वचनात्तत्र यावत्प्रधानमुपांश्विति न्यायादिष्टिप्रधानानामेवोपांशुत्वम् । अङ्गानां तु यथा प्रकृति; यत्र तात्वादिव्यापारस्योपलब्धिस्तदुपांशु ॥

[एकेषां मते दीक्षणीयाप्रायणीयाऽऽतिथ्याग्नीषोमीयादिषु सोपपत्तिकं स्वरभेदविवरणम्]

(सू) अथैकेषाम् । यावत्यस्य वाग्भवति तावतीं दीक्षणीयामन्वाह । ततो नीचैस्तरां प्रायणीयायाम् । नीचैस्तरामातिथ्यायाम् । उपांशूपसत्सु । उच्चैरग्नीषोमीये ॥ १० ॥ १ ॥ ४२ ॥ ॥ २६५७ ॥

(भा) यावत्यस्य वाग्भवति [2]सुष्ठूच्चैः । [3]एतेऽपि प्रधानविषय एवेत्यापस्तम्बमतिः । यथाप्रकृत्येवाङ्गानि 'उपांशुयाजवत्प्रचरन्ति' इति सिद्धत्वात्प्रधानस्य । 'उपांशूपसत्सु' इत्यङ्गान्यपि । 'पित्र्योप-

---

[1] वै प्रायणीयादि—ग. [2] समुच्चैः—ग. च. [3] अयमेव रामाग्निचिदाभिमतः पाठ इति तैर्विवरणात् ज्ञायते ।

सवस्सतन्त्राः ' इत्याश्वलायनमतेन वाक्यशेषाच्च ' तथा नोऽसुराः पाप्मा नानुवेत्स्यन्तीति ' इति ॥

(वृ) एतेऽपि—[1]स्वराः प्रधानविषय एवेत्यापस्तम्बमतिः ॥

यथाप्र–ङ्गानि—याज्ञिकानां तु उपांशुयाजत्वात् ॥

उपांशु–ङ्गान्यपि—उपसत्सु प्रधानस्योपांशूपसत्सु [2]इत्यङ्गान्यप्युपांशु । ननु कथं प्रधानविधिमध्ये पठितस्योपांशूपसत्स्वित्यस्याङ्ग[3]परत्वं विधीयते? न चाऽऽज्यहविष्ट्वेनोपांशुप्रकृतित्वेन प्रधानस्योपांशुत्वम्, प्राप्तेरानर्थक्यात् तदङ्गाधिकरणन्यायेनाङ्गविषयत्वमिति वक्तव्यम् ; प्रयोजनवत्त्वाद्विधेः प्राप्तस्यापि पुनर्विधानेनात्रा-[4]प्राकृतो विधिरिति ज्ञापनादित्यत आह ।

पित्र्यो–लायनमतेन—समानार्थत्वोपपत्तेः न चाश्वलायनमतं हौत्रविषयम् ।

वाक्य–षाच्च—अस्माकमपि ब्राह्मणे " उपांशूपसदा चराम । तथा नोऽसुराः पाप्मा नानुवेत्स्यन्तीति " इति सतन्त्राणामुपसदामुपांशुत्वविधानात् । **अथैकेषामित्यथशब्दादिदमवगम्यते**— यो दीक्षणीयायां [5]सुष्ठूच्चैः करोति, स एवानन्तरस्वरेण प्रायणीयायाम्, एवमातिथ्यादिष्वपि, न दीक्षणीयायामुच्चैः कृत्वा प्रायणीयायामुपांश्विति । एवमुत्तरयोरपि पक्षयोः ॥

(रु) उपांशूपसत्स्विति सर्वोपांशुत्वमभिप्रेतम् । तस्मात् । उपांशुयाजवत्प्रचरन्तीत्यतिदेशात् , एवं प्रधानानामुपांशुत्वसिद्धेः ।

---

[1] त्रिस्वराः–ग. [2] त्यस्याङ्गापरत्वमवसीयते–च. [3] त्वमवसीयते–ग. च.
[4] धानेनात्र प्रा–ङ. धानान्नात्र प्रकृते विधिरि–च. धानेन नात्र प्रकृतो विधि–ग.
[5] समुच्चैः–ग.

उपाꣳशूपसदा चराम, तथा नोऽसुराः पाप्मा नानुवेत्स्यन्तीति वाक्यशेषाच्च। तथोपांश्वधिकारे 'पित्र्योपसदस्सतन्त्रा' इत्याश्वलायनः॥

[तैत्तिरीयप्रातिशाख्योक्तानां उपांशूपब्दिमन्निमद्ध्वानानां लक्षणानामनुवादः]

(सू) मन्द्रेण दीक्षणीयायाम्। मन्द्रतरेण प्रायणीयायाम्। मन्द्रतरेणातिथ्यायाम्। उपाꣳशूपसत्सु। उच्चैरग्नीषोमीये। उपाꣳशु वा दीक्षणीयायाम्। उपाꣳशुतरं प्रायणीयायाम्। उपाꣳशुतरमातिथ्यायाम्। उपाꣳशूपसत्सु। उच्चैरग्नीषोमीये॥ १०॥ १॥ ४३॥ २६५८॥

(भा) उरसि [1]मन्द्रं ततो नीचैः। 'करणवदशब्दममनःप्रयोगमुपांशु'; तत्र विशेषानुपपत्तेः। 'सशब्दमुपब्दिमत्' स दीक्षणीयायाम्। 'अक्षरव्यञ्जनानामुपलब्धिर्निमदः'। स प्रायणीयायाम्[2]। 'अक्षरव्यञ्जनानामनुपलब्धिर्ध्वानः'। स आतिथ्यायाम्। मुख्योपांशुत्वमुपसात्स्विति तत्समीपाः स्वरा गृह्यन्ते। तथोच्चैरग्नीषोमीये। कस्यायं विधिः? दर्शपूर्णमासप्रकृतीनामेव न प्रवर्ग्यादीनाम्॥

(वृ) उरसि—चैः—प्रायणीयातिथ्ययोस्तृतीयपक्षे।
तत्र—प्राथमिकात्पक्षादुपसद्भ्यश्च विशेषानुपपत्तेः।
तत्समीपाः स्वरा गृह्यन्ते—के ते? कतमश्च—कुत्र?
सशब्दमुपब्दिमत्—उच्चारणं।
सः—स्वरः।

---

[1] मन्द्रमतो—ख. च. [2] सशब्दमक्षरव्यञ्जनानामुपलब्धिरातिथ्यायाम्—च.

**अक्षरव्य-यायाम्**—पूर्वत्रा[1]क्षरव्यञ्जनोपलब्धिर्ग्राह्या ॥

**मुख्योपांशुत्वमुपसत्सु-गृह्यन्ते**—तासां सर्वत्रैकरूपत्वात् ॥

कथमापस्तम्बमते प्रधानविधावुपसत्सू[2]पांशुत्वविधेरर्थवत्त्वम् ; उच्यते ; उच्चैर्दीक्षणीयापक्षे तत्प्रत्यासत्त्या उपलब्धिमत्, उपसत्सु मन्द्रपक्षे निमदः, उपांशुपक्षे ध्वानः, तेषामप्युपांशुशब्दवाच्यत्वा[3]-वश्याभ्युपगमात् । अन्यथोपांशूपसत्स्विवति पुनःपुनरावृत्तेः प्रयोजना-भावाच्च ॥

["तथोच्चैरग्नीषोमीये" इत्यादि भाष्यतात्पर्य-
विशदीकरणम्]

**तथोच्चैरग्नीषोमीये**—यो दीक्षणीयायामुच्चैस्स्वरः स एवाग्नी-षोमीयस्य द्वितीयपक्षे, यः प्रायणीयायामुच्चैः स तृतीये, य आतिथ्यायां स चतुर्थे, प्रथमे[4] नित्य इत्युक्तम् । [5]अत्रापि याज्ञिकमते नैरर्थक्यमेव ॥

इह यत्प्रागग्नीषोमीयादित्यग्नीषोमयात्प्राक्तनं कर्म गृह्यते, तत्र सौमिकदार्शपौर्णमासिकयोरविशेषेणायं स्वरविधिः, अथाप्राप्तबाधाय सौमिकानां प्रवर्ग्यादीनां दीक्षणीयायां प्रायणीयायामित्यादिदर्शनात् ॥

**कस्यायं-दीनाम्**—तेषां तु "उच्चैः ऋग्वेदसामवेदाभ्यां क्रियते । उपांशु यजुर्वेदेन ।" इति पारिभाषिकः ॥

ननु त एव दर्शपूर्णमासेष्वपि ; सत्यम् ; अन्योप्यस्ति ; 'मध्यमेन प्राक् स्विष्टकृतो मध्यन्दिने च' इति, तर्हि तस्यैव बाधः ।

---

[1] क्षरोपलब्धिर्ग्राह्यः—क. च. क्षरोपलब्धिह्रासा सशब्दा—ग. [2] विधाना-दुप—ग. [3] वाच्यत्वेनावश्यावगम्यत्वाद्—ग. च. [4] प्रथमे त्वनित्य—ग. [5] अथापि—ग.

पारिभाषिकस्तु प्रवर्तत एव । [1]इहैवं प्राकृताश्चोदकेन प्राप्ताः पदार्थाः तेषां पारिभाषिकोऽपि प्रकृतित [2]एवावगत इति तस्याप्यवादः ॥

(रु) उरःकण्ठशिरस्स्थानभेदास्त्रयो विभागा भवन्त्युच्चैस्स्वरस्य । तेषु उरस्यशब्दोपलब्धिमान् मन्द्रः । तस्य शब्दोपलब्धितारतम्यात् मन्द्रत्वतारतम्यं द्रष्टव्यम् ॥

[बहिस्तन्त्रवर्तिपशुपशुसौत्रामण्यादिषु अग्नयन्वाधानादीनां अनुष्ठेयत्वोक्तिपूर्वकमत्राननुष्ठेयत्वे तेषामुपपत्त्यादिविशदीकरणम् ।

(सू) **दर्शपूर्णमासप्रकृतीनां सोमेऽग्नयन्वाधानं व्रतोपायनमारण्याशनं जागरणमन्वाहार्यस्य च दानं पत्न्यास्सन्नहनं विमोचनमिति च न विद्यन्ते ॥**
**॥ १० ॥ १ ॥ ४४ ॥ २६५९ ॥**

(भा) सोमेऽग्नयन्वाधानादीनि न क्रियन्ते, सोमे कृतत्वात् । अतोऽन्यान्यपि न गृहीतानि सोमे च कृतानि तेषामप्यकरणम् । ब्रह्म[3]वरणं यज्ञ शं च मे इति, यत्राप्येषां प्राप्तिः, संस्थाप्यायां प्रायणीयायां तत्र न क्रियन्ते, दीक्षणीयायां सर्वदेवतानां परिगृहीतत्वात् । अग्नयन्वाधानादि निवर्तते प्रायणीयादिषु यानि सोमाग्नौ क्रियन्ते । आरण्याशनमितरद्वाऽनशनदीक्षितव्रतेनार्थस्य सिद्धत्वान्निवर्तते । तस्याप्यवभृथोत्तरासु क्रियास्वनिवृत्तिः । सवनीयेऽरण्याशनस्य प्राप्तिस्तस्य व्यहकालत्वात् । जागरणस्य चाग्नीध्रे हविर्धाने वा 'यजमानं जागरयन्ति' इति आहवनीयागारे गार्हपत्यागारे वा तन्न भवति । सोमदेश एव भवति जागरणं अन्वाहार्यदानं सोमदक्षिणाभिरानतत्वान्नि-

---

[1] इह ये प्राकृता—ग. च. [2] एवागत—ग. [3] वरणविद्युदसि शं च मे—क. ख. ङ. च.

वर्तते। चकारात्पशुदक्षिणानामपि। [1]पत्नीसंनहनं सोमयोक्त्रस्य विद्यमानत्वात् अवभृ[2]थोत्तरासु क्रियते। विमोचनं तु संस्थाप्यायां प्रायणीयायां न भवति प्राप्तमपि॥

केचित्तु संस्था[3]प्यासु अधियज्ञविमोकादीन्न कुर्वन्ति तत्तु सान्नाय्यप्राप्तस्य हि सोमे[4] निवृत्तिः; इति[5]करणं प्रदर्शनार्थं; ब्रह्मवरणादीनां निवृत्तिः॥

केचित्तु यजमानायतनस्य प्रकल्पनं न कुर्वन्ति कृष्णाजिनस्यासनार्थत्वात्; तत्तु न; 'अहे दैधिषव्योदतस्तिष्ठ' इति निरसनदर्शनात्। आस[6]नोपस्तरणार्थं चर्म॥

सोमग्रहणाद्ये बहिस्तंत्रवर्तिनः पञ्चपशुसौत्रामण्यादयः तेष्व[7]ग्न्याधानादि क्रियते उदवसानीयायां सिद्धा दक्षिणा नियम्यतेऽनड्वान्, [8]भिन्नतन्त्रेषु सर्वं क्रियते॥

['प्रकृतीनां' इत्यस्य उत्तरत्र सम्बन्धे नैष्फल्यम्]

(वृ) सोमे—न क्रियते—सोमेऽग्न्यन्वाधानादि निषिध्यमानं कर्म सर्वं दर्शपूर्णमासप्रकृतीनामेव, अतो निषिध्यमानपदार्थस्वरूपेण दर्शपूर्णमासप्रकृतीनामिति सिद्धे दर्शपूर्णमासप्रकृतीनामित्यस्योत्तरत्र सम्बन्धे प्रयोजनं नास्त्येव॥

सोमे कृतत्वात्—सोमेऽग्न्यन्वाधानमित्यादिसूत्रार्थः। कात्यायनमतात् 'तन्त्रिणो धर्माः प्रसङ्गेन उपकुर्वन्ति' इति न्यायाच्च। न ह्ययं न्याय[9]सिद्धमुपदिशतीति चेत्; न न्यायसिद्धमुपदिशति कृतायां

---

[1] न पत्नी स—ख. [2] त्तरकालं क्रियते—ख. [3] प्यास्वपि यज्ञ—क. ख. च. [4] न कृतस्य—ख. [5] व्रतोपायनब्रह्म—क. [6] आयतनोपस्तरणा—च. [7] न्वाधानादि—ख. [8] अतो भिन्न—ख. [9] सिद्धमुपदिशतीति केचित्—च.

वेद्यां चोद्यन्त [1]इति प्रासङ्गिकन्यायस्य परिभाषायामशिक्षितत्वादलौकिकत्वाच्च ॥

**अतः—प्यकरणम्**—प्रदर्शनार्थत्वादुपा[2]दानस्य कानि पुनस्तानि ?

**ब्रह्मव—म इति च**— अन्यान्येवंविधानि गृह्यन्ते तथा कामानां कामनं विष्णुक्रमादिवृष्ट्यन्तम् ॥

**सर्वदेवतानाम्**—न केवलं सोमदेवतानाम् ॥

**[यानि सोमाग्नौ क्रियन्ते, इति भाष्यवाक्योपष्टम्भकयुक्त्युपपादनम]**

**यानि–क्रियन्ते**—कर्माणि ; तेष्ववभृथोत्तरेष्वपि तथाऽन्तरापातिषु संसर्गेष्ट्यादिषु उदवसानीयायां तु क्रियत एव । व्रतोपायनं दीक्षणीया[3]यां क्रियते, नोत्तरेषु दीक्षितव्रतेषु इष्टिव्रतानां ; अमाषमांसमित्यादीनां अन्तर्भावान्निवर्तते । प्रागवभृथात्क्रियत एवोदवसानीयादिषु सोमार्थं कृतं व्रतोपायनं दीक्षणीयायाम् । तस्माद्दीक्षणी[4]या कार्याऽग्न्यन्वाधानतुल्यं कथं न स्यात् ; उच्यते ; न व्रतोपायनं प्रत्याख्यायते ; सोमार्थमन्यद्व्रतोपायनम् 'अथ यजमानो व्रतमुपैति' इति तेनैव । तच्चावभृथे निवर्तते, 'तां वा एतां' 'दीक्षामप्सु प्रावेशयन्' इति 'शुक्रा दीक्षायै तपसो विमोचनीः' इति च दीक्षाविमोचनार्थोऽवभृथः अत उत्तरासु क्रियते व्रतोपायनम् ॥

**[अशननिवृत्तौ हेतुः, पक्षविशेषेऽशनविधिः, ग्रामजागरणादिनिवृत्तिश्च]**

**आरण्या—र्तते**—आरण्याशनं च निवर्तते, अन्यस्याशनार्थव्रतस्य सिद्धत्वात् ।

---

[1] इत्यादि—च. [2] दुपात्तस्य—च. [3] यायां तु न क्रियते—च. [4] या अन्वाधान—च.

**तस्या–त्तिः**—अनुबन्ध्यादिषु प्राप्तस्यारण्याशनस्य निषेधः।

**सवनीये–प्तिः**—पशौ।

**तस्य द्रव्य–त्वात्**—तस्मादत्र 'सवनीयस्य सवनीयाम्' इतीध्माबर्हिस्सन्नह्यतीति। अत्र दीक्षाव्रता[1]निवृत्तिपक्षेऽन्यत्रारण्याशनं क्रियत एव। अन्येनाकृतत्वात्तस्य; प्राकृतस्य जागरणस्य [2]चात्र प्राप्तस्य निवृत्तिः।

**आग्नीध्रे–यन्तीति**—अनेन कृतत्वात् तेनामावास्यायां रात्रिं जागर्तीति पौर्णमासीप्रकृतित्वे [3]पशौ निवर्तते। तथा;—

**सोम–वति**—सोमविहितदेशे। तथाऽनूबन्ध्यायां [4]प्राकृतं[5] भवत्येव, तत्रा[6]न्यकृतत्वात्। तथा;—

**अन्वाहार्य–र्तते**—दीक्षणीयादिषु।

**आनतत्वात्**—ऋत्विजाम्।

**चकारा–नामपि**—दानम्; ओदवसानीयायाः।

**पत्नी–नत्वात्**—प्रायणीयादि प्रागवभृथान्निवर्तते।

**विमोचनं–प्राप्तमपि**—सवनीये च पशौ। एतत्सर्वं नैमित्तिकेष्वपि तुल्यम्। अवभृथोत्तरासु विमोचनं क्रियत एव।

**केचित्तु–निवृत्तिः**—न क्वचित्सोमे यज्ञविमोकः क्रियतेऽपूर्वत्वादप्राप्तेः।

**इतिकरण–निवृत्तिः**—उक्ता।

---

[1] तत्र दीक्षाव्रतानिवृत्तिपक्षे–च, नात्र दीक्षाव्रतानिवृत्तिरिति पक्षे–क. [2] चान्यत्र प्राप्तस्य. [3] पशोर्न निवर्तते. [4] प्रकृतं–च. [5] प्रकृते–छ. [6] तत्रानन्यकृतत्वात्–क. च.

**केचित्तु-दर्शनात्**—तृणस्य यजमानायतत्वात्, तृणमयमासनं यजमानायतने कल्प्यमिति गम्यते। तस्मात् आसनोपस्तरणार्थं चर्म; न हि सदस्यप्रविष्टपूर्वस्यासनप्रकल्पनमन्तरेणायतनसिद्धिः। सोम एव कृतानां साधारणत्वात्, निवृत्तौ प्राप्तायां प्रकरणाच्च तस्मिन् सन्निहिते पुनः;—

**सोमग्रहणा-ण्यादयः**—'अग्निभ्यः कामाय पशूनालभते' इति। 'अग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्या वा' इति च॥

**तेष्व-यते**—क्रियत एव सर्वम्।

**उदवसानीयायाम्**—सिद्धा।

**दक्षिणा-द्वान्**—नापूर्वविधानमित्यन्यत्रापि दक्षिणानिवृत्तेर्लिङ्गम्। अतः भिन्नतन्त्रेषु सर्वं क्रियते॥

(रु) ये सोमान्तःपातिन इष्टिपशुबन्धास्तेषां चोदकप्राप्तान्यग्न्यन्वाधानादीनि निषिध्यन्ते। सोमाङ्गैरेव कैश्चित्सिद्धार्थत्वात्। यथा देवतापरिग्रहार्थत्वादग्न्यन्वाधानादयस्तत्समानार्थैर्दीक्षणीयादिभिः। न चासिद्धं तेषां देवतापरिग्रहार्थत्वं, 'यजमानाय परिगृह्य देवान्, देवता एवोभयतः परिगृह्य' इति मन्त्रब्राह्मणसिद्धत्वात्। तथा दीक्षितव्रतादिभिर्व्रतोपायनाद्यर्थसिद्धिः। ननु सवनीयस्य पशोरुपवसथे जागरणस्य श्वस्सुत्यायामिति विधानात् अन्यस्य च सद्यस्कालतया प्राप्तेरेवाभावात्किमत्र निषिध्यते। उच्यते, ऐष्टिकस्य चोदकप्राप्तस्यायं प्रतिषेधः। अस्ति वा तस्मादस्य भेदः। अस्त्येवेति ब्रूमः। तत्तावदमावास्यायां रात्रिं जागर्त्यपि वा सुप्यादिति पाक्षिकम्। नैतदेवम्। तथा आहवनीयागारे गार्हपत्यागारे वा शेत इति तस्य स्थानम्, आग्नीध्रे हविर्धाने वा यजमानं जागरयन्तीत्यस्य। तस्मादस्ति

धर्मभेदाद्भेदः। इतिरत्र प्रकारवचनः। अङ्गान्तरमपि यत्प्रसङ्गादुपजीव्यं तदपि निवर्तते। यथा विद्युदसीत्यपामुपस्पर्शनं ब्रह्मवरणमित्यादिद्वयोरपि क्रत्वर्थयोरेव प्रासङ्गिकत्वात् ॥

[सोमान्न्यूनानतिरिक्तदेवताकदीक्षणीयायां अप्राप्तयोरग्न्यन्वाधानपत्नीसन्नहनयोर्विधानम्]

(सू) अग्न्यन्वाधानं तु दीक्षणीयायां क्रियेत पत्न्याश्च सन्नहनम् ॥ १० ॥ १ ॥ ४५ ॥ २६६० ॥

(भा) क्रियते दीक्षणीयायामग्न्यन्वाधानम्। दीक्षणीयायां देवतानां परिगृहीतत्वात्। पत्न्यास्सन्नहनम्; असन्नद्धत्वात् व्रतोपायनं च, शब्देनानुपेतत्वाद्दीक्षाव्रतानाम्। उपदेशस्तु यदेव गृहीतं [1] तन्न क्रियते। [2] अवचनान्नायं न्याय इति। अतस्तु [3] तैर्विद्युदपि कर्तव्या पुनःपुनः सर्वयज्ञेऽपूपस्पर्शनमिति वच[4]नात्तु न कुर्वन्ति ॥

(वृ) क्रियते–धानम्—ननु साङ्गप्रधानस्य सोमस्य या देवतास्तासां सर्वासां दीक्षणीयायां परिगृहीतत्वात् [5] न तत्राग्न्यन्वाधानं प्राप्नोतीति चेत्; न; दीक्षणीया[6]यां बहिस्तन्त्रवृत्तिकर्मदेवतानामपरिगृहीतत्वाद्देवतापरिग्रहार्थायास्तस्या [7] अनिवृत्तेः।

पत्न्यास्सं–त्वात्—दीक्षणीयायां क्रियते, ततः पुरस्तात्सोमार्थम्।

असन्नद्धत्वात्— पत्न्याः प्रसङ्गाभावात्।

---

[1] न क्रियते वचनात्–ख. [2] अवचनात् न्याय इति–च. [3] अतस्तु–ख.
[4] नातु–क. ग. [5] नात्रा–च. [6] यां देवतानामपरि–ग. च. [7] अनिष्पत्तेः–ग.

**व्रतोपायनं च**—कर्तव्यम् ; दीक्षणीयायां प्रधानात्पुरस्ता-द्यजमानस्यादीक्षितत्वाभावेन दीक्षितशब्देनानुपेतत्वाद्दीक्षितव्रतानामप्राप्तेः ऐष्टिकव्रतानामनन्तर्भावात् ।

[उपदेशन्यायमतोऽन्यविशेषांशाः]

**उपदे-यते**—[1]अन्वाधानमिति ; कुतः ।

**अवचनात्-न्याय इति**—अस्यार्थः ; —पत्न्याःसंनहनं[2] विमोचनं च न विद्यते इति न्याय इत्यवचनात् कृतायां वेद्यां चोद्यन्त इत्यत्रापि वचनमेव । इतिकरणं चोक्तसमुच्चयार्थमेव दृष्टं पिता मातेतीत्यादौ ॥

किञ्च सर्वान्ते पठितव्यं चकारं यन्मध्ये पठति अन्वाहार्यस्य च दानमिति । [3]अन्वाहार्ये निषिद्धे तत्सजातीयाः पशुदक्षिणाः प्राप्नुवन्तीति तासां परिग्रहार्थमिति गम्यते । अतो [4]गृहीतस्याकरणं ; अगृहीत सर्वं क्रियत[5] एव ब्रह्मवरणादि ।

**अतस्तु-पुनः**—[6]उपदेशपक्षमनुतिष्ठन्ति ।

**सर्वय-चनात्**—दीक्षणीयादीनां च यज्ञत्वात् ।

**तत्तुन-न्ति**—तदेवास्मिन् पक्षेऽनुचितम् ; तथाऽप्य[7]नुष्ठानादननुष्ठानमेव ।

(रु) द्वयमेतद्दीक्षणीयायामन्यथासिद्धत्वात्क्रियते । व्रतोपायनमनुपेतत्वात्कार्यमित्येके । तदयुक्तम्, द्वयोरेव प्रतिप्रसवे तृती-

---

[1] अग्न्यन्वा—ग. [2] हनविमोचने विद्यते इति न्याय इत्यवचनात्. [3] ततोऽप्यन्वा—ग. च. [4] अतोऽपि गृहीतस्यैव करणं—ग. [5] त इति। एवं ब्रह्म—ग. [6] ये उपदेश—ग. च. [7] यथाऽप्यननुष्ठानमेव—च. तथाऽप्यननुष्ठानादननुष्ठानमेव—ग.

यस्योपसंख्यानायोगात् दीक्षणीययैव तदर्थसिद्धेश्च । यथाह बोधायनः व्रतं कृणुतेति सर्वेषां व्रतोपायनीया भवतीष्टिरिति । सत्याषाढभारद्वाजौ त्ववभृथोत्तरकालासूदवसानीयादिषु व्रतोपायनं प्रतिप्रसुवाते । नायमाचार्याभिप्रायः । 'दर्शपूर्णमासप्रकृतीनां सोम' इत्यविशेषवचनात् अप्रतिप्रसवाच्च । पत्नीसंनहनं त्ववभृथोत्तरकालास्वर्थसिद्धम् । अवभृथे योक्त्रस्य त्यक्तत्वात् आह च बोधायनः, सन्नद्धा पत्नी यज्ञपुच्छमन्वास्त इति । दीक्षणीयायोक्त्रं तदन्तमेव धार्यते, सोमार्थस्य भावित्वात् ॥

[अर्वाक्प्रायणीयाया यूपाऽऽहुतेर्वैकल्पिकत्वम्]

(सू) **दीक्षासु यूपं कारयति ॥१०॥१॥४६॥२६६१॥**

(भा) दीक्षासु यूपमध्वर्युणा कारयति यूपाऽऽहुत्यादि [1]चषालकरणान्तम् ॥

(वृ) **दीक्षा-यति**—दीक्षासु यासु रात्रिषु दीक्षाधर्मा एव वर्तन्ते तास्वेका दीक्षेत्यादिषु संवत्सरपर्यन्तासु यूपमध्वर्युणा कारयति यजमानः ।

**यूपा-णान्तम्**—दीक्षितस्य [2]यूपाहुतिर्विकल्पेन राजक्रयादर्वाक् । अथवा 'एका दीक्षा तिस्र उपसदः पञ्चमीं प्रसुतः' इत्यादौ प्रायणीयाहस्य दीक्षणीयास्वनन्तर्भावात्प्रायणीयाहात्पुरस्तात् ॥

(रु) तक्ष्णा ॥

[यूपगतैकानेकत्वयोर्युक्तिप्रमाणाद्युपपादनम्]

(सू) **क्रीते राजन्युपसत्सु वा ॥१०॥१॥४७॥२६६२॥**

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने चतुर्थीखण्डिका । इति प्रथम पटलः ।

---

[1] चषालपर्यन्तम्–ग. [2] कृत्वा यथा पशौ व्याख्यातम् । दीक्षित–क. ग.

(भा) क्रीते राजनि यावन्नोपसदः प्रवर्तन्ते। उपसत्सु यावत्तदानीमेवाऽऽपराह्निकीभ्यामिति न करोति। [1]अकर्मकालत्वाद्यूपोत्पत्तेरग्नीषोमीयसवनीयानूबन्ध्यानां एक एव यूपः। ऐकादशिनानामपि सोमप्रकरण उक्तत्वात्। तस्य चानर्थक्या[2]द्यूपेन स एव प्राप्तः। वचनात्तु ऐकादशिनानां प्रतिपशु यूपा भवन्ति। [3]तस्य च लिङ्गं विद्यते 'एकयूपो वैकादशिनी वा, अन्येषां यज्ञानां यूपा भवन्ति' इति। अग्न्यन्वाधानप्रभृत्याज्येडान्ता दीक्षिणीया ॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने प्रथमः पटलः

---

[आदित्योपस्थानान्ते यूपविधिः]

(वृ) **क्रीते रा–र्तन्ते**—प्रवर्ग्येण प्रचर्योपसदा प्रचरन्तीत्यस्मिन् पक्षे प्रथमप्रवर्ग्योत्तमशान्तिकरणावधिरेकः कालः। राज[4]क्रयेऽग्निं राजानं चान्तरेणेति सम्प्रैषान्तः; हरणादीनामपि क्रयशेषत्वात्। तदानीं चषालकरणान्तेऽवहननादि कर्म प्रतिपद्यते आतिथ्यायाः; उपदेशस्तु अवहननादिकर्म प्रतिपद्यते इति प्राप्तस्य पुनर्वचनमातिथ्यामध्ये यूपकरणप्रतिषेधार्थमिति ॥

अथवा 'शीर्ष्णा गिरौ क्रीतꣳ हरन्ति' इति लिङ्गात् 'वयस्सुपर्णाः' इत्यादित्योपस्थानान्ते यूपः ॥

**उपसत्सु**—उपसदस्तन्त्रारम्भप्रभृति।

**याव–करोति**—तावदेकः कालः।

---

[1] सकर्मका—ख. [2] यूपस्य (रा. पाठः)—क. ग. च. [3] एतस्य—क.
[4] राजक्रयोऽग्निम्—ग.

[सोपपत्तिकं सौमिकपशुसामान्यस्याप्येकयूपकत्वमुपवर्ण्य अभिषेचनीयादावावृत्तिसत्त्वेऽपि यूपान्तरोत्पत्तिनिषेधकथनम ]

**अग्निषोमीय-एव यूपः**—अस्यार्थः ;—यस्मिन् कर्मणि यूपो विनियुज्यते, अग्नीषोमीयादिपशौ तस्याग्नीषोमीयस्य पशोस्तन्त्रं प्रक्रमयतीति वक्ष्यमाणकालत्वात् ततः पूर्वकाल एव यूपोत्पत्तेस्त[1]त्प्रयोगचोदनापरिग्रहाभावेन तत्तदसाधारणत्वाभावात्सोमाङ्गभूतानां पशूनामेष साधारणः कालः इति सर्वेषामय[2]मेव यूपः। तथाचोक्तं दीक्षासु यूपं कारयतीत्यत्राग्नीषोमीयस्य[3] सवनीयस्य वेति विशेषावचनमेकत्वं च ; तत[4]स्सोमप्रकरणगृहीतत्वात् सोमे चानर्थक्यात् तदङ्गभूतेषु सर्वपशुष्वविशेषाद्भवति। अत एव 'निरूढपशुबन्धवत्कल्पः' इति नाग्नीषोमीयार्थो[5] यूपस्तत्रोत्पाद्यः ये बहिस्तन्त्रवर्तिनः पञ्चपश्वादयस्तेषामङ्गत्वेऽपि सोमस्य तदानीं यूपानुत्पत्तेरन्यो यूपः। तथा सौत्रामण्यादौ निर्वृतार्थत्वात् राजसूयादौ [6]अनेकसोमात्म[7]कत्वेऽपि तदङ्गभूतसोमा[8]न्तर्वर्तिपशूनामपि [9]तत्रोत्पन्न एवानूबन्ध्यायाः।

अतएवा[10]भिषेचनीया[11]दौ दीक्षादीनामावृत्तावपि तेषामवभृथान्तत्वात्पूर्वयूपस्यानूबन्ध्यार्थत्वेन स्थितत्वात् न यूपान्तरोत्पत्तिः।

[उपदेशमतोऽन्यर्योंऽशः]

उपदेशस्तु तत्तत्सोमकालोत्पन्ना यूपास्तत्तत्सोमाङ्गभूतपशूनामेव ; नान्येषामिति ॥

---

[1] प्रयोग—च. [2] यं यूपः—ग. च. [3] अग्नीषोमीयस्य वेति—ग. [4] अतः—क. च. [5] यार्थ—क. ग. च. [6] अनेकसौत्यकेऽपि—ग. [7] सोमात्मकेऽपि—क. च. [8] सोमाङ्गभूतपशूनां—ग. [9] मन्त्रोत्प—च. [10] अत एवाभिषेचनिकादौ. [11] नीयकाले दी—च.

**ऐकादशिनानामपि**—ऐका[1]दशिनानामप्येष एव यूपः । यद्यपि तत्राग्निष्ठप्रथमाः स्त्रयोदश यूपान्मन्त्रेणाच्छिनत्तीत्युक्तम् ।

[ऐकादशिनेषु यूपान्तरानिषेधकयुक्त्युपपादनम्]

**सोमप्रकरण उक्तत्वात्-प्राप्तः**—अस्यार्थः ;—सोमप्रकरण उक्तानामै[2]कादशिनानां ते[3] यूपाः । स च यूपाहुतिं हुत्वाऽग्निष्ठप्रथमाः-स्त्रयोदशयूपान् मन्त्रेण छिनत्ति मध्यमोपसदन्तरा साधारणकाले सोम-प्रकरणे तत्र सोमे यूपकार्याभावेन तेषां तस्य चानर्थक्यात् । तदङ्ग-भूतपशुषु तेषु सर्वयूपा अविशेषेण भवन्ति । अत इतरपशाविवैकादशि-नेषु स एव प्राप्तः तस्मादैकादशिनानामपि स एव यूप एकः ॥

[विशेषानुक्तेस्तुल्यविध्योर्वैकल्पिकत्वम्]

**वचना-भवन्ति**—न चैकादशिनानां विशेषवचनं विद्यते ; सोमप्रकरणोक्तान् यूपानन्तरेण वा तत्रैकस्य बहूनां चानर्थक्यं ; तदङ्गन्यायेन प्राप्तस्तुल्यातुल्ययोश्च विध्योर्विकल्प एव ॥

**एतस्य च-भवन्ति**—इत्यनुवादविशेषात् ।

[शङ्कासमाधानाभ्यां सोमे यूपैकादशिनीनिषेधसमर्थनम्]

ननु यदि सोमप्रकरणे यूपैकादशिन्या यूपैकत्वस्य च विकल्पेन प्राप्तिः, ततः पश्वेकादशिन्यां सत्यामसत्यां च यूपैकादशिनी स्यात् य[4]थैकयूप इति चेत् ; मैवम् ;—आनर्थक्याद्धि सोमादपकृष्याङ्गेषु निवेश्यन्ते यूपाः ; तत्राप्यानर्थक्ये कथं नाम प्रयुज्येरन् ; इति प्रयोजनाभावाद्यूपैकादशिन्या न प्र[5]युक्तिः ॥

---

[1] एकाशिनानामपि पशूनामेषः—च. एकादशिनानामपि पशूनामेक—ग. [2] उक्ता ऐकादशिनानां—च. [3] ते यूपाहुतिं हुत्वा—ग. [4] तथैक—क. [5] प्रयुक्तिः—क. ग. च.

अग्रयन्वा-णीया—[1]अशनव्रतोपायनयोः पूर्वं प्रवृत्तिः, सद्यस्कालायामशनाभावात् । त[2]स्मिन्नेव विद्यमाने तदपेक्षक्रमविशेषस्याभावात् आज्येडा याजमानाऽनुमन्त्रणान्ता ॥

इति श्रीरामाग्निचित्कृतायां आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्यवृत्तौ
दशमप्रश्ने प्रथमः पटलः

---

(रु) उपसत्स्वित्येव सिद्धे क्रीते राजनीतिवचनमनियमार्थम् । यूपस्समानोऽग्नीषोमीयसवनीयानूबन्ध्यानाम्, सोमप्रकरणे विधानात्त्रयाणामर्थित्वात्, कस्यचित्कालेऽनुत्पत्तेश्च । यथोक्तं न्यायविद्भिः, यूपश्चाकर्मकालत्वादिति । तथा त्रीननुक्रम्य समानो यूप इति सत्याषाढः ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
दशमप्रश्ने चतुर्थी खण्डिका
इति प्रथमः पटलः

---

[प्राचीनवंशलक्षणम्]

(सू) प्राचीनवंशं करोति पुरस्तादुन्नतं पश्चान्निनतं सर्वतः परिश्रितम् ॥ १० ॥ २ ॥ १ ॥ २६६२ ॥

अवान्तरदिक्षु स्रक्तयः ॥१०॥२॥२॥२६६३॥

(भा) प्राचीनः प्रागायतः पृष्ठवंशो यस्य सः; आनुपूर्व्येण पुरस्तादुन्नतं पश्चान्निनतं सर्वतो वेष्टितम् ॥

---

[1] नानाशनव्रतो—क. च. [2] तस्मिन्न विद्यमाने—ग.

### [प्राचीनपदस्य पुराणादिवाचित्वाङ्गीकारे श्रुत्यादिविरोधमुपपाद्य पृष्ठवंशस्यैव प्राचीनत्वनियमे प्रमाणाद्युपन्यासः]

(वृ) **प्राचीनः-यस्य**—शरणविशेषस्य स एव प्राग्वंशः। प्राचीनशब्दो न पुराणवाची नो[1]ध्वास्यवाची, "देवमनुष्या दिशो व्यभजन्त" इति लिङ्गात्। 'तस्मिन्नुदीचीनवंशं शरणं करो[2]ति' इत्यस्याऽऽग्रयाधेयिकशरणोदीचीनत्वस्य प्रत्याम्नानात्। तथा पृष्ठवंशस्यैव प्राचीनत्वनियमः, 'प्रागा[3]य[4]तं पृष्ठवंशं कुर्यात्' इति वाजसनेयमतात्। स च पृष्ठवंशस्तावान् ग्राह्यः। यावता पृष्ठवंशेना[5]ग्न्याधेयो विहारः सपत्नयायतनः ससंचरः सम्पद्यते। तत्र चोक्तम् आग्न्याधेयिके विहारे; गार्हपत्याहवनीययोरन्तराले विज्ञायते अष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत, एकादशसु राजन्यः, द्वादशसु वैश्यः, चतुर्विं[6]शत्यामपरिमिते यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेयः, इति। तथा एता[7]वतोऽन्तरालस्य पश्चात्पुरस्ताच्च गार्हपत्याहवनीययोः। पिशीलमात्रं पश्चाच्च[8] गार्हपत्याऽऽयतनं, संचरश्च 'प्रक्रमो द्विपदस्त्रिपदो वा' यजमानस्याध्वर्योर्वा यावदर्थं तिरश्चति; सूत्रान्तरे 'द्वादश षोडश वा प्रक्रमा आयामो[9]ऽष्टौ प्रक्रमास्तिर्यक्' इति। न त्वापस्तम्बस्य [10]मतं; वैश्यस्योक्तपरिमाणान्तराभावात्। षोडशप्रक्रमा वैश्यस्ये[11]ति नियामकाभावादिति। आहवनीयस्य पुरस्तात्संचरो भवति, 'प्राग्वंशस्य मध्यमाल्लालटिकात्' इति लिङ्गात् पुरस्ताद्द्वारदर्शनाच्च।

---

[1] नयोर्ध्ववास्यवाचि-**च**. नचोर्ध्ववास्यवचनः-**ग**. [2] तीत्याग्नयाधेयिकप्रकरणे उदीचीव वंशत्वस्य प्रत्या-**च**. [3] प्राग्दिशि प्रागा-**क. च**. [4] प्राग्वंशे-**ग**. [5] धेयिको वि-**क. ग. च**. [6] परि-**क. च**. [7] तोत्तरकालस्य-**ग**. [8] च पत्नयायतनम्-**ग. च**. [9] इमेन प्रक्रमेण तिर्य-**च**. [10] तत्तु आपस्तम्बस्य न मतम्-**ग. च**. [11] स्यैवेति-**क**.

आनुपू-निनतम् — प्राग्वंशं करोति, स्थलप्रकारा वक्ष्यमाण-लक्षणः। तथा—

(रु) प्राचीनो वंशो यस्य विमितस्य तद्दीक्षितविमितमित्याख्यायते। 'प्राचीनवंशं विमितं विमिन्वन्ति' इत्येव शतपथश्रुतिः। तस्य च प्रमाण-विशेषाविधानादर्थलक्षणावायामविस्तारौ। बोधायनस्तु षोडशप्रक्रमा-यामो द्वादशव्यासस्तस्य मध्ये द्वादशिको विहार इति। पश्चात्पत्नी-शालामिति च। समे शङ्कुं निखाय शङ्कुसम्मितया रज्ज्वा मण्डल परिलिख्य यत्र लेखयोश्शङ्कुच्छाया पतति सा प्राचीति कात्यायनः॥

[रलयोरभेदादारोकपदस्य वातायनार्थकत्वम्]

(सू) स्रक्तिष्वारोकान् करोति॥१०॥२॥३॥२६६४॥

(भा) आरोकाः-वातायनानि, कोणेषु।

(वृ) लकारस्य रेफश्छान्दसः।

कोणेषु—कर्तव्याः।

(रु) कोणेष्वारोका अंतराळानि। 'आरोकेष्वारण्यान् धारयन्ति' इति श्रुतेः। कोणेषु छिद्राणि करोतीत्यर्थः॥

(सू) प्रतिदिशं द्वाराणि॥१०॥२॥४॥२६६५॥

(सू) पुरस्ताद्द्वारं स्वर्गकामः दक्षिणतो यः कामयेत पितृलोक ऋध्नुयामिति पश्चान्मनुष्यकामः। उत्तरतो यः कामयेत देवलोक ऋध्नुयामिति। सर्वतो यः कामयेत सर्वासु दिक्ष्वृध्नुयामिति॥ ॥१०॥२॥५॥२६६६॥

[महादिक्षु, उत्तरपूर्वस्यां च द्वारसङ्ख्यानियमः तत्रोपपत्तिश्च]

(भा) प्रतिदिशं द्वाराणि पंच कर्तव्यानि, महादिक्षु चत्वारि, उत्तरपूर्वस्यामेकमिति। 'उत्तरपूर्वद्वारं प्रत्युच्छिष्टखरं करोति' इति सिद्धस्य दर्शनात्। तं त्वेकम् तेन निष्क्रान्तस्सर्वं करोति न सर्वतः। 'सर्वतो यः कामयेत' इति पक्षे पञ्चैव॥

[प्राकृतद्वाराणामर्थवाद इत्यङ्गीकारे विशेषविधिना बाधः]

(वृ) उत्तर-दर्शनात्—द्वारस्य। अतो नित्यानि पञ्च द्वाराणि काम्यं चैकैकं द्वारम्। तस्य [1]तस्य कामस्य; न तु प्रकृतानामेव द्वाराणामर्थवादः, 'यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति' इत्यादिवत्। यः कामयेत स कुर्यादिति विशेष[2]विधानात्।

[उच्छिष्टखरनिर्माणप्रदेशादिनिष्कर्षः, उपदेशमतो· न्नेयांशश्च]

तेन-करोति—यद्द्वारान्तरेण कर्तव्यं तच्च दक्षिणया द्वारोपनिर्हृ[3]त्येत्यादौ। यदि[4] प्रतीच्या द्वारा निष्क्रामतीति न प्रतिषेधः। 'तथा पूर्वया द्वारा प्राग्वंशं प्रविश्य' इत्यादिनियमो न भवति। तथा घर्मधुगादीनां बन्धनार्थशङ्कूनां च द्वार्यादिनि[1]यमो न भवति। तथा घर्मधुहः शालामुखीयात्प्राक् साङ्काशिनं सर्वदा कर्तव्यमेव द्वारान्तरेण निष्क्रम्यापि। उत्तरपूर्वदेश एवोच्छिष्टखरकरणं। उपदेशोऽभ्यन्तर एवेति; बाह्यतो निष्षेचनवन्तामिति पूर्वस्मिन् पक्षे बाह्यत

---

[1] तस्य कामुकस्य—ग. [2] षवचनात्—ग. [3] विष्क्रम्येत्यादौ—ग. [4] यद्युदीच्यामेव द्वारं, तदा न प्रतीच्या द्वारा निष्क्रामति इति न प्रतिषेधः। तथा—ग. च.

उच्छिष्टखरं करोति,[1] निष्षेचनवन्तमित्यन्तमुच्छिष्टस्यायुक्तत्वात् । न सर्वतः–द्वाराणि ॥

सर्वतः––तानि [2] नित्यानि ॥

(रु) यथोक्तासु पंचस्वपि दिक्षु एते काम्याः कल्पाः । पूर्व एव नित्यः, पूर्वया द्वाराऽपरस्यां द्वारि दक्षिणस्यां द्वारीति नित्यवदनुवादात् । श्रुतिश्च दिक्ष्वतीकाशान् करोतीति ; दिक्षु द्वाराणि, एकद्वाराः काम्याः कल्पा इति सत्याषाढः । न चोत्तरपूर्वे द्वारं प्रत्युच्छिष्टखरं करोतीति सिद्धवदनुवादात्तदपि नित्यं ; काम्यश्रुतिविरोधात् । पाक्षिकेणाप्युपलक्षणसिद्धेश्च ॥

['केशश्मश्रु वापयते' इत्यस्य वपने क्रमनियामकत्वम्]

(सू) उत्तरेण बर्हिः प्राग्वंशं परिश्रिते यजमानः केशश्मश्रु वापयते ॥ १० ॥ २ ॥ ६ ॥ २६६७ ॥

(भा) उत्तरेण[3] प्राग्वंशस्य वपनम् ॥

(वृ) उत्तरेण––अदूरतः, एनप् प्रत्ययः, न तृतीया ।

प्राग्वंशस्य—एनपा द्वितीया षष्ठ्यर्थे । बर्हिः परिश्रिते वपनं यजमानोऽध्वर्युणा कारयेत् ॥

(रु) बर्हिरिति स्पष्टार्थम् । केशश्मश्रुग्रहणं लोम्नामप्युलक्षणार्थम् । न चेदुपपक्षयोः क्रमनियमायोगात् ॥

(सू) उपपक्षावग्रेऽथ श्मश्रूण्यथ केशान्, अपि वा श्मश्रूण्युपपक्षावथ केशान् ॥ १० ॥ २ ॥ ७ ॥ ॥ २६६८ ॥

---

[1] करोतीत्यन्तर्वाच्छिष्टस्य–ग. [2] तानि यानि नित्या–क. च. [3] उत्तरणादूरेण–क. ख.

(भा) श्मश्रूपपक्षान् वापयित्वा ॥

(वृ) श्मश्रूप-त्वा—केशानां वपनम् । न तु केशश्मश्रु वापयते इत्यनेन क्रमोऽपि नियम्यते । 'उपपक्षावग्रे' इत्यादिवाचनिकेन क्रमेण पाठक्रमस्य विकल्प[1]त्वात् । उपपक्षः—कपोलभागः । श्मश्रुग्रहणं लोम्नामप्युपलक्षणम् । 'केशश्मश्रु वापयते' इत्युक्त्वा 'उपपक्षावग्रे' इति वचनात् । अत्राथशब्दः पूर्वोक्तपाठक्रमबाधनार्थः ॥

(रु) उपपक्षौ बाहुमूले ॥

[केशवपनादर्वाग्दक्षिणशिरोभागोन्दनवपने हेतुः, तत्कर्ता चाध्वर्युः]

(सू) 'आप उन्दन्तु' इति दक्षिणं गोदानमुनत्ति । 'ओषधे त्रायस्वैनम्' इति प्रागग्रं दर्भमन्तर्धाय 'स्वधिते मैनꣳ हिꣳसीः' इति स्वधितिनाऽभिनिधाय 'देवश्रूः' इति प्रवपति ॥ १० ॥
॥ २ ॥ ८ ॥ २६६९ ॥

(भा) गोदानं—दक्षिणशिरो[2]भागतः[3] । तं 'आप उन्दन्तु' इत्यद्भिः क्लेदय[4]त्यध्वर्युः । स्वधितिः—क्षुरं तं दर्भस्योपरि स्थापयति । 'देवश्रूरेतानि प्र वपे' इत्येवमन्तेन मन्त्रेण वपति । [5]उत्तरो मन्त्रो याजमानः । उपदेशस्तु 'अशीय' इत्यन्तो मन्त्रः । यथालिङ्गं तु याजमानम् ॥

---

[1] विकल्पासहत्वात्—क. ग. च. [2] दक्षिणशिखाभागः—च. [3] भागः (धा. सू. पा. क.)—ख. [4] क्लेदयत्यध्वर्युः—क. ग. [5] वपन मंत्रो-ग.च.

(वृ) गोदानं–त्यध्वर्युः—न तु केशवपनानन्तरं गोदानस्योन्दनवचने, केशवपनस्ये[1]तिकर्तव्यतारूपत्वात् । अतः केशवपनात्प्रागेवोन्दनम् ॥

स्वधितिः–क्षुरम्—न पशुप[2]ज्ञपनार्थम् ॥

तं दर्भ–यति—'स्वधिते मैनꣳ हिꣳसीः' इत्यनेन मन्त्रेण ॥

देवश्रू–वपति—सदर्भान् केशान् 'स्वस्त्युत्तराण्यशीय' इति ॥

उत्तरो–याजमानः—वपती[3]ति विधानात् ॥

उपदेश–मन्त्रः—'ओषधे त्रायस्वैनम्' इत्यादीनां याज[4]मानानां सूत्रकारेण पाठात् 'स्वस्त्युत्तराण्यशीय' [5]इत्युत्तरस्य ग्रहणमिति ॥

यथालिङ्गं तु याजमानम्—दर्भान्तर्धाने 'ओषधे त्रायस्व' इति, स्वधित्यभि[6]निधाने 'स्वधिते मा मा हिꣳसीः' इति ॥

(रु) गोदानं श्रोत्रस्योपरिदेशः । उनत्ति क्लेदयति । उक्तेषु केशश्मश्रुषु दर्भमेकमन्तर्धाय प्रवपति वपनमारभते ॥

(सू) एवमुत्तरं गोदानम् ॥ १० ॥ २ ॥ ९ ॥ २६७० ॥

[जपस्य याजमानत्वे कारणम्]

(सू) "ओषध त्रायस्व मा स्वधिते मा मा हिꣳसीः स्वस्त्युत्तराण्यशीय" इति जपति ॥ १० ॥ २ ॥ ॥ १० ॥ २६७१ ॥

---

[1] स्येतिकर्तव्यता क. च. [2] विशसनार्थं–ग. [3] जपतीति विधानात्–क. ग. च. [4] नां सिद्धानां सूत्र–च. नां विलानां–ग. [5] वपने क्रियमाणे जपतीति लिङ्गेन पाठक्रमात् स्वस्त्युत्तराण्यशीयोत्तरेत्यादिनोत्तरस्य ग्रहणमिति–ग. [6] स्वधित्यन्तर्धाने–च.

(भा) 'स्वस्त्युत्तराण्यशीय' इति वपने क्रियमाणे यजमानो जपति। एवमुत्तरस्यापि शिरोभागस्य गोदानाख्यस्य। उपदेशो याजमानमुत्तर एव गोदाने कु[1]र्वन्ति ॥

(वृ) स्वस्त्यु–जपति—लिङ्गेन पाठक्रमस्य बाधितत्वात् ॥

एवमु–स्य—उन्दनादिवपनान्तं करोति ॥

[पौर्णमास्यां कृतवपनस्य पुनर्वपननिषेधकयुक्ति-प्रतिपादनम्]

उपदेशो–र्वन्ति—'ओषधे त्रायस्वैनम्' इत्यादि कुतः? देवश्रूरिति प्रवपति 'ओषधे त्रायस्व मा स्वधिते मा मा हिꣳसीः स्वस्त्युत्तराण्यशीय' इति यजमानो जपत्येवमुत्तरं गोदानमित्येवं वक्तुं शक्ये यत्पश्चाद्याजमानं विदधाति। अत्रापि लिङ्गस्य न बाधः। [2]अस्मिन् पक्षे पाठो बाध्येत। शिखावर्जं सर्वान् केशाननन्तरं [3]वपति। यदा तु अपरपक्षे प्रथमायां दीक्षते पौर्णमास्यां दीक्षा यजनीये वा इति पक्षापवर्गयोः; तदा पौर्णमास्यां कृतवपन[4]श्चेत् न वपनम्; [5]सोमाधाने चार्थलोपात् ॥

[उपदेशमतोऽन्वयांशमुपपाद्य 'उत्तरम्' इति पदं प्रयुञ्जानस्या-शयप्रकटनम्]

उपदेशस्तु केशश्मश्रुवृद्ध्यभावेऽपि वपनं राजक्रयवत्संस्कार इति तदानीं मन्त्र[6]जपः। छि[7]न्ने लूने इति भरद्वाजवचनात्। अत्राप्युष्णोदकमिश्रेणोन्दनामिति केचित्। वपनं प्राङ्मुखस्य; 'एवं सव्यम्'

[1] कुर्वंति–ङ. [2] तस्मिन्. [3] वापयति. [4] श्चेद्वपनं भवति–क. ग. च. [5] तथा सोमाधाने–क. [6] मन्त्रान् जपेत्–ग. [7] क्लिन्ने लू–च. छिन्ने मूले–ग.

इति वक्तव्ये 'उत्तरम्' इति वचनात् भ्रुवौ प्रकोष्ठे च वर्जयित्वा [1]लोम्नां वपनम् ॥

(रु) गतः ॥ त्रीणि यजूंषि त्रिषु कर्मसु यथासंख्येन जपत्युभयत्र ॥

[ हस्त्यानां पद्यानां च नखानां निकर्तनं विधाय
दन्तधावनविधानं सूत्रचतुष्टयेन ]

(सू) अभ्यन्तरं नखानि कारयते ॥ १० ॥ २ ॥ ॥ ११ ॥ २६७२ ॥

सव्यस्याग्रे कनिष्ठिकातः ॥ १० ॥ २ ॥ १२ ॥ ॥ २६७३ ॥

हस्त्यान्यग्रेऽथ पद्यानि ॥ १० ॥ २ ॥ १३ ॥ २६७४ ॥

(भा) अभ्यन्तरं-प्रदक्षिणम्, कनिष्ठिकादारभ्य [2]सव्याग्रे दक्षिणस्यापि च। केचि[3]न्नखाभ्यन्तरमिति वर्णयन्ति ॥

(वृ) अभ्यन्त-क्षिणम्—नखानां [4]कर्तनं कारयेत न [5]कर्तनक्रिया प्रादक्षिण्येन कर्तव्या क्रियाविशेषणत्वात्। कनिष्ठिकादारभ्य सव्यस्याग्रे। दक्षिणस्यापि पादस्य नखानां [6]करणम्। हस्त्यान्यग्रेऽथ पद्यानीति।

केचित्तु-र्णयन्ति—तत्र [7]नखस्य नखस्याभ्यन्तरं कारयेत इत्यर्थः। अभ्यन्तरशब्दस्य प्रादक्षिण्ये प्रयोगाभावादिति ॥

(रु) यथाङ्गुल्यग्रेभ्योऽभ्यन्तरं भवति तथा कारयति नापितेन। सव्यस्य हस्तस्य पादस्य वाग्रे कनिष्ठिकात आरभ्येति शेषः। गतः ॥

---

[1] स्वान्येषां वप-ग. [2] सव्यस्याग्रे-ख. ङ. [3] नखस्याभ्यन्त-ख. ग. ङ. [4] नां निकृन्तनं-क. ग. च. [5] निकृन्तनक्रिया-क. ग. च. [6] णम्। हस्त्यान्यग्रेऽथ पद्यानीति-क. ग. च. [7] तत्रनखं तस्य तस्य नखस्याभ्यन्तरं कारयते इत्यर्थः-ग. ङ. च.

(सू) औदुम्बरेण दतो धावते लोहितमनभिगमयन् ॥ १० ॥ २ ॥ १४ ॥ २६७५ ॥

(भा) दन्तान् शोधयत्यौदुम्बरेण ॥

(वृ) दन्तान्-रेण —न तु ताम्रमयेन ; लोहितम[1]नभिगमयन्—यथा चक्षुर्विषयं न प्राप्नोति । दृष्टे तु रुद्रिशमभ्य इति भवति, दीक्षितत्वात् ॥

(रु) दन्तकाष्ठेन ॥

[दीक्षितस्यावगाहनस्नानविधिः, सौत्रस्य अवकपदस्य शरार्थत्वाङ्गीकारे प्रमाणादिकं च ]

(सू) स्थावरास्वप्सु स्नाति शङ्खिनीष्ववकिनीषु लोमशे तीर्थे ॥ १० ॥ २ ॥ १५ ॥ २६७६ ॥

(भा) स्थावराः-अशोष्याः । शङ्खिनी—ह्रदः । उपदेशस्तु तटाके सरसि वा इति । अवकाः-शैवालाः । केचिच्छरा इति, अपां शरोऽवकाः इति लिङ्गात् । लोमशं-यत्र तृणानि, तीर्थं भवन्ति, यत्र लोकः स्नाति ॥

(वृ) स्थावरा ष्याः—न तु निवृत्तगतयः ।

शङ्खिनी-दः—भरद्वाजवचनात् । अतो नदीगर्तादिषु न स्नानम् ।

उपदे-वेति—निष्ठेनः गतिनिवृत्त्यर्थकत्वात् ।

लोम-नि—लोमशब्दः प्राण्यङ्गरुहवाच्येव ; 'लोमभ्योऽधि स्तम्बयजुर्हरति' इति दर्शनात् ।

---

[1] मनुद्गमयन्-च.

तीर्थे-न्ति—न तु पुण्या आपः, तृणबहुलेन तीर्थेनावतीर्य स्नायादित्यर्थः ॥

(रु) सरस्तटाकादिस्थासु अवकिनीषु लोमशे जले तृणच्छन्ने। तीर्थं जनानां स्नानदेशः, अवतार इति केचित् ॥

[स्नानेऽन्यमतोऽन्नियांगमुपपाद्य पठनीयमन्त्र-द्वयविधानं सूत्राभ्याम्]

(सू) कुण्डे हिरण्यमवधाय तस्मिन् स्नातीति वाजसनेयकम् ॥ १० । २ ॥ १६ ॥ २६७७ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमे प्रश्ने पञ्चमी खण्डिका.

---

(भा) कुण्डे [1] जलद्रोण्यां हिरण्यमवधाय स्नाति ॥

इति धूर्तस्वामिभाष्ये दशमे प्रश्ने पञ्चमी खण्डिका.

---

(वृ) कुण्डे—न तु कूपे वाजसनेयमतात् ॥

इति धूर्तस्वामिभाष्यवृत्तौ दशमे प्रश्ने पञ्चमी खण्डिका.

---

(रु) कुण्डमात्रे या आपस्तासु वा हिरण्यमवधाय स्नातीत्यर्थः ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमे प्रश्ने पञ्चमी खण्डिका.

---

[1] जलादौ-ख.

(सू) 'आपो अस्मान् मातरः शुन्धन्तु' इति 'हिरण्यवर्णाः शुचयः पावकाः प्रचक्रमुर्हित्वाऽवद्यमापः। शतं पवित्रा वितता ह्यासु ताभिर्नो देवस्सविता पुनातु' इति 'हिरण्यवर्णाश्शुचयः पावकाः' इति चैताभ्याम् ॥ १० ॥ २ ॥ १७ ॥ २६७८ ॥

(भा) 'आपो अस्मान् मातरः शुन्धन्तु' इति यजुषा उत्तराभ्यामृग्भ्यां च। केचिदादेश इति तिसृभिः कुर्वन्ति। [1]स्मृत्यविरोधेन स्नानम् ॥

(वृ) आपो-मृग्भ्यां च—स्नाति।

केचित्-स्नानम्— अभ्यार्थः ;—मृदाहरणादि सर्वं स्नानतन्त्रं भवति। तत्र स्नानमन्त्रस्य स्थानेऽभिन्ना स्नानमन्त्राः ॥

(रु) पठितया आदिप्रदिष्टया द्वाभ्यां च स्नाति ॥

[उत्तरताऽनुष्ठेयांशः]

(सू) 'उदाभ्यश्शुचिरा पूत एमि' इत्युद्गाहमानो जपति। अपोऽश्नाति ॥ १० ॥ २ ॥ १८ ॥ २६७९ ॥

(भा) उद्गाहमानः-उत्तरन् 'उदाभ्यश्शुचिः' इति जपति। 'अपोऽश्नाति' इत्यु[2]त्तीर्ण आचान्तो गण्डूषमपां गृह्णात्येव[3]मन्तम्। अपो दीक्षा गण्डूषतः ॥

(वृ) अपो- र्णः—उत्तीर्य सहसाऽपो नाश्नाति किंतु ;—

आचान्तो-गृह्णाति—स्नात्वा द्विराचामेत् इति स्मृतेः। अपामशनं गण्डूषार्थमेव, "अन्तरत एव मेध्यो भवति" इति लिङ्गात्। यादृशमपां बाह्यमध्यकरणं तादृशमेवाभ्यन्तरे भवितुमर्हति ॥

---

[1] स्मृत्यन्तराविरोधेन. [2] त्तीर्थ-ग. च. [3] एवमन्ता गण्डूषान्ता-ख. ग.

(रु) उद्गाहमानः उदकादुत्तरन्। अपोऽश्नाति आचम्य दीक्षार्थमपः पिबति ॥

[ ऊहानूहयोर्मतभेदेन सत्त्वासत्त्वव्यवस्था ]

(सू) एवं पत्नी केशवर्जम् ॥१०॥२॥१९॥२६८०॥

(भा) उपपक्षनखच्छेदनादि पत्न्याः क्रियते। अनूहश्च [1]जात्यभिधानात्। उपदेशः 'उदाभ्यश्शुचिरा पूतैमि' इत्यूहं कुर्वन्ति ॥

(वृ) उपपक्ष-यते—श्मश्रुणोऽभावान्निवृत्तिः। तथोपपक्षयो[2]रसम्भवे वपनं उन्दनादि सर्वं निवर्तते यजमानजपान्तम्। रोम्णां तु वपनं [3]अनिषिद्धम्। 'केशवर्जम्' इति वचनात्। 'आपो दीक्षा' इति नामकरणस्येदं प्रयोजनम्; अपो दीक्षायाः स्थाने द्वादशपुण्डरीकस्रजं प्रतिमुञ्चति [4]इत्यत्रैवमन्ताया ज्ञानार्थम्।

अनूहश्च—'उदाभ्यश्शुचिरा पूत एमि' इत्यत्र पुल्लिङ्गस्यानूहश्च।

जात्यभिधानात्—प्रकृतावूहनिषेधाच्च।

उपदेशः-कुर्वन्ति—याजमाने उपदेशात्। एवं पत्नीति पत्न्यामतिदेशात् प्रकृतौ समवेताभिधायित्वाच्च ॥

(रु) उत्तरेण बहिःप्राग्वंशमित्यादि अपोऽश्नातीत्यन्तं पत्न्या अपि। पूतैमीत्यूहः। तूष्णींकं सर्वमिति बोधायनः ॥

[ अनग्रेदीक्षावस्त्रप्रदानस्यामन्त्रकत्वम् ]

(सू) अथास्मै क्षौममहतं वासः प्रयच्छति ॥ १० ॥
॥ २ ॥ २० ॥ २६८१ ॥

---

[1] जात्यभिप्रायात्–क. [2] योरपि सद्भावे वपनम्। उन्द–ग. [3] निषिद्धम्–क. ग. च. [4] इत्येवमन्तं याजमानार्थम्–च.

(भा) अतसी—क्षुमा तया कृतं क्षौमं, अहतमनिवासितं अर्थाच्च महत्प्रयच्छति तूष्णीम् ॥

(वृ) अथशब्दात्—पत्न्या अपि गण्डूषान्ते कृत एव वासोदानम्। न चाध्वर्योः पत्न्यर्थे व्यापृतत्वादेवानन्तर्ये सिद्धे अथशब्दोऽनर्थक इति वाच्यम्; अर्थप्राप्तत्वाद्यजमानपरिचारकस्य।

अस्मै—यजमानाय।

अनिवासितम्—आत्मना अन्यैर्वा।

अर्थाच्च महत्—वस्त्रकार्यादर्थाच्च [1]महद्वस्त्रं तूष्णीं प्रयच्छति। 'सर्वे कामा यजमानस्य सन्तु' इति मन्त्रलिङ्गापेक्षया नात्र मन्त्रो भवति ॥

(रु) अहतं अनुपयुक्तं, अकारुहतं वा ॥

[वस्त्रप्रदानप्रतिग्रहणयोः नैयमिकत्वम्]

(सू) तत्प्रतिगृह्णाति "दीक्षाऽसि तपसो योनिस्तपोऽसि ब्रह्मणो योनिर्ब्रह्माऽसि क्षत्रस्य योनिः क्षत्रमस्यृतस्य योनिर् ऋतमसि भूरारभे श्रद्धां मनसा दीक्षां तपसा विश्वस्य भुवनस्याधिपत्नीः सर्वे कामा यजमानस्य सन्तु" इति ॥
॥ १० ॥ २ ॥ २१ ॥ २६८२ ॥

(भा) तत, यजमानो 'दीक्षाऽसि' इति गृह्णाति।

(वृ) तत्—अध्वर्युणा प्रदीयमानं अभिमुखो भूत्वा।

---

[1] महत्। चकारादार्थतोऽपि। वस्त्रं—ग.

यजमा–ह्णाति—'अस्मै' इति यजमानस्य सम्प्रदानत्वात्तस्यैव प्रतिग्रहीतृत्वमर्थलक्षणम्[1]। अत्र मन्त्रे 'आरभे' इति दर्शनात् मह्यं यजमानायेत्यर्थः। प्रदीयमानस्य प्रतिग्रहणेऽर्थसिद्धे पुनस्तच्छब्दग्रहणादिदमवगम्यते, अप्रप्राप्त वस्त्र नाय धर्मो विधीयते; यथाऽशने पयस्वती, किंतु अर्थभावेऽप्येवं वस्त्रदानप्रतिग्रहणे[2] भवत इति। तस्माद्दशपेये स्नानाभावेऽपि वासोदीक्षा भवत्येव, 'वाससा दीक्षयति' इति दीक्षास्तुतेः॥

(रु) गतः॥

[वाससोऽन्तानां अप्रकाश्यत्वम्]

(सू) 'सोमस्य तनूरसि तनुवं मे पाहि दीक्षाऽसि तनूरसि तां त्वा शिवाꣳ स्योनां परिधिषीय' इति तत्परिधाय 'सोमस्य नीविरसि' इति नीविमनुपरिकल्पयते॥ १०॥ २॥ २२॥ २६८३॥

(भा) 'सोमस्य तनूरसि' इति परिधत्ते[3]। 'सोमस्य नीविरसि' इत्यन्तान् वेष्टयति।

(वृ) सोमस्य–वेष्टयति—यथोपरि न भवन्ति, यथा वाससोऽन्ता न प्रकाशा भवन्ति। 'परिधिषीय' इति ल्यबन्तोऽर्थकृत्यप्रतिषेधार्थः।

(रु) वेष्टितवसनग्रन्थिः नीविः॥

[दीक्षितभोजने वैशिष्ट्यम]

(सू) 'ऊर्जे त्वा' इत्यन्नमश्नाति सर्पिर्मिश्रं दधि मधु चाभ्युपसेकम्॥ १०॥ २॥ २३॥ २६८४॥

---

[1] ०सिद्धम्–ग. [2] प्रतिग्रहौ भवत इति–ग. [3] तदैव सोमस्य–क. ग.

(भा) 'ऊर्जे त्वा' इत्यन्नमश्नाति प्राग्वंशे हव्यमाज्यमिश्रदध्ना मधुना चोपसिञ्चति, विधानात् ।

(वृ) ऊर्जे त्वे-ग्वंशे—यदि प्रयातः न[1] चेदग्न्यगारे ।

हव्यम्—न माषादि, आज्यमिश्रं दध्नोपसिच्य । दध्याज्ययोः ग्रहणं नियमार्थम् ; 'मधु[2]नोपसिञ्चति' इति विधानात् । 'न दीक्षितोऽमधुना' इति निषेधात् । त[3]स्मादनुज्ञानमेव ॥

(रु) भोजनादि प्राग्वंशे । उपरिष्टाद्बहिःप्राग्वंशवचनात् । दधिमधु चान्नमभिषिक्त्वाऽभिषिक्त्वा इत्यर्थः ॥

[मधुग्रहणस्य निषिद्धमांसाद्युपलक्षकत्वं केचिन्मते]

(सू) यदस्य मनसः प्रति प्रियं तदश्नाति ॥ १० ॥ २ ॥ २४ ॥ २६८५ ॥

तदेवास्यामुष्मिन् लोके भवतीति विज्ञायते ॥ ॥ १० ॥ २ ॥ २५ ॥ २६८६ ॥

तथाऽशितस्स्याद्यथा ततो दीक्षासु कनीयः कनीयो व्रतमुपेयात् ॥ १० ॥ २ ॥ २६ ॥ २६८७ ॥

(भा) केचित् दीक्षाऽविरुद्धं यदस्य मनसः प्रति प्रियं तदश्नात्यन्यदपि, मधुनो विधानात् ।

(वृ) यद-दपि—यस्य यत् प्रियं तदश्नाति, दीक्षितस्य निषिद्धं मांसाद्यपि ; मधुग्रहणस्य प्रदर्शनार्थत्वात् ।

---

[1] नो चेदग्नय-ग. [2] मधुना चोपसि-ग. च. [3] अस्मादनु-ग.

मधुनो–नात्–अस्यार्थः—यन्मनसः प्रति प्रियं तदश्नातीत्येव मधुनोऽपि सिद्धे मधूपादानमत्र दीक्षितस्य निषिद्धत्वेन न भवेदित्यतोऽन्यद्दीक्षितस्य निषिद्धं न भवत्येवेति स्वमते तु अनिषिद्धानि सर्वाण्यश्नन्त्येव। ततो 'यदस्य' इत्यादिवचनमनर्थकम्। नियमार्थत्वे न यस्य कस्यचिदिष्टस्या[1]लाभे प्रत्यवायादिति।

(रु) प्रति प्रियं यत्स्वस्य प्रियं अन्यदपि। परलोके सेत्स्यति। तथा मृष्टमशितस्स्याद्यथा पश्चाद्दीक्षासु नावसीदेत्।

[सोपपत्तिकं सौत्रकेशपदग्रहणस्यार्थवत्वोपपादनम्]

(सू) पुरस्तात्केशवपनात् वाससो वा परिधानात् भोजनमेके समामनन्ति ॥ १० ॥ २ ॥ २७ ॥ ॥ २६८८ ॥

(भा) पुरस्तात्केशवपनात् प्राग्वंशं कृत्वाऽन्यल्लौकिकं वासो वसित्वा भुङ्क्ते।

(वृ)–पुरस्तात्के–कृत्वा—भुंक्ते; न तु श्मश्रुवपनानन्तरम्। 'अथ केशान्' इति क्रमनियमात्। तर्हि पुरस्ताद्वपनादित्येव वक्तव्यम्। केशग्रहणं न कर्तव्यम्; कर्तव्यमेव; यदि पुरस्ताद्वपनादित्युच्येत परिश्रयणानन्तरमशनं स्यात्। यदि परिश्रयणात्प्रागित्युच्येत प्राग्वं[2]शपरिश्रयणानन्तरमशनं स्यात्। यदि प्राग्वंशपरिश्रयणादित्युच्येत प्राग्वंशपरिश्रयणात्पुरस्तादेव स्यात्; तथाहि सर्वपरिश्रयणानां पुरस्ताद्भवति। अथ आनन्तर्याद्बर्हिः परिश्रयणमेव गृह्येत, तर्हि आनन्तर्यात् पत्न्या वपनात्पुरस्तादित्यपि गम्यते। अतः केशवपनस्य सधर्म[3]कस्याग्रहणे

[1] दिष्टस्य लाभे प्रत्यवेयादिति—च. [2] प्राग्वंशपरिश्रयणात्पुरस्तादेव स्यात्। इतरथा हि सर्वपरिश्रयणानां पुरस्ताद्भवति–ग. [3] मैकस्य ग्रहणे–ग.

परिश्रयणस्यापि तद्धर्मत्वात् तत एव पुरस्तादशनं स्यात्। उपपक्ष-वपनस्याधर्मत्वादप्रयोजकत्वेन परिश्रयणं न गृह्णातीत्यर्थवत् केशग्रहणम्। वाससो[1] वा परिधानात्पुरस्तात्पर्ना[2]गण्डूपान्ते।

अन्यद्वौ-ङ्क—अन्यशब्दो मन्त्रनिवृत्तिपर[3] इति 'अन्या वा यजुषोत्पूय' इत्यत्र व्याख्या[4]तम्। नार्द्रवाससैव यावद्दीक्षित-वासः[5]परिधानं वर्तितव्यम्। तस्य परिधानस्यार्थान्तरत्वात्।

[प्रथमप्राणाहुतौ प्रथमग्रासे वा मतभेदेन सोपपत्तिकं मन्त्रयोस्समुच्चयोपपादनम्]

'ऊर्जे त्वा' इत्ययं मन्त्रः प्रथमप्राणाऽऽहुतिमन्त्रेण समुच्चीयते, तस्य पुरुषार्थत्वात् अस्य च क्रत्वर्थत्वात् आम्नातत्वात्। पञ्चानां स्थानेऽयमेव वा; 'नाक्रतुसंयुक्तामाहुतिं जुहोति[6]' इति पुरुषार्थाऽऽहुतीनां प्रतिषेधात् क्रत्वर्थैव स्यादिति।

उपदेशः प्रथममन्त्रस्य स्थाने इति 'नाक्रतुसंयुक्तामाहुतिं जुहोति' इत्यग्न्याधाराणां प्रतिषेधात्, प्रथमग्रासे[7] मन्त्रसमुच्चयोऽन्यतरस्य व्यवहितत्वेन क्रियासंनिपाताभावेनाकरणत्वप्रसङ्गात्। पृथक् शास्त्रार्थ[8]त्वेन न द्वाभ्यां त्रिभिरितिवत् एककरणा[9]नुप्रवेशाभावाच्च।

(रु) गतः।

## (सू.) 'महीनां पयोऽसि' इति दर्भपुञ्जीलाभ्यां नवनीतमुद्यौति ॥ १० ॥ २ ॥ २८ ॥ २६८९ ॥

---

[1] वासः परिधानात्—ग. च. [2] पस्न्या गण्डूपान्ते—ग. च. [3] परकम्—क. [4] व्याख्यातम्—क. ग. च. [5] दीक्षावासः—ग. [6] तं त्वग्न्याधाराणां—च. [7] ग्रास-मन्त्रसमुच्चयेऽन्यतरस्य—ग. [8] र्थत्वाभावेन—ग. [9] णाभावाच्च—च.

(भा) दर्भपुञ्जीलाभ्यां तावन्नवनीतोद्यमनं, यावताऽञ्जनसिद्धिः ।

(वृ) दर्भपु–सिद्धिः—सर्वाङ्गानाम् । तेनेति नियमात्पुनरुपादानं 'महीनां पयोऽसि' इत्यनेनै[1]व मन्त्रेण ।

(रु) उद्यौति–उद्गृह्णाति ॥

[स्वमते सर्वाङ्गाभ्यञ्जनं विधाय अभ्यञ्जनस्यैकवाक्यत्वौचित्यायोपदेशपक्षे सूत्रयोजनाप्रदर्शनम्]

(सू) 'वर्चोधा असि' इति तेन पराचीनं त्रिरभ्यङ्क्ते, मुखमग्रे ॥ १० ॥ २ ॥ २९ ॥ २६९० ॥

(भा) 'वर्चोधा असि' इति पराचीन[2]मनुवर्तयन् त्रिस्सर्वमात्मानमभ्यङ्क्ते । मुखमग्रे त्रिः । उपदेशो मुखमेव त्रिरिति ।

(वृ) वर्चो–मग्रे त्रिः—अङ्गान्यप्येकैकशोऽनुलोमं त्रिस्त्रिः ।

उप–त्रिरिति—तदा[3] एवं सूत्रयोजना;—'तेन पराचीनं त्रिरभ्यङ्क्ते मुखमग्रे' इति, अभ्यञ्जनस्य कर्मण[4] एकवाक्यताया युक्तत्वात् । अग्रे आरभ्येति शेषः । मुखस्याग्रं ललाटान्तम् । तदानीं पराचीनमित्यप्युत्तरत्र नोपयुज्यते । अनुलोममित्येव सिद्धत्वात् । पूर्वस्मिन् पक्षे साधारणे[5]न द्रव्येण[6] सर्वाङ्गाञ्जनस्य युक्तत्वात् । 'अग्रे' इति सर्वप्रकाराञ्जनस्य क्रमानियमात् तादृशमेवाञ्जनमुत्तरत्रापि भवितुमर्हतीति ॥

(रु) अप्रतिनिर्वर्तयन्नात्मानं त्रिरभ्यङ्क्ते । सकृन्मन्त्रः । मुखादारभ्याञ्जनं त्रिरपि ॥

---

[1] स्यनेन मन्त्रेण–ग. [2] मनिवर्त–क. ग. च. [3] तत्र्वं–ङ. च. [4] णैकवाक्यताया–च. [5] साधारणद्रव्येणाञ्जनस्य युक्तत्वात्–ग. [6] णाञ्जनेन सर्वा–ग. च.

[मतभेदेनाञ्जनमन्त्राऽऽवृत्तितदभावयोः
प्रकाशनम् ]

(सू.) **अनुलोममङ्गानि स्वक्तो भवति ॥ १० ॥ २ ॥
॥ ३० ॥ २६९१ ॥**

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने षष्ठी खण्डिका

---

(भा) यथा यथा लोमान्यवस्थितानि तथा तथाऽभ्यङ्क्ते । अञ्जन-मन्त्राऽऽवृत्तिरक्ष्णोः ॥

इत्यापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये दशमप्रश्ने षष्ठी खण्डिका

---

(वृ) **यथा यथा–भ्यङ्क्ते**—पूर्वस्मिन् पक्षे मुखमारभ्यानुलोममङ्गानि सर्वाणि सकृदभ्यङ्क्ते । एवं द्वितीयं तृतीयं च पर्यायम् । सङ्ख्या-युक्तत्वान्न मन्त्राऽऽवृत्तिः । उपदेशमते तु सकृन्मुखे मन्त्रः, द्विस्तूष्णीम् । अङ्गेषु प्रत्यङ्गं मन्त्राऽऽवृत्तिः । असम्भवतां मन्त्राऽऽवृत्तिरिति । मुखमेव मन्त्रेणेति केचित् ।

**स्वक्तो भवति**—यजमानः ।

**मन्त्राऽऽवृत्तिरक्ष्णोः**—सकृद्दक्षिणस्य तथा सव्यस्य । यदि च द्विस्त्रिर्वाऽञ्जनं सङ्ख्यायुक्तत्वात् ; येनैवेत्यवधारणात् ॥

इति धूर्तस्वामिभाष्यवृत्तौ दशमप्रश्ने षष्ठी खण्डिका

---

(रु) यन्मुखानि लोमानि ततोऽभ्यङ्क्ते मुखादङ्गान्तराणि मुखेत्व-नियमः । अनुलोममितराण्यङ्गानीत्येव सत्याषाढः ॥

इति श्रीभट्टरुद्रदत्तविरचितायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
दशमप्रश्ने षष्ठी खण्डिका

[वाजसनेयिमतोऽञ्जनविशेषांशाः]

(सू) 'वृत्रस्य कनीनिकाऽसि' इति त्रैककुदेनाञ्जनेनाङ्क्ते ॥ १० ॥ २ ॥ ३१ ॥ २६९२ ॥

यदि त्रैककुदं नाधिगच्छेत् येनैव केनाञ्जनेनाञ्जीतेति वाजसनेयकम् ॥१०॥२॥३२॥२६९३॥

सतूलया दर्भेषीकया शरेषीकया दर्भपुञ्जीलेन वाऽभ्यन्तरं द्विर्दक्षिणमधावमानः सकृत्सव्यम् ॥ ॥ १० ॥ २ ॥ ३३ ॥ २६९४ ॥

अपि वा द्विर्दक्षिणं त्रिस्सव्यम् । त्रिस्त्रिर्वोभे ॥ ॥ १० ॥ २ ॥ ३४ ॥ २६९५ ॥

(भा) सतूलया[1]–सपुष्पया दर्भशलाकया दर्भस्तम्बस्य वा मूलेन अभ्यन्तरं यथा बहिरक्ष्णोर्न[2] निष्कामति । अनिधावमानः—अनिवर्तयन् । दक्षिणं पूर्वम् ॥

(वृ) वाजसनेयकेन त्रैककुदाभावे यत्किञ्चिदञ्जनं विधीयते; न त्रैककुदेन विकल्प्यते । 'तस्माच्छिष्टाभावे सामान्यात्प्रतिनिधिः' इति वचनात्त्रैककुदाभावे तत्प्रतिनिधि किञ्चिच्छैलजमन्वेष्टव्यम्; यथा खदिराभावे कदरः ॥

सतूलया तूलेन—सतूलत्वं दर्भशरेषीकयोः, अत एव पुनर्दर्भग्रहणं करोति ।

अभ्यन्तरं–पूर्वम्—द्विस्त्रिर्वा; ततस्सव्यं सकृत्त्रि[3]स्त्रिर्वा । तथैव यदा दक्षिणं त्रिः तदा[4] सव्यं सकृत् । "सकृत्सव्यं त्रिर्वा ।

---

[1] लया शरशलाकया दर्भपुञ्जीलेन दर्भ—च. दर्भपुञ्जीलेन दर्भ—क. ग.
[2] न भवति—क. ग. च. [3] सकृत्त्रिर्वा—ग. [4] तदा न सव्यम्—क.

त्रिस्त्रिर्वोभे " इति वक्तुं शक्येऽपि द्विर्दक्षिणामिति यत्पु[1]नर्वदति ततोऽन्यधर्मस्य निवर्तनमनिधावनादेः । अतो यदा द्विर्दक्षिणं त्रिस्सव्यं तदा निधावनाभ्यन्तरयोरनादर एव । एवमुत्तरस्मिन् पक्षे वस्त्रप्रतिग्रहप्रभृति सर्वं याजमानम् ॥

(रु) त्रिककुदाख्ये पर्वते भवं त्रैककुदं । गतः । सकृत्सव्यं तूलपुष्पं, इषीका–तत्काण्डं अभ्यन्तरं अपाङ्गादारभ्याऽऽन्तमनिधावमानः–अप्रतिनिवर्तयन् । सव्येऽपि मन्त्राऽऽवृत्तिः । गतम् ॥

[जातौ बहुवचनम् ]

(सू) **अर्धेनामुत्तरेण बहिः प्राग्वंशाद्दर्भपुञ्जीलैः पवयति ॥ १० ॥ २ ॥ ३५ ॥ २६९६ ॥**

(भा) दर्भस्तम्बेन शोधयत्युत्तरेण बहिः प्राग्वंशम् । अथान्यदन्यदर्धकृत्यमप्यकृतवन्तं[2] यजमानमध्वर्युः ॥

(वृ) **दर्भस–ग्वंशम्**—दर्भपुञ्जीलैरित्यत्र [3]बहुत्वं जात्याभिप्रायं द्रव्यविधित्वात् सङ्ख्याविशेषस्य विधास्य[4]मानत्वात् । प्राग्वंशात् इति पञ्चमी, उपपदविभक्तेः कारकविभक्त्या बलीयस्त्वादिति । पावनं शोधनमित्यनर्थान्तरम् ॥

(रु) पावनं–शोधनम् ॥

[पावने वैकल्पिकाः कल्पाः]

(सू) **द्वाभ्यां पवयति त्रिभिः पवयतीत्युक्तम् ॥ १० ॥ २० ॥ ३६ ॥ २६९७ ॥**

---

[1] वेचनं–क. [2] न्तमेनं यजमानं-क. च. [3] बहुवचनं जात्य–च. [4] मानत्वाद्–च.

(सू) एकविंशत्या त्रेधा विभक्तया सप्तभिस्सप्तभिरूर्ध्वं नाभेरुन्मार्ष्टि। सकृदवाक् ॥ १० ॥ २ ॥ ॥ ३७ ॥ २६९८ ॥

अन्वञ्चं पवयतीत्येके ॥ १० ॥ २ ॥ ३८ ॥ ॥ २६९९ ॥

यं द्विष्यात्तं तिर्यञ्चमक्ष्णया वा पावयत् ॥ १० ॥ २ ॥ ३९ ॥ २७०० ॥

चित्पतिस्त्वा पुनात्वित्येतैः प्रतिमन्त्रम् ॥१०॥ ॥ २ ॥ ४० ॥ २७०१ ॥

अच्छिद्रेण पवित्रेण इति सर्वत्रानुषजति ॥१०॥ ॥ २ ॥ ४१ ॥ २७०२ ॥

(भा) द्वाभ्यां पवयति यदा तदा द्वाभ्या[1]मेव, त्रिभिः पवयति, यदा तु एकविंशतिः, तदा त्रेधा विभक्तयाऽन्वञ्चं शिरस्त आरभ्य यावत्पादौ, अक्ष्णया तिर्यञ्चं दक्षिणत आरभ्य उत्तरतस्समाप्यते। तावेतौ विधिप्रति[2]षेधार्थौ। न [3]चावयुत्याऽनुवादः, विकल्प एव; पूर्वमेकविंशतेरविधानात् ॥

(वृ) द्वाभ्यां-पादौ—द्वाभ्यां त्रिभिर्वा विकल्पेन पावनम्। अत्र करणं दर्भपुञ्जीलम्। तत्र द्वाभ्यां पवयति यदा तदा द्वाभ्यां सहैव त्रिभिरपि पवयति।

---

[1] द्वाभ्यां त्रिभिरेकविंशत्या त्रेधा विभक्तया वा—ङ. [2] षेधौ—च. [3] नचाप्यपवादः--ग.

[पुरस्तात्पावनस्य वस्त्रानाच्छादिताङ्गविषयकत्वं, तत्र हेतुः, उपदेशपक्ष विशेषश्च]

**एकविꣳश-सकृदवाक्**—न तु त्रिभिरित्यस्य शेषः। अत्रापीतिकर्तव्यताया अपेक्षितत्वात् नान्ताल्लोपो विवृद्धिर्वेति। द्वितीयेन[1] तावन्मार्जनम्, एकैके[2]नेति विधानाभावात्। यदा त्रिभि[3]र्दर्भपुञ्जीलैः पवयति तदा च सर्वैस्सहैव त्रिः[4] पवयति नैकैकेन। यदा तु एकविंशतिदर्भपुञ्जीलानि भवन्ति पावने तृतीये पक्षे तदा त्रेधा विभक्तया एकविंशत्या यथासूत्रं त्रिर्नाभेरारभ्य यावच्छिखाग्रं द्विरूर्ध्वं तथाऽवाक् यावत्पादाग्रमभ्यञ्जनं बहिः। पुरस्तात्पावनं[5] च वस्त्रानाच्छन्नाङ्गविषयः, वासः परिधानविधानात्।[6] उपदेशो वस्त्रान्तरमपीति। 'स्वक्तो भवति' इति वचनात्, नाभेरर्वागिति वचनाच्च। यदि नाभेरवाक् विच्छिद्यारभेत सकृत्त्वं भज्येतेति। वासस उपरि पावनमिति केचित्। अन्वञ्च[7] शिरस आरभ्य यावत्पादौ तदानीमपि नाभेरूर्ध्वं द्विस्सकृदवागित्येव केचित्। "शिरस आरभ्य यावत्पादौ त्रिरपि पावयति" इति भाष्यकारेण [8]विशेषावचनात्। 'नाभेः' इति पञ्चम्या [9]उन्मार्जनावमार्जनारम्भावधिभूत[10]त्वात्। मार्जने शिरसो विधाने नाभेर्निवृत्तः न तत्कृतावधिरस्तीति। पूर्वस्मिन् पक्षे शरीरावध्यर्थं नाभिग्रहणम्। ऊर्ध्वशब्दो ह्युपर्यङ्गवचनः। अन्यथोन्मार्ष्टीत्यनेन पुनरुक्तिप्रसङ्गात्। उन्मार्जना[11]वमार्जनावधिकृतः इति।

---

[1] न मार्जनम्—ग. [2] एकेनेति—च. [3] त्रिर्दर्भ—च. [4] त्रिभिः पव—ग. च.
[5] पावनं, पावनं च वस्त्रा—च, नं पावनं च वस्त्राणां छन्नाङ्गविषयम्—ग. [6] वस्त्राभ्यन्तरं—क, वस्त्राभ्यन्तरं पवयति—ख. ग. [7] शिरस्त—ग. [8] विशेषवचनात्—ग.
[9] उन्मार्जनारम्भावधित्वादवाङ्मार्जने शिरसोऽत्र—ग. [10] भूतान्मार्जने शिरसोऽत्र विधाने—च. [11] नावधिर्मार्जनीयावधिकृ—च. ग.

[उत्तरशब्दग्रहणप्रयोजनम्, त्रिरुन्मार्जन-
विधानं च]

**अक्ष्णया–समाप्यते**—सव्ये[1] समाप्यते इत्यर्थः। उत्तरशब्द-ग्रहणं प्राङ्मुखस्यैव पावनमिति प्रदर्शनार्थम्। अक्ष्णया–वक्रं श्रोण्यं[2]ससम्बन्धाभावान्नाभिं शिरो वा आरभ्य संमार्जनम्। श्रोण्यंसयोरेव [3]सम्बन्धेऽक्ष्णया करणस्यासम्भवा[4]त्तत्रोभयत्रापि द्वाभ्यां त्रिभिरेकविंशत्या त्रेधा विभक्तया वा पूर्ववत् [5]त्रिरुन्मार्जनम्।

**तावेतौ–थौं**—अस्यार्थः; न केवलं द्वेष्यं यजमानं प्रति[6] तौ विहितौ, अद्वेष्यस्यातिर्यगक्ष्णया वा करणं निषिध्यते लिङ्गात् एक-विंशत्येत्यादि।

**न चावयुत्यानुवादः**—त्रिभिः पवयतीत्यस्य।

**अतो विकल्प एव**—त्रिभिः पवयतीत्यनेन।

**पूर्वमेकविंशते[7]रविधानात्**—पूर्वं दर्भपुञ्जीलं विहितम्। अत-[8]स्तत्रैव त्रित्वं प्रतीयते, न तु वक्ष्यमाणया दर्भपुञ्जीलैकविंशत्या त्रित्वम्। अतो न जातेष्टावष्टाकपाल इवावयुत्याऽनुवादः।

'चित्पतिस्त्वा पुनात्वच्छिद्रेण पवित्रेण' इति प्रथमम्, एवं द्वितीयं तृतीयं च॥

(रु) ब्राह्मणप्रदर्शनमेकविंशतिसङ्ख्याया एव वक्ष्यमाणायाः प्रशंसा-र्थोऽवयुत्या द्वित्वाद्यनुवाद इति ज्ञापयितुम्। न तु द्वित्वादि विकल्प-यितुं, कल्पान्तरेषु चैतत् व्यक्तम्। अवाक् यन्नाभेरेतत्सकृदवमार्ष्टि।

---

[1] तिर्यग्दक्षिणत आरभ्योत्तरतः–ग. [2] श्रोण्या सम्बन्धाभावा–ग. [3] सम्बन्धस्य कण्ठाकारस्य संभवात्–ग. [4] वादत्रोभ–ग. च. [5] त्रिर्मार्जनम्–च. [6] तीमौ–ग. च. [7] तेरपि वि–च. [8] अतस्तस्यैव–ग.

आरभ्याऽऽपादाभ्यां सप्तभिस्सप्तभिर्मार्ष्टीत्येके । तिर्यञ्चं दक्षिणपार्श्वादारभ्योत्तरतः । अक्ष्णया—अनृजु । पावयेदित्येके । गतः ॥

[जपे 'अच्छिद्रेण' इति मन्त्रखण्डस्याननुषङ्गः]

(सू) 'चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवो मा सविता पुनातु' इति पाव्यमानो जपति ॥ ॥ १० ॥ २ ॥ ४२ ॥ २७०३ ॥

(भा) पाव्य[1]मानो यथालिङ्गं यजमानो जपति ।

(वृ) **पाव्यमानो—जपति—अस्यार्थः**—' चित्पतिस्त्वा[2] पुनातु ' इति लिङ्गम[3]नतिक्रम्य 'चित्पतिस्त्वा पुनातु' इत्यस्य जपः । एवमुत्तरयोरपीति । नात्राच्छिद्रेणेति याजमानोऽनुषङ्गः । 'मा पुनातु' इति न[4] मन्त्रसन्नाम इति ।

यदि मन्त्रसन्नामः; "एतानेव पाव्यमानो जपति" "मा पुनातु" इति संन[5]मयतीति वक्ष्यतीति न चित्पतीत्यादीनधीयीत गुरुणा यत्नेन ॥

(रु) त्रिभिः पाव्यमानस्त्रीनेताञ्जपति ॥

[स्वमते पावमानीनां सर्वासामेवर्चां जपः, केचिन्मते कण्ठोक्तयोः द्वयोरेवेति विवेचनम्]

(सू) "तस्य ते पवित्रपते" इति च । "पवमानस्सुवर्जनः । पवित्रेण विचर्षणिः । यः पोता स पुनातु मा" ॥

---

[1] 'चित्पतिर्मा पुनातु' इत्येतावन्मन्त्रान् पाव्य—**क. च.** [2] 'चित्पतिर्मा पुनातु' इत्येतावतो मन्त्रान् पाव्यमा + जपति । एवमुत्तरयोरपीति नात्राच्छिद्रेणेति याजमानेऽनुषङ्गः-**क.** [3]श्रुतिमनतिक्रम्य चित्पतिर्मा पुना—**च.** [4]ति मन्त्र—**च.** [5]यन्निति वक्ष्यति—**च.**

**"प्राजापत्यं पवित्रम् । शतोद्यामꣳ हिरण्मयम् । तेन ब्रह्मविदो वयम् । पूतं ब्रह्म पुनीमहे" ॥ इति च ॥ १० ॥ २ ॥ ४३ ॥ २७०४ ॥**

(भा) 'पवमानः[1]' इत्यारभ्य 'पुनीमहे' इत्यन्तं जपति । पाठ्यमानत्वात् सर्वान् । केचित् ये गृहीते ऋचौ ते द्वे एव जपति तन्म[2]ध्याश्चेत्यवचनादिति ? तदयुक्तम् ; "इन्द्रो दधीचो अस्थभिः । ववक्षुरुग्रो अस्तृतः" इतिवत्[3] दशानामभावात् । पुनस्तु[4] अनुवाकम् ॥

[खण्ड्यग्रन्थाशयप्रकटनम्]

(वृ) तदयुक्तम्–मभावात्–अस्यार्थः—"इन्द्रो दधीचो अस्थभिः, ववक्षुरुग्रो अस्तृतः" इत्यत्राभावाद्यन्तग्रहणेन मध्यपतिताभिस्सह दशर्चो भवन्ति तन्मध्यपतिताश्चेति । न च[5] तन्मध्याश्चेत्यवचनादाद्यन्तग्रहणे मध्यपातिनां ग्रहणं न स्यात् तत्र[6] दृश्यन्ते च कामम् 'अथर्वशिरसो दशातिषक्ता उपद[7]धाति' इति ॥

[अधीतप्रकारेण दशानामप्युपधानस्वीकारे दोषाद्युद्धाटनपूर्वकं सर्वासामप्यृचां जप्यत्वव्यवस्थापनम्]

ननु तत्र दशसङ्ख्याश्रवणान्मध्यानां ग्रहणं लभ्यते ; मैवम् ; [8]अधीतप्रकारेणैकेनैव मन्त्रेण वचनाद्दशोपधाने को दोषस्स्यात् ; आद्यन्तयोरधीयानैः दशानामधीतत्वात् ! मन्त्रगतदशत्वं[9] तु परि-

---

[1] पाठ्यमानेति–क.च. [2] तं मध्याना–च. तं मध्यममित्यव–ख. [3] इतिवत् दशा–(क). [4] पूतस्त्वनुवाकम्–क. ङ. [5] न वक्ति यदि तन्मध्याश्चेत्याद्यन्त–ङ. च. न वक्ति यदि तन्मध्याश्चेत्यवचनादा–च. [6] दृश्यन्ते च कामम्–च. [7] उपदधादिति–क. [8] तदधीत–ग. ङ. [9] दशत्वपरिग्रहणेनैवेति–ग. ङ.

ग्रहणेनैवेति, इष्टकादशत्वं तु वचनेन । तत्राप्यधीतेनैव दशेष्टकाना-मुपधानमस्त्विति चेत् ; न ; यतः तदानीमध्ययन[1]प्रसिद्धबाधः, अन्य-मन्त्रप्रकल्पना, विनियोगगौरवं च, इत्याद्यनेकदोषप्रसङ्गः । ततोऽपि मध्यमानां ग्रहणं भवतीति । यद्यप्येवम् ; अत्र तु विशेषोऽस्ति ; यन्मन्त्रयोस्साकल्येन ग्रहणं तत्रापेक्षाभावा[2]च्च । अदृष्टार्थता च । तत्रैषां विपर्ययोऽस्त्येव ; तथाऽपि भाष्यकारानभिमतत्वादनादरणीय[3]-मिति तान् सर्वान् जपेदेवेति ॥

'तस्य ते पवित्रवते इति च' इति चकारे[4]ण समुच्चयात् । तस्माद्यथालिङ्गं भवतीति । 'अच्छिद्रेण पवित्रेण' इति प्रयुज्यमाने 'तस्य ते पवित्रपते' इत्यस्य जपः । पूर्ववैलक्षण्यात्पुनः प्रयुज्यते, तस्मात्त्रिर्जपः । याजमानभूयस्त्वात्तृतीयमार्जनं शनैः करोति । पुनस्त्वनुवाकं जपति ॥

(रु) पवमानस्सुवर्जन इति च प्राजापत्यमिति च जप्यानामृचा-माद्यन्तोपादानम् । ततश्चोत्तमावर्जं सर्वमनुवाकं जपति । पवमानस्सु-वर्जन इत्यनुवाकमेव सत्याषाढभारद्वाजौ ॥

[वाक्यशोऽनुवाकजपः, प्रत्यृचं होमाऽऽवृत्तिश्च]

**(सू) 'यद्देवा देवहेडनम्' 'त्वमग्ने अयासि' इति च पूतः ॥ १० ॥ २ ॥ ४४ ॥ २७०५ ॥**

---

[1] प्रसिद्धबाधोऽनुमन्त्र—**च.** [2] क्षाभावश्च—**क. ग. च.** [3] मित्यच्छिद्रेणेति तान्—**ग.** [4] चकारात् पूर्वस्मादुत्तरत्र ............... मिदक्रियाव्यवधानापूर्वेभ्योऽपि सादृश्यं विद्यते चकारेण—**क. च.**

(सू) प्राग्वा दीक्षणीयाया जुहुयात् । जपेदित्येके ॥
॥ १० ॥ २ ॥ ४५ ॥ २७०६ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने सप्तमी खण्डिका. द्वितीयः पटलः

---

(भा) 'यद्देवा देवहेडनम्' इत्यसमासेन जपति, तन्मध्यग्रहणात् । जुहोत्यृग्भि[1]रसमासेन प्रत्यृचं पूर्वं दीक्षणीयाया जपति वा ॥

इत्यापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये दशमे द्वितीयः पटलः

---

(वृ) यद्देवा–जपति—तन्मध्यान् असमासेन—वाक्यशः ।

तन्मध्यग्रहणात्–अस्यार्थः—तयोः मध्याः तन्मध्याः तेषां ग्रहणात् । 'यद्देवाः' 'त्वमग्ने अयासि' इत्यनयोराद्यन्तयोर्मध्यग्रहणात् ॥

अथवा ताभ्यामाद्यन्ताभ्यां स्वमध्यग्रहणात्सर्वमनुवाकं जपति । तस्मादेव यथाधीतग्रहणादसमासेन जपः ॥

जुहो–वा—वचनादेकैकं कर्म बहुमन्त्र[2]मिति वचननियमात् अत्र वचनाभावात्प्रत्यृचं होम आवर्तत एव ॥

इति रामाग्निचित्कृतायां धूर्तस्वामिभाष्यवृत्तौ
दशमप्रश्ने द्वितीयः पटलः

---

[1] होत्यृक्शः–ग. [2] मिति नियमात्प्रत्यृचं होम–ग.

(रु) इदमप्यच्छिद्रपठितानां कूश्माण्डादीनामृचामाद्यन्तग्रहणम् । अतः सोऽप्यनुवाको जप्यः । ततः प्रतीकगृहीतानामपि कार्त्स्न्येन जपः । 'स्वे दक्षे' इत्युपस्थानात्प्राक् जुहुयात्, जपेद्वा ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ
सूत्रदीपिकायां दशमे प्रश्ने द्वितीयः पटलः

———

[प्राग्वंशप्रवेशोपवेशनादिकम्]

(सू) 'आ वो देवास ईमहे' इति पूर्वया द्वारा प्राग्वंशं प्रविश्य 'इन्द्राग्नी द्यावापृथिवी' इत्यपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य 'त्वं दीक्षाणामधिपतिरसि' इत्याहवनीयमुपोपविशति ॥ १० ॥ ३ ॥ ॥ १ ॥ २७०७ ॥

(भा) बहुषु द्वारेषु पूर्वया द्वारा । एकस्मिन् द्वारे तु तेनैव समीपे उपविशत्यभिमुखः आहवनीयम् ।

(वृ)–बहु–द्वारा—प्राग्वंशस्य प्रवेशः, कामनाविशेषात् ।
एकस्मिन्–तेनैव—प्रवेशः ।
समीपे–शत्यभिमुख — आहवनीयम् — आहवनीयस्य । उपाधिके चेत्युपशब्दस्य कर्मप्रवचनीयत्वात् ॥

(रु) एकद्वारे तु तेनैव प्रवेशः । उप–समीपे ।

(सू) एष एवात ऊर्ध्वं यजमानस्य सञ्चरो भवति ॥ ॥ १० ॥ ३ ॥ २ ॥ २७०८ ॥

(भा) एष [1]संचर आक्रतुसमाप्तेः कर्मनिमित्ते ॥

---

[1] संचरोऽत ऊर्ध्वमाक्रतु समाप्तेः–क. ग. च.

(वृ)–एष–हित्ते—संचरणे ; पुनर्यजमानग्रहणात् ।

(रु) सङ्करः कर्मार्थः ॥

[दीक्षणीयायामनुष्ठेयांशविशदीकरणम्]

(सू) अत्र दीक्षणीयामेके समामनन्ति ॥ १० ॥ ३ ॥
॥ ३ ॥ २७०९ ॥

(भा) अत्र वा दीक्षणीया ॥

(वृ) कार्या ;–तत्रायं कर्मक्रमः। सप्तहोत्रंतं यथोक्तं कृत्वा सप्तहोत्रर्थमग्निं परित्यज्य, विहरण[1]पक्षे विहृत्याग्निं अन्यं क्रत्वर्थ[2]मग्निं प्राग्वंशाद्युपवेशनान्तं कर्म कृत्वा 'स्वे दक्षे' इत्युपस्थानम्। पुरस्ताद्दीक्षणीयाया इत्युक्तत्वात्। अथ दीक्षणीयाध्रौवधारणान्ता ; अजस्रपक्षे तु कृत[3]त्वादुपस्थानस्य दीक्षणीयैवेति।

केचित्तु पुरस्ताद्दीक्षणीयाया इति वचनात् सप्तहोतुः पुरस्तात्पाठाच्च सप्तहोत्रव्यवधानमात्रमनुज्ञायते। न प्राग्वंशादीनां बहूनां कर्मणां। प्राग्वंशदीक्षणीययोः पौर्वापर्यविकल्पनेन तुल्यत्वाच्च। अजस्रेऽपीहैवोपस्थानमिति भाष्यकारमतिः ; तथा 'यद्देवा देवहेडनम्' इत्यस्य जपहोमौ प्रागेवोपस्थानात् ; कुतः? पुरस्ताच्छब्द[4]बलात्। सप्तहोतुः पुरस्तात्पाठादेव दीक्षणीयाया व्यवहितपुरस्तात्काले सिद्धे पुरस्ताच्छब्दग्रहणं त्ववधानार्थम्। अयं तु प्राग्वा दीक्षणीयाया इत्यत्र प्राक्छब्द उपरिष्टाच्छ्रुतस्य 'यद्देवा देवहेडनम्' इत्यनुवाकस्यापकर्षणार्थो न त्वव्यवधानार्थ इति।

यदा तूपस्थानं सप्तहोतुः पुरस्ताद्भवति, तदा दीक्षणीयायाः प्रागेव।

---

[1] विहरणपक्षे तूष्णीं वि–ग. [2] क्रत्वर्थाग्निं–ग. [3] कृतकत्वात्–च. [4] ब्दसत्वात्–ग.

(रु) अस्मिन् वा काले 'स्वे दक्षे' इत्युपस्थाय दीक्षणीयां कुर्यात् ॥

[सम्भारयजुर्गामनुष्ठयदेशकालादिविवरणम्]

(सू) पुरस्ताद्दीक्षाहुतीभ्यस्सम्भारयजूꣳषि ॥ १० ॥
॥ ३ ॥ ४ ॥ २७१० ॥

(भा) ततस्सम्भारयजूंषि, लौकिकेनाज्येन; ध्रौवस्यासम्भवात्। इहापि दीक्षणीयां कृत्वा ध्रौवधारणान्तां, सम्भारयजूंषि लौकिकेन जुहोति ॥

(वृ) ततः सं षि—यदा पुरस्ताद्दीक्षाहुतीभ्यस्सम्भारयजूंषि भवन्ति तदाऽयं कर्मक्रमः;—अध्यवसाय देवयजनान्तं कृत्वा विस्तारायामतः परि[1] च्छिद्याग्निमग्नीन् वा[2]प्रतिष्ठाप्य विद्युदसि निदर्शनं यज्ञार्थस्य द्रव्यस्य सोमा[3]हरणं तस्य परिवेषणं कृत्वा विहृत्य सप्तहोतारं हुत्वा तमग्निं परित्यज्य[4] विहृत्योपस्थाय दीक्षणीयाद्युपवेशनान्तं कृत्वा ॥

ततस्सम्भार–लौकिकेनाज्येन ;—अत्रापि अजस्रपक्षे सप्तहोतुः पुरस्तादुपस्थानम्। 'यद्देवा देवहेडनम्' इति सप्तहोतुः पुरस्तादपकर्ष[5]पक्षे। यदा तु प्राग्वंशः पूर्वः तदा सप्तहोतारं हुत्वा [6]पक्षे 'यद्देवा देवहेडनं' तत उपस्थानम्। ततो वपनस्नानप्रभृति यथोक्तमुप[7]वेशनान्तम्।

इहापि दीक्षणीया–'अत्र वा दीक्षणीया' इत्युक्तक्रमेण कृत्वा ध्रौवधारणान्ताम्।

(रु) पुरस्ताद्दीक्षाहुतीभ्य इतिवचनादत्र दीक्षणीयापक्षे तदन्ते हूयन्ते। लौकिकाज्येन च होमः। दीक्षाहुत्यर्थत्वाद्ध्रौवाज्यस्य ॥

---

[1] परिश्रित्य–च. [2] ग्निमग्नी–वा. ग. [3] हरणमाहरणं–च. [4] ज्य विहरणपक्षे–ग. च. [5] पुरस्तादजस्रपक्षे–क. [6] हुत्वाऽपकर्षपक्षे–ग. [7] मुपस्थानान्तम्–च.

[औद्ग्रहणहोमादिकम्]

(सू) यद्दीक्षणीयाया ध्रौवमाज्यं ततो दीक्षाहुतीः स्रुवेण चतस्रो जुहोति स्रुचा पञ्चमीम्; 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्येतैः प्रतिमन्त्रम् ॥ १० ॥
॥ ३ ॥ ५ ॥ २७११ ॥

(भा) ध्रौवाद्दीक्षाहुतीर्यदा विहिताः, यजमानसंस्कारार्थाः, यज्ञस्योद्यमनार्थाश्च। अतः सर्वतोमुखे सर्वविहारेषु क्रियन्ते। अस्थियज्ञे चाभिपूरणम् 'आप्यायतां ध्रुवा घृतेन' इत्यनेन; आप्यायते इति सार्वत्रिकवचनात्। अभाव उपदेशः स्रुवेण चतस्रो जुहोति स्रुचा पञ्चमीम्। एतान्यौद्ग्रहणानि। यदा स्रुवेणाध्वर्युः, तदा यजमानस्स्रुचा; यदा स्रुचाऽध्वर्युस्तदा स्रुवेण यजमानो जुहोति। जुह्वतं वाऽध्वर्युमभिमन्त्रयते ॥

[पुनर्दीक्षणीयाग्रहणफलविवरणम्]

(वृ)–ध्रौवा–हिताः–अयमर्थः—सम्भारयजूंषि हुत्वा ध्रुवामाप्याय्य न ततो दीक्षाहुतयो होतव्याः। यतो ध्रौवादित्येव[1] घृतस्य दीक्षणीयया ध्रौवस्य विनियोगे[2] सिद्धे पुनर्दीक्षणीयाग्रहणं करोति; तत्तस्यामेव गृहीतस्याविकृतस्य नियमार्थमिति। ततो[3] दीक्षाऽऽहुतयः ॥

[दीक्षाहुतिपदनिरुक्तिः, यजमानसंस्कारो हि दीक्षा]

यजमानसंस्कारार्थाः;—यतो दीक्षाऽऽहुतय इति समाख्यायन्ते; दीक्षतेऽनया यजमान इति दीक्षा; ता एवाऽऽहुतय इति। दीक्षा च यजमानसंस्कारः 'प्रच्युतो वा एषोऽस्माल्लोकादगतो देवलोकं

---

[1] सन्निधानात् घृतस्य–क. ग. च. [2] विनियोगसिद्धेः-ग. [3] ता दीक्षाऽऽहुतयो यजमानसंस्काराः–च. ताः दीक्षा–ग.

यो दीक्षितः' इति। अतस्सर्वे यजमानास्सत्रे जुहुयुः, न केवलं यजमानसंस्कारार्थाः।

[सोपपत्तिकं दीक्षाहुतीनां यज्ञोद्यमनार्थकत्वोपपादनम्]

**यज्ञस्योद्यमनार्थाश्च ;—अयमर्थः ;—** यज्ञस्योद्यमनाद्यज्ञोद्यमनार्थता ; कुतः "ऋचा जुहोति यज्ञस्योद्यत्यै" इति लिङ्गात्। न च ऋचा होमस्यैव यज्ञो[1]द्यमनार्थता ; पञ्च जुहोतीति विधायावयुत्याऽनुवादत्वेन पृथक्प्रयोगाभावात्। यथा जातेष्ट्यां ब्रह्मवर्चसकामस्याष्टाकपालः।

**अतस्स—यन्ते ;—**यजमानस्यैकत्वेऽपि प्रयाजादिवत्तत्क्र[2]तूद्यमनाय।

[ध्रुवाभिपूरणविधानम्]

**अस्थियज्ञे—वचनात् ;—**अस्थियज्ञे यजमानाभावेऽपि क्रत्वर्थतया क्रियन्त[3] एव, "सत्राय दीक्षितानां यद्येको म्रियेत कृष्णाजिनेनास्थीनि बध्वा यजेरन्" इत्यस्थियज्ञो विधीयते। तत्राकर्तृकत्वेन कर्तृसंस्काराभावेऽपि क्रत्वर्थाः कर्तव्या हुत्वा ध्रुवायामभिपूरणं क्रियते लौकिकेनाज्येन न्यायेन। यथा "सर्वस्मै वा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यम्" इति वचनेन सर्वे यज्ञा न ते[4]नैव क्रियन्ते ; किन्तु अभिपूर्यैव क्रियन्ते एवमन्यत्रापि।

**आप्यायतां—वचनात् ;—**तथा लौकिकेनाभिपूरणम्, आज्यसंस्कारा[5]णामभावात्। **अभाव उपदेशः ;—**अभिपूरणस्य, पुन-

[1] यज्ञार्थता—**च.** [2] तत्तत्कर्मोद्यमना—**य. ग.** [3] हूयन्त—**ग.** [4] अनेनैव—**च.**
[5] णां माहकाभावात्—**ग. च.**

दीक्षणीयाग्रहणात् । अविकृतस्यैव दीक्षणीयाध्रौवस्य विधानात् । मात्रापचारे तच्छेषेण समाप्नुयादित्यल्पशो[1] होतव्याः ।

**स्रुवेण-मीम्** —न तु स्रुवमात्रेण ।

[स्रुग्विधानतदभावयोः फलम्]

ननु चतसृषु स्रुवविधानात् 'अन्यत्र जुहूं पात्रं प्रतीयात्' इति परिभाषासिद्धायां जुह्वां स्रुग्विधानमितर[2]प्राप्त्यर्थमिति चेत्; तन्न; प्रकृतेः पूर्व[3]सिद्धत्वादपूर्वमन्ते स्यादिति न्यायेनादौ जुह्वाः प्राप्तायाः पञ्चम्यां विनियोग इति न स्रुग्विधीयते ।

[सौत्रस्य 'षष्ठीम्' इत्यस्य प्रयोजनविवरणम्]

**आकूत्यै प्रयुजे स्वाहेति प्रतिमन्त्रम्**;—न तु 'आकूत्यै स्वाहा' इत्येतैः स्वाहारानुषङ्गेण । विभागे निरपेक्षत्वेऽपि विश्वे देवस्येति षष्ठीम् इति स्रुक्प्राप्त्यर्थम् । अन्यथा स्रुचा पञ्चमीमिति-दर्शनात् स्रुवानुवृत्तेस्स एवात्रापि स्यात् । स्रुचं पूरयित्वाऽपि स्रुवेण होमश्शक्यते । सौविष्टकृतान्युपभृत्यवत्तानि जुह्वा पूर्णाहुतिमिति ज्ञापनार्थम् ।

[दीक्षाहुतीनामौद्ग्रहणत्वसाधकप्रमाणोपन्यासः]

अत एव **एतान्यौद्ग्रहणानि,** यान्यादितः पञ्च यजूंषि, आकूत्या इत्यादीनि "तदौद्ग्रहणस्यौद्ग्रहणत्वम्" इति लिङ्गात् । नाम च ज्ञानार्थम् । यत्र यदा जुहोति तत्तदा 'वाचा मे' इत्यादि-भिर्यजमानो जुहोति । प्रथमेनाध्वर्यौ जुह्वति 'वाचा मे' इति यजमानः । एवमुत्तरत्रापि ।

[1] दित्यवशेषाद्धोतव्याः—ग. [2] मितरत्र प्राप्तमिति—ञ. [3] पूर्वोक्तत्वात्—ग.

[अध्वर्युयजमानयोर्नियतपात्रकत्वम् ]

**यदा-जुहोति**—अध्वर्योः पात्रनियमादेवास्यापि नियमात् । युगपत्कालत्वात्, न पारिभाषिक्या स्रुचैव यजमानस्तानि ।

**जुह्वतं-यत्**—यजमान एतैर्मन्त्रैः । **तदा**—तदैव । अत्र पुनर्जुहूग्रहणाद्यजमानार्था अपि[1] पञ्चाऽऽहुतीरध्वर्युर्जुहुयात् । 'वाचा मे' इत्यादिभिर्मन्त्रैरनुमन्त्रयते यजमान इति । होमस्यालोपमिच्छान्ति केचित् ।

(रु) प्रतिमन्त्रग्रहणं मन्त्रेण ध्रुवाप्यायनं सार्वत्रिकमिति वचनात् । नैष्टिकव्यतिरिक्त इति केचित् ।

[पूर्णाहुत्यनुमन्त्रणादिकम् ]

(सू) **द्वादश गृहीतेन स्रुचं पूरयित्वा "विश्वेदेवस्य नेतुः" इति पूर्णाऽऽहुतिं षष्ठीम् ॥ १० ॥ ३ ॥ ॥ ६ ॥ २७१२ ॥**

**यत्राध्वर्युरौद्ग्रहणानि जुहोति तद्यजमानोऽध्वर्युमन्वारभ्य पञ्च जुहोति; "वाचा मे वाग्दीक्षतां स्वाहा, प्राणेन मे प्राणो दीक्षतां स्वाहा, चक्षुषा मे चक्षुर्दीक्षतां स्वाहा, श्रोत्रेण मे श्रोत्रं दीक्षतां स्वाहा" इति ॥ १० ॥ ३ ॥ ७ ॥ ॥ २७१३ ॥**

**अध्वर्युं वा जुह्वतमनुमन्त्रयते ॥ १० ॥ ३ ॥ ॥ ८ ॥ २७१४ ॥**

[1] अपि वाऽऽहुतीर—ञ.

(सू) "वातं प्राणं मनसाऽन्वारभामहे प्रजापतिं यो भुवनस्य गोपाः । स नो मृत्योस्त्रायतां पात्वꣳहसो ज्योग्जीवा जरामशीमहि" इति पूर्णाऽऽहुतिꣳ हूयमानामनुमन्त्रयते ॥ १० ॥ ३ ॥ ९ ॥ २७१५ ॥

[दीक्षणीयोत्कर्षपक्षाप्यायनपक्षायुन्नेयांशाः]

(सू) अत्र सम्भारयजूꣳष्येके ॥ १० ॥ ३ ॥ १० ॥ ॥ २७१६ ॥

कृष्णाजिनेन यजमानं दीक्षयति ॥ १० ॥ ३ ॥ ॥ ११ ॥ २७१७ ॥

(भा) पूर्णाहुतेर्नित्यमभिमन्त्रणम् । अत्र सम्भारयजूंषि लौकिकेनैवाज्येन । पूर्ववत्क्रमः । अध्यवसानादि । कृष्णाजिनेन यजमानं दीक्षयत्यध्वर्युः ॥

(वृ) **पूर्णाहु–मन्त्रणम्**—न तु पूर्वेषामनुमन्त्रणपक्ष एव, तदाऽऽहुत्या एवाभिमन्त्रणम् ; नाध्वर्योः ।

**विश्वे देवस्य नेतुः**—[1] इति मन्त्रान्ते याजमानारम्भः, उद्देशत्यागस्तु मन्त्रे वर्तमान एव । याजमानान्ते [2] पूर्णाहुतेश्शनैस्समापनं याजमानस्य [3] दैर्घ्यात् । केषांचित् ;

**अत्र सम्भारयजूंषि**—भवन्ति ; तानि

**लौकिकेनैवाज्येन**—अस्मिन्पक्षे,

**पूर्ववत्क्रमः**—कर्मणां भवति अध्यवसानादिर्य उक्तः ; अध्यवसाय देवयजनान्तं कृत्वा, सप्तहोतारं [4] तमग्निं परित्यज्य दीक्षणीया-

[1] अध्वर्योर्मन्त्रान्ते यजमानमन्त्रारम्भः–क. च. अध्वर्योर्मन्त्रान्ते याजमान–च.
[2] नान्तेऽनुमन्त्रणं पूर्णाहुतेः–च. [3] स्य तदेव स्यात्–ग. [4] सहोता तमग्निं–ग.

द्युपवेशनान्तं कृत्वा दीक्षाऽऽहुतिप्रभृत्यनुमन्त्रणान्तं [1] ( दीक्षणीयोत्कर्षपक्षे सप्तहोत्रर्थं परित्यज्य विहृत्य प्राग्वंशाद्युपवेशनान्तं ) कृत्वा 'स्वे दक्षे' इत्युपस्थानाद्यनुमन्त्रणान्ते सम्भारयजूंषि यथाऽव्याख्यातमनुष्ठेयम् । आप्यायनपक्षेऽपि पूर्णाहुतौ ध्रौवसमाप्तिः ।

कृष्णाजि–त्यध्वर्युः—यजमानग्रहणं पत्नीनिवृत्त्यर्थम् । उभयोर्दीक्षितत्वाविशेषात् । कथम् ? वक्ष्यमाणक्रमेण ॥

(रु) षष्ठीं दीक्षाऽऽहुतिमिति शेषः । दीक्षाऽऽहुतय एवौद्ग्रहणानि । तास्वेकैकस्यां हुतायामेकैकशो जुहोति । तत्र सव्येनाध्वर्युमन्वारभ्य स्रुक्स्रुवयोरव्यापृतेन होमः । अध्वर्यु दीक्षाऽऽहुतिं जुह्वतं एतेषामेकैकेनानुमन्त्रयत इत्यर्थः । अन्यथा मन्त्रलिङ्गविरोधात् । पूर्वेषां होमार्थत्वेऽपि नित्यं पूर्णाऽऽहुत्यनुमन्त्रणम् । पुनरनुमन्त्रणविधानात् । अत्रापि लौकिकाज्येनैव होमः । गतः ॥

[कृष्णाजिनदीक्षाप्रतिषीवनाऽऽस्तरणादिविधानम् ]

(सू) द्वाभ्यां समस्य दीक्षितान्तमांसाभ्यां बहिर्लोमभ्याम् ॥ १० ॥ ३ ॥ १२ ॥ २७१८ ॥

यद्येकं दक्षिणं पूर्वपादं प्रतिषीव्येत् । अन्तान्वा ॥ १० ॥ ३ ॥ १३ ॥ २७१९ ॥

द्वे विषूची प्रतिमुञ्चेत पादं वा प्रतिषीव्येदित्येके ॥ १० ॥ ३ ॥ १४ ॥ २७२० ॥

अन्तर्वेदि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तृणाति ॥ १० ॥ ३ ॥ १५ ॥ २७२१ ॥

---

[1] कुण्डलितः पाठो ग. पुस्तके नास्ति.

(भा) अन्तर्वेदि स्तृणाति कृष्णाजिनम्। समसनं–एकीकरणम्। अन्तर्माँसाभ्यां बहिर्लोमभ्याम्। यदि त्वेकम्; तदा दक्षिणं पूर्वपादं प्रति[1]षीव्यति; अन्तान्वा कृष्णाजिनस्य। विषूची नानामुखे, एकस्य पूर्वपादं [2] लिङ्गयति॥

(वृ) अन्तर्वे–जिनम्—द्वाभ्यां कृष्णाजिनाभ्यां वा [3] दीक्षते यजमानः, एकेन वा कृष्णाजिनेनेति वचनात्। यदा द्वाभ्यां दीक्षते यजमानः, तदा द्वे समस्य अन्तर्वेदि स्तृणात्यध्वर्युः।

सम–करणम् द्वाभ्यां दीक्षमाणो यजमानः।

अन्तर्मां–र्लोमभ्याम्—दीक्षित एवं यथा भवति तथाऽध्वर्युस्समस्यति। लोमग्रहणं लोमानपनयनार्थम। एवं वा एतत्सूत्रमनुसन्धेयम्;—द्वाभ्यां समस्य दीक्षयेदिति। तदाऽर्थसिद्धो यजमानस्य दीक्षाविधिः।

यदि त्वेकम्—कृष्णाजिनं भवति।

दक्षिणं–जिनस्य—प्रतिषीवनमधस्तात्कृष्णाजिनस्य [4], पादस्यान्तानां वा क्षेपः। 'यद्येकेन' इति वक्तव्ये 'यद्येकं स्यात्' इति वचनं प्रत्यङ्मुखस्य लाभे इति ज्ञापनार्थम। ततो [5] द्वयोर्लाभे द्वाभ्यामेव।

[कृष्णाजिनद्वित्वोन्नेयविशेषांशः]

यदि च द्वे—कृष्णाजिने, विषूची–नानामुखे, प्रतिमुञ्चेत एकस्य वा दक्षिणं पूर्वपादं लङ्गयति–प्रत्यङ्मुखस्य [6] वा प्राचीनग्रीवमुत्तरलोम कुर्यात्, उत्तरलोम्नः प्राचीनग्रीवत्वात्। पुनः कृष्णाजिन-

[1] षीव्येत–क. [2] लङ्गयति–ङ. [3] दीक्षेत–ग. च. [4] जिनस्यान्तानामवक्षेपः–च. [5] द्वाभ्यां दीक्षणमेव–ग. ङ. द्वाभ्यां दीक्षणीयमेव–च. [6] स्य प्राङ्मुखस्य वा प्राचीनग्रीवमुत्तरं कुर्यात्। उत्तरलोम्नः प्राचीनग्रीवत्वाभावात्–च.

ग्रहणाद्यत्राभिचारादौ वैयाघ्रादिभिर्दीक्षा, यदा वा कृष्णाजिनप्रतिनिधिः तस्य[1] नान्तर्वेदि स्तरणं यजमानायतन एव ॥

[मतभेदेन शुक्लकृष्णरेखालम्भसम्मर्शनयोर्विधिः]

(सू) "ऋक्सामयोश्शिल्पे स्थः" इति शुक्लकृष्णे राजी आलभते। संमृशतीत्येके ॥ १० ॥ ३ ॥ ॥ १६ ॥ २७२२ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने अष्टमी खण्डिका

---

(भा) शुक्लकृष्णरेखे आलभते, सर्वतो वा स्पृशति [2]कृष्णाजिनम् ॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने अष्टमी खण्डिका

---

(वृ) शुक्ल–भते—यद्यपि द्वाभ्यां दीक्षेत।

सर्वतो–जिनम्—यजमान उदङ्मुख एव कृष्णाजिनमभिमृशत्युत्तमेन मन्त्रेण, तस्यादित्वाद्वाचनम्। ऊर्ध्वाधरे हि देशेन मध्यमिति ॥

इति श्रीरामाग्निचिद्वृत्तौ दशमप्रश्ने अष्टमी खण्डिका

---

(रु) समस्य सहिताभ्यां न त्वेकेन। एकं चेत्तदा दक्षिणं पूर्वपादं प्रतिषीव्येत्। आभुज्याधः प्रविश्य तन्तुभिस्सीव्येत्। अन्तान् वा

---

[1] तस्यान्तर्वेदि—च. [2] प्रतिदिशं कृष्णाजिनं—ग.

कृष्णाजिनस्य तथा कुर्यात् । द्वे विषूची विपर्यस्तशिरःपृष्ठे मिथः संसक्ते कुर्यादित्यर्थः । पूर्ववदेकस्य पादं वा प्रतिषीव्येत् । विषूचीनकरणप्रतिषीवणयोर्विकल्प एकेषामिति केचित् । द्वयपक्षे प्राचीनग्रीवमुत्तरम् । शुक्लकृष्णौ प्रवेशौ सह स्पृशति । शिल्पे स्थ इति लिङ्गात् । आलम्भनं केवलस्पर्शनम् । संमर्शनं संश्लेषवत् ॥

इति श्रीभट्टरुद्रदत्तविरचितायां आपस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमे प्रश्ने अष्टमी खण्डिका ।

---

[कृष्णाजिनाभिमर्शन, तत्समीपगमन, तदारोहणक्रमाः]

(सू) "इन्द्र शाक्वर गायत्रीं प्रपद्ये तां ते युनज्मि इन्द्र शाक्वर त्रिष्टुभं प्रपद्ये तां ते युनज्मि इन्द्र शाक्वर जगतीं प्रपद्ये तां ते युनज्मि इन्द्र शाक्वरानुष्टुभं प्रपद्ये तां ते युनज्मि इन्द्र शाक्वर पङ्क्तिं प्रपद्ये तां ते युनज्मि" इत्येतैः प्रतिमन्त्रं प्रतिदिशं कृष्णाजिनमभिमृशति । मध्य उत्तमेन ॥ १० ॥ ३ ॥ ॥ १७ ॥ २७२३ ॥

(भा) यदा द्वे तदाऽपि प्रतिदिशं स्पृशति ॥

(वृ) यदापि- शति-- प्रतिदिशं कृष्णाजिनमभिमृशति । कृष्णाजिन[1]मिति वचनस्याविवक्षितत्वे उद्देश्यगतत्वात् । ( मध्यं भवेदिति ।)

(रु) गतः ॥

[1] जिनस्याविवक्षितत्वात्-ग.

(सू.) अथ प्राङ्मुखो जान्वक्नोऽभिमृशति ॥ १० ॥ ॥ ३ ॥ १८ ॥ २८२४ ॥

(भा) जान्वक्न –संकुचितजानुः ॥

(वृ) जान्वक्नः–जानुः––गच्छति कृष्णाजिनसमीपम् । अभिशब्दस्य सामीप्यवचनत्वात् ॥

(रु) जान्वक्नः आरोहणानुगुणन्यक्नजानुः संभुग्नजानुरित्यर्थः । यथा, तासां दक्षिणो बाहुर्न्यक्न इति ॥

(सू.) 'इमां धियꣳ शिक्षमाणस्य' इति कृष्णाजिनं भसत्त आरोहति ॥ १० ॥ ३ ॥ १९ ॥ २८२५ ॥

(भा) भसत्–कटिप्रदेशः ; तदारभ्यारोहति ॥

(वृ) भसत्–इति––यदा द्वे तदा अधोगतस्य[1] कृष्णाजिनस्य शिरो नाक्रामति ॥

(रु) भसत्तः–कटिप्रदेशेन ॥

[आरोहता आरूढेन च जप्यांशविवरणम्]

(सू) 'सुत्रामाणं' इत्यारोहन् जपति । 'इमाꣳ सु नावम्' इत्यारूढः । 'आऽहं दीक्षामरुहमृतस्य पत्नीं गायत्रेण छन्दसा ब्रह्मणा चर्तꣳ सत्येऽधायि सत्यमृतेऽधाय्यृतं च मे सत्यं चाभूतां ज्योतिरभूवꣳ सुवरगमꣳ सुवर्गं लोकं नाकस्य पृष्ठं ब्रध्नस्य विष्टपमगमम्' इति च ॥१०॥३॥२०॥२९२६॥

---

[1] मध्यगतस्य–च.

(सू) अत्र पत्नी शिरसि कुम्बकुरीरमध्यूहते ॥ १० ॥
॥ ३ ॥ २१ ॥ २७२७ ॥

(भा) 'इमाꣳ सु नावमारुहम्' [1]इत्यारभ्य 'ब्रध्नस्य विष्टपमगमम्' इत्येवमन्तं जपति । कुम्बकुरीरं पत्न्याश्शिरस्यध्वर्युः क्षिपति ॥

[ कुम्बकुरीरपदाभिधेयार्थविशदीकरणम ]

(वृ) इमा–जपति––आरूढः ॥

कुम्ब–पति —कुम्बकुरीरं जालं तन्तुमयं दर्भमयं वा ॥

(रु) गतः । अध्यूहते–अधिनिदधाति ॥

(सू) कृष्णं जीवोर्णानामिति वाजसनेयकम् ॥ १० ॥
॥ ३ ॥ २२ ॥ २७२८ ॥

(सू) जालं कुम्बकुरीरमित्याचक्षते ॥ १० ॥ ३ ॥
॥ २३ ॥ २७२९ ॥

(भा) जीवतो मेषस्य [2]ऊर्णाकृतमिति विकल्पः ॥

(वृ) जीव–कल्पः––अत्रेति वचनादन्तर्वेद्या[3]नीय पत्नी जाला-[4]ध्यूहनम् ॥

(रु) तत्कुम्बकुरीरं जीवतोऽवेः कृष्णस्योर्णाभिर्वा कृतं भवति । जालं आनायः, तच्च वैदलं वलये स्यूतं, यथाह बोधायनः, बिदलं कुम्बं भवति, जालं कुरीरं भवतीति ॥

---

[1] मित्यारुह–च. [2] ऊर्णानां कृत–ङ. च. ऊर्णानामिति–क. [3] वेद्यां निधाय–ग. [4] तस्यैकदेशेन–ख. पटैकदेशेन–ग.

[प्रोर्णनापोर्णनवेष्टनपत्नीदीक्षाविधानादिकम्]

(सू) 'विष्णोश्शर्माऽसि' इत्यहतेन वाससा दक्षिणमंसं प्रोर्णुते। 'नक्षत्राणां माऽतीकाशात्पाहि' इति शिरः ॥ १० ॥ ३ ॥ २४ ॥ २७३० ॥

(भा) अनिवासितेन वाससा प्रच्छादयति दक्षिणमंसं 'विष्णोश्शर्माऽसि' इति तस्यैकदेशेन, शिरश्च 'नक्षत्राणां माऽतीकाशात्पाहि' इति ॥

(वृ) तस्यैकदेशेन—एकेनान्तेन ॥

(सू) उष्णीषेण प्रदक्षिणं शिरो वेष्टयत इति वाजसनेयकम् ॥ १० ॥ ३ ॥ २५ ॥ २७३१ ॥

(भा) दीर्घशाटकेन वा शिर एव प्रदक्षिणम् ॥

(वृ) दीर्घ—णम्—वेष्टयति; तस्मिन् पक्षे 'विष्णोश्शर्माऽसि' इत्यस्य निवृत्तिः ॥

(सू) 'न पुरा सोमस्य क्रयादपोर्ण्वीत' इत्युक्तम् ॥ ॥ १० ॥ ३ ॥ २६ ॥ २७३२ ॥

(भा) अपोर्णनमुद्धाटनम् ॥

(वृ) अपो—नम्—न तु प्रोर्णनस्यैवा[1]पोर्णनम्; अतो वेष्टनस्याप्युद्धाटनं राजक्रयान्त एव ॥

---

[1] वापोहनं—ग.

(रु) वाससा संप्रावृत्य तस्यैवैकदेशेन शिरः संप्रोर्णुते। उष्णीषेणान्येन वा दीर्घशाटकेन वेष्टयते शिर इति। अपावरणं अपोर्णवनम्। तत्प्राकृयात्प्रतिषिध्यातिक्रमे दोषश्चोक्तो ब्राह्मणे सोऽनुसन्धेय इत्यर्थः॥

**(सू) प्राचीनमात्रावाससा पत्नीं दीक्षयति॥ १०॥**
**॥ ३॥ २७॥ २७३३॥**

(भा) प्राचीनं मात्रा यस्य वाससः तत्प्राचीनमात्रं वासः। मात्रा–द्वारकम्, तदध्वर्युः प्रयच्छति॥

**[सौत्रप्राचीनमात्रवासश्शब्दनिर्वचनम्]**

(वृ) **प्राची–यच्छति**— अस्यार्थः ;—‘प्राचीनमात्रावाससा पत्नीं दीक्षयति’ इति वाक्ये दीर्घश्छान्दसः। प्राचीनशब्दार्थो [1] वक्ष्यते। अत ऊर्ध्वं मात्रा यस्य वाससः इति प्राचीनमात्रं बहुव्रीहिः। प्राचीनमात्रं च तद्वासश्चेति कर्मधारयः। मात्रा द्वारको दशेति पर्यायः। वस्त्रान्ते तिर्यक्तन्तुवर्जितो भागः। तेन पत्न्या दीक्षा, तस्यैव प्रदानं यथा तथा वक्तव्यम्। तथाऽऽनुकूल्यं कल्पयित्वा, कृष्णाजिनदीक्षायां दृष्टत्वादिति॥

(रु) ‘प्राचीनमात्रा’ इत्यस्यार्थमाह॥

**(सू) ऊर्ध्ववास्यं ब्रुवते॥ १०॥ ३॥ २८॥ २७३४॥**

(भा) ऊर्ध्वं यद्वस्यते ऊर्ध्वाभिर्दशाभिः तदूर्ध्ववास्यम्॥

(वृ) **ऊर्ध्वं य–वास्यम्**—प्राचीनमात्रा[2]शब्दं ब्रुवते नैरुक्ता इत्यर्थः॥

---

[1] वर्ण्यते–ग. [2] शब्दार्थम्-क.

(रु) ऊर्ध्वया दशया वसनीयं ऊर्ध्ववास्यम्। अन्तरा वा पराङ्नीतां दशामूर्ध्वं कृत्वा वसनीयमित्यर्थः। उत्तरीयमित्येके ॥

[दीक्षितमौञ्जीलक्षणम्]

(सू) **शरमयी मौञ्जी वा मेखला त्रिवृत्पृथ्व्यन्यतःपाशा, तया यजमानं दीक्षयति, योक्त्रेण पत्नीम् ॥ ॥ १० ॥ ३ ॥ २९ ॥ २७३५ ॥**

(भा) पृथ्वी-विस्तीर्णा ॥

(वृ) **पृथ्वी-विस्तीर्णा**—योक्त्रमग्निष्ठानुरूपः योक्त्राकृतिर्वा रज्जूः दर्भमयी, हिरण्यकेशिमतात् ॥

(रु) पृथ्वी-विस्तीर्णा ॥

(सू) **'ऊर्गसि' इति नाभिं प्रति परिव्ययति द्वेष्यं मनसा ध्यायन् ॥ १० ॥ ३ ॥ ३० ॥ २७३६ ॥**

(भा) अध्वर्युरुभयं बध्नाति, 'ऊर्गसि' इति। प्रत्यगाशीष्ट्वा[1]दाध्वर्यवम्। ध्यानं याजमानं [2]द्वेष्यस्य। उपदेशो द्वेष्यः पाप्मा ॥

(वृ) **अध्वर्यु-ति**—न तु पूर्ववद्ददात्येव; नाभिं प्रति परिव्ययति, सन्नह्यतीति विशेष[3]विधानात्।

**ऊर्गसीति**—श्रुत्या विनियोगात्।

**ध्यानं-ष्यस्य**—'पाहि मा देवदत्तान्मा मा हिꣳसीः' इति।

**उपदेशो-पाप्मा**—'पाहि मा पाप्मनो मा मा हिꣳसीः' इति ॥

---

[1] गाशीरप्याध्वर्यवम्—क. ख. ग. च. [2] यजमानद्वेष्यस्य—क. ख. ग. [3] वचनात्—च.

(रु) यजमान इति शेषः ॥

(सू) **उत्तरेण नाभिं निष्टक्यं ग्रन्थिं कृत्वा प्रदक्षिणं पर्यूह्य दक्षिणेन नाभिमवस्थापयति ॥ १० ॥ ३ ॥ ॥ ३१ ॥ २७३७ ॥**

(भा) प्रदक्षिणं पर्यूह्य सर्वतो दक्षिणेन नाभिमवस्थापयति ॥

(वृ) **प्रदक्षि–तः**––न तु नाभेरुत्तरत आरभ्य दक्षिणतः पर्यूह्येति वचनात् ।

**दक्षिणे–यति**–– यथा नान्यदेशं गच्छति ॥

(रु) गतः ॥

**[पत्नीसन्नहनस्य वैकल्पिकत्वाभावः]**

(सू) **अत्रदर्शपूर्णमासवत् पत्नीं सन्नह्यति 'सं त्वा नह्यामि' इति विकारः ॥१०॥३॥३२॥२७३८॥**

(भा) पत्नीसंनहनं नित्यं, 'दीक्षयति' इति वचनात् । नात्र [1]प्रतिबन्धवचनम् ।

(वृ) **पत्नी–त्तम्**––न तु 'दर्शपूर्णमासवत' इति वचनेन, सन्नहनमन्त्रस्य पत्न्या वाचनमपि पक्षे भवति ।

**दीक्ष–वचनात्**––तस्य च प्रकारवचनत्वात् ।

**संनह्यति**––तस्मान्नात्र वाचनं मन्त्रलिङ्गाच्च ।

अत्रेति वचनात् न पत्न्यायतने पत्न्याः सन्नहनम् । अन्तर्वेद्यामेवोर्ध्वज्ञुमासीनां तिष्ठन्तीं वा दक्षिणेन नाभिमित्यादि समानम् ॥

[1] नात्र प्रतिबन्धवचनम्–ख. इदं–ग कोशे नास्ति.

(रु) सोमार्थं योक्त्रमावभृथाद्धार्यम् । तस्य चोक्त एव प्रसङ्गः प्रायणीयादौ ॥

(सू) 'इन्द्रस्य योनिरसि मा माहिꣳसीः' इति कृष्ण-विषाणां यजमानाय प्रयच्छति ॥ १० ॥ ३ ॥ ॥ ३३ ॥ २७३९ ॥

(भा) कृष्णविषाणाप्रदानं यजुराध्वर्यवं प्रत्यगाशीरपि ।

(वृ)-कृष्ण-वं—'मा मा हिꣳसीः' इति । प्रत्यगाशीरपि—विनियोगबलात् ।

(रु) कृष्णमृगस्य शृंगं कृष्णविषाणा ॥

(सू) आबध्नातीत्येके ॥ १० ॥ ३ ॥ ३४ ॥ २७४० ॥

(वृ) आबन्धनेऽपि मन्त्रः, विषाणा साम्ना भवति, कण्डूयनादौ विनियोगात् ।

(रु) 'वसनस्य दशायां बध्नीत' इति बोधायनकात्यायनौ ॥

(सू) त्रिवलिः पञ्चवलिर्वा दक्षिणावृद्भवति, सव्या-वृदित्येके ॥ १० ॥ ३ ॥ ३५ ॥ २७४१ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने नवमी खण्डिका

---

(भा) सा दक्षिणावृत् सव्यावृद्वा ।

इति धूर्तस्वामिभाष्ये दशमप्रश्ने नवमी खण्डिका

---

(वृ) सा–द्वा—या तु न संवृत्ता उभयावृत्ता वा तस्याः प्रतिषेधः ।

इति धूर्तस्वामिभाष्यवृत्तौ दशमे प्रश्ने नवमी खण्डिका

---

(रु) गतः ॥

इति श्री भट्टरुद्रदत्तविरचितायां आपस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमप्रश्ने नवमी खण्डिका

---

[यजमानेनानुष्ठेयोंऽशः]

(सू) 'कृष्यै त्वा सुसस्यायै' इति तया वेदेर्लोष्टमुद्धन्ति ॥ १० ॥ ३ ॥ ३६ ॥ २७४२ ॥

(भा) तया वेदेर्लोष्टमुद्धन्ति यजमानः ।

(वृ) तया—कृष्णविषाणया ।

वेदे–मानः—यजमानकरस्थत्वाद्विषाणायाः ।

(सू) 'सुपिप्पलाभ्यस्त्वौषधिभ्यः' इत्यर्थे प्राप्ते शिरसि कण्डूयते ॥ १० ॥ ३ ॥ ३७ ॥ २७४३ ॥

(भा) अर्थः—कण्डूयनम् ; 'सुपिप्पलाभ्यस्त्वौषधीभ्यः' इति शिरसि कण्डूयते ॥

(वृ) अर्थ–यनम्—तास्मिन् कर्तव्ये ।

(सू) विषाणे विष्यैतं ग्रन्थिं यदस्य गुल्भितं हृदि मनो यदस्य गुल्भितमित्यङ्गानि ॥ १० ॥ ३ ॥ ॥ ३८ ॥ २७४४ ॥

[दीक्षितदण्डप्रदानं, तल्लक्षणादिकं च]

(सू) 'ऊर्ध्वसदसि वानस्पत्यस्सुद्युम्नो द्युम्नं यजमानाय धेहि' इत्यौदुम्बरं दीक्षितदण्डं यजमानाय प्रयच्छति ॥ १० ॥ ३ ॥ ३९ ॥ २७४५ ॥

आस्यदघ्नश्चुबुकदघ्नो वा ॥ १० ॥ ३ ॥ ४० ॥ ॥ २७४६ ॥

'सूपस्था देवो वनस्पतिः' इति तं यजमानः प्रतिगृह्य 'उरुव्यचा असि जनधाः स्वभक्षो मा पाहि' इति चमसं व्रतप्रदानमभिमन्त्र्य केशिनीं दीक्षां जपति ।

अग्निर्दीक्षितः पृथिवी दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे ।

वायुर्दीक्षितोऽन्तरिक्षं दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे ।

आदित्यो दीक्षितो द्यौर्दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे ।

चन्द्रमा दीक्षितः श्रोत्रं दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे ।

प्रजापतिर्दीक्षितो मनो दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे ।

वाचा मे वाग्दीक्षितामग्नये समष्टवा उ ।

प्राणेन मे प्राणो दीक्षताꣳ सूर्याय समष्टवा उ ।

श्रोत्रेण मे श्रोत्रं दीक्षतां चन्द्रमसे समष्टवा उ ।

मनसा मे मनो दीक्षतां प्रजापतये समष्टवा उ ।
भूर्भुवस्सुवस्तपो मे दीक्षा सत्यं गृहपतिरिति ॥
॥ १० ॥ ३ ॥ ४१ ॥ २७४७ ॥

(सू) अथैनमध्वर्युरभिमन्त्रयते ॥ १० ॥ ३ ॥ ४२ ॥
॥ २७४८ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने दशमी खण्डिका

---

(भा) 'विषाणे विष्यैनम्' इति मन्त्रोऽङ्गानां कण्डूयनस्य । ग्रहणप्रदानयोर्मन्त्राभ्यां यौगपद्येन[1] दण्डस्य[2] नियमः ।

ननु वृक्षमयश्चमसः तस्य भक्षणे पुनः पुनरसामर्थ्यात् । चमसाभिमन्त्रणादि याजमानम् ॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने दशमी खण्डिका

---

[अङ्गशब्दस्य पानसमात्रतात्पर्यकत्वे बाधकम्]

(वृ) विषाणे–यनस्य–न हृदयमात्रस्य ; 'अङ्गानि' इति वचनात् । यदि अङ्गशब्देन हृदयमेवोच्येत ; तदा बहुवचनमनर्थकं स्यात् ॥

[सौत्रतच्छब्दोन्नयोऽशः]

ग्रहणप्र–यमः–अस्यार्थः — येनेत्यारभ्य तं यजमानः प्रतिगृह्णेति दर्शनेन यत्तच्छब्दयोरैकार्थ्यात्, तं चमसमित्युत्तरेणान्वयायोगात् चमसदानप्रतिग्रहयोरवश्यकर्तव्यत्वाच्च प्रतिग्रहमन्त्रः, वृक्षनियमश्च[3]मस्येति च न प्रत्येतव्यम् ।

---

[1] द्ये च दण्डस्य–ङ. [2] ण्डस्येति नियमः–च. [3] मस्तस्येतिमप्रत्ये–क. च.

### [सोपपत्तिकं आस्यदघ्नत्वादिविशेषणानां दण्डमात्र-सम्बन्धित्वोपपादनम्]

आस्यदघ्नत्वादिपरिमाणस्य चमसेऽदृष्टार्थत्वाद्दण्डे च युक्तत्वात्। ऊर्ध्वमिति मन्त्रलिङ्गाच्च। तस्माद्दण्डस्यैवा[1]स्यादिपरिमाणनियमाः। अतो दानप्रतिग्रहयोस्समानकालत्वात् "ऊर्ध्वसदसि, सूपस्थाः" इति [2]मन्त्राभ्यां यौगपद्येनाध्वर्युयजमानयोः दानप्रतिग्रहणे भवतः। दानपूर्वकस्यापि प्रतिग्रहणस्य पूर्वमुपादानं प्राधान्यात् तच्छेषत्वाद्दानस्य। तस्मात्कृष्णविषाणादानानन्तरमेव[3] न सहसा दण्डदानमध्वर्योः यजमानावसरस्यानुविधेयत्वादिति[4] ॥

**नवृक्ष–श्चमसः** ;—चम्यते भक्ष्यतेऽनेनेति चमसः। न तु व्रतमनेन प्रदीयते। 'चमसो देवपानः' इति लिङ्गात्।

ननु तानूनप्त्रचमसवदिहापि वार्क्षश्चमसः किं न स्यात्? उच्यते ;—'अर्थद्रव्यविरोधेऽर्थो बलीयान्' इत्यनेन व्रतभक्षणेन उच्छिष्टं स्यात् तच्छोधनाय।

### [चमसपदस्य तद्धर्मातिदेशकत्वम्]

**तस्य–श्थार्यात्**—संवत्सरादिकल्पेषु। अतो नात्र चमसशब्दः चमसधर्मातिदेशकः, कंसादिनियम एव।

**चमसा–मानम्** ;—'सत्यं गृहपतिः' इत्यन्तम् ॥

इति धूर्तस्वामिभाष्यवृत्तौ दशमप्रश्ने दशमी खण्डिका

---

[1] स्यैव द्रव्यपरि–**च.** [2] इत्येताभ्यां यौ–**ग. च.** [3] र मेव सहसा–**च.**
[4] दिति लभ्यते–**ग.**

(रु) यजमानः। अर्थे—कण्डूतौ प्रासायाम्। बहुष्वप्यर्थेषु सकृदेव मन्त्रः। कण्डूयते इति शेषः। यः फलं गृह्णाति न वन्ध्यो बालो वा। अथवा यत् उदुम्बरादिवत्फलमेव गृह्णाति न पुष्पमपीत्यर्थः। दण्ड इति शेषः। यजमान इति शेषः। कंसं व्रतप्रदानामिति सत्याषाढः॥

इति श्री भट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमप्रश्ने दशमी खण्डिका

---

[कृष्णाजिनदीक्षाविधिः]

(मू) पृथिवी दीक्षा तयाऽग्निर्दीक्षया दीक्षितो ययाऽग्निर्दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि। अन्तरिक्षं दीक्षा तया वायुर्दीक्षया दीक्षितो यया वायुर्दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि। द्यौर्दीक्षा तयाऽऽदित्यो दीक्षया दीक्षितो ययाऽऽदित्यो दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि। दिशो दीक्षा तया चन्द्रमा दीक्षया दीक्षितो यया चन्द्रमा दीक्षया दीक्षितस्तया त्वा दीक्षिया दीक्षयामि। आपो दीक्षा तया वरुणो राजा दीक्षया दीक्षितो यया वरुणो राजा दीक्षया दीक्षितस्तया त्वा दीक्षयामि। ओषधयो दीक्षा तया सोमो राजा दीक्षया दीक्षितो यया सोमो राजा

दीक्षितस्तया त्वा दीक्षया दीक्षयामि । वाग्दीक्षा तया प्राणो दीक्षया दीक्षितो यया प्राणो दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि । पृथिवी त्वा दीक्षमाणमनु दीक्षताम् । अन्तरिक्षं त्वा दीक्षमाणमनु दीक्षताम् । द्यौस्त्वा दीक्षमाणमनु दीक्षताम् । दिशस्त्वा दीक्षमाणमनु दीक्षन्ताम् । आपस्त्वा दीक्षमाणमनु दीक्षन्ताम् । ओषधयस्त्वा दीक्षमाणमनु दीक्षन्ताम् । वाक्त्वा दीक्षमाणमनु दीक्षताम् । ऋचस्त्वा दीक्षमाणमनु-दीक्षन्ताम् । सामानि त्वा दीक्षमाणमनु-दीक्षन्ताम् । यजूꣳषि त्वा दीक्षमाणमनु-दीक्षन्ताम् । अहश्च रात्रिश्च । कृषिश्च वृष्टिश्च । त्विषिश्चापचितिश्च । आपश्चौषधयश्च । ऊर्क्च सूनृता च तास्त्वा दीक्षमाणमनु-दीक्षन्ताम् ॥ १० ॥ ३ ॥ ४३ ॥ २७४९ ॥

(सू) सम्भूरयजूꣳषि चैनमध्वर्युर्वाचयति ॥ १० ॥ ॥ ३ ॥ ४४ ॥ २७५० ॥

(भा) कृष्णाजिनदीक्षाऽन्तर्वेदि, अन्यत्रानियमः । आवेदनान्तमन्तर्वेदीत्युपदेशः ॥

[अन्यपदार्थोपपादनम् ]

(वृ) **कृष्णाजि-वेदि—**भवति । **अन्यत्रानियमः**—वासःप्रच्छादनादिष्वावेदनान्तेषु कर्मस्वनियमः । अन्तर्वेद्यन्यत्र वा । अन्तर्वेद्यास्तृणातीत्यास्तरणशेषत्वात् ।

[उपदेशपक्षोऽन्नेयोंऽशः]

**आवेदना–त्युपदेशः**—'अपराह्णे दीक्षयेत्' इति कृष्णाजिन-दीक्षायावेदनान्तस्य समानकालत्वदर्शनाद्देशोऽपि समान एव स्यात्, देशान्तराविधानाच्च । जपाभिमन्त्रणयोस्सन्धाय मन्त्रशः पाठः । केशिनी दीक्षेति ज्ञापनार्थम् । संभारयजुषां वाचनं जानतोऽपि यजमानस्य एनमिति मा भूदध्वर्युपरामर्शः इति पुनरध्वर्युग्रहणम् ॥

[सौत्राध्वर्युपदैतच्छब्दयोः प्रयोजनम्]

ननु अनर्थकमेतदध्वर्युग्रहणमेनं ग्रहणं च, अथैनमध्वर्युरभि-मन्त्रयते सम्भारयजूंषि वाचयतीत्युक्तप्रकृतौ प्रतीयत एव, नानर्थ[1]ऽके ; कुतः ? कृष्णाजिन[2]प्रदानेन दीक्षयतीतिवत् सम्भारयजूंषि वदेदिति बोधनेनापि वाचनं स्यात् । तदाऽभिमन्त्रणस्य सम्भारयजुषां पृथ-क्कर्तृकत्वेन समानकालता स्यात् । इह वाचनमुच्चारणानूच्चा[3]रणरूपं वा विवक्षितम् । तदभिमन्त्रणानन्तरमेव सङ्घटते इति पूर्वावस्थाऽ-ध्वर्युयजमाननिवृत्त्यर्थं पुन[4]स्तयोर्ग्रहणम् इति जानतोऽपि वाचन-मदृष्टार्थम् ॥

(रु) अध्वर्युरिति विस्पष्टार्थम् ॥

[अङ्गुल्यपकर्षणादिकम्]

(सू) **अथाङ्गुली न्यचति ॥ १० ॥ ३॥४५॥२७५१॥**

(सू) **'स्वाहा यज्ञं मनस' इति द्वे । 'स्वाहा दिवः' इति द्वे । 'स्वाहा पृथिव्याः' इति द्वे । 'स्वाहोरोरन्तरिक्षात्' इति द्वे । 'स्वाहा यज्ञं**

---

[1] नानर्थक्यम्—ग. [2] जिनादिप्र—ग. च. [3] रणादिरूपं—च. [4] नद्वयोर्ग्रहणम्—च.

वातादारभे ' इति मुष्टीकरोति वाचं यच्छति ॥१०॥
॥ ३ ॥ ४६ ॥ २७५२ ॥

(भा) अङ्गुली न्यचति यजमानः । मुष्टिस्सहाङ्गुष्ठेन ॥

(वृ) अङ्गु-मानः—अङ्गुलीर्[1]वाकर्षेदित्यर्थः । ' सन्तरां मेखलां समायच्छते, सन्तरां मुष्टी कर्षते ' इति दर्शनाद्य[2]जमानमेव ; उभयोर्हस्तयोर्द्वे अङ्गुली न्यचति, दक्षिणस्यैकां सव्यस्यैकामिति ॥

मुष्टि—न — ' स्वाहा यज्ञं वातादारभे ' इति ॥

(रु) प्रथमं द्वे कनिष्ठिके न्यञ्चति—संभुजति । एवमुत्तरास्वपि क्रमो द्रष्टव्यः । मुष्टीकरोति मुष्टीकरणं ताभिरेवाङ्गुष्ठसंयोजनम् ॥

[आवेदनस्योपांशुत्वे प्रमाणादिकम्]

(सू) अथैनं त्रिरुपांश्वावेदयति त्रिरुच्चैः । अदीक्षिष्टायं ब्राह्मणोऽमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ताऽमुष्याः पुत्रोऽमुष्याः पौत्रोऽमुष्या नप्ता इति ॥
॥ १० ॥ ३ ॥ ४७॥ २७५३ ॥

(सू) ब्रह्मणो वा एष जायते यो दीक्षते । तस्माद्राजन्यवैश्यावपि ब्राह्मण इत्येवावेदयति ॥ १० ॥
॥ ३ ॥ ४८ ॥ २७५४ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमे प्रश्ने एकादशी खण्डिका
इति तृतीयः पटलः

---

[1] व नापकर्षेदित्यर्थः—ग. [2] यजमान एव—च.

(भा) देवेभ्य आवेदनमुपांशु उच्चैर्मनुष्येभ्यः। द्विपितुरुभयोर्वंशयोर्नामग्रहणं, सपत्नीनां च। केचित्तु जनयित्रीणामेव कुर्वन्ति, तासां मुख्यत्वात्। ब्रह्मणस्तृतीयं यज्ञनिमित्तं जन्म दीक्षासु॥

इत्यापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये दशमप्रश्ने एकादशी खण्डिका.

इति दशमे तृतीयः पटलः

---

(वृ) देवेभ्य–शु—त्रिरुपांश्वाह देवेभ्य एवैनमावेदयति 'अदीक्षिष्टायं ब्राह्मणः' इति। असाविति विष्णुशर्मेति।

[स्त्रीणां नामग्रहणविषये स्वपरमतोल्लेखांशः]

द्विपितु–णम्—द्विपिता व्याख्यातः पिण्डपितृयज्ञे। देवदत्तस्य यज्ञदत्तस्य च पुत्रः, विष्णुमित्रस्य यज्ञदत्तस्य च पौत्रः अग्निमित्रस्य विष्णुमित्रस्य च नप्ता इति। तथा तत्स्त्रीणां समासेन नाम[1]ग्रहणम्। देवदत्तयज्ञदत्तयोः पुत्र इति। एवम्;—सपत्नीनां च—द्वैमातुरप्रभृतीनां जनन्यास्सपत्नीनां च नामानि गृह्णाति। केचित्तु–त्वात्—य[2]स्मिन् पक्षे तासामपि नामग्रहणम्; तत्र जननीनामेव प्रथमम् गृह्णीयात्।

ब्रह्मण–सु—पुनस्तृतीयं यज्ञनिमित्तं जन्म दीक्षासु द्विजानां भवति ब्राह्मण इत्यस्य शब्दस्यार्थः यज्ञनिमित्तमिति॥

इति श्रीकौशिकरामाग्निचिद्विरचितायां धूर्तस्वामिभाष्यवृत्तौ
दशमप्रश्ने तृतीयः पटलः

---

[1] ग्रहणं पुन–क. ग. च. [2] पूर्वस्मिन् पक्षे–क.

(वृ) अथैनमुपांशु यजमानं देवेभ्य आवेदयति । उच्चैर्मनुष्येभ्यः । 'उभयेभ्य एवैनम्' इति श्रुतेः । तत्र द्विपितुरार्षेयन्यायेनोभयोः वंशयोः कीर्तनम् । तथा मातृपत्नीनामपीत्येके । राजन्यवैश्ययोरप्य-विकृतो मन्त्रः । कथं तयोर्ब्राह्मणत्वमित्यपेक्षायां ब्रह्मणो वेदात्खल्वपि पुनर्जायते यो दीक्षते, यथाऽऽह मनुः, "मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने । तृतीयं यज्ञदीक्षायां" इति । तस्मादविकार एव ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
दशमे प्रश्ने एकादशी खण्डिका
इति तृतीयः पटलः

———

[दीक्षणीयानुष्ठानकालः]

(सू) अपराह्णे दीक्षयेत् ॥ १० ॥ ४ ॥ १ ॥२७५५॥

(भा) दीक्षणीयाऽपराह्णे आवेदनान्तामित्युपदेशः । अन्यकालेऽपि ॥

(वृ) **दीक्षणीयाऽपराह्णे**—आवेदनान्तमपराह्ण एव प्राप्तमिति न तत्र विधेयमस्ति । अतः काम्ये[1]ऽपि दीक्षणी[2]यैव पूर्वाह्णे भवति । ततः परमपराह्ण एव ;—

**आवेदना-देशः**—दीक्षणीयादिकर्म आवेद[3]नान्ते ; 'अपराह्णे दीक्षयेत्' इति वचनात्, सर्वस्यानिर्दिष्टकालविशेषत्वाच्च ;— **अन्यकालेऽपि**—आवेदनान्तं भवति । मध्यन्दिनेऽपि भवति "न सायमस्ति देवया अजुष्टम्" इति प्रतिषिद्धस्य यागस्यापराह्णे प्राप्त्यर्थ-

---

[1] म्ये द्वितीया दीक्षणीयैव—च. [2] दीक्षणीया पूर्वाह्णे—च. [3] नान्तमपराह्णे—क.

त्वेन नियमार्थत्वाभावात् पूर्वाह्णस्य कामेन परिगृहीतत्वाच्च। कामिनस्तु दीक्षणीयाद्यावेनान्तं पूर्वाह्ण एवोपदे[1]शः इतरत्र दीक्षणीयैव।

(रु) दीक्षणीयादि सर्वमपराह्ण एव कुर्यात्। यथाह बोधायनः, प्राक् तु अस्तमयाद्दीक्षणीयां संस्थापयेदिति ॥

[दीक्षाप्रशस्तिः]

(सू) **यत्कामयेत तपस्वी स्यादिति तं पूर्वाह्णे ॥ १० ॥ ॥ ४ ॥ २ ॥ २७५६ ॥**

(भा) तपस्वी स्यादिति कामः। केचित् पूर्वाह्णे दीक्षितस्य व्रताधिक्यमिति न कामः।

(वृ) **तपस्वी—मः**--गुणकर्मफलम्।

**केचित्—न कामः—अस्यार्थः**—यत्कामयेत तपस्वी स्यादिति न कामना; मुष्टीकरणवाग्यमनादिरूपं वृतं तपः। तस्य पूर्वाह्णदीक्षा आनक्षत्रोदयादासने आधिक्यम्, तदाधिक्यं यदी[2]च्छेदिति पूर्वाह्णे–दीक्षाप्रशंसेति ॥

(सू) **स वाग्यतस्तपस्तप्यमान आस्त आनक्षत्रस्योदेतोः ॥ १० ॥ ४ ॥ ३ ॥ २७५७ ॥**

(वृ) स यजमानो वाग्यतः तपस्तप्यमान आस्त इति दर्शनादिति ॥

(रु) किञ्चिदप्यव्रत्यं नाऽऽचरेत्। उदेतोः—उदयात् ॥

---

[1] पदिश्यते-च. [2] य इच्छेदिति—च.

['कृणुत' इत्यत्र बहुत्वाविवक्षा]

(सू) वत्सस्यैकं स्तनमवशिष्येतरान् व्रतं दोहयित्वा 'याः पशूनामृषभे वाचः तास्सूर्यो अग्रे शुक्रो अग्रे ताः प्रहिण्वो यथाभागं वो अत्र शिवा नस्ताः पुनरायन्तु वाचः' इति जपित्वा 'व्रतं कृणुत' इति वाचं विसृजते ॥ १० ॥ ४ ॥ ४ ॥ २७५८ ॥

(भा) दुग्धे व्रते उदितेषु नक्षत्रेषु व्रतं कृणुत ; बहुवचनेन व्रतप्रद उच्यते । न वाग्वि[1]सर्गः ॥

(वृ) दुग्धे-णुत-व्रतं कृणुत—वाग्विसर्गः । यथार्थे गमनं च । व्रतं पचतेत्यर्थः ।

बहु-च्यते—तत्र वचनस्याविवक्षा ; यथा [2]पूर्वोपस्थाने चषालवन्तस्स्वरव इति । न वाग्विसर्गः ;—'व्रतं कृणुत' इति व्रतकरणार्थं प्रैषमुच्चरन्नेव वाचं विसृ[3]जतीत्यर्थः ।

(रु) उदितेषु नक्षत्रेषु व्रते च दुग्धे श्रवणार्थः प्रैषः । तत्र परिकर्म्यृत्विजामन्यतमप्राप्त्यर्थं बहुवचनम् ॥

[स्त्रीपुरुषकामनाविशेषमतविशेषाभ्यामुन्नेयोंऽशः]

(सू) 'एष्ट्रीः स्थ' इति चतस्रोऽङ्गुलीरुत्सृजति । द्वे अन्यतरतो द्वे अन्यतरतः ॥ १० ॥ ४ ॥ ५ ॥ ॥ २७५९ ॥

(भा) 'एष्ट्रीस्स्थ' इत्यङ्गुलीनामेवोत्सर्गः ; नाङ्गुष्ठयोः । सायन्तन[4]-व्रते सनीहारेषु च प्रस्थापितेषु दिवसपरिसमाप्तिः ।

[1] विसर्गार्थः—ख. ग. ङ. च. [2] यूपोपस्थाने—ग. च. [3] जेदित्यर्थः—क.
[4] ने व्रते स्वकाले वृत्ते—ग. ने व्रते—वृ.

(वृ)-एष्टीः-योः—अङ्गु[1]ष्ठव्यतिरिक्ता एवाङ्गुलयः यदि कामयेत स्त्रीरेव जनयेयमित्यङ्गुलीरेव गृह्णीयात्। यदि कामयेत पुंस एव जनयेयमित्यङ्गुष्ठमेवेति दर्शनात्। अङ्गुष्ठतर्जन्योः; वाजसनेयिमतात्। 'गर्भो वा एष यद्दीक्षितः' इति गर्भसंस्तवाच्च॥

[अञ्जलिप्रक्षेप, सावित्रीजप, व्रतानामनुष्ठेयसमयः]

सायं-माप्तिः—उपास्तमयोपोदययोरञ्जलिप्रक्षपस्सन्ध्याकर्मार्थः वाग्यमनान्तस्सावित्रीजपः। उपस्थानं तु क्रियत एव। द्वादशाहमवराध्यं दीक्षितो भवतीति दर्शनात्। अत्रैव [2]दिवसपरिसमाप्त्यर्थम्। व्रतं तूपदेशक्रमात् सनीहारप्रस्थापनात्प्रागेव। अत्र जागरणविधानं मध्यरात्रात्पुरस्तादारभ्य जागरणप्राप्तेः॥

(रु) द्वयोरपि हस्तयोः कनिष्ठिकानामिके उत्सृजति।

(सू) जागर्त्येताꣳ रात्रिम्। क्रीते राजनि द्वितीयाम्। श्वः सुत्यायां तृतीयाम् ॥ १० ॥ ४ ॥ ६ ॥ ॥ २७६० ॥

(रु) गतः।

(सू) चनसितं विचक्षणमिति नामधेयान्तेषु निदधाति ॥ १० ॥ ४ ॥ ७ ॥ २७६१ ॥

(भा) 'चनसितं, विचक्षणम्' इत्येतौ शब्दौ नामधेयान्ते क्षिपति।

(वृ)-चन-पति;—अन्यमाह्वयन्।

---

[1] अङ्गुष्ठिकातिरिक्त—च. [2] भूतिवननसमा—ग.

[ब्रह्मक्षत्रविशामभिमुखीकरणप्रयोजकरूपस्य मतभेदेन निरूपणम्]

(सू) चनसितेति ब्राह्मणम् । विचक्षणेति राजन्य-वैश्यौ ॥ १० ॥ ४ ॥ ८ ॥ २७६२ ॥

(भा) तस्यैव विशेषः—देवदत्तचनसितेति ब्राह्मणमाह ; देवदत्त-विचक्षणेति राजन्यवैश्यौ । केचित्तु विकल्पः[1]; 'देवदत्तचनसित विचक्षण' इति वा सर्ववर्णानाम् । यथोपदिष्टं वा ।

(वृ)–तस्यैव–वैश्यौ—अभिमुखीकरण एवैवं नियमः सम्बुध्यन्त-निर्देशात् ।

केचित्तु -ष्टं वा—उभयोरर्थवत्वायेति । पूर्वस्मिन् पक्षे शूद्रनामान्तेऽपि 'चनासितं विचक्षणं' इति निधानम् । तत्र वर्ण-विशेषाग्र[2]हणात् । पापानभिलक्षितेन शूद्रेणापि [3]भाषणमनुज्ञायत एव ; एष नियमोऽनृत्विग्विषयः । तत्रापीति केचित् । ब्राह्मणत्वा-विशेषात् ॥

(रु) त्रैवर्णिकानामामन्त्रण इति शेषः । चनसितं विचक्षणमिति च प्रातिपदिकनिर्देशः । न विभक्तिर्विवक्षिता । एतद्दर्शयति । आमन्त्रयेतेति शेषः । आमन्त्रयेतेत्येव भारद्वाजः । तद्यथा देवदत्त चनसित मित्रपाल विचक्षणेति ॥

[सोपपत्तिकं व्याकृताया एव वाचो दीक्षितादिभिरुच्चार्यत्वव्यव-स्थापनम्]

(सू) परिणयेन मानुषीं वाचं ददाति ॥ १० ॥ ४ ॥ ॥ ९ ॥ २७६३ ॥

---

[1] कल्पमाहुः—क. [2] विशेषग्रह—ग. [3] संभाषण—ग.

(भा) परिणयः—पर्यायशब्दः व्याकर[1]णाभिलक्षितः, तेन वाचं जल्पति। उपदेशः परिणामेन वदति। इदं साक्षात्कर्तव्यमिति न ब्रूयात्। यद्येतत्कर्मापि क्रियेत ततश्शोभनमित्याह ॥

(वृ) परि-शब्दः—मनुष्य[2]वाचः। व्याकृ-तः—न प्राकृतादिः। तेन-ति—वक्तव्यं वदति। श्रुतिश्च—तत्र प्रमाणम्—'तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवा इति म्लेच्छो ह वा एष यदपशब्दः' इति तस्मादपशब्दरूपाभिः प्राकृताभिर्देशभाषाभिः दीक्षितेन न भ[3]णितव्यम्। ब्राह्मणोऽत्र दीक्षितः। ब्रह्मणो वा एष जायते यो दीक्षित इति ॥

[उपदेशमते सौत्रमानुषीशब्दोपेयांशः]

उपदेशः-वदति—कथम्। इदं साक्षा-त्याह—परिणयेनेति मनुष्यवाच इतिकर्तव्यत्वाभिधानात्, षष्ठ्या अत्राश्रवणात्, मनुष्यवाचा कार्यस्य लक्षि[4]तव्यत्वाच्च। उपदेशपक्षे मानुषीत्येतेन सन्देशकार्यार्था वागुच्यते। न तद्देशभाषा। 'तुरीयं वाचो मनुष्या वदन्ति' इति श्रुतेः अपशब्दप्रतिषेधाच्च। तस्मात्संस्कृतयैव वाचा परिणामयुक्तया वदेदिति।

[अनुलोमप्रतिलोमभेदेन संभाषणानुज्ञानिषेधयो-र्व्यवस्था]

(सू) न स्त्रिया न शूद्रेण संभाषेत ॥ १० ॥ ४ ॥
॥ १० ॥ २७६४ ॥

(भा) स्त्रीसंभाषणस्य प्रतिषेधस्सर्ववर्णानाम् ॥

---

[1] करणादिभिर्ल-ख. ङ. [2] मानुष्या वाचः-ग. च. [3] न भाषित-क.
[4] विवक्षितत्वाच्च-च. लक्षित-ग.

(वृ) **स्त्रीसंभा–णानाम्**—न पत्न्या संभाषणस्य प्रतिषेधः। शूद्रनिषेधादन्याभिर्जातिभि[1]स्सह संभाषणानिषेधः। **अनुलोमेषु त्रैवर्णिकबीजैरनुज्ञायते। प्रतिलोमेषु च सूतेन संवादोऽनुज्ञायते महाभारतादिषु दर्शनात्** ॥

(रु) परितस्सर्वेषु देशेषु एकरूपः परिणीयत इति परिणयस्साधुशब्दः। मानुषीं लौकिकीमपि वाचं साधुभिरेव भाषते न म्लेच्छैरित्यर्थः॥

(रु) स्त्रिया तु अशूद्रयापि न संभाषेत॥

(सू) **नैनमनु प्रपद्येत॥ १०॥ ४॥ ११॥ २७६५॥**

(भा) मार्गेणानुगमनं करोति।

(वृ) एनं–शूद्रं। **मार्गेण–रोति**—स्मृतिनिषिद्धस्यापि पुनर्निषेधः श्रौतप्रायश्चित्तार्थः। मनसाऽनुगमनं न निषिध्यते। सर्वजनमैत्र्या भाव्यत्वात् स्त्रीशूद्रस्य तदनुप्रपदनं निषिध्यते। न केवलशूद्रस्यैव। उद्देश्यगतलिङ्गवचनयोरविवक्षितत्वात् तासामप्यनुगमनप्रतिषेधस्यापेक्षितत्वाच्च॥

(रु) बहूपकारलोभादपि नैनं शूद्रमनुगच्छेत्। एनं यजमानं शूद्रो नानुप्रपद्येतेत्यपरम्। यथाह सत्याषाढः, यथैनं शूद्रोऽनु प्रविशतीति॥

**[तत्र वाजसनेयिशाट्यायनमतोन्नेयांशस्सूत्राभ्याम्]**

(सू) **यद्येवं शूद्रेण संवाद उपपद्येत ब्राह्मणराजन्यवैश्यानामेकं ब्रूयादिममित्थं ब्रूहीति वाजसनेयकम्॥ १०॥ ४॥ १२॥ २७६६॥**

---

[1] भिरपि संभाषणनिषेधः–ग. च.

(भा) इत्थं ब्रूहि इमं प्रकारं ब्रूहि इति ।

(वृ) शूद्रेण संवाद एवं यजमानं यद्युपगच्छेत्, राजकेन दैविकेन वा तदैनं शूद्रं इत्थं ब्रूहि इति ब्राह्मणानामन्यतमं ब्रूयात् । एतच्छूद्रग्रहणं स्त्रीणामप्युपलक्षणम् ॥

(सू) **कामं शूद्रेण संभाषेत यः पापेन कर्मणाऽनभिलक्षितस्स्यादिति शाट्यायनकम् ॥ १० ॥ ४ ॥ ॥ १३ ॥ २७६७ ॥**

(भा) अनभिलक्षितः—तथा यथाऽनेन स्त्रीवधाद्यगम्यागमनादि वा कृतमिति यस्य नास्त्यकीर्तिः, तेन शूद्रेण संभाषेत ॥

(वृ) अनभि–लषेत—एवं स्त्रिया अपि । अत्र स्त्रीशूद्राविषय एवानुज्ञानं, प्रतिलोमैस्तु जन्मनै[1]व पापाभिलक्षितत्वात् नानुज्ञानम्, कर्मणाऽभिलक्षितः–निश्चितः । स्त्रीवधादिग्रहणात्ततोऽर्वाचीनेन लघुपापाभिलक्षितेन संभाषणं न निषिध्यते इत्यभिप्रायः । ब्राह्मणादिभिरप्यशुचिभिस्संभाषणं स्मृतिनिषिद्धम शूद्रस्य को विशेषः ? उच्यते; पापानभिलक्षितब्राह्मणादिभिस्सद्भिस्संभाषणं कर्मान्तराले विहितम्; यथा भारतादिश्रवणम् ।

"अहश्शेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः ।" इति ॥

तथा न शूद्रेण शिष्टेनापि विधीयते । न दैविकादिकासंवादोऽपवादोऽनुज्ञायेत । अन्यथा[2] प्रायश्चित्तमिति ॥

---

[1] नैनामिल–च. [2] न्यदा प्राय–च. ग.

['बालब्राह्मणमपि स्थविरक्षत्रादिरभिवादयेत्'
इत्यादिविषयनिष्कर्षः]

(सू) आभिवदति नाभिवादयतेऽप्याचार्यं श्वशुरं राजानमिति शाट्यायनकम् ॥ १० ॥ ४ ॥ १४ ॥ ॥ २७६८ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने द्वादशी खण्डिका

---

(भा) [1]अभिवदति—अभिवादित आशिषमाह। न त्वभिवादयते आचार्यादीनपि राजा येषामभिवाद्यस्तेषामपि ॥

इत्यापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये दशमप्रश्ने द्वादशी खण्डिका

---

(वृ)–अभिव-ह—आयुष्मान् भवेत्यादिनाऽभिवादितारं कश्चिदाह।

न त्वभि-स्तेषामपि—किं पुनरन्यान्; राजान्नादी[2]भिवादयेत्। क्षत्रियादिभिर्दशवर्षोऽपि ब्राह्मणोऽभिवाद्य एव। क्षत्रियेण शतवर्षेणापि। नात्राभिवादनमन्त्रनामधेयान्ते चनसितनिधानम्; नाभिवादयते इत्येवाभिवादनानुज्ञायां सिद्धायां अभिवदतीति वचनात् ॥

इति धूर्तस्वामिभाष्यवृत्तौ दशमप्रश्ने द्वादशी खण्डिका

---

(रु) यद्यावश्यकस्संवादस्त्रैवर्णिकं पुरस्कृत्य संवादयेत्। वाजसनेयकग्रहणमादरार्थम्। यस्त्वगम्यागमनस्तेयादिदोषाश्रयतया न श्रुतस्तेन

---

[1] आशिष अभिवदति, नाभिवादयते. [2] अभिवादी आशिषमाह—ग.

कामं संभाषेत । अन्यैरभिवादितस्तेभ्य आशिषं वदति, न तु स्वयमाचार्यादीनप्यागतान्, किं पुनरन्यान् । राजाभिवादननिषेधो राज्ञः, न ब्राह्मणस्य; अप्रसक्तेः । द्विःशाट्यायनग्रहणं भिन्नार्थत्वात् ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमे प्रश्ने द्वादशी खण्डिका

---

[अनुपस्पर्शनानामग्रहणयोः सर्वसाधारणधर्मत्वोपपादनम्]

(सू) अग्निर्वै दीक्षितस्तस्मादेनं नोपस्पृशेत् न चास्य नाम गृह्णीयात् ॥ १० ॥ ४ ॥ १५ ॥ २७६९ ॥

(भा) अनुपस्पर्शनं अनामग्रहणं दीक्षितस्य सर्वेषां च धर्मः ।

(वृ) अग्निसंस्तवोऽनुपस्पर्शने हेतुः; स्पर्शने ह्युपप्रत्यक्षदोषः, न नामग्रहणे ।

अनुप-धर्मः—ऋत्विजामपि ।

[अनवचर्तनेषध्द्सनादीनि दीक्षितव्रतानि]

(सू) न पुरा दाक्षिणाभ्यो नेतोः कृष्णविषाणामवचृतेत् ॥ १० ॥ ४ ॥ १६ ॥ २७७० ॥

(भा) अवचर्तनं—वियोगः[1] कृष्णविषाणायाः । एवमादीनि दीक्षितव्रतानि ।

---

[1] विमोकः—ग. क.

(वृ) अवच-याः—दक्षिणा[1]या अतिनयात्प्राङ्न कार्यो यजमानेन। एव-व्रतानि—ना[2]नन्तरप्रसक्ता दीक्षितेतरधर्माः। कृष्ण-विषाणाया दीक्षितहस्तस्थत्वात् ॥

(सू) न दन्तान् दर्शयते ॥१०॥४॥१७॥२७७१॥
हस्तेनापिगृह्य स्मयते ॥१०॥४॥१८॥
॥२७७२॥

(भा) स्मयनं—ईषद्धसनमपि हस्तेनापिगृह्यैव। दन्तानपि न दर्शयते ॥

(वृ) स्मयनं-यते—यथातथाऽपि ग्रहणम्।

(रु) अन्यस्य विधिरयम् ॥

(रु) भो इत्यादिभिः पूजाशब्दैरामन्त्रयते ॥

(रु) आ दक्षिणानां नयनात् नोत्सृजेत्। गतः। अपिगृह्य छादयित्वा ॥

[हेयकृत्यकलापः]

(सू) मधु मांसं स्त्रियमनृतमुपरि शय्या ष्ठीवनं विकाले निष्क्रमणं दीक्षितविमितात्प्रवासमिति वर्जयेत् ॥
॥१०॥४॥१९॥२७७३॥

(भा) अनृतस्य प्रतिषेधः कर्माङ्गम्। तस्यातिक्रमेऽन्तरित-प्रायश्चित्तम्। परिसमाप्ते व्रातपती स्मार्तं च। उपरि शय्या खट्वादिष्वेव। विकाले निष्क्रमणं दीक्षितविमितादन्यत्र न कर्तव्यम्। प्रवासस्त्वन्यत्र वसतिः ॥

---

[1] णातिनयात् प्राक्कार्यो—क. [2] नानेतर—क.

(वृ) **अनृत-ङ्गम्**—स्मृत्या श्रुत्यैव च निषिद्धत्वात् ॥

**तस्याति-श्चित्तम्**—अनृतवचनरूपस्याङ्गस्यान्तरायत्वात् ।

. **परिसमा-पत्ती**—आहिताग्निव्रतलोपात् । 'य आहिताग्निस्सन्नव्रत्यमिव चरेत्' इति । 'नाक्रतुसंयुक्तामाहुतिं जुहोति' इत्यादि निषेधात् । क्रतुसमाप्ताविव सा ।

**स्मार्तं च**—प्रायश्चित्तं च कृच्छ्रादि ; स्मृत्यतिक्रमाच्च ।

**स्त्रियम्**—स्वाम् ; ऋतावपि ।

**उपरि-ष्वेव**—न कृष्णाजिनस्योपरि निषिध्यते ।

**ष्ठीवनम्**- श्लेष्मादीनां परित्यागः ।

**विकाले**—अस्तमिते ।

(रु) आहिताग्नेस्सिद्धस्यैवानृतवर्जनस्य वचनमादरार्थं कर्माङ्गत्वज्ञापनार्थं च । ष्ठीवनं लालादिविसर्जनम् । विकालो निष्क्रमणायोग्यस्सन्ध्यादिः । दीक्षितार्थं विमितं, दीक्षितविमितं तच्च, प्राग्वंश एवेति प्रागेव दर्शितम् । प्रवासोऽन्यत्र रात्रिवासः । दीक्षितविमितादिति च काकाक्षिवदुभयत्र संबध्यते । विकाले दीक्षितविमितान्न निष्क्रामेत्, न च ततोऽन्यत्र रात्रिं वसेदित्यर्थः । सर्वत्र चात्र व्रतातिक्रमे व्रातपती प्रायश्चित्तिः । यथाविहितं तु वैशेषिकाणि, यथा वारुणीरभिनिम्रुक्तः, ·यद्यन्यत्रासीत यदि दीक्षितोऽवकिरेतेत्यादीनि ॥

[सूर्यास्तानन्तरं निष्क्रान्तस्यायं निषेधः]

( सू ) **न दिवा मूत्रपुरीषे कुर्यात् ॥ १० ॥ ४ ॥ २० ॥ ॥ २७७४ ॥**

(भा) ससूर्ये दिवसेऽनिष्क्रान्तस्य दिवा मूत्रपुरीषप्रतिषेधः ॥

(वृ) **ससूर्ये–न्तस्य**–सूर्यास्तमयात्प्राङ्निष्क्रान्तस्यानाभिनिम्रोचेदिति वक्ष्यमाणत्वात् ।

**दिवा–धः**—रात्रौ दीक्षितविमिताभ्यन्तर एव । ततो निर्गमनप्रतिषेधात् ॥

[छायायामुत्सर्गानुज्ञा]

(सू) **यदि कुर्याच्छायायाम् ॥ १० ॥ ४ ॥ २१ ॥ ॥ २७७५ ॥**

(भा) यदि करोति छायायामेव करोति मूत्रम् ॥

(वृ) **यदि–छायायाम्**—दिवा मूत्रपुरीषे ।

**मूत्रम्**—पुरीषमन्यत्रापि ॥

(रु) यदि निरोद्धुं न शक्नुयात्तदा छायायां कुर्यात् ॥

[निशि मूत्रं विसिसृक्षुणाऽनुष्ठेयोंऽशः]

(सू) **मूत्रं चिकीर्षन् 'इयं ते यज्ञिया तनूः' इति तृणं लोष्टं वाऽपादायापो मुञ्चामि न प्रजामꣳहोमुचः स्वाहाकृताः पृथिवीमाविशतेति मूत्रं विसृज्याऽऽचम्य 'पृथिव्या संभव' इत्यपात्तं प्रतिनिदधाति ॥ ॥ १० ॥ ४ ॥ २२ ॥ २७७६ ॥**

(भा) रात्रावपि विधिरयमेव । अपात्तं प्रतिनिदधाति–यतो गृहीतं तत्रैव स्थापयति ॥

(वृ) **मूत्रं चिकीर्षन्**—यत्र कुत्रापि मूत्रं विसिसृक्षुः ' इयं ते यज्ञिया तनूः ' इति विधिं कुर्यात् ।

**रात्रा–मेव**—न दिवैष विधिः । मूत्रं विसृज्येति पुनर्मूत्रग्रहणात् [1] विसर्जनमात्रशेषत्वात् न कालविशेषविशिष्टस्य ।

**यतो–यति**—लोष्टादानानन्तरमेव ब्रह्मसूत्रं कर्णस्थापनादि; आचमनं तु मुष्ट्यनुरोधेन । कथंचिदाचमनविधानार्थं मुष्टिविसर्जनमनुज्ञातमिति केचित् । शौचाचमनयोर्मुष्टिं विसृज्य मुष्टिविसर्जनप्रायश्चित्तं कृत्वा पुनर्मुष्टीकरणमिति भाष्यकार[2]मतम् ॥

(रु) तृणं लोष्टं वा यतो देशादपात्तं तत्र पुनर्निदधाति ॥

[अबुद्धिपूर्वकरेतस्स्कन्दनस्वाप्निकौदनादनाद्युन्नेयोंऽशः]

(सू) **“ यन्मेऽत्र पयसः परीतोषात्तदर्पिथ । अग्निहोत्रमिव सोमेन तदहं पुनराददे ” इति रेतस्स्कन्नमनुमन्त्रयते ॥ १० ॥ ४ ॥ २३ ॥ २७७७ ॥**

(भा) अबुद्धिरेतस्स्कन्दने आचान्त[3]स्यानुमन्त्रणम् । यदि दीक्षितोऽवकिरेदित्यादि प्रायश्चित्तम् ॥

(वृ) **अबुद्धि–त्तम्**—एतदुभयमयोन्यामेव । योन्यां तु ' यो ब्रह्मचारी स्त्रियमुपेयात् ' इत्येतत्प्रायश्चित्तम्; सर्वत्र स्मार्तं च भवति ॥

(रु) अबुद्धिपूर्वकस्कन्दनेऽयं विधिः । बुद्धिपूर्वे तु दर्शितमेव यदि दीक्षितोऽवकिरेतेति ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमप्रश्ने त्रयोदशी खण्डिका.

---

[1] विसर्जनमात्रविशेषणत्वात्—ग. च. [2] मतिः—च. [3] न्तेनानु—क.

(सू) "यदत्रापि रसस्य मे निरष्ठविषमस्मृतम् ।
अग्निष्टत्सोमः पृथिवी पुनरात्मन् दधातु मे ॥"
इति छर्दित्वा ष्ठुत्वा वा ।
"यदन्नमद्यते नक्तं न तत्प्रातः क्षुधोऽवति ।
सर्वं तदस्मान्माहिꣳसीर्न हि तद्ददृशे दिवा ॥"
इति स्वप्नेऽन्नं भुक्त्वा ।
'रुद्रियाभ्योऽद्भ्यः स्वाहा' इति लोहितमुत्पतितं दृष्ट्वा ॥ १० ॥ ४ ॥ २४ ॥ २७७८ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने त्रयोदशी खण्डिका.

---

(भा) स्वप्नेऽन्नं भुक्त्वाऽऽचान्तो जपति । लोहितमुत्पतितं स्वशरीरे दृष्ट्वा ॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने त्रयोदशी खण्डिका.

---

(वृ) लोहि–ष्ट्वा—प्रक्षाळ्य (ल्य) जपति ॥

इति श्रीरामाग्निचित्कृतायां आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्यवृत्तौ
दशमप्रश्ने त्रयोदशी खण्डिका.

---

(सू) 'बीभत्सा नाम स्थापः स्वाहाकृताः पृथिवीमाविशत' इति *स्नूहानम् । 'कृपा नाम स्थापः

---

* स्वीयं स्पृष्ट्वा प्रक्षाळ्य जपतीत्यर्थः । एवं 'इत्यश्रु' 'इति स्वेदम्' इत्यत्रापि ।

**स्वाहाकृताः पृथिवीमाविशत' इत्यश्रु । 'तपस्या नाम स्थापः स्वाहाकृताः पृथिवीमाविशत' इति स्वेदम् ॥ १० ॥ ४ ॥ २५ ॥ २७७९ ॥**

(भा) स्नूहानं—नासिकाक्लेदः ॥

(वृ) अश्रु—दुःखजमानन्दजं च ॥

(सू) **न प्रतीच्या द्वारा निष्क्रामति ॥ १० ॥ ४ ॥ ॥ २६ ॥ २७८० ॥**

(भा) प्रतीच्या द्वारा न निष्क्रामति प्राग्वंशस्य ॥

(वृ) **प्रतीच्या-स्य**—यदन्यद्द्वारं विद्यते; एकद्वारे तेनैव ॥

(रु) सर्वत्रानुमन्त्रयत इत्यन्वयः । तथा स्नूहानमित्यादिषूत्पतितं दृष्ट्वेत्यनुषङ्गः । स्नूहानं नासास्रुतं श्लेष्मादि । प्राग्वंशस्येति शेषः ॥

[होमनिषेधेन व्यावर्त्योऽशः]

(सू) **नाक्रतुसंयुक्तामाहुतिं जुहोति ॥ १० ॥ ४ ॥ ॥ २७ ॥ २७८१ ॥**

(भा) अक्रतुसंयुक्तां[1] आहुतिं पञ्चमहायज्ञवैश्वदेवादि न जुहोति । धारणमेवौपासनस्य[2] करोति ॥

(वृ) **अक्रतुसं-करोति**—न जुहोति तत एवाष्टकापार्वणमासिश्राद्धादीनां नित्यानां नैमित्तिकानां मासिकादीनां सपिण्डीकरणादीनां चौलोपनयनादीनां च संस्काराणां च निवृत्तिः; अक्रतुसंयुक्तत्वाविशेषात् । उपदेशः पुंसुवनसीमन्तचौलानि होमवर्जं कुर्यादिति ॥

---

[1] क्ता आहुतिः-ग. ङ. [2] न करोति-क.

[क्रत्वङ्गभूतनैमित्तिकेष्वनुष्ठानानुज्ञा, तदितरनिषेधश्च]

(सू) **नाग्निहोत्रम्*** ॥ १० ॥ ४ ॥ २८ ॥ २७८२ ॥

(रु) जुहोतीति शेषः ॥

(सू) **न दर्शपूर्णमासाभ्यां यजते** ॥ १० ॥ ४ ॥ २९ ॥ ॥ २७८३ ॥

(भा) अग्निहोत्रदर्शपूर्णमासग्रहणं नित्यकर्मप्रतिषेधप्रदर्शनार्थम् । पशुपिण्डपितृयज्ञाग्रयणादीनां नैमित्तिकानां च जातेष्ट्यादीनाम् । यत्तु क्रत्वङ्गभूतं नैमित्तिकं संसर्गेष्ट्यादि तत्क्रियते ॥

(व) **अग्निहोत्र–नार्थम्**—अग्निहोत्रं दर्वीहोमानां प्रदर्शनार्थम् । दर्शपूर्णमासौ तद्विकाराणाम् ।

**पशु–दीनाम्**—प्रतिषेधः । आदिशब्दाच्चातुर्मास्यानाम् । अभ्यासपक्षे ।

**नैमित्ति–दीनाम्**—निषेधः । नित्यनिषेधात् किं पुनर्नैमित्तिकमिति ; अक्रतुसंयुक्तत्वाच्च । आदिशब्दात् क्षामवतीहिरण्यनाशेष्ट्यादीनि गृह्यन्ते ।

**यत्तु क्रत्व–यते**—आदिशब्दादनःप्रभृत्यन्तरागमनकपालहोमादि गृह्यते ॥

(रु) स्मार्तानामौपासनादीनां काम्यानां चतुर्होत्रादीनां चायं प्रतिषेधः ॥

[क्रत्वङ्गपुष्कलदानानुज्ञा, तदन्यनिषेधश्च]

(सू) **न ददाति** ॥ १० ॥ ४ ॥ ३० ॥ २७८४ ॥

---

* जुहोतीति शेषः । इत्थञ्च दर्वीहोमसामान्यं न जुहोतीति फलितार्थः ।

(भा) गवादि न ददाति ॥

(वृ) गवा-ति—अक्रतुसंयुक्तमेव ; क्रतुसंयुक्तं पुष्कलदानादि क्रियते ॥

[श्रौतस्मार्तसाधारणं पाकं नित्याध्ययनञ्च प्रतिषिध्य सोपपत्तिकं धारणाध्ययनस्यावश्यानुष्ठेयत्वव्यवस्था]

(सू) न पचति ॥ १० ॥ ४ ॥ ३१ ॥ २७८५ ॥

(भा) नाप्यातिथ्यं पच्यते श्रौतमपि। स्वाध्यायस्य तु नित्यस्य प्रतिषेधः ॥

(व) नाप्या-ते—[1] पुनःपुनः कुटुम्बार्थमपि ।

श्रौतमपि—आतिथ्यं न पच्यते । "नास्य ब्राह्मणोऽनाश्वान् गृहे वसेत्" इति यद्विहितम् ; श्रौतस्मार्तसाधारणत्वादस्य निषेधस्य ।

स्वाध्याय-षेधः—"नाक्रतुसंयुक्तामाहुतिं जुहोति" इत्येतावतैव सर्वहोमानां प्रतिषेधे सिद्धे पुनरग्निहोत्रग्रहणस्य नित्यकर्मोपलक्षणार्थत्वात् धारणार्थमध्ययनं क्रियत एव ॥

(रु) प्रदर्शनार्थं चैतदन्येषामपि नित्यनैमित्तिककाम्यानां कर्मणामन्यत्राङ्गभूतेभ्यः प्रायश्चित्तेभ्यः । अहरहर्भूतबलिर्मनुष्येभ्यो यथाशक्ति दानमित्यादिना यदुक्तं तदपि न करोति । वैश्वदेवाद्यर्थं न पचते ॥

---

[1] न पुनः कु—ग. च.

[दीक्षाकालपरिमाणादिकम्]

**(सू) द्वादशरात्रमवरार्ध्यं दीक्षितो भवति मासं संवत्सरं यदा वा कृशस्स्यादित्यपरम् ॥ १० ॥ ॥ ४ ॥ ३२ ॥ २७८६ ॥**

**विज्ञायते च यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति यदाऽस्य त्वचाऽस्थि संधीयतेऽथ मेध्यो भवति यदाऽस्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवति ॥ १० ॥ ४ ॥ ३३ ॥ २७८७ ॥**

**(भा)** द्वादशाहमवरार्ध्यं मात्रा दीक्षायाः । मासादूर्ध्वं [1] संवत्सरमेव । यदा वा कृशो दुर्बलस्स्यात्तस्य विशेषः । मेध्यो यजमानो यज्ञार्हः त्वगस्थिभूतः । कृष्णं चक्षुषोर्नश्यति पीताक्षो भवति ॥

**(वृ)** **द्वादशा–क्षायाः**—अवभृथाद्दीक्षित एव । अतो दीक्षाकाल-परिमाणमेव द्वादशाहमवरार्ध्यं दीक्षितो भवतीति ।

**मासाद्–मेव**—मात्रा दीक्षायाः; अयमर्थः—मासद्वादशाह-योरन्तरा काममेव दीक्षापरिमाणं भवति । मासादूर्ध्वं संवत्सरादर्वाक् नो परिमितव्यमिति ।

**यदा–लस्स्यात्**—द्वादशाहादर्वागपि ।

**अपरं**–पररहितम्, एतदेवोत्कृष्टम् । यदि दौर्बल्येनाल्पीयसी मात्रा, प्रबलस्य द्राघीयसी, दुर्बलस्याल्पीयसी युक्तेति नानुकल्पत्व-शङ्का ।

**तस्य विशेषः**—**तस्य**–दुर्बलस्य विशेषश्च ;

---

[1] संवत्सरम्–ख.

**विज्ञायते यदा वै दीक्षित इति**—अन्तर्न किञ्चन भवति ;

**त्वगास्थिभूतः**—मांसादीनां शोषणं त्वगस्थ्नोस्सन्धानम्, अन्तराऽवकाशाभावः ।

**कृष्णं च–वति**—न तु कनीनिकायाः स्वरूपनाशः, अन्धस्यानधिकारात् ॥

(सू) **पीवा दीक्षते कृशो यजते यदस्याङ्गानां मीयते जुहोत्येव तदिति विज्ञायते ॥ १० ॥ ४ ॥ ३४ ॥ ॥ २७८८ ॥**

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने चतुर्दशी खण्डिका.

---

(भा) पीवा–स्थूलः दीक्षते, दुर्बलो यजते, यदस्याङ्गानां मीयते [1] हुतमेव तद्भवति ॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने चतुर्दशी खण्डिका.

---

(वृ) **पीवा–जते**—अत्र न व्याध्यादिकृतं दौर्बल्यं, किं तु [2] व्रतह्रासनिमित्तं गृह्यते पीवा दीक्षते इति [3] वचनात् । **मीयते**–शुष्यति ॥

इति धूर्तस्वामिभाष्यवृत्तौ दशमप्रश्ने चतुर्दशी खण्डिका.

---

[1] इदमेव–ग. [2] व्रतनिमित्तं–क. ग. [3] दर्शनात्–ग.

(रु) दीक्षितधर्मास्तावत्कतिपयेऽभिहिताः । अभिधास्यन्ते चान्ये सूत्रान्तरे । दीक्षायाः क्रतोश्चाहःपरिमाणविकल्पा उच्यन्ते । विचित्रत्वात्सूत्रक्रियायाः । तत्र चैते दीक्षादिसंवत्सरान्ताः कल्पाः प्रकृतावेव विकल्प्यन्ते । सर्वेषां प्रकरणाम्नानाविशेषात् । यथोक्तं न्यायविद्भिः, दीक्षापरिमाणे याथाकाम्यमविशेषात् । कृष्णं चक्षुषोर्नश्यति पक्ष्मणि लीना तारका न दृश्यते । मेध्यः मेधार्हः । दीक्षादशायां पीवरस्य दीक्षाव्रतैर्यदङ्गेषु क्षीयते तदग्नावेव हुतं भवति । अतः कर्शिताङ्गेनैव यष्टव्यमित्यर्थः ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
दशमे प्रश्ने चतुर्दशी खण्डिका.

---

['तिस्र एव साह्नस्य' इति श्रुतिवाक्यघटकत्रिपदेनैव
त्रित्वसङ्ख्याया लाभात्सौत्रत्रिपदाभिधे-
यांशोपपादनम्]

(सू) एका दीक्षा तिस्र उपसदः पञ्चमीं प्रसुतः
तिस्रो वा दीक्षास्तिस्र उपसदः सप्तमीं प्रसुतः
चतस्रो वा दीक्षास्तिस्र उपसदोऽष्टमीं प्रसुतः ॥
॥ १० ॥ ४ ॥ ३५ ॥ २७८९ ॥

(भा) पर्वणि सुत्यस्य विधानात्तदितरस्यां दीक्षायां एकादश्यां दीक्षणीया, पञ्चम्यां प्रसुतस्सोमो भवति । उत्तरयोः पर्वणि सुत्यादीक्षाकालस्यापकर्षस्स्यात् ॥

(वृ) द्वादशाह[1]दीक्षापरिमाणेषु पर्वाणि सुत्याऽविरोधेन सङ्कल्पः कार्यः। अन्यत्र यदा दीक्षितो दुर्बलो भवतीत्युक्ताभिरवस्थाभिः; तदा पर्वण्य-परपक्षे च यागः। 'कृशो यजते' इति विधानात्। अस्मिन् पर्वाणि कृशो भविष्यामीति सङ्कल्पायोगाच्च। एकरात्रा[2]दिदीक्षापर्वाणि सुत्या-विधानात् एकस्यां दीक्षायां एकादश्यां दीक्षणीया। एवं हि पञ्चम्यां रात्र्यां पर्वणि च प्रसुतः। प्रसुतः सोमो भवति। प्रसुतः आभषुतः इति सुत्यमहरुच्यते॥

**उत्तरयोः–स्यात्**—पौर्णमास्याममावास्यायां वा उत्तरयोः पक्षयोश्च पर्वण्येव सुत्या यथा भवेत्तथा दीक्षाकालापकर्षस्स्यात्। अष्ट-म्यादौ पर्वणि सुत्यानियमादेव दीक्षाकालविशेषानुपादानाच्च। 'तिस्र एव साह्नस्योपसदः' इत्येव सिद्धे पुनस्तिस्र इति वचनं एकादीक्षादि-कल्पेषु तिस्र एवोपसदो भवन्ति। यद्द्वादशाहीनस्येति नियम इति द्वादशोपसदो ज्योतिष्टोमेऽपि विकल्पेन भवन्ति। अत एव वाजपेये षोडशितुल्ये सप्तदश दीक्षास्तिस्र उपसद इति नियम्यते॥

(रु) पञ्चमीं प्रसुतो दैक्षमहरारभ्य पञ्चम्यां रात्रावभिषुतः सोमो भवतीत्यर्थः। एवमुत्तरयोरपि कल्पयोः द्रष्टव्यम्। तत्र यदीष्ट्यादि-विधिना पर्वणि सुत्यानियमात् प्रधानत्वाच्च तदनुरोधेनैकादश्यादौ दीक्षा भवति। कल्पान्तरैस्तु पर्वणि दीक्षेत्यपि श्रुतेर्मुख्यजघन्यन्यायेन पर्वणि दीक्षामिष्ट्वा तदनुरोधेनापर्वाणि सुत्याप्यनुज्ञायते। सत्याषाढस्तावत् यदि त्वेका दीक्षा तिस्रश्चतस्रो वा परिमितास्तत्रापर्वाणि सुत्यमहर्दीक्षा वेति। भारद्वाजश्चाह कथमेकावरेषु दीक्षाकल्पेषु तत्रापर्वणि दीक्षा सुत्या वा, अपर्वणि वा दीक्षा पर्वण्येव सुत्यां सम्पादयेदिति। तथा अमावास्यायां

[1]—ग. [2] रात्रिदी—ग.

दीक्षते नामावास्यायां सुत्यमहर्भवति । यद्यमावास्यायां सुत्यमहर्यजनीयेऽहनि स्यादिति च । बोधायनेनाप्युक्तम्, आमावास्येन हविषेष्ट्वा नक्षत्रे वेति । तथा द्राह्यायणोऽप्याह—प्रथमायां पूर्वपक्षस्य दीक्षेतैकाहेभ्यो दृष्ट्वा वा नक्षत्रयोगं, तेषामेका दीक्षा नादेश इति । बह्वृचश्चाधीयते आमावास्येन हविषेष्ट्वा पौर्णमासेन वा तस्मिन्नेव बर्हिषि दीक्षेतैषैका दीक्षेति ॥

[ दीक्षासुत्ययोः प्रयोगैक्ये पर्वण्येवानुष्ठेयत्वम् ]

**(सू.) अमावास्यायां दीक्षा यजनीये वा । पौर्णमास्यां यजनीये वा सुत्यमहः ॥ १० ॥ ४ ॥ ॥ ३६ ॥ २७९० ॥**

(भा) दीक्षायास्सुत्यायाश्च पर्वणि नियमः, न तु एका दीक्षेत्यादेश्शेषः ॥

(वृ) दीक्षा-मः—अस्यार्थः ;—' अमावास्यायां दीक्षा यजनीये वा ' इति दीक्षाकालनियमात्तदारभ्य पञ्चम्यां सप्तम्यां वा सुत्या[1] न कार्या । तथा न द्वादशाहादिकल्प[2]शेषश्च । किं तु दीक्षायास्सुत्यायाश्चैकस्मिन्नेव प्रयोगे पर्वणि नियमः । अमावास्यायां दीक्षित्वा पौर्णमास्यां सुत्यां कुर्यात् । (यजनीये दीक्षित्वा यजनीये सुत्यां कुर्यात् ।) पौर्णमास्यमावास्ययोस्सुत्याविधानानर्थक्यप्रसङ्गात् । यदीष्ट्यादिवाक्येन प्राप्तत्वात् । न च पर्वणि दीक्षितस्य यजनीये सुत्या विकल्पेन, तथा यजनीये दीक्षितस्यापि न पर्वणि सुत्या विकल्पिता । यथासङ्ख्येनान्वयात् । तस्य च नैराकाङ्क्ष्यात् । विकल्पस्य बहुदोषत्वाच्च ॥

---

[1] सुत्या कार्या—च. [2] रूपविशेष—क.

(रु) अथोभयोरपि दीक्षासुत्ययोः पर्वनियमेन पक्षापवर्गितां सोमस्याह, यजनीयदीक्षायां सुत्यापि यजनीय एव द्रष्टव्या। पौर्णमास्यां दीक्षित्वाऽमावास्यायामपवृज्यते। यजनीययोर्वोभयमित्यर्थः॥

[पक्षापवर्गमासापवर्गौ]

(सू) एतद्वा विपरीतम् ॥१०॥४॥३७॥२७९१॥

अमावास्यायां दीक्षा यजनीये वा, अमावास्यायां यजनीये वा सुत्यमहः। पौर्णमास्यां दीक्षा यजनीये वा, यजनीये वा सुत्यमहः ॥ १० ॥ ॥ ४ ॥ ३८ ॥ २७९२ ॥

(भा) विपरीते च उत्तरेऽपि विधौ तथा। केचित्तु सूत्रकारवचनाद्यदि 'एका दीक्षा तिस्रश्चतस्रो वा, तथा पर्वाणि सुत्यमहः दीक्षा वेति। तथा च विपरीतेत्यत्र गतम् ॥

(वृ) विपरीते च—दीक्षासुत्ये विकल्पेन, पौर्णमास्यां दीक्षित्वा अमावास्यायां यजनीये वा दीक्षित्वा परास्मिन् यजनीये सुत्यां[1] कुर्यात्। एष एव पक्षापवर्गश्च, नान्यः सूत्रान्तरादर्शनाद्भवति ॥

उत्तरे-तथा—योजना;—अमावास्यायां दीक्षितस्यामावास्यायां परस्यां सुत्या। एवं यजनीये दीक्षितस्य एकान्तरिते यजनीये, एष एव मासापवर्गः॥

[सौत्रयजनीयपदायुक्तयोंऽशः]

यदा पर्वाणि दीक्षा तदा दर्शपूर्णमासयोरकरणमेव। यजनीयमुक्तलक्षणं दर्शपूर्णमासे। तत्र शुद्धा[2] प्रतिपदिह यजनीयमित्युच्यते।

---

[1] सुत्या, एष एव—ग. [2] सन्धिमत्यह्नि—क. ग. च.

सन्धिमतः पर्वत्वात् । तस्मात्सन्धिरहितेऽहनि पञ्चदश्यां न दीक्षा, यागो वा । यदा यजनीये तदा दर्शपूर्णमासाविष्ट्वा ........ यदा पर्वणि सुत्या तदा यजनीय एव दर्शपूर्णमासयोर्यागश्च । प्रधानयागकालानतिपातात् । दधि तु मध्यरात्रे सायंहोमानन्तरमेव कार्यम् । सायंहोमात्प्रागेव होम[1]कालस्य प्राप्तत्वात् । अन्वाधानादि करोत्यग्निहोत्रस्य पुरस्तात् । अथ सायमग्निहोत्रमिति वचनं न क्रमार्थम् । किं तु कालसमापादनीयानुद्धरणप्रायश्चित्तनिवृत्त्यर्थम् । अत एव हुते सायमग्निहोत्रे सायंदोहं दोहयतीति सायंदोहमात्रस्योत्कर्षणमुक्तम् ॥

**केचित्तु—दीक्षा वेति**—प्राप्नुयादधि नियमेनेति दी[2]क्षाया नियमः । तदा पर्वणि सुत्याया नियमः ॥

[तथा च विपरीतेत्यादिभाष्यतात्पर्यविशदीकरणम्]

**तथा च विपरीते—तम्**—अस्यार्थः—केचिदेतत्सूत्रार्थमेवं योजयन्ति एका दीक्षेत्यहोरात्र[3]मात्र[4]परत्वात् सूत्रकारवचनादेकादीक्षादिपक्षे दीक्षासुत्ययोः पर्वनियमो न स्यात । पञ्चभिस्सप्तभिरष्टभिर्वाऽहोरात्रैरनियतैः क्रियते । तत्र नियमापेक्ष[5]त्वाद्दीक्षायाः सुत्यायाश्च[6] पर्वनियमः क्रियते । अतः पौर्णमास्याममावास्यायां वा दीक्षित्वाऽपरपक्षे पूर्वपक्षे वा पञ्चम्यादिष्वहस्सु सुत्या । तथा प्रथमयोर्दीक्षित्वा ततः पञ्चम्यादिषु 'द्वादशाहमवराध्यं दीक्षितो भवति' इत्यनेन पक्षापवर्गस्य विहितत्वात् । मासापवर्गस्तु अन्तरेण विहितो यथाव्याख्यातः । उभयत्रापि स्वपक्षेऽन्यमते च तुल्यं पर्वणि सुत्याविधानमनर्थकमिति । पर्वणि दीक्षाविधानात् यदीष्ट्यादिवाक्येन

---

[1] पर्वकाल. [2] सुत्याया—ग. [3] रात्रपरान—च. [4] सुत्यायाः—ग.
[5] पेक्षितत्वात्. [6] या इव पर्व—च.

पर्वणि सुत्याविधानाच्च पर्वणि दीक्षासुत्ययोस्सम्पन्नत्वाच्च। तस्मात्कल्पान्तरविधानादपेक्षितनियमार्थत्वे विधिलाघवं भवति। स्वमते तु वाक्यान्तरशेषत्वात् स्ववाक्ये पर्यवसानं युक्तमिति ॥

(रु) व्याख्यातः पूर्वसूत्रेण। मासापवर्गित्वमेव विशेषः ॥

**(सू) नैनमन्यत्र दीक्षितविमितादभिनिम्रोचेदभ्युदियाद्वा ॥ १० ॥ ४ ॥ ३९ ॥ २७९३ ॥**

(भा) अन्यत्र–गतम्; दीक्षितविमितान्नास्तमियात्सूर्यः, नोदियाच्च ॥

(वृ) **अन्य–याच्च**—द्वितीयाभिनिम्रोकान्विता नुद्यते यथा नोदियाच्च सूर्यः ॥

[अभिनिम्रुक्ताभ्युदिताभ्यां जप्यमन्त्रविशदीकरणम्]

**(सू) वारुणीरभिनिम्रुक्तो जपेत्, सौरीरभ्युदितः ॥ १० ॥ ४ ॥ ४० ॥ २७९४ ॥**

(भा) वारुणीर्जपेत्। "उदुत्तमं वरुण, अस्तभ्नात्, यत्किञ्चेदम्, कितवासः" इति। अभ्युदितस्सौरीः "उदु त्यम्, सप्त त्वा हरितः[1], चित्रं देवानाम्" इति ॥

(वृ) **वारुणी–स इति**—व्रतातिक्रमपरिहारलिङ्गात् 'व्रते तवानागसः' इत्यादि।

**अभ्युदि–नामिति**—भारद्वाजमतात् ॥

---

[1] हरितो रथे, चित्रं देवानाम्–ग.

[जपतिचोदनोऽन्येर्योऽशः]

(सू) 'अबद्धं मनः' इत्यमेध्यं दृष्ट्वा जपति ॥ १० ॥
॥ ४ ॥ ४१ ॥ २७९५ ॥

(भा) अमेध्यं दृष्ट्वा सूर्यस्य प्रतिमन्त्रणमबद्धं मन इति ॥

(वृ) अमेध्यं-मन इति —तस्य जपतिचोदनाच्चातुस्स्वर्येणोच्चारणम् । कालव्यवाये पुनःपुनः प्रतिमन्त्रणम् । अमेध्यप्रतिमन्त्रणेषु च तद्वदिति ॥

(सू) 'उन्दतीर्बलं धत्त' इत्यववृष्टः ॥ १० ॥ ४ ॥
॥ ४२ ॥ २७९६ ॥

(भा) 'उन्दतीर्बलं धत्त' इत्यववृष्टो जपति ॥

(वृ) उन्द-पति—चातुस्स्वर्येण ; अत्रापि कालान्तर आवृत्तिः ॥

[अपपर्यावर्तनप्रतिषेधः]

(सू) दक्षिणेनाऽऽहवनीयं प्राङ् शेते न न्यङ्को नोत्तानो
नाग्नेरपपर्यावर्तेत ॥ १० ॥ ४ ॥ ४३ ॥ २७९७ ॥

(भा) यस्मिन्नहनि शयनमस्य तत्र दक्षिणेनाऽऽहवनीयं प्राक्छिराश्शेते नापि न्यग्भूतो नाप्युत्तानो नाग्निमनभिमुखः । पार्श्वेन पृष्ठतो[1]ऽग्नेः करणमपपर्यावर्तनम् ॥

(वृ) यस्मिन्न-मस्य—द्वितीयादौ ; कृष्णाजिन एव शेते ॥

---

[1] पूर्वतोऽग्नेः–ग.

(रु) व्याख्यातं दीक्षितविमितम् । तत्रैवोदयास्तमयेवलयोस्स्यादित्यर्थः । यद्यन्यत्र स्यात्तत्र प्रायश्चित्तमाह । अमेध्यं अशुचिद्रव्यम् । सकृत्तद्दृष्ट्वापि सकृज्जपति कालाव्यवाये । पूर्ववद्व्याख्या । अपपर्यावर्तनं अग्नेः पृष्ठतः करणम् । प्राक्छिरा दक्षिणेन पार्श्वेन शेत इत्यर्थः ॥

[तदनुष्ठाने प्रायश्चित्तम्]

(सू) यद्यपपर्यावर्तेत 'विश्वे देवा अभि मा माऽववृत्रन्' इति जपेत् ॥ १० ॥ ४ ॥ ४४ ॥ २७९८ ॥

(भा) यद्यपपर्यावर्तेत तस्य 'विश्वे देवा अभि मा माऽववृत्रन्' इति जपः ॥

(वृ) यद्यप–जपः—प्रायश्चित्तम् ॥

[ऐण एवोपवेशविधिः, अन्यत्रोपवेशे जप्यो मन्त्रश्च]

(सू) नान्यत्र कृष्णाजिनादासीत ; यद्यन्यत्राऽऽसीत 'देवाञ्जनमगन्यज्ञः' इति जपेत् ॥१०॥४॥४५॥ ॥ २७९९ ॥

(भा) अन्यत्र कृष्णाजिनान्नासीत ; यद्यासीत 'देवाञ्जनमगन्यज्ञः' इत्ये[1]तस्य मन्त्रस्य जपः ॥

(वृ) यद्यासी–जपः—न पितॄन् जनमित्यादेः ; आदिशब्दाभावात् ॥

(रु) देवाञ्जनमगन्यज्ञ इत्येकेषामित्यादिवन्मन्त्रग्रहणम् । प्रतीकाग्रहणात्सर्वानपि मन्त्रान् जपेत् । सर्वांस्त्वेवापठत्सत्याषाढः ॥

---

[1] त्येकस्य—ग.

(सू) न दण्डात् कृष्णाजिनादासीत विप्रच्छिद्येत । उभे निधाय मूत्रपुरीषे कुर्यात् ॥ १० ॥ ४ ॥ ४६ ॥ ॥ २८०० ॥

(वृ) उभे-त्—अपो मुञ्चामीत्यादि ।

[दम्पत्योस्साधारणासाधारणव्रतानि]

(सू) यावदुक्तं पत्न्या दीक्षितव्यञ्जनानि ॥ १० ॥ ॥ ४ ॥ ४७ ॥ २८०१ ॥

(सू) समानं ब्रह्मचर्यम् ॥ १० ॥ ४ ॥ ४८ ॥ २८०२ ॥

(भा) दीक्षितव्यञ्जनानि—दीक्षितस्य लिङ्गानि कृष्णाजिनादीनि यावदुक्तं भवति । पत्न्यास्सत्यपि स्वामित्वे केषा[1]ञ्चिद्वसनादीनामाम्नानात् । समानानि तु व्रतान्युभयोः मधुमांसवर्जनादीनि । न तु मूत्रकरणादीनि मन्त्र[2]वन्ति ॥

(वृ) वसनादीनाम्—[3]वसनयोक्त्रजलानाम् । ब्रह्मचर्यग्रहणं व्रतानामुपलक्षणम् । पूर्वत्र ग्रहणाद्ब्रह्मचर्यस्य याजमानेन सिद्धत्वाच्च । तस्मात् ;—

समानानि दीनि—अवैषम्यात् ।

न तु मू-वन्ति—मन्त्रवर्जिता नियमास्तु भवन्त्येव । न दिवा मूत्रपुरीषे कुर्यात्, इत्येवमादीन्यपि । वारुण्यादिजपश्च न भवति । स्नुहनादीनि यथा न भवन्ति तथा कर्तव्यानि ॥

---

[1] चिदासना—च. [2] वस्त्वात्—ग. [3] आसनयोक्त्रजालानाम्—च.

(रु) गतौ । यावदत्रोर्ध्ववास्यादि पत्न्या दीक्षितलिङ्गमुक्तं तावदेव तस्याः, नान्यत्किंचिन्नवनीतदीक्षादि । ब्रह्मचर्यशब्देनात्र मधुमांसवर्जनादिनियमा उच्यन्ते । स्त्रीगमननिषेधेनैव मैथुनवर्जनस्य सिद्धत्वात् ॥

[अन्यस्य दीक्षितवस्त्रधारणनिषेधः]

(सू) न दीक्षितवसनं परिदधीत; नास्य पापं कीर्तयेत् । नान्नमश्नीयात् ॥१०॥४॥४९॥२८०३॥

(भा) न दीक्षितवसनं परिदधीतान्यः; त्यक्तमपि दीक्षितेन । न दीक्षितवसनमित्येवमादिसर्वधर्माः ॥

(वृ) न दीक्षि-सर्वधर्माः—अन्नभोजनान्ताः । सर्वेषां दीक्षितव्यतिरिक्तानां धर्माः ॥

(रु) अदीक्षितानाममी निषेधाः । दीक्षार्थं वासस्तेन त्यक्तं परिदधीत न कश्चित् । नास्य सन्तमसन्तं वा दोषं जल्पेत् । नान्नमश्नीयात् ॥

[आद्यपक्षे द्रव्यपृथक्करणं, उत्तरयोस्तु तदभावः]

(सू) यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन् । संस्थिते वाऽग्नीषोमीये । हुतायां वपायाम् ॥ १० ॥ ४ ॥ ॥ ५० ॥ २८०४ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने पञ्चदशी खण्डिका

चतुर्थः पटलः

---

(भा) [1] यज्ञार्थं वा पृथक्कृत्याऽऽज्यादिशेषद्रव्याद्भुञ्जीरन् जनाः । पत्नीसंयाजान्ते वाऽग्नीषोमीये । हुतायां वा वपायां मार्जनान्ते ॥

इत्यापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये दशमप्रश्ने पञ्चदशी खण्डिका

चतुर्थः पटलः

---

(वृ) यज्ञा–जनाः—यद्यपि दानं निषिद्धम्; तथाऽपि वस्त्राभरणानुलेपनादीनि देयान्येव, रामायणादौ दर्शनात् ।

पत्नी–मीये—पशौ सैव संस्था ।

हुता–नान्ते—अनयोः पक्षयोर्न द्रव्यपृथक्करणम् ॥

इति धूर्तस्वामिभाष्यवृत्तौ दशमप्रश्ने पञ्चदशी खण्डिका

चतुर्थः पटलः

---

(रु) यावता यज्ञस्यार्थस्तावति व्रीह्याज्यादिद्रव्ये यजमानेन विभक्ते शेषाद्भुञ्जीरन् । यदा तु न निर्दिष्टं भवति तदोत्तरावेव कल्पौ भवतः । तथा क्रीतराजक इति धर्मेषूक्तोऽप्यवधिरनुसंधातव्यः ॥

इति श्रीभट्टरुद्रदत्तविरचितायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमप्रश्ने पञ्चदशी खण्डिका

चतुर्थः पटलः

---

[1] यज्ञार्थानाम्—ग.

[दीक्षितस्य वाग्यमनकालनिश्चयः, तदतिक्रमेऽनुष्ठेयांशश्च]

(सू) न पुरा नक्षत्रेभ्यो वाचं विसृजेत् । यदि विसृजेत् 'इदं विष्णुर्वि चक्रमे' 'त्वमग्ने व्रतपा असि' इति जपित्वा वाचं यच्छेत् ॥ १० ॥ ५ ॥ ॥ १ ॥ २८०५ ॥

(भा) पूर्वं नक्षत्रोदयाद्वाग्विसर्गे इमानि प्रायश्चित्तानि । यानि 'इदं विष्णुः, त्वमग्ने व्रतपा असि' इत्येवमादीनि । प्रबुध्य मुष्टी वाचं वा विसृज्येति पुरोदयात्सूर्यस्य[1] वाग्विसर्गे एकैव ।

(वृ) न पुरा–जेत्—इत्यनुवादः प्रायश्चित्तविधानार्थः, 'स वाग्यतस्तपस्तप्यमान आस्त आनक्षत्रस्योदेतोः' इति पूर्वमेवोक्तत्वात् ।

पुरोद–कैव—ऋग्भवति नेदं विष्णुरिति प्रबुध्य मुष्टिं वाचं वा विसृजेदिति । यद्यपि अविशेषेणोक्तं; तथाऽपि सायं वाग्विसर्गे विशेषवचनात् प्रातःकाले पर्यवस्यति ।

(रु) नक्षत्रेभ्य इति वचनात्सायङ्कालविषय एवायं विधिः । प्रातस्तु त्वमग्ने व्रतपा असीति प्रबुध्य मुष्टी वाचं वा विसृज्येत्येष विधिर्भवति ।

[अङ्गलोपेऽङ्गिनोऽनावृत्तिः]

(सू) पुनर्वा दीक्षेत ॥ १० ॥ ५ ॥ २ ॥ २८०६ ॥

(भा) 'पुनर्वा दीक्षेत' इति दीक्षणीयैव पुनः क्रियते । अङ्गदीक्षा तु अन्यतमा क्रियत इत्युपदेशः ।

---

[1] सर्वस्यैकैव—**क. च.**

(वृ) पुनर्वा–यते—सा हि दीक्षाया मुख्यं करणम्। 'दीक्षयेदꣳ हविरागच्छतं नः' इति लिङ्गात्।

अङ्गदी–देशः—वाग्यमनं हि दीक्षाङ्गम्। तस्य वैकल्ये प्रधानां दीक्षणीयामावर्तयितुं न युक्तम्; न हि अङ्गलोपे प्रधानमावर्तते कृष्णाजिनदीक्षादिरन्यतमाऽऽवर्तयितुं युक्ता। किञ्च–'इदं विष्णुः, त्वमग्ने' इति प्रथमो[1] जपकल्पः। तेन च कृष्णाजिनदीक्षादिर्विकल्पितुमर्हति।

(रु) सर्वस्य वा दीक्षातन्त्रस्याऽऽवृत्तिः।

[वाग्यमनसमयनिश्चायकं मतद्वयम्]

(सू) अथैकेषाम्; वैष्णवीमाग्नावैष्णवीं सारस्वतीं बार्हस्पत्यामुत्तमामनूच्य वाग्यन्तव्येति ॥ १० ॥
॥ ५ ॥ ३ ॥ २८०७ ॥

(भा) बार्हस्पत्यामुत्तमां सूक्तस्य।

(वृ) बार्ह–सूक्तस्य—उत्तमा बार्हस्पत्या 'एवा पित्रे'; वैष्णवी 'इदं विष्णुः'; आग्नावैष्णवी 'अग्नाविष्णू महि'; सारस्वती 'प्रणो देवी सरस्वती' इति। केचिद्याः काश्चिल्लिङ्गवतीरिति।

(सू) दुग्धमेवाभि विसृजेदित्यालेखनः ॥ १० ॥ ५ ॥
॥ ४ ॥ २८०८ ॥

(भा) दृष्ट्वैव [2]दुग्धं वाग्विसर्गं करोति। अदृष्ट्वा[3]ऽपि यूप इति।

(वृ) दृष्ट्वैव–करोति—अभिविसर्गार्थम्।

---

[1] प्रथमः कल्पः–**ग. च.** [2] दुग्धे च–**च.** [3] दृष्ट्वाऽपि–**च.**

अदृष्ट्वाऽपि–यूप इति—दोषश्रवणात् ।

[त्रैवर्णिकानां व्रत्यवस्तुनिर्धारणम्]

(सू) यवागू राजन्यस्येत्युक्तम् ॥ १० ॥ ५ ॥ ५ ॥ २८०९ ॥

(भा) यवागूः क्षत्रियस्य व्रतं क्रूरा दुर्बलं करोति । वैश्यस्याऽऽमिक्षा लौकिकेन दध्ना कर्तव्या ; कठिनत्वात् । पाकयज्ञस्य सारूप्यम् । पयः—क्षीरं ब्राह्मणस्य ।

(वृ) यवागू–व्रतम्—'यवागू राजन्यस्य' इत्यादिब्राह्मणोक्तं कर्तव्यम्[1] । यवागूः नाक्षत्रियस्य व्रतम् ; नाभिषिक्तस्यैव ; ब्राह्मणवैश्ययोर्मध्यपाठात् ।

क्रूरं–ति—यजमानमिति ।

वैश्यस्या––रूप्यम् — पाकयज्ञसंस्तवादेवाऽऽमिक्षाधमाणां[2] प्राप्तिः ।

पयः–ब्राह्मणस्य—व्रतम् ।

(रु) इदं विष्णुरिति वैष्णवी । अग्नाविष्णू महि तद्वामित्याद्ययोरन्यतरा आग्नावैष्णवी । ततः परयोरन्यतरा सारस्वती, प्रणो देव्यानोदिव इति । ततः परासां तिसृणामुत्तमा बार्हस्पत्या । 'बृहस्पते अति यदर्यः' इति ।

यद्यपि 'न पुरा नक्षत्रेभ्य' इत्येतावदेवोक्तं ब्राह्मणे । तथा उदितेषु नक्षत्रेषु व्रते च दुग्धे एव वाचं विसृजेदित्यालेखनो मन्यते । यथा वयमिति भावः । स्वमतेनापि तथा प्रदर्शनात्, यथा वत्सस्यैकं स्तन-

---

[1] व्यं क्षत्रिय इव क्षीरे यवा–ग. [2] माणामप्राप्तिः–ग.

मित्यादि। संवादप्रदर्शनं चाऽऽदरार्थम्। तेनाव्रतरोहाद्विसर्गे भवत्येतत्प्रायश्चित्तम्।

'पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्यामिक्षा वैश्यस्य' इत्युक्तं ब्राह्मणे। तद्यथावर्णं व्रतान्यनुसन्धातव्यानीत्यर्थः।

[निन्दानिबन्धनस्य फलम्]

(सू) **यवागूमेकदुग्धं वा व्रतयेदित्यवर्णसंयोगेनैक उपदिशन्ति॥ १०॥ ५॥ ६॥ २८१०॥**

(सू) **तद्धैतदेके पयो व्रतयन्ति। तदु तथा न कुर्यात् पयस्येव यवागूं श्रपयेत्॥ १०॥ ५॥ ७॥ ॥ २८११॥**

(भा) यवागूं एकस्या वा गोर्दुग्धं सर्ववर्णानाम्। उत्तरविधिप्रशंसार्था निन्दा पय[1] एव केवलमेके व्रतयन्ति। गोर्दुग्धव्रतं न कर्तव्यम्। पयस्येव यवागूं श्रपयित्वा व्रतं कर्तव्यम्।

(वृ) **यवागूं-र्णानाम्**—अत्रैकदुग्धग्रहणात्केवलपयोव्रते बहु दुग्धमपीष्यते। यदि बह्व्यस्तासामप्याशिरं कर्तव्यम्।

**उत्तर-निन्दा**—तदु तथा न कुर्यादिति। न तु निषेधः।

**पय-र्तव्यम्**—पयसि यवागूकरणे प्रशंसा; न तु एकदुग्धप्रति[2]षेध इति सूत्रार्थः। केवलपयोव्रताद्यवागूकरणस्य गुरुत्वेनानुकल्पत्वशङ्कापरिहारार्थं निन्दाया निबन्धनम्॥

(रु) एकस्या व्रतदुहो दुग्धं एकदुग्धम्। तत्सर्ववर्णसाधारणमुक्तं शाखान्तरे। तथा यवागूः। तेनोभयमेतत्सर्ववर्णानां तेन व्रतेन

[1] पयसा केवल—**ख.** [2] व्रतनिषेध—**च.**

विकल्प्यते । पूर्वानिन्दोत्तरविधिप्रशंसार्था । पयोव्रते पयः केवलं वा व्रतयेत् । पयसि श्रपितां यवागूमित्यर्थः ॥

[गोद्वयक्षीरसम्मिश्रणादिविधयः]

(सू) **यदि व्रतधुगल्पं दुहीतान्यां दुह्यात् ॥ १० ॥ ५ ॥ ॥ ८ ॥ २८१२ ॥**

(भा) यदि व्रतधुगल्पं दुह्यात् अन्यां दुग्ध्वा ।

(वृ) **अन्यां दुग्ध्वा**—तस्मिन्नेवाल्पे पयस्यानयति ।

(सू) **यद्यस्या न स्यादद्भिस्संसृज्य श्रपयेत् ॥ १० ॥ ॥ ५ ॥ ९ ॥ २८१३ ॥**

(भा) [1]अभाव उदकमिश्रं वा अल्पम् ॥

(वृ) **अभाव – ल्पम्** — अन्याभावे उदकमिश्रणं वा तस्यैव पयसः ॥

(सू) **यदि पयो न स्यादप्स्वेव यवागूं श्रपयित्वा व्रतयेत् ॥ १० ॥ ५ ॥ १० ॥ २८१४ ॥**

(भा) प्रवृत्तस्याप्यभावेऽप्सु यवागूः ।

(वृ) **प्रवृ–गूः**—[2]न त्वस्य दोहः । एवं तण्डुलानामप्यभावे पिप्पलानि ॥

(रु) अन्याभावे तदेवाल्पबुद्धिर्वर्धयित्वा श्रपयेत् । यद्यल्पमपि पयो न स्यात्तदा यवागूं श्रपयेत् ॥

---

[1] अस्याभावे–**ग.** [2] न चेद्दोहः–**ग.**

[अशनायाराहित्येऽप्यग्निहोत्राविच्छेदायावश्या-
नुष्ठेयत्वं व्रतस्य]

(सू) अप्यन्ततः पिप्पलानि । न त्वेव न व्रतये-
दग्निहोत्रस्याविच्छेदायेति ॥ १० ॥ ५ ॥ ११ ॥
॥ २८१५ ॥

(भा) फलानि श्रपयित्वा ; अग्निहोत्रसंस्तुतत्वात् व्रतस्य । असत्यामपि क्षुधि व्रतं[1] क्रियते अग्निहोत्रा[2]विच्छेदार्थम् ॥

(वृ) फला–यत्वा—व्रतयेत् ।

अग्निहो–तस्य—न त्वेव न व्रतयेदिति ।

असत्या–दार्थम्—अनारब्धाग्निहोत्रस्यापि व्रतमवश्यमग्निहोत्रवत् कर्तव्यम् । व्रताविच्छेदार्थमित्यर्थः ॥

(रु) पिप्पलानि फलानि व्रीहयो वा । सर्वाभावे फलान्यपि वा व्रतयेत्, न तु लोपयेत् । व्रतस्याग्निहोत्रसंस्तवादिति भावः । इतिकरणः श्रुतिसूचनार्थः । तथा अग्निहोत्रस्याविच्छेदायेति विज्ञायत इति भारद्वाजः ॥

(सू) यदि दधीयादेतदेवास्मै दधि कुर्युः ॥ १० ॥
॥ ५ ॥ १२ ॥ २८१६ ॥

(भा) दधीयात्–दधीच्छेत् ; यदाऽस्य श्रद्धा दधनि तदा तं श्रपयित्वा यथा दधि भवति तथाऽऽतञ्चनं क्षिपति ॥

(वृ) यथा दधि भवति—व्रतकाले ।

---

[1] पृथक् क्रि—च. [2] अग्निहोत्रसंस्तुतत्वात्—ग.

तथाऽऽतञ्चनम्—रजतादि क्षिपति। दोहनं तु काल एव ॥

(रु) यदि दधीयात् दधीच्छेदेतदेवातच्य दधि कृत्वा व्रतयेत् ॥

(सू) यद्यन्नीयाद्धाना * अस्यान्वावपेयुः, सक्तूनस्मा अन्वावपेयुः, घृतमस्मा अन्वानयेयुः ॥ १० ॥
॥ ५ ॥ १३ ॥ २८१७ ॥

(सू) अप्यग्निहोत्रहविषामेवैकं व्रतयेन्मांसवर्जम् ॥
॥ १० ॥ ५ ॥ १४ ॥ २८१८ ॥

(भा) अन्नमिच्छति अन्नीयति ; यदा [1] वा पयसा क्षीणः ; [2] धानादीनि पयसि क्षिप्यन्ते ॥

(वृ) यदा—णः—'यदि मन्येतोपदस्यामीति' इति वचनात्। अनुपदस्तस्येच्छामात्रेण भवति।

अप्यग्नि—वर्जम्—न संसृजेत्—न च व्यत्यस्येत्। येन प्रथमं व्रतयति तेनैवान्यत्रापि। तेषामभावे तत्प्रतिनिधयो ग्राह्याः। यवागूः, पिप्पलं सर्वसाधारणम् ॥

(रु) यदि क्षीणबलोऽन्नमदनीयमिच्छेत्तदा तस्यानुपदासार्थं व्रतकाले व्रत एव धानादि निर्वपेयुरित्यर्थः। तथा च ब्राह्मणं यदि मन्येतोपदस्यामीत्योदनं धानास्सक्तून्घृतमित्यनुव्रतयेदात्मनोऽनुपदासायेति ॥

---

* धाना इति ;—'ओदनं धानास्सक्तून् घृतमित्यनुव्रतयेदात्मनोऽनुपदासाय' इति श्रुतिवाक्यप्रत्यभिज्ञापनमेतेन कृतं भवति ॥

[1] यदा त्वसौ क्षीणः - ग. च. [2] अन्नादीनि--ख.

(सू) सोऽयं दैक्षो वादो भवतीति खल्वाहुः । सर्वेषा-
मुपसत्स्वन्वारभ्य स्तनकल्प आम्नातः ॥ १० ॥
॥ ५ ॥ १५ ॥ २८१९ ॥

(भा) दैक्षो वादो दीक्षार्थो एते विषयः । उपसत्सु तु स्तना एव । पयोव्रतम् ॥

(वृ) स्तना-एव—चतुरस्सायं दुह्युरित्याद्याः ।

पयोव्रतम्—सर्वेषां वर्णानाम् । प्रथमेऽहनि दीक्षितस्य वाग्यतत्वात् ॥

(रु) उपदस्यन् ओदनाद्यपि व्रतयेत् । योऽयं पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्येत्यादिविधिः स दीक्षार्थः । उपसत्सु तु सर्ववर्णानामविशेषेण पयोव्रतस्यैव चतुस्तनादिकल्प आम्नातः । स चोपसत्स्वेव दर्शयिष्यते ॥

[सोपपत्तिकं मन्त्रस्यैक्यानैक्यव्यवस्था]

(सू) अपराह्णेऽधिवृक्षसूर्ये वा व्रतप्रदो वाचं यमयति
'अग्नीन् ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ
पत्नि वाचं यच्छ' इति ॥१०॥५॥१६॥२८२०॥

इत्यापस्तम्बश्रौतसूत्रे दशमे प्रश्ने षोडशी खण्डिका.

---

(भा) 'अग्नीन् ज्योतिष्मतः कुरुत पत्नि वाचं यच्छ' इत्येवापराह्णादौ । एष उपदेशपक्ष एकत्वान्मन्त्रस्य । यजमानस्य वाग्यतत्वात् प्रथमेऽहनि निवृत्तिरिति ॥

इति धूर्तस्वामिभाष्ये दशमे प्रश्ने षोडशी खण्डिका.

---

(वृ) अग्नीन्–हे –दीक्षितेति पृथङ्मन्त्रत्वात् विभागे नैरपेक्ष्यात् ।

उपदेश–वृत्तिरिति—अन्ते इतिकरणेन विनियोगैकत्वादेकमन्त्रत्वं; मन्त्रैकदेशस्य प्रयोगानर्हत्वात् प्रकृतित्वाच्चालोप इति ॥

इति धूर्तस्वामिभाष्यवृत्तौ दशमे प्रश्ने षोडशी खण्डिका.

---

(रु) व्रतप्रद इति वचनं कुरुतेति बहुवचनं च व्रतप्रदानज्वलनयोः परिकर्म्यृत्विजामन्यतमप्राप्त्यर्थम् । तेषु तु य एव कश्चिद्व्रतप्रदस्स एव संप्रैषमाह । तत्र च प्रथमेऽहनि दीक्षितवर्जं सम्प्रैषः । स वाग्यतस्तपस्तप्यमान आस्त इति प्रागेव तद्वाग्यमनस्योक्तत्वात् ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमे प्रश्ने षोडशी खण्डिका

---

[उपदेशमते स्वमते च सम्प्रैषनिष्कर्षः]

(सू) उदितेषु नक्षत्रेषु पूर्ववद्वाचो विसर्गः ॥ १० ॥ ॥ ५ ॥ १७ ॥ २८२१ ॥

(सू) एवमुपोदयं यमयति ॥१०॥५॥१८॥२८२२॥

(भा) केचिदुपोदयेऽपि न कुर्वन्ति; अप्रवृत्तिर्वाग्यमनस्येति । सायमुपक्रमस्य विवक्षितत्वात् द्वितीयेऽहन्यर्थलोपात् क्रियते । एवमुपोदये ॥

(वृ) अप्रवृत्ति–स्येति—वाग्यमनस्य मन्त्रस्य सम्प्रैषस्येत्यर्थः ।

सायमुप–क्षितत्वादिति—उपदेशमते तु प्रथम एवाहनि उपोदये कृत्स्नस्य संप्रैषस्य प्रयोगः । स्वमते तु—पूर्वस्मिन्नेव यजमानवाग्यमनकाले कृत्स्नः संप्रैषः । तदानीमेव पत्न्या वाग्यमनमिति ।

**द्वितीये-पोदये** – कृत्स्नस्संप्रैषः । एवमुपोदये[1] प्रातश्च सायं चान्वहं व्रतप्रद ऋत्विजामन्यतमः; यजमानप्रेष्यो वा; व्रतप्रद इति नामकरणात् । प्रथमं यः प्रयच्छति स एव द्वितीयादौ व्रतं; स एव संप्रेष्यति ॥

(रु) पूर्ववत् वत्सस्यैकं स्तनमवशिष्येत्यादिना विधिनेत्यर्थः । उपोदयं उदयात्पूर्वकालम् ॥

**(सू) मध्यन्दिने मध्यरात्रे च व्रतयति ॥१०॥५॥ ॥ १९ ॥ २८२३ ॥**

**(सू) अतिनीय वा मानुषं कालम् ॥१०॥५॥२०॥ ॥ २८२४ ॥**

**(सू) सायं दुग्धमपररात्रे प्रातर्दुग्धमपराह्ण इत्येके ॥ ॥ १० ॥ ५ ॥ २१ ॥ २८२५ ॥**

**[दम्पत्योः व्रतश्रपणदेशकालनिष्कर्षः, योगविभागफलञ्च]**

**(सू) गार्हपत्ये दीक्षितस्य व्रतꣳ श्रपयति दक्षिणाग्नौ पत्न्याः ॥ १० ॥ ५ ॥ २२ ॥ २८२६ ॥**

(भा) सायं प्रातश्च मनुष्यकालः । 'अतिनीय मानुषं कालम्' इति तयोर्व्यतिक्रान्तयोरस्तमयात्कालो दिवाव्रतस्य; तथाऽपररात्रात्सायन्तनस्य ॥

(वृ) **सायं प्रा–नस्य**—अस्यार्थः—अहोरात्रयोः प्रथमः पञ्चमो भागो मानुषः कालः । ततो[2]ऽनन्तरं (सङ्गवः) प्राप्तः; 'अतिनीय वा

[1] पोदयेऽपि–**ग. च.** [2] तदनन्तरं–**क. च.**

मानुषं कालम्' इति । तथा रात्रावपि द्वितीयो भागः । तदनन्तरं च 'मध्यन्दिने मध्यरात्रे च व्रतयति' इति । तदनन्तरं च 'सायं दुग्धमपररात्रे प्रातर्दुग्धमपराह्णे' इति । पृथग्योगकरणं तु [1] नियमपक्षपरि[2]हारार्थमिति ॥

(रु) यस्मिन् काले दिवा च नक्तं च प्रायशो मनुष्या भुञ्जते स मध्यन्दिनादिर्मानुषः कालः । तस्मिन्नतीते वा व्रतयति । सायं दुग्धं रात्रिव्रतम् । प्रातर्दुग्धं अहर्व्रतम् । व्रतयतीत्यन्वयः । गतः ॥

[सदृष्टान्तं स्कन्नव्रतप्रायश्चित्तोन्नयनादिविधयः]

(सू) **याऽग्निहोत्रस्य स्कन्नस्य प्रायश्चित्तिस्सा व्रतस्य ॥ १० ॥ ५ ॥ २३ ॥ २८२७ ॥**

(भा) स्कन्नस्य प्रायश्चित्तमग्निहोत्रवद्व्रतस्य ॥

(वृ) **स्कन्नस्य–तस्य**—न हविष्यन्दनादेः । यदि दुह्यमानमित्यादि भवति अशनप्रतिषेधो न भवति; तस्यैव साध्यत्वात् ॥

(रु) व्रतस्य स्कन्नस्याग्निहोत्रवत्प्रायश्चित्तिः ॥

(सू) **अग्निहोत्रवत्तूष्णीमुन्नीयापरेणाऽऽहवनीयं व्रतमत्याहृत्य प्रयच्छन्नाह 'व्रत्य व्रतय व्रतमुपेहि' इति ॥ १० ॥ ५ ॥ २४ ॥२८२८ ॥**

(भा) अग्निहोत्रवदुन्नयनं पञ्चावत्तिनः पञ्चावत्तम्[3] । अपरेणाहवनीयं व्रतमेवास्य हरति ॥

---

[1] नियतपक्षप-ग. [2] परिग्रहार्थं इति-क. ख. [3] वत्तः-च.

(वृ) **अग्निहोत्रव-पञ्चावत्तम्**—[1] यदि कामयेत ज्येष्ठतोऽस्य प्रजाऽर्धुका स्यादित्यादयः कामा न भवन्ति । तेषामग्निहोत्राश्रितत्वात् ।

**अपरेण-हरति**—व्रतचमसे[2]न न स्वयं गच्छति; अत्याहरति न तदूहति यजमानो गृहीत्वा स्थापयति ॥

(रु) व्रतप्रद इति शेषः । व्रतप्रदाने चमसे चतुःपञ्चकृत्वो वा चतुरवत्तिपञ्चावत्तिवशादुन्नीय स्वयं बहिर्भूत्वा व्रतमपरेणाहवनीयं हरति ॥

(सू) **'दैवीं धियं मनामहे' इति हस्ताववनिज्य 'ये देवा मनोजाता मनोयुजः' इति दक्षिणेनाऽऽहवनीयं परिश्रिते व्रतयति ॥१०॥५॥२५॥२८२९॥**

(भा) हस्तावनेजनं करोति यजमानः; व्रतञ्च; 'दैवीं' 'ये देवा' इति ॥

(रु) यजमान इति शेषः ॥

(सू) **नैनमदीक्षिता व्रतयन्तं पश्यन्ति ॥ १० ॥ ५ ॥ ॥ २६ ॥ २८३० ॥**

(सू) **'शिवाः पीता भवथ यूयमापोऽस्माकं योनावुदरे सुशेवाः । इरावतीरनमीवा अनागसश्शिवा नो भवथ जीवसे' इति व्रतयित्वा नाभिदेशमभिमृशत ॥ १० ॥ ५ ॥ २७ ॥ २८३१ ॥**

[प्राणाहुतिमन्त्रनिवृत्तावुपपत्तिः]

(सू) **अपश्च पीत्वा जपति ॥१०॥५॥२८॥२८३२॥**

---

[1] यद्वाम–**ग.** [2] से नष्टे स्वयं–**च. ग.**

(सू) तूष्णीं पत्नी स्व आयतने व्रतयति ॥ १० ॥
॥ ५ ॥ २९ ॥ २८३३ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने सप्तदशी खण्डिका पञ्चमः पटलः

---

(भा) व्रतं पीत्वाऽऽचान्तो नाभिदेशमभिमृशति । पत्न्या अप्युन्नयनादि तूष्णीम् ॥

इत्यापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये दशमे प्रश्ने सप्तदशी खण्डिका
पञ्चमः पटलः

---

(वृ) व्रतं-शति—अत्र प्राणाऽऽहुतिमन्त्राणां सर्वेषां निवृत्तिरेव अक्रतुसंयुक्ताऽऽहुतित्वात् । अपश्च पीत्वाऽऽचम्य नाभिमभिमृशति 'शिवाः पीताः' इति । व्रतद्रव्येष्वप्यापस्सन्त्येवेति न [1] लिङ्गासमवायः ।

पत्न्या-तूष्णीम्—या पत्नी इति दर्शनात् । अग्निहोत्र[2]वत् स्कन्नप्रायश्चित्तं न भवति ॥

इति रामाग्निचित्कृतायां धूर्तस्वामिभाष्यवृत्तौ
दशमप्रश्ने सप्तदशी खण्डिका
पञ्चमः पटलः

---

[1] लिङ्गसमवायः—च. [2] व्रतधुक् चान्या—क. ग.

(रु) अन्तेऽभिमृशते । यदा तृषितोऽपः पिबति तदाप्येतां जपतीत्यर्थः । 'यदा पिपासति' इत्येव सत्याषाढः ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
दशमे प्रश्ने सप्तदशी खण्डिका
पञ्चमः पटलः

---

[स्वापप्रबोधपूर्वोत्तरकालोन्नेयविशेषांशाः]

(सू) 'अग्ने त्वꣳ सु जागृहि' इति स्वप्स्यन्नाहवनीयमभिमन्त्रयते ॥ १० ॥ ६ ॥ १ ॥ २८३४ ॥

(सू) 'त्वमग्ने व्रतपा असि' इति प्रबुध्य मुष्टी वाचं वा विसृज्याऽदीक्षितवादं वदित्वा ॥ १० ॥ ६ ॥ ॥ २ ॥ २८३५ ॥

(भा) अन्यस्मिन्नपि काले 'त्वमग्ने व्रतपा असि' इति पुनर्यदा न शेते तदा प्रबुध्य जपः । अदीक्षितवादः परिणयवर्जं चनसितादिवर्जं वा [1] यदा वदति सूक्तमपि; स्मृतिप्रतिषिद्धत्वात् ॥

(धू) यस्मिन्नहनि स्वापो न प्रतिषिद्धः; तदाऽभिमन्त्रणम् । एकस्यां रात्र्यां एक एव [2] प्रबुध्य जपः ।

**अन्यस्मिन्–जपः**—तस्यां रात्र्यां यदि पुनर्न [3] शेते न जपः ।

**अदीक्षित–वदति**—[4] तदा 'त्वमग्ने व्रतपा असि' इति जपः, स्मृत्युक्तमपि प्रायश्चित्तं भवति; यदि वाग्यमनलोपस्स्यात् 'इदं विष्णुः' इति जपेदिति ।

---

[1] यावता–ग. [2] एकदैव–ग. च. [3] पुनः शे–क. च. [4] तावत्–ग.

स्मृति-द्धत्वात्—'आहिताग्निरपशब्दं प्रयुज्य सारस्वतीयामिष्टिं निर्वपेदिति च' एवमादि[1]स्मृतिप्रतिषिद्धत्वाच्च ॥

(रु) यत्र जागरणं नोक्तं तत्रायं नियमः। सुप्तोत्थिते चाहवनीयमभिमन्त्रयते। तथोत्तरेषु निमित्तेषु। स्वेच्छाभिभाषणं चनसितादिवर्जनं चादीक्षितवादः ॥

[मन्त्रयोर्मतभेदेन समुच्चयविकल्पपक्षौ]

(सू) 'विश्वे देवा अभि मामाऽववृत्रन्' इति प्रबुध्य जपति। "पुनर्मनः पुनरायुरागात्पुनः प्राणः पुनराकूतमागात्। वैश्वानरोऽदब्धस्तनूपा अवबाधतां दुरितानि विश्वा" इति च ॥ १० ॥ ६ ॥ ३ ॥ ॥ २८३६ ॥

(सू) तस्माद्दीक्षितो द्वादशाहं भृतिं वन्वीत; यज्ञमेव तत्संभरतीति विज्ञायते ॥ १० ॥ ६ ॥ ४ ॥ ॥ २८३७ ॥

(भा) केचित् 'विश्वे देवाः, पुनर्मनः' इति प्रबुद्धस्य समुच्चयः पूर्वेणेति वदन्ति। यज्ञसंभरणार्थत्वादेकस्यामपि दीक्षायां सहनीहारयाच्ञा कर्तव्या ॥

(वृ) केचि-दन्ति—(इति वदन्ति) एकस्मिन् दोषे श्रूयमाणानि [2]समभ्युच्चीयेरन्निति। स्वमते तु विकल्पः, जपहोमेज्यानामर्थभेदात्।

---

[1] स्मृतिप्रतिषिद्धः—च. [2] समुच्चीयेरन्—ग.

तत्र [1]समुच्चय उक्तः । न तु जपयोर्होमयोर्वेति । 'दीक्षित' इति वर्तमाने पुनर्दीक्षितग्रहणं दीक्षाहस्स्वेवेति नियमार्थम् । इतरथा तु अवभृथादिति ।

[सोपपत्तिकं भरणार्थद्रव्यभिक्षणादिविषयविवेचनम्]

यज्ञ-तव्या—'द्वादशाहं भृतिं वन्वीत' इति वचनात् दीक्षाया द्वादशाहसम्पत्तावेव भृतिवननमृत्विजां प्रसर्पकाणां च भरणार्थद्रव्यभिक्षणम् । ततो न्यूनेषु दीक्षाकल्पेषु एकदी[2]क्षादौ कृशो न भवतीति न वाच्यम्, 'यज्ञमेव तत्संभरति' इति यज्ञाङ्गत्ववचनात् । न हि कालसङ्कोचेन पदार्थानां लोपो विधीयते । सङ्कुचित एव काले सर्वे पदार्था अनुष्ठेया इति । अत एव साद्यस्कादौ सर्वानुष्ठानमिति एकदीक्षादिषु च भृतिवचनं कर्तव्यम् । अतो दीक्षितेन द्वादशाहशब्दोऽभिसम्पद्यते ; न भृतिवचनेन 'द्वादशाहं दीक्षितो भवति स भृतिं वन्वीत' इति । तस्माद्दीक्षापरिमाण[3]विशेषा द्वादशाहेन विकल्प्यन्ते । दीक्षितस्तु दीक्षाकाले भृतिं वन्वीत । एष एव द्वादशाहदीक्षाविधिः ; 'द्वादशाहमवरार्ध्यम्' इति । द्वादशाहमासयोरन्तरालेऽपि परिमाणविधिरिति । विद्यमानभृतेरपि क्षत्रियादेरपि यज्ञसम्भरणार्थत्वादेव । 'यज्ञमेव तत्संभरति न द्रव्यम्' इति मन्तव्यमिति ॥

(रु) प्रबुध्याभिमन्त्रणेनानयोर्जपयोस्समुच्चयः । भृतिवचनं दक्षिणाद्यर्थं भिक्षणम् । तदेकदीक्षादिकल्पेष्वपि कुर्यात् । प्रदर्शनार्थत्वाद्द्वादशाहग्रहणस्य । सम्भृतद्रव्यस्य तु न भिक्षणम् । तत्सम्पत्त्यर्थत्वात्तस्य ॥

---

[1] कर्तृ समु—च. [2] दीक्षादिषु कृतो न—क. [3] णशेषाद्द्वादशाहेन विकल्प्यन्ते—ग.

[याच्ञापूर्वकं गोहिरण्यवस्त्रादिदेयद्रव्यानयनार्थ-प्रेषणविधिः]

(सू) 'पूषा सन्या' इति * सनीहारान् संशास्ति ॥
॥ १० ॥ ६ ॥ ५ ॥ २८३८ ॥

(भा) 'पूषा सन्या' इत्युक्त्वा 'भिक्षणं कुरुत' इति संशासनम्—प्रेषणम् ॥

(वृ) पूषा—तेति—नावश्यं सनीहारानन्तरितमेव भिक्षितव्यम् । [1] तदा तदुक्त्यैव भिक्षणम् । 'चन्द्रमसि' इति हिरण्यभिक्षार्थो हि मन्त्रः ; न सनीहारशेषः । देवता मान्त्रवर्णिका विद्यन्त एव । तस्मात्सनीहाराभावेऽपि [2] प्रेषणम् ॥

[आनीतद्रव्यप्रतिग्रहादिविधिः]

(सू) 'चन्द्रमसि' इत्येतैर्यथालिङ्गं प्रतिगृह्णाति ॥
॥ १० ॥ ६ ॥ ६ ॥ २८३९ ॥

(सू) 'देवस्सविता वसोर्वसुदावा' इत्यन्यानि ॥
॥ १० ॥ ६ ॥ ७ ॥ २८४० ॥

(भा) तैराहृतं गृह्णाति । 'चन्द्रमसि' इति हिरण्यम् । 'वस्त्रमसि' इति वासः । उस्रादीनामनूहेन प्रतिग्रहः । जात्यभिधानात् 'उस्राऽसि' इति गाम् । सन्निहितद्रव्यस्यैव सनियाच्ञा । यानि चर्त्विजां विहितानि

---

* सनीहारानिति ; दीर्घश्छान्दसः । सनिशब्देनात्र हिरण्यगोवस्त्रादीनि देयद्रव्याण्युच्यन्ते, तेषामानेतारस्सनिहाराः । सनीन् हरन्तीति सनिहारा इति व्युत्पत्तिः । हरणं चात्रानयनमेव ; न तु चौर्यतः अपहरणं इत्याशयेन तत्पदं 'आनेतारः' इति पदेन व्याकरोत्सायणः ॥

[1] तथा—च. [2] संशासनं—प्रेषणं--ग. नं तेषाम्-च.

द्रव्याणि दास्यति तेषामेव भिक्षणम् । 'भृतिं वन्वीत' इति लिङ्गात् ।
उपदेशः प्रसर्पकार्थं भिक्षणम् । क्रतुदक्षिणानां नियतपरिमाणत्वात् ॥

(वृ) **तैराहृतं गृह्णाति**—वक्ष्यमाणैर्मन्त्रैः ।

**यथालिङ्गं इत्यस्य व्याख्या; चन्द्र-ण्यम्**—चन्द्रं हिरण्यम्, इति लिङ्गदर्शनात् ।

**वस्त्रमसी-सः**—[1] वसनसाधनमात्रं चीराजिनादि ।

**उस्रा-त्**—पुंसामप्युस्राऽसीत्येव; हयामपि हय इति । एवमजाम् एवं मेषीम् ।

**उस्रा-गाम्**—स्त्रियं पुमांसं च बहूनपि । हय इत्यश्वं पूर्ववत् । छाग इत्यजं, मेष इत्यविं पूर्ववत्, 'देवस्सविता वसोर्वसुदावा' इति व्रीह्यादीनि पूर्त्येति लिङ्गात् । पूर्तिसाधनानि प्रतिगृह्णाति, न हस्तिरथपुरुषतल्पादीन्यपि । तेषां तूष्णीं परिग्रहः । उपदेशोऽन्यानीति वचनात् 'देवस्सविता' इति सर्वेषां प्रतिग्रहणमिति । केचिल्लिङ्गासमवेतानां [2] प्रतिग्रहणमेवेति ॥

**संनिहित-व्या**—[3] कर्तव्या; यज्ञसम्भरणार्थत्वात् इति ।

**यानि च-ङ्गात्**—अश्वतरमित्यादीनि यान्यनुक्रान्तानि ।

**उपदेशः-त्वात्**—सनिलब्धं तु अनियतपरिमाणमिति ॥

(रु) सनिः याच्ञालभ्यं धनम् । तद्ये हरन्ति ते सनीहाराः । तान्प्रहिणोत्यमुं चामुं च गच्छतेति यतो यतो वेत्स्यन्मन्यते । तैराहृतं हिरण्यादिद्रव्यम् । अन्यानि उक्तव्यतिरिक्तानि व्रीह्यादीनि ॥

---

[1] न वसन-**क. ग. च.** [2] ग्रह-**ग.** [3] न कर्तव्या.

(सू) 'वायवे त्वा' इति नष्टामनुदिशति ॥ १० ॥
॥ ६ ॥ ८ ॥ २८४१ ॥

(सू) 'वरुणाय त्वा' इत्यप्सु मृताम् ॥ १० ॥ ६ ॥
॥ ९ ॥ २८४२ ॥

(भा) सनिलब्धानां नष्टानां 'वायवे त्वा' इति सङ्कल्पोऽनुदेशः ॥

(वृ). सनि–देशः—अस्यार्थः ;—तासामिति परामृष्टानां सनिलब्धानां ग्रहणम् । नष्टानामिति च नष्टस्य ग्रहणम् । सनीतरद्रव्यत्वेनानुदेश्यत्वात् । अथवा गोरेवानुदेशनानि सर्वाणि । अनुदिष्टानामधिगतानां न गोषु चालयेत् इति लिङ्गात् ॥

इति धूर्तस्वामिभाष्यवृत्तौ दशमे प्रश्ने अष्टादशी खण्डिका

---

(रु) मन्त्रसमवेतं देवतार्थतया सङ्कल्पनमनुदेशः । अनुदिशतीत्यन्वयः । एवमुत्तरत्रापि द्रष्टव्यम् ॥

(सू) 'निरृत्यै त्वा' इत्यवसन्नां संशीर्णां वा ॥
॥ १० ॥ ६ ॥ १० ॥ २८४३ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने अष्टादशी खण्डिका

---

(भा) अवसन्ना–या न शक्नोत्युत्थातुम् । संशीर्णा–पृथगङ्गानि यस्यां पतन्ति ॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने अष्टादशी खण्डिका

---

(रु) अवसन्ना दौर्बल्यादसञ्चारक्षमा । संशीर्णा या शिथिलाङ्गसन्धि-रुत्थातुमपि न पारयते ॥

इति श्रीभट्टरुद्रदत्तविरचितायां आपस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमप्रश्ने अष्टादशी खण्डिका

---

[वातादिमृतानां अनुदेशनमन्त्रे वैलक्षण्यम्]

(सू) मरुद्भ्यस्त्वेति ह्रादुनिहतां मेष्कानिहतामप्सु वा मग्नाम् ॥ १० ॥ ६ ॥ ११ ॥ २८४४ ॥

(भा) ह्रादुनिहता—वातहता । मेष्कहता—कपोतभग्ना । अप्सु निमग्ना या न दृश्यते, तां 'रुद्राय त्वा' इति या तु दृश्यते मृता तस्या वरुणाय त्वेत्यनुदेशनम् ॥

(सू) 'रुद्राय त्वा' इति महादेवहताम् ॥ १० ॥ ॥ ६ ॥ १२ ॥ २८४५ ॥

(भा) महादेवहता—ज्वरहता ।

(सू) 'इन्द्राय त्वा प्रसह्वने' इति यां सेनाऽभीत्वरी विन्देत ॥ १० ॥ ६ ॥ १३ ॥ २८४६ ॥

(भा) अभीत्वरी— त्वरितं गच्छन्ती सेना लभते ॥

(वृ) अभीत्वरी–लभेत—अभीत्वरी त्वरितं गच्छति तां यदि सेना लभेत तस्या अनुदेशनमभी[1]त्वरीति । विशेषणं सम्भावनामात्रेण, अतो यथाकथञ्चिदपि सेनागृहीताया अनुदेशनं भवत्येव ॥

---

[1] दिशनं अभीत्वरीति—च. च.

(सू) 'यमाय त्वा' इत्यविज्ञातेन यक्ष्मणा हताम्
॥ १० ॥ ६ ॥ १४ ॥ २८४७ ॥

(भा) 'यमाय त्वा' इत्यविज्ञातेन यक्ष्मणा—रोगेण मृतां ॥

(वृ) **यमाय–ताम्**—अनुदिशति । यक्ष्मशब्दो रोगवचनः । 'य एवमेतेषां यक्ष्माणां जन्म वेद' इति ॥

(रु) महादेवहतां ज्वरहताम् ॥

(रु) अभीत्वरी अभिप्रयास्त सेना यां विन्देत अपहरेत ॥

(रु) यक्ष्मा रोगः ॥

[प्रतिग्रहादिमन्त्राणां आवृत्त्यादिकालनियमनम्]

(सू) अनुदिष्टानामधिगतां न गोषु चारयेत् ॥१०॥
॥ ६ ॥ १५ ॥ २८४८ ॥

(भा) न चारयेत्—न गृह्णीयादित्यर्थः ॥

(वृ) **न गृह्णी–र्थः**—देवतायै त्यक्तत्वात् । प्रतिग्रहमन्त्राणां अनुदेश[1]गतानां च कालपृथक्त्व एव आवृत्तिः । जात्यभिधानात् मन्त्रगतस्य वचनस्यानुरोधाय प्रत्येकं मन्त्राऽऽवृत्तिरिति न्यायः दीक्षितनियमानामाग्नावैष्णवयागान्ते प्रवृत्तिः ।

(वृ) अतस्तदनन्तरमग्निहो[2]त्रं न हूयते । नाऽपि पञ्च महायज्ञाः क्रियन्ते वैश्वदेवं च । यदा तु दीक्षणीयायाः पुरतोऽशनं तदा पञ्च-

---

[1] देशनाच्च काल—**च.** [2] होत्रहोमो न—**च.**

महाय[1]ज्ञादि क्रियते । तस्या एवेष्ट्या दीक्षणीयात्वात् । अत[2] एवापराह्णे दीक्षयेदित्यत्र अपराह्णे दीक्षणीयेत्यवोचत् ॥

[वाग्यमनान्ते दीक्षाधर्माणां प्रवृत्तिसदसद्भावयोः शङ्कासमाधिभ्यां सोपपत्तिकं व्यवस्था]

ननु तेन हविषा कृष्णाजिनादिभिश्च दीक्षा निर्वर्त्यते, नाग्नावैष्णवेनैव । ततो वाग्यमनान्ते दीक्षितो भवति, न तु दीक्षणीयामात्रेण । किञ्च 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इति वाक्येनैव दीक्षिष्यमाणस्य तद्भाविर्न तु दीक्षित[3]स्येति गम्यते । तथा 'कृष्णाजिनेन यजमानं दीक्षयति' इत्यादिभिश्च कृष्णाजिनादीनां दीक्षाकरणत्वं च गम्यते अत एव वाग्यमनान्ते दीक्षाधर्मास्सूत्रकारेणोपदिष्टाः । अतो वाग्यमनान्ते दीक्षाधर्माः प्रवर्तन्ते न पुरस्तादिति चेत्; मैवम्; दीक्षिष्यमाणः दीक्षां निर्वर्तयितुमुद्युक्तो निर्वर्तनायाग्नावैष्णवमेकादशकपालं निर्वपेदिति वाक्यार्थः । अतस्तेनैव हविषा दीक्षा निर्वर्त्यते । तथा[4] 'दीक्षणीया' इति नाम चोपपद्यते । 'दीक्षयेदं हविरागच्छतं नः' इति मन्त्रवर्णश्च । कृष्णाजिनदीक्षादयोऽङ्गदीक्षाः । तथा चाह 'उपदशो[5]ऽङ्गदीक्षा[6]स्त्वेव' इति भाष्यकारः ॥ यद्यपि तैरपि दीक्षा क्रियते; तथा[7]ऽपि नादीक्षितोऽपि तु दीक्षित एव । केचित्सप्तहोतुरनन्तरं नियमा भवन्ति । 'दीक्षिष्यमाणः । सप्तहोतारं मनसा' इति वचनात् । भाष्यकारेण ततः पूर्वमेव यागीयद्रव्यनिर्देशस्योक्तत्वात् । दीक्षाभोजना[8]दौ च विशेषण दीक्षा[9]ऽविरुद्धं

---

[1] यज्ञाः क्रियन्ते-**च.** [2] एवापराह्णे दीक्षयेदित्यवोचत्-**च.** [3] दीक्षमाणस्येति-**ग.** [4] कथा दीक्षणी-**क. ङ.** [5] देशो यागदीक्षा-**क.** [6] दीक्षाऽस्येति भाष्यकारं-**च.** [7] तथाऽप्याग्नावैष्णव्या दीक्षितो दीक्षित एव-**ग.** [8] भोजनं चाविशेषेण-**च.** [9] दीक्षितविरुद्धं-**च.**

यत्प्रियं तदश्नातीति वचनाच्चेति । द्वितीयेऽहनि दुग्धे व्रते निसृष्टवाग्यज[1]मानो देवयज[2]नं गच्छेद्वक्ष्यमाणेन विधिना ॥

(रु) कृतेऽनुदेशे नष्टाऽपहृता वा पुनश्चेल्लभ्येत तां देवतार्थेन त्यक्तत्वान्नात्मार्थे गृह्णीयादित्यर्थः ॥

[आत्मसमारोपणस्यापि पृथगनुष्ठेयत्वं, तत्र हेतुः, तन्मन्त्रस्य व्यासज्यवृत्तित्वं च]

(सू) पृथगरणीष्वग्नीन् समारोप्य रथेन प्रयाति ॥ १० ॥ ६ ॥ १६ ॥ ३८४९ ॥

(भा) पृथगरणीष्वग्नीन् समारोप्य नात्मनि । प्रदर्शनार्थ इत्युपदेशः । रथेऽरणयः स्थाप्यन्ते ॥

(वृ) पृथक्-त्मनि—समारोप्य प्रयाणः । अरणिग्रहणं प्रदर्शनार्थमित्युपदेशः । आत्मसमारोपणस्यापि प्रत्येकमर[3]णिद्वयविधानार्थत्वेन ग्रहणात् परिसङ्ख्यानार्थत्वं न सम्भवति । अतः[4] प्राप्तारण्यनुवादेन बहुत्वविधानादात्मसमारोपणस्य प्राप्तस्य न प्रतिषेधः । किन्तु अनुवादत्वेन प्रदर्शनार्थत्वं भवति । अत आत्मसमारोपणमपि पृथ[5]गेव यजमानः कुर्यात् । गार्हपत्यादीन् आहवनीयादीन्वा । यद्याहवनीयादीन् तदा सभ्यावसथ्यौ समारोप्य गार्हपत्यसमारोपणम् । समारोपणमन्त्राऽऽवृत्तिस्तूभयत्र ॥

[प्रयाणमन्त्रानुदेशनम्]

(सू) तदभावे रथाङ्गमादाय ॥ १० ॥ ६ ॥ १७ ॥ ॥ १८५० ॥

---

[1] वाग्यमतो देव—क. [2] यजनदेशं—ग. [3] नारणिग्रहणात्—ग. ङ. नाग्रहणात्—च. [4] अथ प्रा—च. [5] प्रागेव—च.

(रु) अथ प्रयाणधर्माः, ते च दीक्षितधर्माधिकारे वचनाददीक्षितप्रयाणेनेष्यन्ते । तत्र समारोपणविधिः प्रागेव दर्शितः । पुनररणिवचनादात्मसमारोपणां नेष्यते रथवचनाच्च न शकटम् ॥

(रु) रथाभावे रथस्याङ्गं किञ्चिद्गृहीत्वा प्रयाति ॥

(रु) प्रयाणमन्त्रोऽयं यजमानस्य ॥

(सू) 'भद्रादभिश्रेयः' इति प्रयाणः ॥ १० ॥ ६ ॥
॥ १८ ॥ १८५१ ॥

(भा) रथाङ्गं वाऽऽदाय गच्छति यजमानो 'भद्रादभि श्रेय' इति ॥

(वृ) यद्या[1]त्मन् समारूढस्स्वयमारोहति नारणीनां नियमः ॥

(सू) 'देवीराप" इत्यपोऽतिगाहते ॥ १० ॥ ६ ॥
॥ १९ ॥ १८५२ ॥

(भा) देवीराप इत्यपः प्रविशति ॥

(वृ) देवी—शति — यदि मार्गे भवन्ति ॥

(रु) यदि पथ्यापस्तरणीयास्स्युस्तदाऽनेन प्रविशति ॥

(सू) 'अच्छिन्नं तन्तुं पृथिव्या अनु गेषं' इति हस्तेन लोष्टं विमृद्गात्यापारात् ॥ १० ॥ ६ ॥
॥ २० ॥ १८५३ ॥

(भा) लोष्टं चूर्णयति यावदुदकमापारात् ॥

1. यद्यात्मनि समारूढोऽयमारोहति नारणीनां नियमः—ख.

(वृ) **लोष्टं-रात्**—पुनःपुनरपि जलसङ्घाते पुनःपुनरेव लोष्टं चूर्णयति ॥

(सू) **'पृथिव्या सम्भव' इति सिकता लोष्टं वा मध्येपारे च न्यस्यति ॥ १० ॥ ६ ॥ २१ ॥ ॥ १८५४ ॥**

(भा) लोष्टं सिकता वा मध्येपारे[1] च 'पृथिव्या' इति क्षिपति ॥

(रु) यथा पांसवस्सन्तताः पतन्ति तथा मृद्नाति, सेतुमेव कृत्वाऽत्येतीति श्रुतेः ॥

(सू) **एवं नाव्यासीनस्तरन् ॥ १० ॥ ६ ॥ २२ ॥ ॥ १८५५ ॥**

(भा) नाव्यासीनोऽप्येवं तरन् अवगाहन्नपि । केचित् नाव्यासीनस्यैवं विधिरित्याहुः ॥

(वृ) **नाव्या-न्नपि**--सर्वथा रथेन रथाङ्गेन वा न वियुज्येत ॥

**[पक्षान्तरे व्यावर्त्योऽशः, स्वमते वैलक्षण्यं च]**

**केचित्-त्याहुः**—'सिकता लोष्टं वा मध्ये पारे च न्यस्यतीत्यस्मिन् पक्षे नाव्यासीनस्य 'देवीराप' इत्यस्य निवृत्तिः । अन्यस्मिन् 'पृथिव्या' इत्यस्य निवृत्तिः । स्वमते तु उभममुभयत्र ॥

(सू) **अरणीभ्यामरणीभिरित्येके ॥ १० ॥ ६ ॥ ॥ २३ ॥ २८५६ ॥**

---

[1] न्यस्यस्य क—ख.

(सू.) रथेन रथाङ्गेन वा न विप्रच्छिद्येत ॥ १० ॥
॥ ६ ॥ २४ ॥ २८५७ ॥

(भा) तरन्नरणीभ्यामरणीभिर्वा यजमानो न विच्छिद्येत इत्येके आहुः ॥

(वृ) तरन्नरणी-माहुः—केचिच्च आप्रयाणान्न विच्छिद्येत इत्याहुः । न रथेन रथाङ्गेन वा नाध्यासीनोऽन्यो वा ॥

इति धूर्तस्वामिभाष्यवृत्तौ दशमप्रश्ने षष्ठः पटलः

---

(रु) नाममधिरुह्य तरन्नप्येवं लोष्टं विमृद्नाति न्यस्यति च ॥
गतः ॥

रथरथाङ्गयोरन्यतरेण गार्हपत्यारणीभ्यामरणीभिर्वा सर्वाभिः पथि कदाचिन्न विप्रच्छिद्येत गतः योऽन्यत्र दीक्षित्वा ततो देवयजनमध्यवस्येत्स एव प्रयायात् । यस्त्वादावेव प्रयायाध्यवसितदेवयजनस्तत्र-दीक्षितो न स ततः प्रयाति । देवयजनाध्यवसानार्थत्वात्प्रयाणस्य । तस्य च कृतत्वादिति भावः । बोधायनस्तु देवयजनदीक्षायामपि तत्र योगक्षेमाक्लृप्तौ देवयजनान्तराध्यवसानार्थं प्रयाणमनुमनुते । यथाहः अथात प्रयाणस्यैव मीमांसा । दीक्षितं वा अयोगक्षेमो विन्दत्यन्यत्र वा देवयजनाद्दीक्षित इति ॥

(सू.) अत्र देवयजनाध्यवसानमेके समामनन्ति
॥ १० ॥ ७ ॥ २५ ॥ २८५८ ॥

(सू.) य इहाध्यवस्ययेत्स प्रयायात् । य आदितो न स प्रयाति ॥ १० ॥ ७ ॥ २६ ॥ २८५९ ॥

(सू) नित्यानि देवयजनानि ॥ १० ॥ ७ ॥ २७ ॥
॥ २८६० ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने एकोनविंशी खण्डिका, षष्ठः पटलश्च

---

(भा) नित्यानि देवयजनानि वक्ष्यन्ते ॥

इत्यापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये दशमप्रश्ने षष्ठः पटलः

---

(रु) वक्ष्यन्त इति शेषः ॥

इति श्रीभट्टरुद्रदत्तविरचितायां आपस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
दशमे प्रश्ने एकोनविंशी खण्डिका ।
इति षष्ठः पटलः

---

[नित्यानां देवयजनानां लक्षणानि]

(सू) दक्षिणत उन्नतमुदीचीनावनतं प्राक्प्रवणं प्रागुदक्प्रवणं वा देवयजनम् ॥ १० ॥ ७ ॥ १ ॥
॥ २८६१ ॥

(भा) दक्षिणत उन्नतं—उच्छ्रितं । उत्तरतो निम्नम् ॥

(वृ) दक्षिणत—निम्नम्—आनुपूर्व्येण । पुरस्तादापो यत्र निर्गच्छन्ति तत्प्राक्प्रवणम् । एवमुत्तरमपि ॥

(सू) यत्र वा बहवो ब्राह्मणास्संराधयेयुः ॥ १० ॥
॥ ७ ॥ २ ॥ २८६२ ॥

(भा) ब्राह्मणा वा यत्र ब्रूयुरत्र यजेति ॥

(वृ) ब्राह्मणा-यजेति—तदनुक्तलक्षणमपि नित्यं देवयजनम् । सोमाधानं वा यत्र करोति यत्र च यागं तदपि नित्यं देवयजनम् ॥

(रु) स्वभावतो यदेवं तन्नित्यं देवयजनमित्यर्थः ॥

यत्र वा बहवो ब्राह्मणास्सदस्यवत्साक्षिणस्संराधयेयुः साधु ते कृत्वा य आराधयेरन् तद्देवयजनं स्यात् । गुणान्तराभावेऽपि गरीयसोऽस्य गुणस्य लाभादिति भावः । तथा च देवयजनाधिकारे ब्राह्मणं, विश्वे ह्येतद्देवा जोषयन्ते यद्ब्राह्मणा इति ॥

(सू) अग्नयो वाव देवयजनम् । यत्र क्वचाग्नीनाधाय यजते देवयजन एव यजत इति विज्ञायते ॥ ॥ १० ॥ ७ ॥ ३ ॥ २८६३ ॥

(भा) केचित् स्थापयित्वाग्नीन् यत्र (कु) तत्र वा यजेतेत्याहुः ॥

(वृ) केचित्-त्याहुः—यत्र क्वचाग्नीनाधाय यजते इत्यस्यादिः । तेषामाधानशब्दस्थापने वर्तते । अस्मिन्पक्षेऽध्यवसानात्प्रागेवाग्निस्थापनम् ॥

(सू) दक्षिणा वाव देवयजनम् । दक्षिणाश्चेत्कल्याणीर्ददाति देवयजन एव यजतीत्येके ॥ १० ॥ ॥ ७ ॥ ४ ॥ २८६४ ॥

(भा) कल्याण्यो दक्षिणा बहुमूल्याः, ता यदि ददाति तदपि देवयजनं नित्यम् ॥

(वृ) तदपि— यत्किञ्चिदपि ॥

(रु) यत्राग्नयः प्रतिष्ठाप्यन्ते तदेव देवयजनम् । अग्निसनाथस्य देशस्य का गुणापेक्षेति भावः ॥

दक्षिणाबाहुल्ये महागुणे सति देवयजनगुणाभावः क्रतोरकिञ्चित्कर इति भावः ॥

[ब्राह्मणोक्तानां पुरोहविरादीनां काम्यानां देवयजनानां विधानम्]

**(सू) पुरोहविषीति काम्यानि ॥ १० ॥ ७ ॥ ५ ॥ ॥ २८६४ ॥**

(भा) काम्यानि पुरोहविषीति प्रातरनूच्यन्ते यानि शस्त्राणि तान्यपि ब्रुवन् अग्निमुदकमादित्यं वाऽभिविपश्यति, पुरोहविषि देवयजने । दिवा[1] प्रातरनुवाकोऽस्मिन् विधौ[2] । यथा[3] पन्थानं वा अवटं वा शकटं[4] वा न निर्गच्छन्त्यन्तराऽग्न्योर्देवयजनस्य च । एतदाप्तं देवयजनम् । व्यतिषक्ता ओषधयो मिश्राः । ऋक्षं तृणम् । व्यावृत्कामः । यः पाप्मना[5] पृथक्त्वमिच्छति स व्यावृत्कामः । एकपात्रे येन सह भोजनमिच्छन्ति ज्ञातयः सह शय्यां वा तुल्यं विवाहं न कुर्वन्ति । तत्राऽऽहवनीयस्य पूर्वं निम्नं, अपरतश्च प्राजहितम् । तद्व्यावृत्तं कार्यं कृत्रिमम् ॥

[श्रौतप्रातरनुवाकपदस्य यौगिकत्वं, तत्र निदानं च]

(वृ) काम्यानि-षीति—'पुरो हविषि देवयजने याजयेत्' इत्यादि ब्राह्मणोक्तान्यनुसन्धेयानि । प्रातरनूच्यन्ते यानि शस्त्राणि तान्यनुब्रुवन् अग्निमाहवनीयमुदकमादित्यं चाभिविपश्यति । तत्पुरो-

---

[1] दिवा वा–ख. [2] विधौ पन्थानम्–ख. [3] यथाऽनध्वा अवटं. [4] वा रथो वा–ङ. च. [5] ना गृहीतः–पृ. क. ग.

हविर्देवयजनम् । इह प्रातरनुवाकमनुब्रुवन्निति प्रातरनुवाको नोच्यते, तस्य पुरोदयात्समाप्तेः । अतो यौगिक एवायं शब्दः, आदित्यमभिविपश्यतीति दर्शनात् । अथवा दिवा वा प्रातरनुवाकोऽस्मिन् विधौ । कार्यं कृत्रिमम् न तु स्वयमेवंविधं ग्राह्यम् ॥

[निर्व्रस्कपदनिर्वचनम्]

(सू) निर्व्रस्केऽभिचरन् यजेत ॥ १० ॥ ७ ॥ ६ ॥ ॥ २८६५ ॥

यस्माद्वृक्षान्वल्मीकानिति निर्हरेयुरथो अभिखनेयुः ॥ १० ॥ ७ ॥ ७ ॥ २८६६ ॥

(भा) वृक्षाश्च वल्मीकाश्च यतो निर्ह्रियन्ते तन्निर्व्र[1]स्कम् ॥

(वृ) अथो–नेयुः—दक्षिणत उन्न[2]तादि यथा भवति ॥

(रु) देवयजनानि " पुरोहविषि देवयजने " इत्यनुवाकेऽधीतानि यथा ब्राह्मणमनुसंधेयानीत्यर्थः ॥

किमेतन्निर्व्रस्कं नाम । तदाह ॥

(सू) परोक्षं गुहावने याजयेदभिशस्यमानम् ॥ १० ॥ ॥ ७ ॥ ८ ॥ २८६७ ॥

(भा) गुहा[3]वनं–यत्र [4]यजन्तं यथा लो[5]को न पश्यति ॥

(सू) परोक्षं पृष्ठान्युपेयुः सर्वमुपांशु क्रियेत । स्थले यजेत ॥ १० ॥ ७ ॥ ९ ॥ २८६८ ॥

---

[1] निर्वस्कम्–ग. [2] तानि यथा भवन्ति–च. [3] गुह्यं वनं. [4] न यत्र यजते–ग. [5] यथा लोका न पश्यन्ति–क. ख. ङ. च.

(भा) परोक्षं पृष्ठानि । सर्वं साङ्गमुपांशु करोति । नित्यं चार्थं साधयति । यत्र स्थलमुच्छ्रितं तत्र यजेत ॥

[त्रिवृदादिस्तोमगानरहितमन्त्रत्वमित्येव परोक्षपृष्ठपदलक्षणम् ]

(वृ) परोक्षं-नि—त्रिवृदादयस्तोमाः ये यास्वृक्षु न गीयन्ते तत् परोक्षपृष्ठं तथा भवति ॥

सर्व-ति—न प्रधानमात्रम् ;—शुद्धश्च भवति यजमानोऽभिशंसनात् ॥

[' नित्यं चार्थं साधयति ' इत्याकारकभाष्यफलितार्थ-स्फुटीकरणम् ]

नित्यं-धयति—गुणफलत्वाच्छुद्धेः, अतो यश्शुद्धिं क्रतुफलत्वेनानुकामयते न तस्यैष विधिः । अत्र भाष्यकारेणैवमुक्तत्वात् निर्व्रस्कयं क्रतुनाभिचरतो देवयजनमिति मतम् ॥

(सू) यः कामयेतोभयेषां देवमनुष्याणां प्रकाशं गच्छेयमिति न प्राचीनं देवयजनाद्देवयजनमुच्छिꣳषेत् ॥ १० ॥ ७ ॥ १० ॥ २८६९ ॥

(भा) देवयजनस्य पुरस्ताद्देवयजनमात्रोद्देशो न स्थाप्यते ॥

(वृ) देव-स्थाप्यते—प्रकाशकामो देवमनुष्याणां, प्रकाशोपपत्तिलिङ्गात् ॥

(रु) यस्माद्वृक्षादीन् निर्वृश्च्यापास्य तन्मूलानि च खात्वा देवयजनं कुर्युः तन्निर्व्रस्कमित्यर्थः ॥

यमकर्तारं कर्तारमभिशंसन्ति सोऽभिशस्यमानः। तं गूढे महाजनस्य परोक्षं याजयेत् ॥

तस्य पृष्ठान्यपि परोक्षमुपेयुः। न स्वास्वृक्षु गायेयुः। सर्वं च साङ्गं प्रधानमुपांशु क्रियेत। समुच्छ्रितभूमौ यजेत ॥

उभयोश्श्लोकयोर्यः ख्यातिकामः यस्य पुरस्तादन्यस्य देवयजनाय पर्याप्तस्तदर्हश्च देशो न लभ्येत तादृशं देवयजनं गृह्णीयात्। नित्यस्त्वयं गुणः कल्पान्तरकारमतात् ॥

[सोपपत्तिकं यागायोग्यप्रदेशप्रदर्शनम्]

(सू) यत्रापो देवयजनं चान्तरेण पन्था अभिविधावेत्, तस्मिन् याजयेद्यङ्कामयेत नैनमुत्तरो यज्ञ उपनमेदिति ॥ १० ॥ ७ ॥ ११ ॥ २८७० ॥

(भा) उदकदेवयजनयोर्यत्र पन्था भवति, तत्र यागप्रतिषेधः ॥

(वृ) उद–षेधः—अध्वर्युकामनानुपपत्तेः देवयजनाध्यवसानस्य। याजयेत्–यजेतेत्यर्थः ॥

[उपपातकभूतस्य सोमविक्रयस्य लुब्धकर्तृकत्वम्]

(सू) कौत्साद्राजानं क्रिणीयादन्यस्माद्वा ब्राह्मणादित्युक्त्वाप्याह अप्यब्राह्मणादिति ॥ १० ॥ ७ ॥ ॥ १२ ॥ २८७१ ॥

(भा) कौत्सः–कुत्सगोत्रः सोमो विक्रेतव्य इत्यविधानात् सोमविक्रय उपपातकम् लुब्धः करोति, अप्यब्राह्मणाच्छूद्रादपि। तस्य यावदर्थमध्ययनम् ॥

[उपदेशमते कौत्सशब्दस्वारस्यम् ]

(वृ) कुत्सगोत्रः—सोमविक्रयकुत्सितकर्मेत्युपदेशः ॥

[सोमविक्रयस्य उपपातकत्वोपष्टम्भकयुक्ति-
हेत्वाद्युपपादनम् ]

सोमो–धानात्—अस्यार्थः–सोमविक्रयिणोऽ[1]न्ननिषेधात्, प्रायश्चित्तदर्शनाच्च सामान्यतो निषेधेऽपि अग्नीषोमीयपश्वालम्भवदत्र क्रयविधानात्सोमविक्रयणं विहितं न मन्तव्यम् । सोमो विक्रेय इत्यविधानात् । नाग्नीषोमीयपश्वालम्भवद्विधिस्पर्शः । अतस्सोमविक्रय उपपातकम् । एवं तर्हि निषेधे को वि[2]क्रिणीयात्सोमं, येन क्रयस्सम्पद्येत । उच्यते ;—

लुब्धः करोति—यो लोभेन निषिद्धमपि करोति, ते च बहवस्सम्पद्यन्त एव ॥

['अन्यस्मात्, अब्राह्मणात्' इति सौत्रपदयोरसङ्कीर्णार्थावबोधकत्वव्यवस्था]

(वृ) अप्य–च्छूद्रादपि—अन्यस्माद्ब्राह्मणा[3]दिति सूत्रमेवं व्याचष्टे । ब्राह्मणादन्यस्मात् क्षत्रियादेः इति विधाय अप्यब्राह्मणादिति वचनं शूद्राभिप्रायमिति ॥

[सौत्रवर्णपदापिपदयोस्सत्त्वेनाधिकार्यनधिकारि-
व्यवस्थापनम् ]

. तस्य–नम्—क्रय इत्येवमादीनाम् । अत्र वर्णग्रहणादनुलोमानामपि द्विजत्वेन प्राप्तिः । शूद्रजस्तु निषिध्यते । तस्मिन् अपिशब्दग्रहणात्ते उत्कृष्टा एव गृह्येरन् ॥

[1] श्राद्धे निषेधात्–ग. [2] विक्रीणादि–ग. च. [3] दित्याहेति वचनं–ग.

(सू) उत्तरवेदिदेशे उपरवदेशे वा लोहितं चर्माऽऽनडुहं प्राचीनग्रीवमुत्तरलोमास्तीर्य दक्षिणे चर्मपक्षे राजानं निवपति । उत्तरस्मिन्नुपविशति सोमविक्रयी ॥ १० ॥ ७ ॥ १३ ॥ २८७२ ॥

(भा) चर्मपक्षो दक्षिणश्चर्मभागः ॥

(रु) यत्र देवयजनस्य देशस्य संनिकृष्टानां च जलाशयानां मध्ये महापथो याति तत्र याजयेदित्यर्थः ॥

कुत्सगोत्राद्ब्राह्मणात्क्रयः प्रशस्ततरः । तदनु ब्राह्मणान्तरात् । तदनु वर्णान्तरेभ्य इत्याह ब्राह्मणमित्यर्थः ।

अथ दीक्षास्वपवृत्तासूत्तरेद्युर्विसृष्टवाचि यजमाने राजानं निवपति ।

[श्रौतविच्त्यिपदघटकविचयपद, क्षोधुकपदादीनामर्थविवरणम् ]

(सू) उदकुम्भं राजानं सोमविक्रयिणमिति सर्वतः परिश्रित्योत्तरेण द्वारं कृत्वा विचित्यस्सोमा ३ इत्युक्तम् ॥ १० ॥ ७ ॥ १४ ॥ २८७३ ॥

(सू) 'सोमविक्रयिन् सोमꣳ शोधय' इत्युक्त्वा पराङावर्तते ॥ १० ॥ ७ ॥ १५ ॥ २८७४ ॥

(भा) सोमे पतितस्य तृणादेरपनयं विचयः ।

क्षोधुकः–क्षुधाशीलः दरिद्रः । सोमविकर्यीत्यनुवादः । अक्षन्नापन्नं पतितं, अक्ष्णोर्यथा विधावति दुःखापयति ॥

(वृ) सोम–दः—दरिद्र एव सोमं विक्रीणीते इति ॥

(रु) उदकुम्भमित्यनुवादात्सोऽप्युपनिधेयः । श्रुतिश्च भवति । "अपामन्ते क्रीणाति" इति । विचित्यस्सोमा इत्युक्तमिति, विचित्यस्सोमा इत्यादिब्राह्मणे यद्विचारपूर्वकमुक्तं तत्तथा कर्तव्यमित्यर्थः । किं तत्र कर्तव्यतयोक्तं तदेव दर्शयति । सोमविक्रयिणमेव सोमशोधनाय नियुज्य स्वयं पराङ्मुखः प्रतिनिवर्तते ॥

[सोमस्य विचयनप्रतिषेधः]

**(सू) न साम्यक्षमुपेयात्, न यजमानस्सोमं विचिनुयात् ॥ १० ॥ ७ ॥ १६ ॥ २८७५ ॥**

(भा) साम्यक्षं–समीपगतस्येक्षणं न तत्कुर्यादध्वर्युः । अभावेऽपि सोमविक्रयिणो यजमानादिभिः सोमो न विचेयः ॥

(वृ) न सा–क्षं—समीपगतस्येक्षणं न कुर्यात् ।

अभावे–यः—अत्र सोमग्रहणात्सोममेव यजमानादयो न विचिनुयुः । सोमप्रकृतिषु बालतृणादिषु न प्रतिषेधः ॥

(रु) पराङ्गावृत्तश्शोध्यमानस्य राज्ञस्साम्यक्षं नोपेयात्, कटाक्षेणेक्षेतेत्यर्थः । साम्येक्ष्यमिति पाठे सामिस्तोकमीक्षित इति सामेक्षः, तस्य भावस्साम्येक्ष्यं, तन्नोपेयादिति । तृणाद्यपनयनेन शोधनं विचयनम् ॥

[अध्वर्युपुरुषादीनामुपद्रष्टृत्वनिषेधः]

**(सू) नास्य पुरुषो नाध्वर्युः नाध्वर्युपुरुषो राज्ञो विचीयमानस्योपद्रष्टारः स्युः ॥ १० ॥ ७ ॥ १७ ॥ ॥ २८७६ ॥**

(भा) उपद्रष्टारोऽध्वर्य्वादयो न स्युः । अन्येनापि विचयने क्रियमाणे उपदेशका भवेयुरुपद्रष्टार एव ते इति ॥

(वृ) उप-न स्युः—अध्वर्यूणां च तत्पुरुषाणां च निषेधः।

[पूर्वोक्तविचयननिषेधस्यार्थसिद्धत्वकथनम्, तत्र विनिगमकं च]

उपदेशो-एत इति—अन्येन विचयने क्रियमाणे भवेयुरुपद्रष्टार इत्युपदेशः। अध्वर्युपुरुषविचयनप्रतिषेधार्थत्वान्नञ उभयनिषेधे नञ[1] आवृत्तौ पुनरुक्तिप्रसङ्गाच्च। पूर्वस्मिन् पक्षे उपदर्शनप्रतिषेधादेवार्थसिद्धो विचयननिषेध इति॥

[यजमानोपस्थानानन्तरमनुष्ठेयांशविशदीकरणम्]

(सू) 'अहं त्वदस्मि' 'आजुह्वान' इत्येताभ्यां आहवनीयं यजमान उपतिष्ठते॥ १०॥७॥ १८॥ ॥ २८७७॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने विंशी खण्डिका

---

(भा) ऋग्भ्यामुपतिष्ठते यजमानः॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने विंशी खण्डिका

---

(वृ) ऋग्भ्या-मानः—ऋगिति ज्ञानपूर्वकमित्यर्थः। विवक्षितं देवयजनमालो(क्या)च्याचम्याध्यवसाय यावदपेक्षितं दीक्षितविमितं कृत्वा शौल्बेन विधिना विहारं साधयित्वा यथासमारोपितं मथित्वोपावरुह्य चायतनेषु स्थापयित्वा मन्थनप्रभृत्यायतननिधानान्तं एकैकस्य निर्वर्त्य-

---

[1] आवृत्तौ वा राश इति-**क. च.**

मानजपश्च सर्वेषाम् । नान्वाहा[1]र्यस्याहरणम् । आहरणपक्षेऽपि दीक्षणीयायामेवाहृतत्वात् । नात्र प्रयाणे वास्तोष्पत्यवसितहोमौ । यज्ञार्थत्वाद्गमनस्य, न च विहीनमन्वाहरेयुरित्यादिविधिः अपूर्वत्वादस्य प्रयाणस्य ।

[अध्यवसानप्रणयनपक्षाभ्यामुन्नेयांशाः]

अध्यवसानान्तो विधि[2]र्दीक्षितस्य पूर्वमध्यवसानपक्षे । न प्रयाणं सधर्मकम् । सा[भा][3]धाने अध्यवसानान्ते देवयजनजोषणम् । [4] आहिताग्नेर्न वास्तोष्पतिर्नावसितहोमः । धार्याणां पृथगरणीषु समारोपणम् । प्रणयनपक्षे गार्हपत्यस्यैव । दक्षिणाग्नेः प्रत्यक्षनयनम् । आहरणं मन्थनं वा यथायोनि यथाविधि देवयजनाध्यवसानान्ते सङ्कल्पादिः । गृहे सङ्कल्प्य अध्वर्य्वादीन् वृत्वा देवयजनयाच्ञान्ते गमनमिति केचित् ॥

इति श्रीरामाग्निचिद्वृत्तौ दशमप्रश्ने विंशी खण्डिका

---

(रु) विचिनुयादिति सर्वत्रान्वयः । सहप्रवृत्तिसंभवादत्र यजमानादीनां निषेधः । अध्वर्युग्रहणमादरार्थम् । एते तु समीपस्थिताः पश्येयुः । तदपि नाध्वर्युः करोति, पराङावर्तेत इति वचनात् । केचित्तु नोपद्रष्टारस्स्युरध्वर्य्वादय इति योजयन्ति । तदयुक्तं अस्मिन्वाक्यान्तराश्रवणात् प्रकृतानां विचयननिषेधार्थत्वात् , पूर्ववाक्यैस्सहास्य समन्वयवैयर्थ्याच्च । गतः ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमे प्रश्ने विंशी खण्डिका

---

[1] र्यपचनस्याहरणपक्षे--**ग.** [2] दीक्षणीयस्य--**च.** [3] धाने--आधानात्प्रागेवाध्य--**ग. च.** [4] आहिताग्नेस्तु--वास्तो--**ग.**

[प्रायणीयायाः सोमक्रयाङ्गत्वप्रयाणाङ्गत्वयोर्व्यवच्छेदः]

(सू) प्रायणीयायास्तन्त्रं प्रक्रमयति ॥ १० ॥ ७ ॥
॥ १९ ॥ २८७८ ॥

(भा) ततः [1]प्रायणीया। न तु सोमक्रया[2]ङ्गम्। अतः श्वोभूते दशपेये क्रियते उपस्थानम्। प्रयन्ति अनया यज्ञमिति प्रायणीया ॥

(वृ) उपस्थाय प्रातः–ततः प्रायणीया–न तु–ङ्गम्—उपस्थानम्, मन्त्रलिङ्गात्।

अतः–नम्—नास्ति तत्र सोमक्रयः। सह सोमे क्रीणात्यभिषेचनीयाया दशपेयाय चेत्यभिषेचनीय एव क्रीतत्वात्।

प्रयन्ति–णीया– न तु प्रायणीया प्रयाणाङ्गमिति मन्तव्यम् ॥

[परिस्तरणोत्तरमनुष्ठेयोंऽशः]

(सू) वेदं कृत्वाऽग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते। यथार्थं पात्राणि प्रयुनक्ति स्थालीं कपालानां स्थाने। निर्वपणकालेऽदित्यै पयसि चरुः प्रायणीयः ॥ १० ॥ ७ ॥ २० ॥ २८७९ ॥

(भा) वेदं कृत्वाऽग्नीनिति पौर्णमासप्रदर्शनार्थः। वेदं कृत्वा न वेदिः ॥

[पथ्यायाः स्वस्तेरामावास्यतन्त्रकर्तव्यव्यवच्छेदे उपपत्त्यादिकम्]

(वृ) वेदं कृ–नार्थम्—पथ्यायाः स्वस्तेर्मुख्यत्वात्। तस्य च पशुप्रभवत्वेन सान्नाय्यविकारत्वात् नामावास्यं तन्त्रं भवेत्। अथवा दर्शपूर्णमासाविष्टीनाम्प्रकृतिरित्य[3]विशेषेण प्राप्तेरन्यतरनियमार्थमिति ॥

---

[1] प्रायणीयायाः-ख. [2] ङ्गमेव। श्वोभूते-ख. [3] रित्यवशेषप्राप्ते-च.

तेदं न वेदि—पयसः प्रणयनं प्रणीतावत्, देवस्त्वेत्युत्पवनम् ॥

(सू) प्राक्सम्प्रैषात्कृत्वा पत्नीवर्जं सम्प्रेष्यति ॥१०॥
॥७॥२१॥२८८०॥

(भा) पत्नीवर्जं सम्प्रेष्यतीति वचनान्नियतस्सम्प्रैषः। केचित्तु अन्वासनमपि पत्न्याः नेत्याहुः॥

(वृ) पत्नी–षः—अन्यत्रा[1]ऽऽतिथ्यादौ।

केचि–हुः—पत्नीसन्नहननिषेधात्। सम्प्रैषे 'पत्नीꣳ सन्नह्य' इत्यस्यार्थलोपान्निवृत्तेः पत्नीवर्जनमन्वासनादावर्थवद्भवतीति ॥

(रु) प्रतिपद्यन्तेऽनया यज्ञं दीक्षिता इति प्रायणीया। तन्त्रं बर्हिराहरणादि ॥

वेदानन्तरं परिस्तरणनियमेन पौर्णमासविकारता तन्त्रस्य प्रदर्श्यते इतरथा वेदानन्तर्यानियमात्परिस्तरणस्य ॥

निर्वपणकालेऽदित्यै पयसि चरुः कार्यस्स च प्रायणीय इत्यनूदितः। तत्प्रायणीय इति ब्राह्मणव्याचिख्यासयेति द्रष्टव्यम् ॥

सन्नहनप्रतिषेधादेव सिद्धे पत्नीवर्जवचनं विस्पष्टार्थम्। तस्याश्च सोमार्थमासीनत्वादासनमन्त्रनिवृत्तिः। अत एव देशान्तरोपवेशने पुनर्मन्त्रजपं वक्ष्यति। पत्नी शालामुखीयमुपोपविश्य सुप्रजसस्त्वा वयमिति जपतीति ॥

---

[1] अनियतोऽन्यत्र–ग. दावेवार्थ–ग. च.

[सौमिकतदन्यवेदेरन्यथालक्षणत्वेऽपि किञ्चि-
दर्थसाधकत्वम् ]

(सू) याः कृतायां वेद्यां चोद्यन्ते सैव तासां वेदिः ।
याः स्तीर्णे बर्हिषि तदेव तासां बर्हिः ॥ १० ॥
॥ ७ ॥ २२ ॥ २८८१ ॥

(भा) [1]याः कृतायां वेद्या चोद्यन्ते सौमिक्यामितरस्यां वा सैव तासां वेदिरुपकरोति । अन्यथालक्षणापि । स्तीर्णे बर्हिष्यागन्तूनामन्यथा-लक्षणमपि बर्हिरर्थं साधयति । वैश्वा[2]नर्याऽऽ[3]ग्निकी वेदिरुत्सर्पिणा-मयने प्राजापत्यस्य पशोर्बर्हिश्च वेदिश्च । न्यायोऽयमिति कृत्वा इहापि संसर्गेष्ट्यादीनां प्रायणीया वेदिः बर्हिश्च प्रसज्यते ।

(धू) याः कृतायां–करोति––यदर्थमसौ कृता, तत्कर्मणः परि-समाप्तेः प्रागन्यथालक्षणापि । यथा सौमिकी ; पशोरिष्टीनां वा अन्यथा लक्षणेऽपि बर्हिषि स्तीर्णे याश्चोद्यन्ते, तासामागन्तूनां अन्यथालक्षण-मपि बर्हिःकार्यं करोति ।

प्राजापत्य–ज्यते—अन्यथालक्षणे हि तत्र बर्हिर्वेदी इति न्यायानु[4]वादः । न्याय[5]त्वादेव दीक्षणीयातिथ्यादिष्वपि भवति । तथाऽ[6]न्यत्र दर्शपूर्णमासादौ ॥

(रु) याः कृतायां महावेद्यामिष्टय उत्पद्यन्ते पशवो वा, सैव तासां वेदिः स्यात् । न त्वन्या दार्शिकी पाशुकी वा कार्या । याः पुन-र्बर्हिष्यास्तीर्णे उत्पद्यन्ते तासां बर्हिरपि तदेव, सोमार्थयोरेव प्रसङ्गात् ।

---

[1] या हृदयः–च. या इष्य–क. ग. [2] र्या नित्या वेदिः–क. ख. याग्निक्या वेदिः–ङ. [3] या आग्निकी वेदिः–ग. [4] वादात्–क. [5] यागत्वादेव–च. [6] त्रापि दर्शपूर्णमासादिष्वपि–च.

यथा आमिक्षया वैश्वानरीयादिवेदिस्सौम्यचरोः, सवनीयस्य सवनीयानां च बर्हिरपीत्यादि ॥

[आद्यचतुर्गृहीतग्रहणादिफलम्]

(सू) **आज्यग्रहणकालेऽननूयाजे प्रायणीये चतुर्जुह्वां गृह्णाति। चतुरुपभृति समानयनार्थम्। अप्रयाज उदयनीये न जुह्वां गृह्णाति, चतुरुपभृत्यनूयाजार्थम्। षड्ढोत्रा प्रायणीयमासादयति। प्रयाजवदननूयाजमित्युक्तम् ॥ १० ॥ ७ ॥ २३ ॥ ॥ २८८२ ॥**

(भा) अननूयाजे प्रायणीये यदुपभृति गृह्णाति। 'प्रयाजानूयाजेभ्यस्तत्' इति लिङ्गात्। द्वितीयं चतुर्गृहीतं तु समानयनार्थं गृह्यते।

अप्रयाज[1] उदयनीये नाऽघारार्थं गृह्यते जुह्वां तस्याः सन्निकृष्टत्वात्। [2]यज्जुह्वां गृह्णाति' 'प्रयाजेभ्यस्तत्' इति चतुरुपभृति अनूयाजार्थं मन्त्रैः ॥

['उदयनीयमभिनिर्वपति' इत्यत्राभिनिर्वपतीति पदोन्नेयांशः]

षड्ढोत्रा चतुरेवासाद्यते न ध्रुवा। पथ्यास्वस्त्यादीनां प्रधानानामिज्या। इमे वै प्रयाजाः प्रायणीयायाम्। अमी अनूयाजा उदयनीयायाम्। सन्ततिः—अविच्छेदो यज्ञस्य। 'तत्तथा न कार्यम्' इत्युत्तरविधिप्रशंसार्था निन्दा। प्रायणीयस्य निष्कासशेष उदयनीयस्य पाकः; न निर्वापः, यजत्यर्थत्वात्। भरद्वाजस्तु निष्कासे स्थालीगते निर्वापः, तेनाप्यविच्छित्तिर्यज्ञस्य ॥

---

[1] अप्रयाजसमानयनमाघारार्थं गृह्यते—च. [2] यज्जु—ङ.

[प्रायणीयोदयनीययोर्लक्षणम्]

(वृ) अननू यणीये—प्रायणीयं हि कर्म प्रयाजवदननूयाजं, उदयनीयमनूयाजवदप्रयाजम् । उभयवच्च भवति । तत्र क्रियमाणे ॥

अप्र–जत्वात्—आघारस्याप्रयोजकत्वात् ।

[अप्रयाजपक्षोऽन्यविशेषांशः]

यज्ञु–तदिति— वचनादप्रयाजपक्षे आघारो लुप्यते । सर्वत्रापि (चतुरुप) मन्त्रैः उत्तरैश्चतुर्भिश्च । अप्रयाजपक्षे न जुह्वाः सादनाभिमन्त्रणे । 'एता असदन्' इत्यनूहेन भवति स्रुवेण सह स्रुचोः ॥

षड्ढोत्रा–ध्रुवा— प्रियेणेत्यस्य प्रत्याम्नानात्तस्यापि ध्रौवस्य षड्ढोत्रा सादनं भवति यतः—यस्मात् ;

पथ्या–मिज्या—भवति । विकृतौ चोद्यमानं प्रधानगामीति । प्रयाजवदननूयाजं प्रायणीयं कार्यमित्युक्तं ब्राह्मणमनुसन्धत्ते ॥

इमे वै प्र–यायाम्–न निर्वापः; उदयनीयमभिनिर्वपतीत्यस्य यजत्यर्थत्वात् ॥

तेनाप्य–स्य—द्वयोर्हविषोस्सम्बन्धात् ॥

(रु) पाक्षिकीमननूयाजतां प्रायणीयस्य दर्शयिष्यति । तत्रोपभृत्यपि चतुःपञ्चकृत्वो वा प्रयाजार्थं प्रथमगणमेव गृह्णाति न द्वितीयमननूयाजार्थमित्यर्थः ॥

अत्रैव प्रसङ्गात्समानब्राह्मणीयत्वाच्च उदयनीयस्यापि विधिः प्रदर्श्यते । तस्याप्रयाजत्वपक्षे द्वितीयमेव गणमुपभृति गृह्णाति न प्रथमम् । न जुह्वां गृह्णाति ; यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदिति लिङ्गादिति

भावः। स्रुच्याघारस्तु ध्रौवेण कार्यः। चरुमिति शेषः। ब्राह्मणे प्रायणीयस्याननूयाजत्वं उदयनीयस्याप्रयाजत्वं उभयस्योभयत्वं च विकल्पेनोक्तमनुसंधातव्यमित्यर्थः। तत्र यदाऽननूयाजः प्रायणीयस्तदा विंशतिदारुरिध्मः कार्यः॥

[आज्यभागानितिपदजन्यपौनरुक्त्यपरिहारः]

(सू) **चतुर आज्यभागान् प्रतिदिशं यजति पथ्यां स्वस्तिं पुरस्तादग्निं दक्षिणतस्सोमं पश्चात्सवितारमुत्तरतः। मध्येऽदितिं हविषा ॥ १० ॥ ७ ॥ ॥ २४ ॥ २८८३ ॥**

(भा) आज्यभागाः—आज्यह[1]विषः उपांशुयाजविकाराः। उपांशुत्वं चैतेषामिति ॥

(वृ) **आज्यभा–षः**—सरस्वत्याज्यभागेतिवत् ॥

**उपांशुयाजविकाराः**—पथ्यास्वस्त्यवदानात् प्राक्पञ्चहोता यजमानस्य। दब्धिरसीति हुतानुमन्त्रण[2]म्। उपदेश आज्यभागविकाराः। प्रधानान्यपि पञ्च देवता यजतीत्यादि तुल्यत्वात्। सर्वेषामाज्यहविष्ट्वे सिद्धे पुनराज्यभागानिति वचनमाज्यभागधर्मप्राप्त्यर्थमिति। अतः पथ्यायाः स्वस्तेरहं देवयज्यया चक्षुष्मान् भूयासमिति, अग्नेस्सोमस्याहं देवयज्यया सोमस्य, नोभयोस्सह ॥

**उपांशुत्वं चैतेषाम्**—उपदेशमते—

(रु) चतुर आज्यभागानिति सरस्वत्याज्यभागेतिवत् द्रव्यचोदना, न त्वाज्यभागकर्मविवृद्धिविधिः, मध्येऽदितिं हविषेति व्यतिरेकवचनात्।

---

[1] हविष्का.–क. च. [2] णं च–क. ग. च.

पञ्च देवता यजतीति पञ्चानां प्राधान्यश्रुतेश्च। अतः पृथगाज्यभागाभ्या-मिष्ट्वा उपांशुयाजधर्मेणैताश्चतस्रो देवता यष्टव्याः। अथाज्यभागाविष्ट्वे-त्येव कात्यायनः। अन्यत्तु मतं, आज्यभागदेवतयोरेतास्वन्तर्भावात्। चक्षुषी वा एते यज्ञस्येत्याज्यभागसाम्यान्न पृथगाज्यभागौ भवत इति। भारद्वाजश्चाह, आज्यभागाविष्ट्वा यजेतेत्याश्मरथ्यः तास्वेता भवत इत्या-लेखन इति। तथा शंय्वन्तेयमनाज्यभागेत्याश्वलायनः। अत्रैव शाखा-न्तरीयां विधिमाह ॥

[आश्वलायनकात्यायनमतभेदेनाऽऽज्यभागसदसद्भावपक्षौ]

(सू.) अदितिमिष्ट्वा मारुतीमृचमनूच्याऽऽज्येन चरु-मभिपूर्यैता देवता यजति। ध्रौवाद्वा। स्विष्ट-कृतं षष्ठम् ॥ १० ॥ ७ ॥ २५ ॥ २८८४ ॥

(भा) अदितिमिष्ट्वा मारुतीमृचमन्वाहेति, 'मरुतो यद्ध वो दिवः' इति। केचिद्विध्यन्तरमित्याहुः। अदित्या यागं प्रथमं कृत्वा मारुती[1]-मुक्त्वाऽऽज्येन पूरयित्वा चरुमेता देवताः पथ्यास्वस्त्याद्या यजति सवित्रन्ताः; ततो नारिष्ठादि, स्विष्टकृतं च षष्ठम्। तस्मादेवा[2]ज्याद्यु-पस्तरणाभिघारणा[3]नि। न त्वयं विधिस्स्यात्; श्रूयमाणासु शाखा-स्वदर्शनात्। अतः पथ्यास्वस्तिरेव प्रथमा। उत्तमा अदितिः। ध्रौवेण तु विकल्पश्चरुपूरणस्य। तदाऽपि ध्रुवाया ग्रहणमाघारनारिष्ठा-द्यर्थम्। आज्यभागनिवृत्तिस्तु शंयुवन्तेयमनाज्यभागेत्याश्वलायनवचनात् कात्यायनमतात्तु क्रियेते आज्यभागौ। ततः पथ्यास्वस्त्या ॥

---

[1] तीमृच-क. [2] ज्य उप -ग. [3] णे-ख.

(वृ) केचिद्विध्यन्तरमित्याहुः—'मध्येऽदितिꣳ हविषा' इत्येवमन्त एको विधिः। 'आदितिमिष्ट्वा' इत्यारभ्यान्यो विधिरिति। अदितिपूर्वकं क्त्वाश्रुत्यनुविधानेन ॥

**अदित्या यागं-धारणानि**—ध्रुवातुल्यत्वात्। ध्रौवेणाऽऽज्येन कृत्स्नेनाभिपूरणं चरोः। 'आ प्यायताम्' इत्याप्याय्य पूरणम् ॥

**न त्वयं-धिस्स्यात्**—पूर्वस्मादन्यः ॥

**श्रूय-नात्**—वा शब्दप्रयोगाच्च ॥

**अतः पथ्या-णस्य**[1] न क्रमविशेषेण मारुतीमृचमनूच्य प्रत्येती[2]त्यन्वयः ॥

**तदाऽपि ध्रुवा-ष्टाद्यर्थम्**—स्वमते ध्रौवादेव च नारिष्टहोमाः। आज्यग्रहणकाल एवाभिपूरणं चरोः। 'सुप्रजास्त्वाय' इत्यादिभिः ॥

**आज्यभाग-भागौ**—यदाऽऽज्यभागौ तदा ध्रौवायास्तौ यजेत ॥

(रु) मरुतो यद्ध वो दिव इति प्रतिपदोक्ता मारुती बोधायनेन। प्रथममेवादितिमिष्ट्वा मारुतीमृचमनूच्य तत आज्येन चरुमभिपूर्य तस्माद्ध्रौवाद्वा गृहीत्वैता देवता यजति, ततस्स्विष्टकृतमित्यर्थः। तत्र तु स्विष्टकृतं षष्ठमिति नित्यानुवादः प्राप्तत्वात्। पूर्वस्मिन् कल्पे ब्राह्मणोक्तापि मारुत्यनुक्ता, मन्त्रसमाम्नायेऽनाम्नादिति द्रष्टव्यम्। तथा च सत्याषाढभारद्वाजाभ्यामपि तमेव कल्पमुक्त्वाऽनुक्तैव मारुती ॥ **अथापरा व्याख्या** ॥ यथोक्तमेवादितिमिष्ट्वा मारुतीमृचमनूच्य शंय्वन्ता संस्थाप्यां-

---

[1] णस्य च-**क.** [2] प्रत्याक्रम्येत्यन्वयः—**ग.**

वेति वक्ष्यमाणेन सम्बन्धः। अथाज्येन चरुमित्यादिना सर्वेषामाज्यविकल्प उच्यते। यथा चरुगताज्येन चैताः पञ्च देवता यजति स्विष्टकृतं च षष्ठमिति। तत्रादितिस्विष्टकृतोरुपस्तरणाभिघारणार्थत्वेनाऽऽज्यान्वयोऽवगन्तव्य इति ॥

[आद्ये चतुर्धाकरणपक्षे यजमानभागराहित्यं ब्रह्मणे ;
तत्रोपपत्तिश्च]

(सू) शंय्वन्ता संस्थाप्या वा ॥ १० ॥ ७ ॥ २६ ॥
॥ २८८५ ॥

(भा) शंय्वन्ता—स ᳚ स्रावान्ता। सूक्तवाकेन प्रस्तरप्रहरणम्। तदेव परिधीति पृथग्ग्रहणात्। अतस्सोमे बर्हिर्ग्रहणे न प्रस्तरो गृह्यते। संस्थाप्या वा ब्राह्मणभोजनान्ता। यज्ञ शंच मे वृष्टिवर्जम्। पत्नीसंयाजान्ते स्रुग्विमोक, सम्पत्नीयहोम, दक्षिणाग्निहोमाः क्रियन्ते ॥

(वृ) शंय्वन्ता—न्ता—परिधिशेषत्वात् ॥

सूक्त–रणम्—कर्तव्यम्। प्रस्तरवर्जितस्यैव बर्हिषः स्थाप-[1]नम् ॥

तदेव–णात्—आतिथ्याबर्हिरुपसदामित्युक्तावपि ॥

अतः–ह्यते—शंय्वन्तायां चरोश्चतुर्धाकरणं त्रेधाकरणं वा। यदि चतुर्धाकरणं शंयुवन्ते भक्षणं ब्रह्मणः। न यजमानभागः। 'स्याद्वा न यजमानभागम्' इति खण्डसंस्थायां निषेधदर्शनात्।

संस्थाप्या–भोजनान्ता—अत्र ब्राह्मणभोजनं पृथक्करणाभावेऽपि भवति यज्ञाङ्गत्वात्।

---

[1] वं कर्तव्यम्–ग.

यज्ञ–वर्जम्—पत्न्यो न संयाज्यन्ते संस्थाप्यामपि संस्थाप्य-पक्षे ॥

(रु) शंय्वन्ता संस्रावान्ता संस्थाप्या वा कृत्स्नसंस्था । संस्थाप्यपक्षे स्रुग्विमोकात्परः आज्येडान्तो विधिर्निवर्तते ॥

(सू) पत्नीस्तु न संयाजयेत् ॥ १० ॥ ७ ॥ २७ ॥
॥ २८८६ ॥

[पत्नीनां कदा संयाजनम्]

(सू) ता उदयनीये संस्थापयेत् ॥ १० ॥ ७ ॥ २८ ॥
॥ २८८७ ॥

(भा) उदयनीये संस्थाप्यपक्षे उदयनीये संस्थाप्यते ॥

(वृ) उदयनीये संयाज्यन्ते, प्रायणीयायां संस्थाप्यायामुदयनीयाऽपि संस्थाप्या ॥

(रु) उदयनीये तु संस्थाप्ये न निवर्तते ॥

(सू) समे वा कार्ये ॥ १० ॥ ७ ॥ २९ ॥ २८८८ ॥
धारयति ध्रौवमाज्यम् ॥ १० ॥ ७ ॥ ३० ॥
॥ २८८९ ॥

(भा) समे वा उभयत्र संयाज्यन्ते ॥

(वृ) समे–ज्यन्ते—पत्न्यः । यदा त्वननूयाजा प्रायणीया, तदोदयनीयाऽनूयाजवती । विपरीते उभे अपि शंय्वन्ते न विरूपसंस्थे [1] कदाचिद्भवतः ॥

[1] तस्य चिह्नवतः–ग.

(रु) उभे वा इष्टी पत्नीसंयाजवत्यौ तद्रहिते वा कार्ये इत्यर्थः ध्रौवधारणवचनात्संस्थाप्यपक्षेऽपि समिष्टयजुर्न क्रियते ॥

[सर्वासु संस्थासूदयनीयप्रयोजकसामग्री-
निधानविधानम् ]

(सू) प्राग्वंशे बर्हिस्स्थालीमनिष्कासितां मेक्षणमि-त्युदयनीयार्थं निदधाति ॥ १० ॥ ७ ॥ ३१ ॥ ॥ २८९० ॥

इत्यापस्तम्बश्रौतसूत्रे दशमे प्रश्ने एकविंशी खण्डिका

इति सप्तमः पटलः

---

(भा) प्राग्वंशे बर्हिस्थालीमनिष्कासितां मेक्षणमप्यनिष्कासितम् ॥

इत्यापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये दशमप्रश्ने एकविंशी खण्डिका.

इति दशमे सप्तमः पटलः

---

(वृ) प्राग्वंशे–सितम्-- बर्हिःप्रस्तरवर्जं स्थालीमनिष्कासितां सलेपाम् । मेक्षणमप्यनिष्कासितम्, उदयनीयार्थं निदधाति सर्वसंस्थास्वपि ॥

इति श्रीकौशिकरामाग्निचिद्विरचितायां धूर्तस्वामिभाष्यवृत्तौ

एकविंशी खण्डिका

दशमप्रश्ने सप्तमः पटलः

(रु) बर्हिः प्रस्तरादन्यत्, तस्य प्रहृतत्वात्। अनिष्कासितां अमृष्ट-लेपाम्। चर्वालोडनदर्वीं मेक्षणं, तदप्यनिष्कासितमेव निदधाति ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
दशमे प्रश्ने एकविंशी खण्डिका
इति सप्तमः पटलः

---

[ध्रौवाप्यायनसाधनं विधाय उपदेशमते तदाप्याय-नराहित्ये निदानविशदीकरणम्]

(सू) प्रायणीयाया ध्रौवादष्टौ जुह्वां चतुरो वा गृहीत्वा तस्मिन् दर्भेण हिरण्यं निष्टर्क्यं बध्वाऽवदधाति 'इयं ते शुक्र तनूः' इति ॥ १० ॥ ८ ॥ ॥ १ ॥ २८९१ ॥

(भा) अष्टगृहीतेऽपि पुनरपरं चतुर्गृहीतं गृह्यते। निष्टर्क्यं शिखा[1]बन्धेन बध्यते ॥

(वृ) अष्ट—गृह्यते—'जूरसि' होमार्थत्वादष्टगृहीतस्यापि, लौकिकेनाऽऽज्येनाऽऽप्यायनमाप्यायतामिति मन्त्रेण। सार्वत्रिकमिति[2] वचनात्। नाप्यायनमित्युपदेशः। ध्रौवादित्येव सिद्धे प्रायणीयाया ध्रौवादिति वचनात् ॥

(रु) अष्टौ चतुरो वा स्रुवानिति शेषः। निष्टर्क्यं शिखाकृतिग्रन्थिः। पूर्ववद्ध्रुवाप्यायनं द्रष्टव्यम् ॥

---

[1] बन्धनमिव बध्यते—क. ग. [2] वचनादाप्यायनमित्युपदेशः—च.

[सोमक्रयण्या लक्षणकथनम्]

(सू) पुरस्तात्प्रतीची सोमक्रयण्यवस्थिता भवत्येकहायनी द्विहायनी वर्षीयसी वा ॥ १० ॥ ८ ॥ ॥ २ ॥ २८९२ ॥

या रोहिणी बभ्रुलोम्नी पृश्निवाला पृश्निशफा शुच्यक्षी श्वित्र्योपकाशा तया क्रीणीयादित्येके ॥ ॥ १० ॥ ८ ॥ ३ ॥ २८९३ ॥

द्विरूपया राजन्यस्य ॥ १० ॥ ८ ॥ ४ ॥ ॥ २८९४ ॥

शुण्ठ्यघीलोधकर्णाऽऽषोडशिनः ॥ १० ॥ ८ ॥ ॥ ५ ॥ २८९५ ॥

(भा) [1] शुच्यक्षी–श्वेताक्षी । श्वित्र्योपकाशा–पाण्डुरमक्ष्णोरन्ते । द्विरूपा–श्वेतकृष्णा । शुण्ठी–अल्पकाया । अघीलोधकर्णा–अपरिकर्णिका ।

(वृ) प्राग्वंशाभ्यन्तरे [2] पुरस्तादाहवनीयस्य प्रत्यङ्मुखी सोमक्रयणी [3] संस्थाप्या । कामादेकद्वारे सर्वतः परिश्रिते बहिस्स्थितायामीक्षणानुपपत्तेः ।

श्वित्र्यो–रन्ते—यस्यास्सा तथोक्ता ।

द्विरूपा–तकृष्णा—नान्य[4]रूपेण ॥

---

[1] श्वित्रयक्षी–ख. ग. ङ. च. [2] रे बद्धा पु–ग. [3] णी गौ; स्थाप्या–ग. [4] न्यप्रकारेण–क. ग. च.

(रु) गौरिति शेषः । अकूटत्वादीनि गोरूपाणि यथाब्राह्मणमनुसन्धेयानीति शेषः । तत्र कूटत्वादीनि पशौ व्याख्यातानि । तथा श्वेतां कृष्णामुभयरूपां च निन्दित्वा तत उक्तं ब्राह्मणे, अरुणया पिङ्गाक्ष्या क्रीणातीति तदप्यनुसन्धेयम् । रोहिणी स्वतो रक्तवर्णा । बभ्रुलोम्नी, नानावर्णैर्लोमभिः क्वचित्क्वचिदुपेता । पृश्निवाला श्वेतपृषत्कलापा । शुच्यक्षी श्वित्र्योपकाशा, श्वित्रसमानवर्णा अपाङ्गप्रदेशे । या त्वेवंभूता साऽरुणया पिङ्गाक्ष्या विकल्प्यते । शुण्ठा—अल्पकाया । कर्णस्योपरि विक्षितं यस्यास्सा अधीलोधकर्णी ॥

[तदाज्यहवने वैशेष्यम्]

(सू) तदाज्यं सोमक्रयणीमीक्षमाणो जुहोति 'जूरसि' इति ॥ १० ॥ ८ ॥ ६ ॥ २८९६ ॥

(धू) प्रतीचीं स्थापयित्वेक्षमाणो जुहोति सोमक्रयणी देवता ॥

[कुत्र ध्रौवसमापनम]

(सू) अपरं चतुर्गृहीतं गृहीत्वा 'शुक्रमसि' इति हिरण्यं पश्चादुद्धृत्य 'वैश्वदेव॑ हविः' इत्याज्यमवेक्ष्य 'सूर्यस्य चक्षुरारुहं' इत्यादित्यमुपस्थाय 'चिदसि मनाऽसि' इति सोमक्रयणीमभिमन्त्रयते ॥ १० ॥ ८ ॥ ७ ॥ २८९७ ॥

(भा) प्राचीं स्थापयित्वाऽभिमन्त्रणम् ।

(रु) प्राचीं—मन्त्रणम्—सोमक्रयण्याः । चतुर्गृहीतप्रभृति पदहोमोपक्रमा[1]त्प्रागमनात्प्रागेव प्राङ्मुखत्वस्यावश्यम्भावात्, अभिमन्त्र-

---

[1] थंप्रागमना.

णस्य च पदार्थत्वात् । अपरं चतुर्गृहीतं ध्रुवायाः । सहिरण्यायामेव जुह्वाम् तस्यां ध्रौवसमाप्तिः ॥

[अनुमन्त्रणानुनिष्क्रमणे]

(सू) अकर्णगृहीता पदिबद्धा भवति ॥ १० ॥ ८ ॥ ॥ ८ ॥ २८९८ ॥

'मित्रस्त्वा पदि बध्नातु' इति दक्षिणं पूर्वपादं प्रेक्षते 'पूषाऽध्वनः पातु' इति प्राचीं यतीमनुमन्त्रयते ॥ १० ॥ ८ ॥ ९ ॥ २८९९ ॥

षट्पदान्यनु निष्क्रामति दक्षिणेन पदा दक्षिणानि 'वस्व्यसि रुद्राऽसि' इत्येतैः प्रतिमन्त्रम् ॥ ॥ १० ॥ ८ ॥ १० ॥ २९०० ॥

(भा) दक्षिणपूर्वपादस्य पदा[1]ऽनुनिष्क्रामति । मातृपितृभ्रातृमती सखिमतीसोमक्रयणीलिङ्गात् ॥

(वृ) दक्षिण–ष्क्रामति—'दक्षिणं पूर्वपादम्प्रेक्षते' इति प्रेक्षणस्य दृष्टार्थत्वात् । अनुनिष्क्रमणं–उपर्युपरि[2] निधानम् ॥ मातृ–लिङ्गात् 'अनु त्वा माता मन्यतां' इत्यादिमन्त्रलिङ्गात् ॥

(रु) तदष्टगृहीतं चतुर्गृहीतं वा ॥

सा तु अकर्णगृहीता अपदिबद्धा भवति, यत्कर्णगृहीता यत्पदि बद्धेति श्रुतेः । यदि केवलाऽऽनेतुं न शक्येत ग्रीवादौ गृहीता बद्धा वाऽऽनीयते ॥

---

[1] नुक्रामति–ग. [2] परि पदनिधानम्–ग.

[अनुनिष्क्रमणकाले जप्यमन्त्रविवरणम्]

(सू) "एकमिषे विष्णुस्त्वाऽन्वेतु, द्वे ऊर्जे विष्णुस्त्वाऽन्वेतु त्रीणि व्रताय विष्णुस्त्वाऽन्वेतु चत्वारि मायोभवाय विष्णुस्त्वाऽन्वेतु पञ्च पशुभ्यो विष्णुस्त्वाऽन्वेतु षड्रायस्पोषाय विष्णुस्त्वाऽन्वेतु सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वाऽन्वेतु" इति निष्क्रम्यमाणेषु यजमानोऽनुवर्तयित्वा॥

॥ १० ८ ॥ ११ ॥ २९०१ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने द्वाविंशी खण्डिका.

---

(भा.) पूर्वं सोमक्रयण्या निष्क्रम्यमाणेषु पदेषु यजमानः 'एकमिषे इति ॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने द्वाविंशी खण्डिका.

---

(वृ)–पूर्वं–एकमिष इति— एकमिषे इति प्रतिमन्त्रं प्रतिपदं सोमक्रयण्या सप्तमपदे निहिते जपति ॥

इति धूर्तस्वामिभाष्यवृत्तौ दशमे प्रश्ने द्वाविंशी खण्डिका.

---

(रु) सोमक्रयण्या निष्क्रम्यमाणानि दक्षिणस्य पूर्वपादस्य षट्पदानि पश्चादपि निष्क्रामति ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमप्रश्ने द्वाविंशी खण्डिका

---

[सप्तमपदनिधानोत्तरं जप्यमन्त्रः]

(सू) 'सखायस्सप्तपदा अभूम सख्यं ते गमेयꣳ सख्यात्ते मा योषꣳ सख्यान्मे मा योष्ठाः' इति सप्तमे पदे जपति ॥ १० ॥ ८ ॥ १२ ॥ २९०२ ॥

(भा) सोमक्रयण्यास्सप्तमे पदे निहिते जपति यजमानः 'सखायः' इति ॥

(रु) अनुवर्तनं आनुपूर्व्येण वचनं यथा सर्वेष्वाधेनु यजमानोऽनुवर्तयत इत्यादौ। सोमक्रयण्या निष्क्रम्यमाणेषु सप्तसु पदेषु एकैकमेतान्मन्त्रान्यजमान उक्त्वा सप्तमे पदे सखाय इत्यपि जपतीत्यर्थः ॥

[तदुत्तरमध्वर्युणाऽनुष्ठेयांशाः]

(सू) 'बृहस्पतिस्त्वा सुम्ने रण्वतु' इति सप्तमं पदमध्वर्युरञ्जलिनाऽभिगृह्य पदे हिरण्यं निधाय 'पृथिव्यास्त्वा मूर्धन्ना जिघर्मि' इति हिरण्ये हुत्वाऽपादाय हिरण्यं 'देवस्य त्वा सवितुः प्रसवे' इति स्फ्यमादाय 'परिलिखितꣳ रक्षः परिलिखिता अरातयः' इति त्रिः प्रदक्षिणं पदं परिलिखति यावद्धृतमनुविसृतं भवति ॥ १० ॥ ८ ॥ ॥ १३ ॥ २९०३ ॥

(भा) 'देवस्य त्वा'[1] इत्यस्य 'आ ददे' इति मन्त्रान्तः, स्वस्यानभिहितत्वात्। अनुविसृतं—अनुप्रगतम् ॥

(वृ) अनुप्रगतं—यावदाज्येन सिक्तं भवतीत्यर्थः ॥

---

[1] देवस्य त्वेत्याददे इति मन्त्रस्यानभहितत्वात्—ग.

(रु) यावन्निसृतं तावद्देशं परिता लिखति। अत्र किंदेवत्या खलु पदाहुतिर्भवतीति प्रकृत्य वाग्देवत्येत्येव ब्रूयादिति बोधायनः॥

(सू) कृष्णविषाणया चानुपरिलिख्य 'अस्मे रायः' इति स्थाल्या यावत्स्मूतꣳ समोप्य 'त्वे रायः' इति यजमानाय प्रयच्छति ॥ १० ॥ ८ ॥ १४ ॥ ॥ २९०४ ॥

(भा) अनुपरिलिखति कृष्णाविषाणया त्रिः। यावत्स्मू[1]तम्--यावत्परिगृहीतम्।

(वृ अनुपरि–त्रिः—उभयत्र पुरस्तादुपक्रमस्तथाऽपवर्गः। यावत्स्मूतम्—आज्येन।

['यथा गृहेषु निधत्ते' इति श्रुतिघटकगृहपदेन प्रदातृगृहविवक्षा, बहुपत्नीकत्वे विशेषश्च]

(सू) 'तोते रायः' इति पत्न्यै ॥ १० ॥ ८ ॥ १५ ॥ ॥ २९०५ ॥

(भा) 'तोते रायः' इति 'यथा गृहेषु निधत्ते[2]' इति लिङ्गात्। यजमानः पत्न्यै ददाति।

(वृ) यजमानः–दाति—यथा गृहेषु निधत्ते इति प्रदातृगृहं विवक्षितम्। सोऽध्वर्युश्चेदध्वर्युगृहे पत्न्या स्थाप्यं स्यात्। बहुपत्नीक-[3]श्चेन्मुख्यायै, पदसंस्कारत्वात्।

---

[1] सूर्व–ग. [2] निधत्ते तादृगिति–क. [3] बहुपत्नीकश्चेत्–ग.

(रु) यजमानप्रत्तया कृष्णविषाणया तूष्णीं परिलिखति मन्त्रानतिदेशात्। तूष्णमित्येव सत्यषाढः। यावत्तमूतं यावद्धूतेनोपसिक्तम्। यजमानः प्रयच्छतीति शेषः। 'अर्धो वा एष आत्मनो यत्पत्नी। यथा गृहेषु निधत्ते' इति लिङ्गात्। यजमानः पत्न्या इत्येव कल्पान्तरकाराः। पत्न्यनेकत्वेऽपि महिष्याः प्रयच्छति निधानार्थत्वात्।

(सू) 'माऽहꣳ रायस्पोषेण वि योषं' इति पत्नी पदं प्रदीयमानमनु मन्त्रयते ॥ १० ॥ ८ ॥ १६ ॥ ॥ २९०६ ॥

'सन्देवि देव्योर्वश्या पश्यस्व' इति सोमक्रयण्या पत्नीꣳ सङ्ख्यापयति ॥ १० ॥ ८ ॥ ॥ १७ ॥ २९०७ ॥

(भा) सङ्ख्यापयति—सोमक्रयण्या पत्नीं दर्शयति। अनेकाश्चेदपि तन्त्रेण ॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने त्रयोविंशी खण्डिका.

---

(वृ) अनेका-तन्त्रेण—विभुत्वात्।

इति धूर्तस्वामिभाष्यवृत्तौ दशमे प्रश्ने त्रयोविंशी खण्डिका.

---

(रु) गृहेषु स्ववासस्थानेषु।

[दम्पतिभ्यामभिमन्त्र्यमाणमन्त्रे वैलक्षण्यम्]

(सू) 'त्वष्टीमती ते सपेय' इति पत्नी सोमक्रयणीमभिमन्त्रयते ॥ १० ॥ ८ ॥ १८ ॥ २९०८ ॥

'त्वष्टु मनस्त्वा सपेम' इति यजमानः ॥
॥ १० ॥ ८ ॥ १९ ॥ २९०९ ॥

[अनुनिष्क्रान्तपदानि विभज्योपवापादिविधिः]

यतः पदमपात्तं तस्मिन् सहिरण्यौ पाणी प्रक्षाल्य 'उन्नम्भय पृथिवीं' इत्यद्भिरुपनिनीय पदं त्रैधं विभज्य तृतीयमुत्तरतो गार्हपत्यस्य शीते भस्मन्युपवपति। तृतीयमाहवनीयस्य। तृतीयं पत्न्यै प्रयच्छति। तत्सा गृहेषु निदधाति।
॥ १० ॥ ८ ॥ २० ॥ २९१० ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने त्रयोविंशी खण्डिका

---

(रु) सङ्ख्यापयति दर्शयति। अत्रानेकासामपि तन्त्रेण सङ्ख्यापनं विभुत्वात्। सर्वाः पत्न्योऽनुमन्त्रयन्ते, सोमक्रयणीमनुमन्त्रयत इत्यन्वयः।

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
दशमे प्रश्ने त्रयोविंशी खण्डिका

---

[आदित्योपस्थानस्यात्राप्यनुष्ठेयत्वपक्षः]

(सू) अत्रादित्योपस्थानं राज्ञश्च निवपनादि कर्मैके समामनन्ति ॥ १० ॥ ८ ॥ २१ ॥ २९११ ॥

(भा) अत्रादित्योपस्थानं 'सूर्यस्य चक्षुराऽरुहम्' इति।

[सोमस्य राज्ञ आहरणायाध्वर्युब्रह्मयजमानानां
तदभिमुखतया गमनविधिः]

(सू) 'अपि पन्थामगस्महि' इत्युद्धृतपूर्वफलकेनानसा परिश्रितेन छदिष्मता प्राञ्चस्सोममच्छ यान्ति ॥ १० ॥ ८ ॥ २२ ॥ २९१२ ॥

शीर्ष्णा गिरौ क्रीतꣳ हरन्ति ॥ १० ॥ ८ ॥ ॥ २३ ॥ २९१३ ॥

(भा) उद्धृता—उत्पाटिता पूर्वफलका यस्यानसः। छदिष्मता—कटवता सोमाभिमुखं गच्छन्ति 'अपि पन्थामगस्महि' इति। [1]गिरावस्य लोपः ॥

(वृ) उद्धृता–नसः—तदुद्धृतपूर्वफलकम्। ययाऽनस आवापद्वारं विधीयते सा पूर्वफलका ॥

छदिष्मता–वता—उपस्तीर्णकटवता ॥

सोमाभि–यान्ति—अध्वर्युब्रह्मयजमानाः ॥

अपिपन्था–हीति—सर्वेषां दक्षिणतो ब्रह्मा ॥

गिरावस्य लोपः—शकटस्य 'शीर्ष्णा[2] हरन्ति' इति विधानात्। गमनमन्त्रस्तु भवत्येव गमनाभिधानात्। तस्यापि लोप इति केचित्। 'येन विश्वाः परि द्विषो वृणक्ति' इति शकटाभिधानादिति ॥

(सू) अपरेणोत्तरेण वा राजानं प्रागीषमुदगीषं वा नद्धयुगं शकटं चुबुकप्रातिष्ठितम् ॥ १० ॥ ८ ॥ ॥ २४ ॥ २९१४ ॥

---

[1] गिरावाहरणेऽस्य लोपः—क. [2] शीर्ष्णा गिरौ क्रीतं क्षरन्ति इति ग.

(भा) चुबकं–धुरोमुखम् ॥

(रु) सूर्यस्य चक्षुरित्यादित्योपस्थानमत्र कृत्वा ततो राज्ञो निवपनादि शोधनान्तं कर्मेत्येकेषाम् । उद्धृतपूर्वभागस्थफलकेनानसा सह न्युप्तं सोममभिमुखा गच्छंति अध्वर्युब्रह्मयजमानाः । यदि हि गिरौ देवयजनं स्यात्तत्र क्रीतं शीर्ष्णा हरन्ति नाऽनसेत्यर्थः । कुत एवं इति चेद्देवयजन एव क्रयवचनात् । ईषाग्रे नद्धयुगं मुखेन भूमौ प्रतिष्ठितं भवति ॥

(सू) 'अꣳशुना ते अꣳशुः पृच्यताम्' इति यजमानो राजानमभिमन्त्रयते ॥ १० ॥ ८ ॥ ॥ २५ ॥ २९१५ ॥

'यत्कामयेतापशुस्स्यादित्यृक्षततस्य' इत्युक्तम् । ॥ १० ॥ ८ ॥ २६ ॥ २९१६ ॥

(भा) यत्र लोमानि न सन्ति ।

(वृ) यत्र–सन्ति—कृष्णाजिनस्य मांसभागः । तत्र वासस्स्तरणवृत्तिः । अध्वर्युकाम इत्युपदेशः ॥

(सू) क्षौमं वासो द्विगुणं त्रिगुणं वा प्राग्दशमुत्तरदशं चर्मण्यास्तृणाति । उदग्दशं वा ॥ १० ॥ ८ ॥ ॥ २७ ॥ २९१७ ॥

(भा) उत्तरदशम्—उपरिदशम् । उदग्दशमुत्तरदशमेव ।

(वृ) उत्तर–शम्—'उदग्दशं वा' इति वचनात् ।

(सू) तस्मिन् हिरण्यपाणिरङ्गुष्ठेन कनिष्ठिकया चाङ्गुल्याऽꣳशून् । सङ्गृह्णान्यचन् 'अभि त्यं देवꣳ

**सवितारम्' इत्यतिच्छन्दसर्चा मिमीते ॥ १० ॥ ॥ ८ ॥ २८ ॥ २९१८ ॥**

**एवं 'एकयैकयोत्सर्गम' ॥ १० ॥ ८ ॥ २९ ॥ ॥ २९१९ ॥**

**[ करतलाङ्गुलीनामधोमुखीकरणनिषेधः]**

**सर्वास्वङ्गुष्ठमुप निगृह्णाति ॥ १० ॥ ८ ॥ ३० ॥ २९२० ॥**

**यया प्रथमं न तया पञ्चमं तयैवोत्तमम् ॥ १० ॥ ८ ॥ ३१ ॥ २९२१ ॥**

**(भा)** अन्यचन्---अधोमुखमकुर्वन हस्तमेकैकयाऽङ्गुल्याऽङ्गुल्योत्सृज्याङ्गुलीः । न कनिष्ठिकया पञ्चममुपमध्यमया तयैव, कनिष्ठिकयोत्तमं, क्षौमेण वाससोपसङ्गृह्य यदेव द्विगुणमास्तीर्णम् सकृदुपलभ्यते॥

**(वृ)** **अन्यचन्-स्तम्**---हस्ततलं चाङ्गुलीश्च नाधः कुर्यात् । एवमेकैकया त्यक्तयाऽङ्गुल्याऽशुग्रहणम् करोति ॥

**उत्सृज्याङ्गुलीः**---सर्वान् चतुर्भिः पर्यायैः ॥

**न कनिष्ठक-यैव**---अनामिकायैव । प्रथमायाः प्रतिषेधक्रमप्राप्तत्वात् । कनिष्ठि[1]काप्रथमगणनादौ कस्याः प्राथम्यदर्शनात् । प्रादाक्षिण्य[2]भावाच्च ॥

**तयैव-त्तमम्**---दशमे षष्ठादीन् कनिष्ठिकादिभिरेव न तु मध्यमादिभिः । अङ्गुष्ठं तासु सर्वास्वभिनिगृह्णाति ॥

**यदेव-र्णम्**---तेनैव ॥

---

[1] कानिष्ठिकयैव प्रथ-ग. [2] लाभाच्च-क. ग.

(रु) ऋक्षतः विशसनभागे चर्मणस्सोममानमपशव्यं, लोमभागे पशव्यमित्युक्तं ब्राह्मणे । तस्माल्लोमभाग एव मिमीते इत्यर्थः । उत्तरदशम् उपरिदशम् । अन्यचन् अङ्गुल्यङ्गुष्ठावनाकुञ्चयन्, प्रसारिताभ्यामेव ताभ्यां यावद्ग्रहीतुं शक्यं तावन्मिमीते इत्यर्थः । उथ्सृज्योध्सृज्य पूर्वपूर्वाङ्गुलिं क्रमादुत्तरोत्तरयैकैकयैव मिमीते । द्वितीयेऽङ्गुळिपर्याये कनिष्ठिकातोऽन्ययैकं मुष्टिं मीत्वा ततः कनिष्ठिकात एवारभ्यान्तान्मीत्वा पुनः कनिष्ठिकया समापयतीत्यर्थः ॥

[समन्त्रकामन्त्रकभेदेन मानस्य दशत्वसंपत्तिः]

(सू) पञ्च कृत्वो यजुषा मिमीते पञ्चकृत्वस्तूष्णीम् ॥ १० ॥ ८ ॥ ३२ ॥ २९२२ ॥

एवं द्विस्त्रिरपरिमितकृत्वो वा ॥ १० ॥ ८ ॥ ॥ ३३ ॥ २९२३ ॥

'प्रजाभ्यस्त्वा' इत्यवशिष्टानंशूनुपसमूह्य क्षौमेण वाससोपसङ्गृह्य 'प्राणाय त्वा' इति द्विगुणेनोष्णीषेणोपनह्य 'व्यानाय त्वा' इति विस्रस्यावेक्षते 'प्रजास्त्वमनुप्राणिहि प्रजास्त्वामनु प्राणन्तु' इति ॥ १० ॥ ८ ॥ ३४ ॥ २९२४ ॥

(भा) पञ्चकृत्वो यजुषा मिमीते पञ्चकृत्वस्तूष्णीम् । 'प्राणाय त्वा' इति द्विगुणेनोष्णीषेण दीर्घशाटकेनोपनह्यति । 'व्यानाय त्वा' इति विस्रंसनं–शिथिलीकरणम् । तदेवानु[1]श्रथनम् ॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने चतुर्विंशी खण्डिका

अष्टमः पटलः

---

[1] अनुग्रथनम्–ग.

[सूत्रस्यानुष्ठानप्रकारत्रैविध्यतात्पर्यकत्वम्]

(वृ) **पञ्च-ष्णीम्—अस्यार्थः**—एवमित्यातिदेशात्पञ्चसु पर्यायेषु 'अभि त्यं देवम्' इत्यावर्तते। अस्मिन्पक्षे 'पञ्च कृत्वो यजुषा' इति षष्ठादिषु मन्त्रनि[1]वृत्तिपरः। पञ्चकृत्वस्तूष्णीमित्यनुवादः। पक्षान्तरेऽस्यार्थवत्त्वाय सकृन्मन्त्रप्रयोगः। तत्करणकाः पञ्च पर्यायाः, सङ्ख्यायुक्तमिति पञ्च। शेषास्तूष्णीमिति ज्ञापनार्थमिति व्याख्याने पूर्वसूत्रेण सर्वत्र दशस्वपि मन्त्राऽऽवृत्तिः। अतस्त्रयोऽत्रानुष्ठानप्रकाराः पञ्चसु मन्त्राऽऽवृत्तिः तूष्णीं पञ्चकृत्वः। दशस्वपि मन्त्राऽऽवृत्तिः। सकृन्मन्त्रमुच्चार्य पञ्चकृत्वः, तूष्णीं पञ्च कृत्वः इति॥

अथवा सकृदपि लभ्यते—पञ्च कृत्वो यजुषा मिमीते पञ्चकृत्वस्तूष्णीमिति। न द्विरादय एव पक्षाः, अपारिमितकृत्वः चतुष्कृत्वः॥

**प्राणाय-ह्यति**—अदृढम्॥

**व्यानाय-सनम्**—नावेक्षणम्। **शिथिलीकरणम्**—बन्धनस्य शिथिलीकरणम्; न कृत्स्नग्रन्थिविमोकः। तदेव विस्रंसनमनुश्रृन्थनम् 'व्यानाय त्वेत्यनु श्रृन्थति' इति श्रुतेः॥

इति धूर्तस्वामिभाष्यवृत्तौ दशमप्रश्ने चतुर्विंशी खण्डिका

इत्यष्टमः पटलः

---

(सू) **'एष ते गायत्रो भागः' इत्येतैर्यजमानो राजानमुपतिष्ठते॥ १०॥ ८॥ ३५॥ २९२७॥**

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने चतुर्विंशी खण्डिका

---

[1] निवृत्तिपरम्—ङ. च.

(रु) यजुरित्यतिच्छन्दसोऽभिधानं याजुर्वेदिकत्वात्। यत्राहर्वृद्ध्यादिवशादपर्याप्तस्सोमस्स्यात्तत्र यावदर्थमावृत्तिः। क्षौमेण तूष्णीं सोममुपसंगृह्य समुच्चित्य क्षौमान्तान्प्राणाय त्वेत्यनेन। दीर्घशाटकेनावेष्ट्य व्यानाय त्वेति किंचिद्विस्रस्य प्रजास्त्वमित्यवेक्षते। एष ते त्रैष्टुभ एष ते जागत इति द्वितीयतृतीयौ मन्त्रौ ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमप्रश्ने चतुर्विंशी खण्डिका

इत्यष्टमः पटलः

---

[सोमक्रयणौपयिकव्यवहारादिकम्]

(सू) देव सूर्य सोमं क्रेष्यामस्तं ते प्रब्रूमस्त्वं विश्वेभ्यो देवेभ्यः क्रतून्कल्पय दक्षिणाः कल्पय यथर्तु यथादेवतमित्यादित्यमुपस्थाय सोमविक्रयिणे राजानं प्रदाय पणते ॥ १० ॥ ९ ॥ १ ॥ २९२८ ॥

(भा) पण[1]ते—व्यवहरते ;—

(सू) सोमविक्रयिन् क्रय्यस्ते सोमा ३ इति। क्रय्य इतीतरः प्रत्याह ॥ १० ॥ ९ ॥ २ ॥ ॥ २९२९ ॥

'सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं' इत्युक्त्वा कलया क्रीणानीत्येनमाह ॥ १० ॥ ९ ॥ ३ ॥ २९३० ॥

---

[1] पणनं—व्यावहार:—ग.

(भा) सोमविक्रयिन् सोमं ते क्रीणामीति सकृत् । पुनःपुनरित्युपदेशः । कला—अवयवः ॥

(वृ) सोमविक्र—सकृत्—सोमविक्रयिणः प्रतिवचनरूपत्वात् ।

उपदे नारीति—द्वितीयं तृतीयमिति वचनात् ।

कला—वः—सोमक्रयण्याः ॥

(सू) **भूयो वा अतस्सोमो राजाऽर्हतीति सर्वेषु पणनेषु सोमविक्रयी प्रत्याहऽऽसम्पदः ॥१०॥९॥ ॥४॥ २९३१ ॥**

(भा) भूयो वा अत इति प्रतिवचनमाक्रयसम्पदः । उपदेश आगोसम्पद इति ॥

(वृ) भूयो वा—पदः—दशभिर्द्वादशशतदक्षिणस्यैवमुक्त[1]प्रकारेण—

उपदे—पदः—गवा ते क्रीणानीत्यन्ते ग्रहणात् ॥

(रु) उपनद्धमेनं सोमं सोमविक्रयिणे दत्त्वा पणते तेन सह व्यवहरते । पृच्छतीति शेषः । पणनेनोपोद्धातः प्रश्नस्सः । कला—जङ्घाया अधोभागः । आक्रयसम्पदः ।

(सू) **कुष्ठया क्रीणानीति द्वितीयम् । शफेन ते क्रीणानीति तृतीयम् । पदा ते क्रीणानीति चतुर्थम् ॥ १० ॥ ९ ॥ ५ ॥ २९३२ ॥**

---

[1] मुक्तरीत्यैव—ग.

(भा) कुष्ठा[1]–इन्द्रखुरः—शफाः–खुराः। पदा–पदेन ते क्रीणानीति, एवमारभ्य एकैकं वा त्रिस्त्रिः। भूयो वा इत्याहेत्युपदेशः। एकैकं वा त्रिस्त्रिः। एकैकस्मिन्निति न्यायः॥

(वृ) **कुष्ठा–खुरः**—सोमक्रयण्याः उपरि खुरः तेन क्रीणानीति[2]॥

**शफाः–नीति**—मन्त्राणामप्येषां निर्वचनं सोमक्रयणीज्ञापनार्थम्॥

**एवं–त्रिः**—कलया ते क्रीणानीत्यस्यैवमिति निर्देशात् सोमं ते क्रीणामीत्यनिवृत्तिः स्वमते; उपदेशमतेन त्वावृत्तिः॥

**एकैकं वा–तिस्त्रिः**—कलया ते क्रीणानीति त्रिषुत्रिषूक्तेषु सोमविक्रयी सकृत्सकृत्॥

**भूयशः**—पदा ते क्रीणानीति चतुर्थमित्युक्त्वैवं त्रिरित्याध्वर्यवस्य निवृत्तिविधानात्॥

**एकैक–यः**—प्रतिप्रश्नं प्रतिवचनस्य युक्तत्वात्॥

(सू) **गवा ते क्रीणानीत्यन्ततः ॥ १० ॥ ९ ॥ ६ ॥ ॥ २९३३ ॥**

(वृ) गवा ते क्रीणानीति सकृत्। नात्र भूयो वा इति। प्रतिवचनमुपदेशः॥

[ सौत्रैतच्छब्दनिर्देश्यवस्तुव्यवस्थापनं स्वस्वान्यमतेन ]

(सू) **अपि वा न गवेति ब्रूयात्, एषेति निर्दिश्य जपति तस्या आत्मा तस्या रूपं तस्याः प्रजा तस्याः पयस्तस्या बन्धुरिति ॥ १० ॥ ९ ॥ ७ ॥ २९३४ ॥**

---

[1] कुष्ठा–क्षुद्रखुरा–ग. [2] नीति, एवं त्रिः–च.

(भा) अपि वा अवयवशः पणनं न कर्तव्यम्, सोमं ते क्रीणा[1]नीत्युक्त्वा गवा ते क्रीणा[2]नीत्येवं ब्रूयात्। एषा इति सोमक्रयण्या एव निर्देशो न्याय्यः[3]। उपदेशो गवेति न ब्रूयादेषेत्येव निर्दिशेदिति ॥

(वृ) **अपि वा–यात्**—अपि, वा, न, इति सूत्रच्छेदः।

**एषेति–न्याय्यः**—तस्या एव पुरोवृत्तेः। केचिदन्यस्या एव निर्देशः, अल्पवयसस्सोमक्रयण्याः प्रजादिसम्बन्धाभावादिति; तन्न; तद्धेतावपि निर्देशोपपत्तेः।

**उपदेशो–निर्दिशेदिति**—पदा ते क्रीणानीत्येवमन्तं यथोक्तं कृत्वा एषेत्येव निर्दिशति ॥

(रु) कुष्ठा–कलाया अधोभागः। शफः–खुरः। एवं कलादीनां पणनपर्यायस्य त्रिरभ्यासः कार्यः। एवमवयवशस्सोमक्रयस्स्यात्। क्रीत्वाऽन्ततस्समुदायेन क्रीणाति गवा ते क्रीणानीति। अपि वा न समुदायक्रये गवा ते क्रीणानीति ब्रूयात्। एषेति सोमक्रयणीमेव दर्शयित्वा तस्या आत्मेति जपति। जपस्त्वयं गवा ते क्रीणानीति वचनकल्पेऽपि भवत्येव समुदायक्रयविशेषत्वात्। ब्राह्मणे यत्कलया ते शफेन ते क्रीणातीति पणेतेति कलाशफाभ्यामवयवक्रयं प्रस्तुत्य तन्निन्दित्वा गवा ते क्रीणानीत्येव ब्रूयादिति समुदायकल्प एव स्तुतः। सूत्रकारेण तु शाखान्तरमुपसंहरता कलाद्यवयवचतुष्टयक्रयसहितः समुदायक्रयश्चोदितः, स एवानुसर्तव्यः। सत्याषाढकात्यायनाभ्यामयमेव कल्पो दर्शित इति द्रष्टव्यम् ॥

---

[1] नीति जपित्वा–**क. ग. च.** [2] त्येवमन्तं यथोक्तं कृत्वा एषेत्येव ब्रूयात्–**क.**
[3] न्यायतः–**क. ग.**

(सू) 'शुक्रं ते शुक्रेण क्रीणामि' इति जपित्वा हिरण्येन क्रीणाति। 'तपसस्तनूरसि' इति जपित्वाऽजया क्रीणाति। अवशिष्टानामेकैकेन। यद्वषभेण क्रीणीयात्प्रजापतिना क्रीणीयात् तत्स्थाने वत्सतरस्साण्डः ॥ १० ॥ ९ ॥ ८ ॥ ॥ २९४० ॥

(भा) धेन्वा—सवत्सया ऋषभेण संवत्सरेण वा साण्डेन अनडुहा ते क्रीणानीति ॥

(वृ) धेन्वा–त्सरेण वा—विकल्पः, न ऋषभप्रतिषेधः। प्रजापतिना क्रीणीयादिति ॥

[चतुर्भिः दशभिर्वा सोमस्य क्रयणे वाससान्तत एव क्रय्यत्वव्यवस्थापनम्]

(सू) मिथुनाभ्यामिति वत्सतरो वत्सतरी च। ताभ्यां युगपत्क्रीत्वा वाससाऽन्ततस्सम्पादयति॥ ॥ १० ॥ ९ ॥ ९ ॥ २९४१ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने पंचविंशी खण्डिका

---

(भा) मिथुनाभ्यां ते गोभ्यां सह वाससाऽन्ततस्सम्पादयति। यदा चतुर्भिः तदाऽपि वाससाऽन्ततः ॥

इत्यापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये दशमे प्रश्ने

पंचविंशी खण्डिका

(वृ) **मिथुनाभ्याम्**—सह वत्सतराभ्यां ते क्रीणानीति ।

**सह वाससा-यति**—भूयो वा अत इति प्रतिवचनम् । स्वमते मिथुनान्त[1] एव वाससा । गवा ते क्रीणानीत्यन्ततस्सम्पादयति । भूय इच्छत्यपि सोमविक्रयिणी सोममाददीतैव । यदि कृच्छ्रायेतापैव हरेतेति । एतद्दशक्रयविषयम् ।

**यदा-सा**—अनुक्रमादेवान्ततस्सिद्धेः पुनरन्तग्रहणात् ॥

इति श्रीरामाग्निचित्कृतायां आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्यवृत्तौ
दशमप्रश्ने पंचविंशी खण्डिका

---

(रु) नात्र कलादिवद्धिरण्येन ते क्रीणानीति क्रयवाक्येन कर्तव्यम् । मन्त्रेण द्रव्यक्रययोः प्रकाशनात् । पूर्वेण व्याख्यातः । चरमेण पशुना क्रीणामीति मन्त्रवर्णात् । अवशिष्टानां ब्राह्मणोक्तानां धेनुवृषभानडुन्मिथुनवाससामेकैकेन द्रव्येन क्रीणाति । तेषु तु धेन्वा ते क्रीणानीत्यादीनि क्रयवाक्यानि स्युः । द्रव्यक्रययोर्मन्त्रेणाप्रकाशनात् । तथाऽपठदेव सत्याषाढः । धेन्वा सवत्सया क्रयः, स्तनन्धयस्य मात्रनुवृत्तिस्वारस्यात्, इतरथा दश संपद्यन्ते इत्यन्ते निगमनविरोधाच्च ॥

ऋषभस्थाने साण्डो वत्सतरश्शाखान्तरीयो विकल्प्यते । साण्डेनेत्येकेषामित्येव सत्याषाढः । स्तनोपरतो वत्सतरः । ब्राह्मणे मिथुनाभ्यां क्रीणातीत्यत्रैतन्मिथुनमभिप्रेतमित्यर्थः । तयोर्नानाद्रव्यत्वेऽपि मिथुनाभ्यां वत्सतरवत्सतरीभ्यां क्रीणानीति युगपत्क्रीत्वा वाससा गवादिद्रव्यसमुच्चितेनान्ततः क्रयं निर्वर्तयति । न तत्र भूयो वा अत इति प्रत्याह ।

---

[1] न्तमेव–च.

सोऽयं दशद्रव्यविधिरविशेषचोदनादसति वैशेषिकद्रव्यविधौ सर्वत्रैवोपतिष्ठत इति ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमप्रश्ने पञ्चविंशी खण्डिका

---

[पूर्वत्र हेतुमुपन्यस्य अनुवादात्तस्य तात्पर्यस्फुटीकरणम्]

(सू) दशभिः द्वादशशतदक्षिणस्य ॥ १० ॥ ९ ॥ ॥ १० ॥ २९४२ ॥

(भा) त्रिदक्षिणसप्तदक्षिणयोर्दशभिरिति न्यायः । अविशेषचोदितत्वात् ।

(वृ) एतैर्दशभिस्सोमं क्रीणीयात् द्वादशशतदक्षिणस्य क्रतोः ।

त्रिदक्षि–त्वात्—तयोः विशेषचोदनाभावात् । वासोऽन्तस्य दशक्रयस्यानारभ्योक्तत्वाच्च । दशभिर्द्वादशशतदक्षिणस्येत्यनुवादो विशेषविधानार्थम् । अननुवादेऽपि भूयसा चतुर्भिर्वा द्वादशशतदक्षिणस्यैव[1] न स्यात् । दशभिर्भूयसा एकादशभिश्चतुर्भिर्वा आदितस्तिसृभिर्वा सोमं क्रीणातीति दशसङ्ख्या गवादीनां, न कलादीनाम् । गोरेवावयवत्वात्तेषाम् । एष न्यायपक्षः ॥

(रु) 'तत्र द्वादशशतदक्षिणस्य तावत्क्रतोर्दशभिरेव द्रव्यैः क्रय इत्यर्थः ॥

(सू) भूयसा वा ॥ १० ॥ ९ ॥ ११ ॥ २९४३ ॥

---

[1] चतुर्भिरेव द्वादशशतदक्षिणः स्यात्—च.

(भा) भूयसा चतुर्भिश्च[1] समुच्चय इत्युपदेशः।

[दशभिः, चतुर्भिः, भूयसा, इति पदैः पक्षद्वयलाभ-
प्रकारविशदीकरणम्]

(वृ) भूयसा-देशः—अस्यार्थः—दशभिर्वा भूयसा वा इति द्वावेव पक्षौ, चतुर्भिर्वेति भूयसोऽपेक्षितसङ्ख्या नियम्यते, न तृतीयः पक्षः इति।

(रु) दशभ्यो भूयसा वा द्रव्येण।

[एकेषामिति कल्पान्तरारम्भप्रयोजनम्]

(सू) चतुर्भिर्वा गवा हिरण्येन वाससाऽजयेत्येकेषाम्
॥ १० ॥ ९ ॥ १२ ॥ २९४४ ॥

(भा) एकेषां विधावजाऽन्ततः।

(वृ) एकेषां-जाऽन्ततः—गवादीनां पदार्थानां पूर्वमेव प्राप्तत्वात्। क्रमविकल्पार्थ आरम्भ इति॥

[सङ्ख्यानियमस्य गोमात्रविषयकत्वम्]

(सू) एकैकयैकविंशतिदक्षिणस्य अपरिमिताभिरपरि-
मितदक्षिणस्य ॥ १० ॥ ९ ॥ १३ ॥ २९४५ ॥

(भा) तिसृभिर्गोभिरेव स्त्रीलिङ्गनिर्देशात्, अपरिमिताः, दशभ्योऽधिकाः, असङ्ख्याताश्च॥

(वृ) तिसृभि-र्देशात्—न चाजाधेनुभ्यां सहाऽजयेति। प्रकृताया गोरेव सङ्ख्याविशेषविधानात्, 'शुक्रं ते' 'तपसः' इत्यनयोर्लोपः॥

---

[1] श्चेति समु-ख. ग. ङ. च.

**अपरि–मिकाः**—इतः पूर्वासु ता हि गुर्वीतो न्यूनाः अनु[1]क्तया [2]सङ्ख्ययाऽपरिमिता भवन्तीति ।

**असङ्ख्याताश्च**—चतुर्विंशत्यादिभिः । अत्रापि गावः त्रिंशदन्तानामेकैकशः ॥

(रु) दशभिर्वा द्रव्यैश्चतुर्भिर्वेत्येकेषां शाखा। गवादिचतुष्टयमप्युपदिशति । तेनात्र दशभिर्द्रव्यैश्चतुष्टयमप्येवं विकल्प्यत इत्यर्थः । व्यक्तोक्तं चैतद्भारद्वाजसत्याषाढाभ्यां, यथा दशद्रव्यविध्यनन्तरमाहतुः चतुर्भिरेके समामनन्ति गवा हिरण्येनाजया वाससेत्यादि ॥

गोभिरिति शेषः। सर्वत्राद्या सोमक्रयणी स्यात्। अतस्तिसृभिः क्रये तया यथोक्तं क्रीत्वा ततो द्वाभ्यां गोभ्यां ते क्रीणानीति क्रयः । एवमुत्तरत्रापि द्रष्टव्यम् ॥

[वाजपेयराजसूयाश्वमेधादिषु सोमक्रयणप्रकारे वैजात्यादिविवरणम् ]

(सू) **चतुर्विंशत्या सहस्रे सर्ववेदसे वा। त्रिंशता वा सहस्रदाक्षिणस्य। सप्तविंशतिर्गा हिरण्यं छागो वास इति त्रिंशत्। शतेन वाजपेयस्य द्वाभ्यां राजसूयस्य। सहस्रेणाश्वमेधस्य ॥ १० ॥ ९ ॥ १४ ॥ ॥ २९४६ ॥**

(भा) सोमक्रयण्या निर्दिशं कृत्वा एकोनशतेन क्रीणातीति वाजपेये। द्वाभ्यां शताभ्यां ते क्रीणानीति सप्तभिर्भागैनैकैकस्य सोमस्य राजसूये; अश्वमेधे निर्दिश्य सोमक्रयणीमेकोनसहस्रेण ते क्रीणानीत्याह ॥

---

[1] उक्तया—च. [2] उक्तया सङ्ख्या.

(वृ) सोम-वाजपेये—सर्वत्रैषेति निर्देशः सोमक्रयण्या एव ।

['राजसूये' इति शब्दबोध्यसमुदायविवेचनम्, सोमक्रयस्य सप्तसु विभिन्नकालिकत्वं, तदुपष्टम्भक-हेतूपन्यासश्च]

**द्वाभ्यां-सूये**—राजसूयस्य यस्सोमस्तस्य क्रयः द्वाभ्यां शताभ्यां । राजसूये इति इष्टिपशुसोमदर्वीहोमानां समुदायस्य नाम न त्वेकस्य सोमस्य । अतो विकृतौ चोद्यमानं प्रधानगामीति नैकत्र पर्यवसानम् । सर्वेषां प्रधानत्वात् । अतः पवित्रसंज्ञिकादावग्निष्टोमविकारत्वेनापरिमितादिप्राप्तौ बाधः । तत्र सोमक्रयास्सम्पद्यन्ते । भिन्नकालाश्च । अग्निष्टोमः प्रथमः पवित्रसंज्ञकः, अभिषेचनीय उक्थ्यो द्वितियः, दशपेयस्तृतीयः, केशवपनीयश्चतुर्थः, व्युष्टिः द्विरात्रः पञ्चमः, क्षत्रस्य धृतिष्षष्ठः, एते सोमाः । सौत्रामणी च पशुबन्धः । एषु सप्तसु सोमक्रयास्सम्पद्यन्ते । भिन्नकालाश्च । सह सोमौ[1] क्रीणातीत्यभिषेचनीयाय दशपेयाय चेति वचनात् । अन्यत्र दशपेयात् सप्तमभागेन द्विशतस्य गवामष्टाविंशत्या क्रय एकैकस्य सोमस्य राजसूये आदितष्षट्सु क्षत्रस्य धृतौ तु द्वात्रिंशद्भिः । अन्ताल्लोपो विवृद्धिर्वेति दश वत्सरा दशपेयार्थाः । अन्या गाः, दशभिर्वत्सतरैः सोमं क्रीणातीति दशपेयवचनात् ।

[क्वचित् क्रये वैलक्षण्यम्]

यदा तु मैत्रावरुण्यामिक्षा तदा षष्ठेन भागेन क्रयः । सर्वत्र सोमक्रयणी प्रथमा ; एषेति निर्देश्या, अत एषेति निर्दिश्य सप्तविंशत्या ते क्रीणातीत्येवमादि ।

---

[1] सह सोमं क्रीणा–**ग.**

(वृ) अश्वमेधे–त्याह—एवं च सोमक्रयण्या सह सहस्रं सम्पद्यते।

(सू) 'अस्मे चन्द्राणि' इति सोमविक्रयिणो हिरण्यमपादत्ते ॥ १० ॥ ९ ॥ १५ ॥ २९४७ ॥

(भा) हिरण्यं हरत्येव।

(वृ) हिर–त्येव—सोमविक्रयिणस्सकाशात् अस्मे चन्द्राणीति, यत्र क्रये विद्यते हिरण्यम्।

(रु) सहस्रदक्षिणे सर्वस्वदक्षिणे च क्रतावित्यर्थः। तयोस्सहस्रदक्षिणस्य त्रिंशदपि विकल्प्यते। त्रिंशत्पक्षे सप्तविंशतिर्गावो हिरण्यादीनि त्रीण्येवेति त्रिंशत्संपत्तिः। न सर्वा गाव इत्यर्थः। छागा अजा। द्वाभ्यामिति शताभ्यामिति शेषः। प्रत्तं हिरण्यं प्रत्यादत्ते।

[अध्वर्युदत्ताविलोमपुञ्जीलकृत्यविवरणम्]

(सू) 'अस्मे ज्योतिः' इति शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति। तां स काले दशापवित्रस्य नाभिं कुरुते ॥ १० ॥ ९ ॥ १६ ॥ २९४८ ॥

(वृ) ऊर्णास्तुका–अविलोमपुञ्जीलम्। पवित्रस्य यजमानो नाभिं कुरुतेति काले तां नाभिं कुरुते। नाभिवन्नाभिः, पवित्रमध्यलम्भितां कुरुते।

(सू) शुक्लं बलक्ष्याः पवित्रममोतं भवति ॥ १० ॥ ॥ ९ ॥ १७ ॥ २९४९ ॥

(भा) अमोतम्–बहुभिस्सहोतम्;–केचिन्मिश्रेणोतामिति। बलक्षी—श्वेताक्षी;—

(वृ) शुक्लं पवित्रं बलक्ष्या लोमभिः। अमोतं बहुभिस्सहोतं [1]पटवदिति। केचिन्मिश्रेण तन्तुनोतमिति ।

(सू) यं द्विष्यात्तस्य कृष्णां लोहिनीं च पवित्रे कुर्यात् ॥ १० ॥ ९ ॥ १८ ॥ २९५० ॥

[विकृतावूहानूहयोः कालविचारः, क्रयकालादिविवरणम्]

(सू) कृष्णामूर्णास्तुकामद्भिः क्लेदयित्वा 'इदमहं सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामि' इत्युपग्रथ्य तया सोमविक्रयिणं विध्यति 'सोमविक्रयिणि तमः' इति। 'स्वान भ्राज' इति सोमक्रयणाननुदिश्य 'स्वजा असि स्वभूरस्यस्मै कर्मणे जात ऋतेन त्वा गृह्णाम्यृतेन पाहि' इति सोमविक्रयिणो राजानमपादत्ते ॥१०॥९॥१९॥२९५१॥

(भा) सोमक्रयणाः धिष्णियेभ्योऽनु देश्यन्ते। तेन चोह एकस्यामपि। उपदेश एतावत्सोमक्रयण्याः ॥

(वृ) सोमक्र–श्यन्ते—अस्यार्थः—यैस्सोमः क्रीतः ते सोमक्रयणाः वत्सतरादिभिस्सह निर्देशात् स्त्रीणामपि पुलिङ्गनिर्देशः। धिष्णियेभ्यो यत्रामी तिष्ठन्ति तेभ्यस्स्थानेभ्य इति ॥

तेन चोह–स्यामपि—सोमक्रयणा इत्यादेः एकवचनेन स्त्रीलिङ्गेन वा प्रकृतेरेकविंशतिदक्षिणत्वात्। प्रकृत्यर्थत्वान्मन्त्रस्योहप्रतिषेधाच्च। अत एव प्रकृतावसमवेताभिधायित्वाद्विकृताव[2]प्यनूहः। जात्याश्रये लिङ्गवचने सम्भवत इति।

---

[1] भवतीति–ग. [2] वप्यूहः–ग.

(वृ) उपदे-यण्या इति—'ता रक्षध्वं मा वो दभत्' इत्यूहः। एकयैकविंशतिदक्षिणस्येत्येकत्वस्त्रीत्वयोर्विधानात्। यथा दर्शे ऐन्द्राग्नविधानादेव इन्द्राग्निभ्यां जुष्टमित्यूहः। यथा वा महेन्द्रविधानान्महेन्द्रायेत्यादयो निगदाः, तिसृभिर्गोभिः। एता वः सोमक्रयण्यः ता रक्षध्वमित्यूहः। यथर्षभेण एष वस्सोमक्रयणः, तꣳ रक्षध्वं मा वो दभदिति।

[कालविशेषे द्रव्यं प्रदाय सोमापहारविधानम्]

(सू) यदि कृच्छ्रायेतापैव हरेत ॥ १० ॥ ९ ॥ २० ॥
॥ २९५२ ॥

(भा) कृच्छ्रायेत—दुःखायेत। अपह्रियमाणे सोमे। अपहरेतैव तस्मै धनं दत्वा। उपदेशः अपहरेतैव सोममिति।

(वृ) कृच्छ्रा-सोमे—लोभादिना।

अपहरे-दत्वा—यावता धनेन न कृच्छ्रायेत।

उपदे-सोममिति—कृच्छ्रेण नैकान्ततो लोभ एव कारणम्। रागद्वेषादीनामपि सोमविक्रयिणि सम्भवात्।

(सू) अत्र यजमानोऽपोर्णुते ॥ १० ॥ ९ ॥ २१ ॥
॥ २९५३ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमे प्रश्ने षड्विंशी खण्डिका

---

(भा) अपोर्णुते-उद्घाटयति शिरस उष्णीषम्।

इति धूर्तस्वामिभाष्ये दशमप्रश्ने षड्विंशी खण्डिका

(वृ) अत्र अस्मिन्देश एव। उपदेशक्रमादेवानन्तर्यस्य [1] सिद्धत्वात्।

इति धूर्तस्वामिभाष्यवृत्तौ दशमे प्रश्ने षड्विंशी खण्डिका

---

(रु) ऊर्णास्तुका प्रागेव व्याख्याता। तद्दशापवित्रं बलक्ष्याः शुक्लाया अवेरूर्णाभिस्सूत्रीकृताभिरमोतं सहोतं भवति, तच्छुक्लं भवतीत्यर्थः। ऊर्णामिश्रतन्तुभिरुतमित्येके। कृष्णाभिरेकं लोहिताभिश्चैकमित्यर्थः। विध्यति—तस्मिन् क्षिपति। सोमक्रयणानुपदिश्येति स्वान भ्राजेति गन्धर्वगणः, तदर्थतया क्रयद्रव्याणि संकल्पयेदित्यर्थः। तदेतया क्रयेऽप्येषा वस्सोमक्रयणीत्यूहति। यदि तु सोमविक्रयणीपुनर्लिप्सयाऽऽदाने कृच्छ्रायेत क्लिश्येत बलाद्धरेतैव॥

इति श्रीभट्टरुद्रदत्तविरचितायां आपस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमप्रश्ने षड्विंशी खण्डिका

---

[स्वस्वान्यमतेन सोपपत्तिकं ध्येय, देय, दातृ, वैलक्षण्यविशदीकरणम्]

(सू) वयस्सुपर्णा इति ॥ १० ॥ ९ ॥ २२ ॥ ॥ २९५४ ॥

दीक्षितदण्डं च मैत्रावरुणाय प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छाम्यवक्रोऽविधुरो भूयासमिति ॥ १० ॥ ९ ॥ २३ ॥ ॥ २९५५ ॥

---

[1] सिद्धिः स्यात्—च.

(भा) उष्णीषं च दीक्षितदण्डं च ददातीत्युपदेशः ॥

(वृ) 'वयस्सुपर्णाः' इति मन्त्रेणादित्यमभिसन्धायोच्चार[1]येन् मन्त्रवर्णादिन्द्रशब्देनादित्याभिधानात् । 'असौ वा आदित्य इन्द्रः' इति । दीक्षितदण्डं च मैत्रावरुणाय प्रयच्छति । चकारादत्रेति यजमान इति चानुकृष्यते । अन्यथा त्वध्वर्युर्दद्यात्, दण्डेन सह समुच्चयात् । बहुवमताच्च यजमान एव दाने कर्तेति । उत्तरत्र यजमानग्रहणादिदमाध्वर्यवमिति केचित् ॥

(सू) 'मित्रो न एहि' इति यजमानो राजानमादाय 'इन्द्रस्योरुमा विश' इति दक्षिण ऊरावासाद्य हस्ताभ्यां निगृह्यास्ते ॥ १० ॥ ९ ॥ २४ ॥ ॥ २९५६ ॥

[परमतोन्नेयांशः]

अत्रादित्योपस्थानं दण्डप्रदानं सोमक्रयणानामनुदेशनमेके समामनन्ति ॥ १० ॥ ९ ॥ २५ ॥ ॥ २९५७ ॥

(भा) अत्रादित्योपस्थानं 'सूर्यस्य चक्षुराऽरुहम्' इति । इतरस्य क्रेष्याम इति लिङ्गविरोधात् ॥

(वृ) इतरस्य—'देव सूर्य' इत्यस्य । क्रीतत्वात्सोम [2] इति नात्रोत्कर्षः । अत्र दण्डप्रदानेऽपि पूर्वमेवोष्णीषं प्रदीयते इति, उपदेशमतात् ॥

---

[1] रयन् नयेत्—च. [2] सोमस्य नात्रो—ग. ङ. च.

(रु) अपोर्णुते अपावृणोति अंसशिरसी। तत्राद्भिरभ्युक्ष्य कौत्साय वा परिकर्मिणे वोष्णीषं प्रयच्छतीति बोधायनः। असंदेहार्थं पुनर्यजमानग्रहणम्। अयमपि सूर्यस्य चक्षुरारुहमित्यस्यैवोपस्थानस्य कालविकल्पः न देवसूर्येत्यस्य, अन्यथा केष्याम इति लिङ्गविरोधात् ॥

(सू) 'रुद्रस्त्वाऽऽवर्तयतु' इति सोमविक्रयिणीमावर्त्यान्यया गवा निष्क्रीय यजमानस्य गोष्ठेऽपि सृजति ॥ १० ॥ ९ ॥ २६ ॥ २९५८ ॥

(भा) अपि सृजति यजमानस्य गोष्ठे दक्षिणाऽसीति लिङ्गात्। दक्षिणा दीयत इति केचित् ॥

(वृ) अपिसृ-ष्ठे—आवर्तयत्विति मन्त्रलिङ्गात् ॥

दक्षिणा-केचित्—स्वमते तु चिदसीत्यादीनां सोमक्रयणीप्रशंसात्मकत्वात् नावश्यं दक्षिणा दीयत इति ॥

(सू) यदि सोमविक्रयी प्रतिविवदेत पृषतैनं वरत्राकाण्डेना[1]वक्षाय[2]न्तो नाशयेयुः ॥ १० ॥ ९ ॥ ॥ २७ ॥ २९५९ ॥

(भा) [3]प्रतिविवदेत न मेऽन्यया प्रयोजनमिति। अवक्षा[4]यन्तः—अहिंसन्तः, अदर्शनं नयेयुः ॥

(वृ) अदर्शनं-नयेयुः—यजमानस्य परिचारकाः ॥

पृषता—बिन्दुमता ॥

---

[1] अवक्षाणं—क. [2] णं ना—ख. नान्यया—ङ. [3] यदि विवदेत—क. ग. च.
[4] अवक्षाणन्नहिंसन्तः—ङ. अवक्षायन् अहिंसन्तः—ग.

(सू) लकुटैर्घ्नन्तीत्येके ॥ १० ॥ ९ ॥ २८ ॥ २९६० ॥

(भा) अविवदतोऽपि दण्डेन घातनम् ॥

(वृ) लकु[1]टैर्हननं ताडनं न मारणम् । विवादे नैमित्तिकमेतत् ॥

(सू) नित्यवदेके वधं समामनन्ति ॥ १० ॥ ९ ॥ ॥ २९ ॥ २९६१ ॥

(वृ) नित्यवद[2]विवदमानस्यापि दण्डेन घातनम् । एकीयमतात् ॥

[राज्ञ आदानोत्तरमनुष्ठेयांशः]

(सू) 'उदायुषा स्वायुषा' इति यजमानो राजानमादाय 'उर्वन्तरिक्षमन्विहि' इति शकटायाभिप्रव्रजति ॥ १० ॥ ९ ॥ ३० ॥ २९६२ ॥

(भा) 'उदायुषा स्वायुषा' इति लिङ्गात् ॥

(वृ) तूष्णीं राजानमादाय 'उदायुषा स्वायुषा' इत्युत्तिष्ठति । लिङ्गात्—सामर्थ्यात् ॥

(रु) यदि नैनं दास्यामीति प्रतिविवदेत तदा बिन्दुमता चर्मरज्जुकाण्डेन ताडयित्वा परोक्षं गमयेयुः । ये लकुटैः काष्ठदण्डैः घ्नन्ति प्रहरन्ति । वधः प्रहारः । उदायुषेत्युत्थानमन्त्रः तल्लिङ्गात् ॥

(सू) 'अदित्यास्सदोऽसि' इत्यध्वर्युश्शकटनीडे कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य 'अदित्यास्सद आसीद' इति तस्मिन् राजानमासाद्य

---

[1] लगुटै—च. [2] अविवद—च.

**'वनेषु व्यन्तरिक्षं ततान' इति वाससा पर्यानह्य 'उदु त्यं जातवेदसं' इति सौर्यर्चा कृष्णाजिनं पुरस्तात्प्रत्यानह्यत्यूर्ध्वग्रीवं बहिष्टाद्विशसनम् ॥ १० ॥ ९। ३१ ॥ २९६३ ॥**

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने सप्तविंशी खण्डिका

---

(भा) नीडं यावत्परिगृहीतं तत्र सादयति । 'अदित्यास्सद आसीद' इति वारुण्यर्चा । वाससा सर्वतः परिश्रयणम् द्वारस्था[1]नं । सौर्यर्चाऽन्येन कृष्णाजिनेन ॥

इति धूर्तस्वामिभाष्ये दशमे नवमः पटल.

---

(वृ) **नीडं–दयति**— अत्राध्वर्युग्रहणं यजमानहस्तस्थत्वाद्राज्ञ आसादनमपि तत्कर्तृकं मा भूदिति ॥

**अदि–ण्यर्चा**—सादनम् । 'वरुणस्य व्रतानि' इत्यन्तया । 'वारुण्यर्चाऽऽसादयति' इति दर्शनाद्वारुणीति ज्ञातव्या ॥

**वास–नम्**—वाससा सर्वतः परिश्रयणम्, पर्यूहनं द्वारस्थानम् ॥

**सौर्य–जिनेन**—परिश्रयति द्वारस्थानमिति पुरस्तादित्यस्यार्थः । सौर्यर्चेति ज्ञानार्थम् ॥

इति रामाग्निचित्कृतायां धूर्तस्वामिभाष्यवृत्तौ
दशमे नवमः पटलः

---

[1] नं कृष्णाजिनं कृष्णाजिनेन- **ङ. च.**

(रु) नीडं उपरिदेशः । अदित्यास्सद आसीदेति यजुषा अस्तभ्नाद्द्यामृषभो अन्तरिक्षमित्यृचा चासादयति, द्वयोरप्यासादनलिङ्गत्वात् उत्तरस्यादिनेति च न्यायाद्वारुण्यर्चासादयनीति श्रुतेश्च । वनेषु व्यन्तरिक्षं ततानेति वाससाऽन्येन परितो नह्यति राजानं, कृष्णाजिनं पुरस्ताद्द्वारप्रदेशे बध्नाति, शकटद्वारं पिदधातीत्येव सत्याषाढः ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
दशमे प्रश्ने सप्तदशी खण्डिका
इति नवमः पटलः

---

[आखेदनादिपदवाच्यार्थविवरणम्]

(सू.) अत्र दर्शपूर्णमासवद्धुरावभिमृश्य 'वारुणमसि' इति शकटमाखिद्य 'वरुणस्त्वोत्तभ्नातु' इत्युपस्तभ्य 'वरुणस्य स्कम्भनमसि' इति शम्यां प्रतिमुच्य 'उस्रावेतं धूर्षाहौ' इत्यनड्वाहावुपाज्य 'वारुणमसि' इति योक्त्रपाशं परिहृत्य 'प्रत्यस्तो वरुणस्य पाशः' इत्यभिधानीं प्रत्यस्यति ॥ १० ॥ १० ॥ १ ॥ २९६४ ॥

एवमुत्तरमनड्वाहं युनक्ति ॥ १० ॥ १० ॥ २ ॥ ॥ २९६५ ॥

(भा) यथा दर्शपूर्णमासयोर्धूरभिमृश्यते ; एवमिह द्वे धुरौ । केचित्तु न तत्रापि द्वे धुरावभिमृशति । आखेदनं—ऊर्ध्वनयनम् । उपस्तम्भनम्—काष्ठेन यथा पतति । शम्यां लङ्घयित्वा दक्षिणामुत्तरां

चानडुाहौ युगं[1] प्रति [2]नयतीत्येकेन मन्त्रेण। द्विवचनाभिधायित्वा-द्दक्षिणस्य योक्त्रपाशं [3]शम्यायां लङ्घयित्वा 'प्रत्यस्य' इति [4]प्रग्रहं बध्नाति। एवमुत्तरस्य [5]पुनर्द्वे कर्मणी ॥

(वृ) केचित्तु-शन्ति—धुरोरभिमर्शनस्यातिदेशात ॥

आभेदन-नम्—शकटमुखस्य ॥

उपस्तम्भनं-ति—तथाकरणम् ॥

शम्यां-रां च—[6]अनन्तरां शम्यां दक्षिणयुगाच्छिद्रे लङ्घयित्वा, [7]उत्तरां चान्तरा लङ्घयित्वा ॥

लङ्घयित्वा—परिहृत्य ॥

एवमुत्तरस्य—अनडुहः पाशपरिहरणबन्धने ॥

(रु) दर्शपूर्णमासवदिति मन्त्रातिदेशः। द्वयोर्धुरोरावृत्तिर्मन्त्रस्य। आखेदनं उद्यमनं। उपस्तम्भनं काष्ठेऽवस्थापनम्। शम्यायाः प्रमोचनं अभिनिहितयोक्त्रपाशे युगच्छिद्रेऽवधानं, तद्द्वितीयस्यात्यावर्तते। उपाजनं प्रतिनयनं, तद्युगपत्क्रियते, द्विवचनलिङ्गत्वान्मन्त्रस्य। परिहरणं परितःकर्षणम्। अभिधानीप्रत्यसनं योक्त्रस्यैव युगे बन्धनं अभिधान्यन्तराभावात्। शिरोबन्धनमप्यस्तीति केचित् ॥

एवं परिहरणप्रत्यसनाभ्यामित्यर्थः ॥

(सू) **हरिणी शाखे बिभ्रत्सुब्रह्मण्योऽन्तरेषेऽवसर्पति पलाशशाखे शमीशाखे वा ॥ १० ॥ १० ॥ ३ ॥ ॥ २९६६ ॥**

---

[1] युगपद्युगं-ग. [2] न इत्येकेन ?-क. [3] शम्यया सङ्घयित्वा-च. [4] प्रग्रहमूण-क. ग. [5] पूर्वे कर्मणी-ख. [6] अन्तरां शम्यां ?-क. शम्यांयुग-ङ. च. [7] दक्षिणोत्तरां चा-क.

(भा) हरिणी—आर्द्रे सपलाशशाखे शमीशाखे वा बिभ्रत्—धारयन् सुब्रह्मण्योऽन्तरेषे प्रविशति। शकटस्य नीयमानं प्राग्वंशम्॥

(रु) हरिणी—हरिते॥

(सू) अथाध्वर्युश्शकटमन्वारभ्य सम्प्रेष्यति सोमाय राज्ञे क्रीताय प्रोह्यमाणायानुब्रूहि सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति॥ १०॥ १०॥ ४॥ २९६७॥

(वृ) शकटमन्वारभ्य प्रैषः प्रोह्यमाणायेति लिङ्गात् अथशब्दात्॥

(रु) गतः॥

(सू) सर्वासु सुब्रह्मण्यासु सुब्रह्मण्यामन्वारभ्य यजमानो जपति 'साऽसि सुब्रह्मण्ये तस्यास्ते पृथिवी पादः। साऽसि सुब्रह्मण्ये तस्यास्तेऽन्तरिक्षं पादः। साऽसि सुब्रह्मण्ये तस्यास्ते द्यौः पादः। साऽसि सुब्रह्मण्ये तस्यास्ते दिशः पादः। परोरजास्ते पञ्चमः पादः। सा न इषमूर्जं धुक्ष्व। तेज इन्द्रियम्। ब्रह्मवर्चसमन्नाद्यम्।' इति॥ १०॥ ॥ १०॥ ५॥ २९६८॥

एवं त्रिराहूतामाहूताम्॥ १०॥ १०॥ ६॥ ॥ २९६९॥

प्रथमायां त्रिरनूक्तायाम्॥ १०॥ १०॥ ७॥ ॥ २९७०॥

इत्यापस्तम्बश्रौतसूत्रे दशमे अष्टाविंशी खण्डिका

(भा) आहूतामभिमन्त्रयते सुब्रह्मण्यो[1]पसर्पणानन्तरमेव, कर्तृभेदात्। न समकालम्। सर्वासु सुब्रह्मण्यासूपसदादि[2]कालेष्वपि यजमानः सुब्रह्मण्यामन्वारभ्य सुब्रह्मण्या[3]माह ॥

इति धूर्तस्वामिभाष्ये दशमे प्रश्ने अष्टाविंशी खण्डिका

---

(वृ) आहूता-न्त्रयते—शकटमन्वारभ्य सुब्रह्मण्या[4]माहूतामभिमन्त्रयते 'साऽसि सुब्रह्मण्ये' इति लिङ्गात्। अभिमन्त्रयते इत्यध्याहारः द्वितीयायोगाच्च। 'जपति' इति वचनं चातुस्स्वर्यार्थम्। 'सुब्रह्मण्ये' इति देवता हूयते ॥

इति रामाग्निचित्कृतायां धूर्तस्वामिभाष्यवृत्तौ दशमे प्रश्ने अष्टाविंशी खण्डिका

---

(रु) सर्वासु कालभेदभिन्नासु। एकैकस्यां सुब्रह्मण्यायां त्रिराहूयमानायामाहूतामाहूतां प्रति सकृत्सकृज्जपन्नेव त्रिर्जपतीत्यर्थः ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां दशमे प्रश्ने अष्टाविंशी खण्डिका

---

[प्रादक्षिण्येनाऽवर्तनकर्तृविवरणम्]

(सू) 'प्रच्यवस्व भुवस्पते' इति प्राञ्चोऽभिप्रयाय प्रदाक्षिणमावर्तन्ते ॥ १० ॥ १० ॥ ८ ॥ ॥ २९७१ ॥

---

[1] णावसर्पण—ग. [2] कालासु—ग. च. [3] माहूता माहूतामभि—ग. च.
[4] कुण्डलितः पाठः च. पुस्तके नास्ति.

(भा) अध्वर्युब्रह्मयजमानाः प्राञ्चो गत्वाऽऽवर्तन्ते ॥

(वृ) अध्वर्यु-र्तन्ते — [1] 'प्रच्यवस्व' इति त्रयाणाम् ॥

[आवर्तनोत्तरमभिमन्त्रणातिक्रमणादीनां विशदीकरणम्]

(सू) **'श्येनो भूत्वा परापत' इत्यध्वर्यू राजानमभिमन्त्रयते ॥ १० ॥ १० ॥ ९ ॥ २९७२ ॥**

(भा) 'श्येनो भूत्वा परा पत' इत्यध्वर्युः ॥

(वृ) श्येनो-र्युः— 'नो[2] गृहे' इति बहु[3]वचनाच्च सर्वे ॥

(सू) **'अपि पन्थामगस्महि' इत्यध्वर्युर्यजमानश्च दक्षिणेनोत्तरेण वा राजानमतिक्रामतः ॥ १० ॥ ॥ १० ॥ १० ॥ २९७३ ॥**

(भा) उभावतिक्रामतः 'अपि पन्थामगस्महि' इति ॥

(वृ) उभा-स्महीति—अध्वर्युर्यजमानश्च । 'अस्मदो द्वयोश्च' इति बहुवचनम् । अतो न त्रयोऽपि । उभयत्र सूत्रे[4] मन्त्रयोर्विरोधपरिहारार्थं भाष्यम् ॥

(रु) अध्वर्युब्रह्मयजमाना इति शेषः । आवृत्त शकटे राजानमतीत्य गच्छतः । अजेन सह प्रतीक्षते । अजेन इत्थंभूतेन वा ॥

(सू) **अजेनाग्नीषोमीयेण कर्णगृहीतेन यजमानो राजानमोह्यमानं प्रतीक्षते 'नमो मित्रस्य' इति ॥ १० ॥ १० ॥ ११ ॥ २९७४ ॥**

---

[1] क्रयणादेशात्—**च.** [2] नो गृहीत इति वचनान्नेति सर्वे—**ग.** [3] वचनाच्च सर्वे—**च.** [4] सूत्रमन्त्रयोः—**क. ग. च.**

(भा) कर्णे गृहीत्वाऽग्नीषो[1]मीयमानीयमानं प्रतीक्षते सोमं 'नमो मित्रस्य' इति ॥

(वृ) कर्णे--त्रस्येति— अभिमुखं स्थित्वा प्रत्यानहनं कृष्णाजिनमा[2]वृत्य। 'नमो मित्रस्य' इति प्रतीक्षणमन्त्रः, श्रुत्या विनियोगात् ॥

[सौत्रपदाभिधेयविवेचनम्]

(सू) **लोहस्तूपरो भवति। अप्यतूपरः। कृष्णसारङ्गो लोहितसारङ्गो वा स्थूलः पीवा श्मश्रुणः ॥ ॥ १० ॥ १० ॥ १२ ॥ २९७५ ॥**

(भा) लोहः—लोहितः। अतूपरः—अशृङ्गः। कृष्णसारङ्गः—कृष्णश्वेतः। लोहितसारङ्गः लोहितश्वेतो वा। स्थूलः—स्थविष्ठः। पीवा—प्राणी। श्मश्रुणः—पादास्यरोमवान् ॥

(वृ) **अग्नीषोमीयस्य गुणान्धत्ते**—लोहः—पादास्यरोमवान् ॥ अयमर्थः—सर्वलोहि[3]तः कृष्णश्श्वेतो वा लोहितश्वेतो वा भवति न कृष्ण[4]लोहितः। स्थूलः—स्थविष्ठः। पीवा—पुष्टः। श्मश्रुणः—आस्यरोमवान् ॥

(सू) **औदुम्बर्यासन्द्यरत्निमात्रशीर्षण्यानूच्या नाभिदघ्नपादा मौञ्जविवाना; तां सर्वेऽध्वर्यवोऽग्रेण प्राग्वंशं राजन्योहमान उद्गृह्णन्ति ॥ १० ॥ १० ॥ ॥ १३ ॥ २९७६ ॥**

---

[1] अग्नीषोमीयमजं यजमानो नीयमानं राजानं प्रतीक्षते—**च.** [2] कृष्णाजिनं वाऽऽवृत्य—**च.** [3] तो वा लोहितश्वेतो वा भवेन्न कृष्ण—**च.** सर्वलोहितः—**ग.**

(भा) शीर्षण्ये—अनूच्ये यस्याः सेयं शीर्षण्यानूच्या ॥

(वृ) शीर्षण्ये—च्या—अस्यार्थः—अरत्निमात्रशीर्षण्यानूच्येत्येकं पदम् । शिरसि—भवं शीर्षण्यम्, तस्मिन्नंशेऽनूच्ये वक्तव्ये अरत्निः प्रमाणं यस्या आसन्द्यास्सा तथोक्तेति । यजमानस्याध्वर्योर्वा [1]अरत्न्यादिग्राह्यम्, प्रक्रमप्रमाणे तथा दर्शनात् ॥

[प्रज्वलने सङ्ख्यया त्रैविध्यं विधायाऽऽखेदनोपस्तरणोद्धरणयोक्त्र-पाशविमोचनादि विधानम्]

(सू) अग्नीन् प्रज्वलयन्त्यग्निमग्नी वा ॥१०॥१०॥ ॥१४॥२९७७॥

अग्रेण प्राग्वंशं प्राग्गीषमुदग्गीषं वा शकटमवस्थाप्य पूर्ववदाखिद्योपस्तभ्य 'वरुणस्य स्कम्भनमसि' इति शम्यामुद्वृह्य 'विचृत्तो वरुणस्य पाशः' इति योक्त्रपाशं विचृत्य 'उन्मुक्तो वरुणस्य पाशः' इत्यभिधानीमुन्मुञ्चति ॥१०॥१०॥ ॥१५॥२९७८॥

एवमुत्तरमनड्वाहं विमुञ्चति ॥१०॥१०॥ ॥१६॥२९७९॥

विमुक्तस्सव्योऽविमुक्तो वा ॥१०॥१०॥ ॥१७॥२९८०॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने एकोनत्रिंशी खण्डिका

---

[1] अरत्निर्ग्राह्यः-ग.

(भा) 'वारुणमसि' 'वरुणस्त्वोत्तभ्नातु' इति पूर्ववदाखेदनोपस्तम्भने। उद्वर्हणम्—ऊर्ध्वमपनयनम्। विचृत्य विमुच्य—योक्त्रपाशम्। 'उन्मुक्तः' इति प्रग्रहं विमुञ्चति। तथोत्तरस्य विमुच्यावि[1]मुच्य वा हविष्कृदन्तं करोति॥

इति धूर्तस्वामिभाष्ये दशमप्रश्ने एकोनत्रिंशी खण्डिका

---

(वृ) पूर्व-स्तम्भने—शकटस्य॥

उद्वर्हणम्—शम्यायाः॥

विचृ-शम्—दक्षिणस्यानडुहः॥

उन्मु-ञ्चति—योक्त्रमेव [2] प्रगृहीतमभिधानी इत्युच्यते नान्या। एवमुत्त[3]रस्यापि विचर्तनमुन्मोचनं चोपरिष्टा[4]दपि। इदानीं विमुच्याविमुच्य वा हविष्कृदन्तं करोतीति॥

इति श्रीरामाग्निचिद्वृत्तौ दशमप्रश्ने एकोनत्रिंशी खण्डिका

---

(रु) लोहः लोहितः। तूपरः अशृङ्गः। कृष्णसारङ्गः कृष्णश्वेतः। पीवा—पीनाङ्गः, श्मश्रुणः श्मश्रुणा युक्तः। शीर्षण्ये तिरश्चे फलके, अनूच्ये प्राच्यौ। तावरत्निमात्रे यस्यास्या अरत्निमात्रशीर्षण्यानूच्या। मौञ्जैस्तृणैर्विवानं यस्यास्सा मौञ्जविवाना, मौञ्जीभी रज्जुभिस्स्यूतेत्यर्थः। परिकर्म्यृत्विजामन्यतमप्राप्त्यर्थं बहुवचनम्। उद्वर्हणं उत्पाटनम्। विचर्तनं शिथिलीकरणम्॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
दशमे प्रश्ने एकोनत्रिंशी खण्डिका

---

[1] अविमुच्य वा—ङ. च. [2] परिहृत—क. परिगृहीत—ग. [3] रस्य विचृन्तन—च. [4] दभिधानीमविमुच्य—च.

[आतिथ्याप्रवृत्तिनिमित्तविवेचनम्]

(सू) आतिथ्यायास्तन्त्रं प्रक्रमयति ॥ १० ॥ १० ॥ १८ ॥ २९८१ ॥

(भा) आतिथ्येति कर्मनाम, अग्नयादिभ्यो देवेभ्यो निरुप्यत इति ॥

(वृ) आतिथ्येति—नाम —किमत्र प्रवृत्तिनिमित्तम् ॥

अग्न्या—प्यत इति—अस्यार्थः ; 'अग्नेरातिथ्यमसि' 'सोमस्याऽऽतिथ्यमसि' इत्येवं निर्वापमन्त्रेष्वग्नयादिभ्यो देवताभ्य आतिथ्यत्वेन[1] कीर्तनं प्रवृत्तिनिमित्तम इति । तस्यास्तन्त्रं—[2] अङ्गसमुदायः । तमध्वर्य्वादिभिः प्रक्रमयति यजमानः ॥

[पश्चाद्भावीध्मस्याऽऽदावुपादाने निदानम्]

(सू) द्वाविंशतिदारुरिध्मः ॥ १० ॥ १० ॥ १९ ॥ ॥ २९८२ ॥

(वृ) बर्हिराहरणादिपश्चाद्भाविनोऽपीध्मस्य प्रथमोपादानं 'पूर्वेद्युरिध्माबर्हिः करोति' इति वाक्यक्रमानुरोधात् । द्वाविंशतिदारुः—अनूयाजसमिदभावात् । क्रमस्तु बर्हिरनन्तरमिध्मः । चोदकप्राप्त[3]क्रमस्य बाधात् । अत्र गुणमात्रस्य प्रत्याम्नानात् ॥

[शुल्बकरणकसामग्रीकथनम्, शुल्बात्पूर्वमुत्तरं चानुष्ठयांशाश्च]

(सू) आश्ववालः प्रस्तर ऐक्षवी विधृती कार्ष्मर्यमयाः परिधयः । वेदं कृत्वाऽग्नीन् परिस्तीर्य पाणिप्रक्षालनादिकर्म प्रतिपद्यते ॥१०॥१०॥२०॥२९८३॥

---

[1] नानुकीर्तनं—ग. [2] समवायः. [3] चोदकप्राप्तस्य क्रमस्य बाधात्—ग.

(भा) आश्ववालः–काशमयः ॥

(वृ) आश्व–मयः—दर्भमयमेव बर्हिः यदि समानप्रदेशे दर्भाः काशाश्च सन्ति। तदेकमेवाभिमर्शनान्तं कर्म। यदि नानादेश आवर्तते। 'प्रेयमगात्' इत्यादीदं देवानामित्यन्तं आत्माभि[1]मर्शनान्तस्याऽऽवृत्तिर्देशभेदात्। प्रस्तरस्यापि बर्हिश्शब्दाभिधेयत्वात्। काशेष्वपि[2] निवृत्तिः। आत्माभिमर्शनं तु सकृदेवान्ते। शुल्बं तु दर्भाणामेव क्रियते। तस्मि[3]न्निधनानि सम्भृत्य प्रस्तरसमीपं नीत्वा तदत्याधानान्ते ग्रन्थिकरणम्। दर्भाणां शुल्बं कृत्वोदगग्रं वितत्य कार्ष्मर्यमयैः परिधिभिस्सह खादिराणि पालाशानि वैकविंशतिदारूण्याहृत्य युगपत्संभरति। ऊहपक्षे द्वाविंशतिधा द्व समिधाविति च कुर्यात्। नेध्मप्रव्रश्चनम्, वेदं कृत्वाऽग्नीन्परिस्तीर्येति दर्शपूर्णमासतन्त्रप्रदर्शनार्थम्। उपवेषः क्रियत एव ॥

[पाक्षिकक्रमनिषेधपक्षः]

अथ वा वैष्णवपुरोडाशस्याऽऽग्नेयविकारत्वेन पौर्णमासतन्त्रत्वात् तत्रान्वाधानपरिस्तरणोपवासा इति प्राप्तः पाक्षिकक्रमो निषिध्यते। अग्नीन् परिस्तीर्य पाणिप्रक्षालनादि कुर्यादध्वर्युः। [4]आग्नीध्रः परिस्तृणाति, परिस्तृणीतेति परिस्तरण्येव न सम्प्रैषः, समानकर्तृकत्वविधानात्। 'देवा देवेषु' इति भवत्येव ॥

[पात्रीधर्माणां पाणिसम्बद्धत्वादिविवेचनम्]

(सू) **यथार्थं पात्रप्रयोगः** ॥ १० ॥ १० ॥ २१ ॥ २९८४ ॥

---

[1] नान्तस्य–**ग.** [2] अनुवृत्तिः–**ग.** [3] त्रिन्धनानि–**ग.** [4] नाग्नीध्रः परिस्तृणाति परिस्तरणे न संप्रैषः–**क.**

(सू) निर्वपणकाले पत्नीं शकटमन्वारम्भयित्वाऽऽतिथ्यं निर्वपति ॥ १० ॥ १० ॥ २२ ॥ २९८५ ॥

पत्न्या हस्तेन ॥ १० ॥ १० ॥ २३ ॥ २९८६ ॥

हस्ताद्वा । हस्तान्निर्वहन् हस्ते सर्वान् शकटमन्त्रान् जपेत् ॥ १० ॥ १० ॥ २४ ॥ २९८७ ॥

(भा). पत्न्या वा हस्तेन निर्वापः । अग्निहोत्रहवणी तु प्रोक्षण्यार्था । मानुषोऽसि दक्षाय त्वेति हस्तो गृह्यते । हस्ताद्वा पात्रीप्रत्याम्नायः ॥

(वृ) यथार्थ–योगः—इति नव कपालानि न [1]प्रणीतापात्रम् । तत्स्थाने यजुरुत्पूतार्थमन्यत् ॥

पत्न्या वा–वापः—तथा तस्या दक्षिणं हस्तमग्निहोत्रहवण्या सह प्रयुनक्ति ॥

अग्नि–र्थ्येन—यदा पत्न्या हस्तान्निर्वापः । तदा पात्रीप्रत्याम्नायः पात्रीधर्मा हस्ते भवन्ति । पात्री च पुरस्तात्तण्डुलप्रस्कन्दनार्थे[2] भवत्येव । हस्ते संवपनादेरशक्यत्वात् , पात्री निवर्तेत[3] इति केचित् । तत्र[4] न हि निर्वपणार्था पात्री प्रकृतौ, यतस्तदर्थे हस्तविधानान्निवर्तेत, किन्तु संवपनादिप्रयुक्तैव हस्तेन निर्वापपक्षे ॥

मानु–ह्यते— हस्तान्निर्वापपक्षे ॥

हस्ता–म्नायः—दक्षिणतः स्फ्यमुपधाय हस्ते सर्वान् शकटमन्त्रान् धूरसीत्येवमादीन् अर्धलुप्तानपि जपेत्[5] । दक्षिणतः स्फ्योप-

---

[1] नवप्रणीता–ग. [2] र्थार्था–ग. [3] त एवेति केचित्–ग. [4] तच्च—न हि निर्वापार्था–ग. [5] जपेद्वचनात्–ग.

धानं [1](पात्रीप्रत्याम्नाय इति भाष्यकारवचनादिति केचित् । अस्माकं तु शकटप्रत्याम्नायः, शकटस्यैव चोदकप्राप्तत्वात्। अतस्तस्मिन् पक्षे हस्तस्य नासादनम् । नाभिमर्शनम् । न स्फ्योपधानम्) हस्ते शकटमन्त्रान् जपेदित्येतदेव हस्तस्य पात्री ॥

(रु) आतिथ्येति कर्मनाम, अग्नेरातिथ्यमसीत्यादिनिर्वापमन्त्रेषु अग्न्या-दिभ्यो देवताभ्य आतिथ्यत्वेनानुकीर्तनात् । तन्त्रं अङ्गसमुदायः । अनूयाजसमिदभावात् स्फ्येन सह नव कपालानि प्रयुनक्ति । पात्र्या निर्वापे तस्या अन्वारम्भः । यदि पत्न्या हस्तेन निर्वापस्तदा हस्तोऽ-ग्निहोत्रहवणीधर्मान् लभते अतोऽग्निहोत्रहवणीशूर्पाभ्यां सह दक्षिणतः । शूर्पेण सह दक्षिणं हस्तं प्रयुनक्ति अग्निहोत्रहवणीं प्रोक्षणार्थत्वेन मानुषोऽपि दक्षायत्वेति हस्ताऽऽदानम् । अत्र पात्रीधर्मा हस्ते भवन्ति । पुरतः पात्रीं च सादयति संवादार्थम् ॥

**[विकार्यमन्त्रान् परिगणय्य देवताऽऽदेशनस्य मन्त्रत्रयमात्रविषयकत्वादिविषय-व्यवस्थापनम्]**

(सू) **'अग्नेरातिथ्यमसि' इत्येतैः प्रतिमन्त्रम् ॥१०॥**
॥ १० ॥ २५ ॥ २९८८ ॥

(रु) निर्वपति ॥

(सू) **देवतादेशनस्य प्रत्याम्नायो भवति ॥ १० ॥**
॥ १० ॥ २६ ॥ २९८९ ॥

**पञ्चसु सावित्रं जुष्टं चाऽनुषजति ॥ १० ॥ १० ॥**
॥ २७ ॥ २९९० ॥

---

[1] कुण्डलितः पाठः ग. कोशे न दृश्यते.

(सू) नोत्तरयोरित्येके ॥१०॥१०॥२८॥२९९१॥

वैष्णवो नवकपालः पुरोडाशो भवति ॥ १० ॥

॥ १० ॥ २९ ॥ २९९२ ॥

(भा) 'विष्णवे' इत्येतस्य स्थाने 'अग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामि' इति त्रयाणां [1]मन्त्राणां विकाराः, षष्ठस्तूष्णीम्, सप्तमोऽन्वावापः चतुर्थविकारत्वात् । न[2] चतुर्थपञ्चमयोस्सावित्रं जुष्टं च ॥

(वृ) पूष्णो हस्ताभ्यामित्यन्ते—

**विष्णवे-निर्वपामीति**— देवतादेशनस्य प्रत्याम्नायो भवतीति ॥

**त्रयाणां-राः**—पञ्च पर्यायाः । पञ्चसु पर्यायेषु सावित्रं जुष्टं चानुषजतीति । अतो देवतादेशनं चतुर्थपञ्चमयोरपि भवतीति तत्प्रत्याम्ना[3]योपपत्तिः ॥

**षष्ठ-ष्णीम्**—षष्ठ[4]स्तूष्णीं कर्तव्यः, त्रयाणामेव विवृद्धेः ॥

**सप्त-रत्वात्**—सप्तमोऽन्वावापश्च कर्तव्यः । अस्मादेव हेतोः । चतुर्थविकारत्वान्न चतुर्थपञ्चमयोस्सावित्रं जुष्टं चानुवर्तयतीत्येकेषां[5] मतम् । उभयोश्चतुर्थविकारत्वान्निर्वाहान्तर्गतत्वात् निरुप्तष्ट्यन्वावापः । अस्मिन्पक्षे षष्ठोऽन्वावापः । देवतादेशनस्य प्रत्याम्नायो भवतीत्येतदप्यादितो मन्त्रत्रयविषयं स्यात् । चतुर्थविकारयोरुत्तरयो[6]र्देवतादेशनाभावात् । पूर्वस्मिन् पक्षे पञ्चानां मन्त्राणां देवतादेशनानुवादा[7]देव त्रयाणां [8]वृद्धिविकल्पना । एतद्दोषपरिहाराय देवतादेशनस्य प्रत्या-

---

[1] मन्त्रवताम्—ग. [2] न तु चतु—च. [3] म्नायतोपपन्ना—ग. [4] तूष्णीकविकारः षष्ठः—ग. [5] त्येकीयं मतम्—ग. [6] रुक्तत्वाद्देवानां—ग. [7] वादे—ग. [8] विवृद्धि—क. ग.

म्नायो भवतीत्यनेनस्मादेव लिङ्गात् 'अग्नये त्वाऽग्नीषोमाभ्यां त्वा' इत्येतावन्मात्रं चतुर्थेऽप्युच्चारयन्ति प्रकृतौ याज्ञिकाः। हस्तेन निर्वापपक्षे 'अग्निꣳ होतारम्' इति पाक्षिकं हस्तानुमन्त्रणम्। यजमानस्य हस्तान्निर्वापपक्षे 'इदमु नस्सह' इति हस्तस्थान्॥

[राजाऽऽसन्द्यानयनप्रतिष्ठापनयोः कृष्णाजिनस्तरणस्य च समानकर्तृकत्वम्, सोमराज्ञ आसादनस्याध्वर्युकर्तृकत्वं च]

(सू) विष्णुर्वदेवात ऊर्ध्वं संस्काराः॥ १०॥ १०॥ ॥ ३०॥ २९९३॥

(भा) अत ऊर्ध्वं प्रोक्षणादयस्संस्काराः 'विष्णवे वो जुष्टं प्रोक्षामि' इति।

इति धूर्तस्वामिभाष्ये दशमे प्रश्ने त्रिंशी खण्डिका

---

(वृ) एवमधिवापादीनपि अत ऊर्ध्वमिति निर्वापादूर्ध्वमभिधीयते। [1]तत्र प्रोक्षणादयस्संस्कारा इति ब्रुवन् भाष्यकारो निर्वापमुपसादनान्तं मन्यते। अत उपसादनं 'अग्नाविष्णू[2] हव्यꣳ रक्षेथाम्, इत्यासादनमिति। तथा चाग्न्यादिभ्यो निरुप्यत इत्युक्तवान्॥

अथवा 'अग्ने हव्यꣳ रक्षस्व' इत्येवोपसादनम्, सर्वसाधारणत्वात् बोधायनमताच्च। तथा च सूत्रकारः वैष्णवो नवकपालः पुरोडाशो भवतीत्यनेनैव वैष्णव[3]वत्संस्कारे प्रसिद्धे सर्वत्र 'अग्नेरातिथ्यमसि' इत्येतैः प्रतिमन्त्रं देवतादेशनस्य प्रत्याम्नायो भवतीति वचनात्॥

[1] अतोऽत्र—क. [2] रक्षेथां सोमविष्णू हव्यꣳ रक्षेथ—ग. [3] विष्णुवत्सं-ग.

सर्वत्राग्नेरातिथ्यमसि विष्णवे त्वा इति वक्तव्ये प्रोक्षणादिषु विष्णु[1]दैवतस्य विधानात् उपसादनेऽपि 'अग्नेरातिथ्यमसि विष्णवे त्वा हव्यँ रक्षस्व' इत्येवमुपसादनं विदधातीति गम्यते। यदि पूर्वं निमित्तः।

इति रामाग्निचित्कृतायां धूर्तस्वामिभाष्यवृत्तौ दशमे प्रश्ने त्रिंशी खण्डिका

---

(रु) वैष्णवो नवकपाल इति वचनाद्विष्णव इत्येतस्य स्थाने अग्नेरातिथ्यमसीत्यादिभिः पञ्चभिर्निर्वापः। त्रयाणां मन्त्रवतां पर्यायाणां विकाराः पञ्च। तूष्णीकविकारष्षष्ठः। सप्तमोऽन्वावापः। प्रकृतौ त्रयाणां निर्वापाणां मन्त्रवत्त्वादुत्तरयोश्चतुर्थपञ्चमयोः सावित्रजुष्टयोरभावः। अत ऊर्ध्वं प्रोक्षणादयो विष्णवे वो जुष्टमिति निर्वापादूर्ध्वमित्येके। यदि पूर्वं न विमुक्तः। वासोऽपादायेति पर्याणहरणीयमिति शेषः।

इति श्रीभट्टरुद्रदत्तप्रणीतायां आपस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
दशमे प्रश्ने त्रिंशी खण्डिका

---

(सू) हविष्कृता वाचं विसृज्योत्तरमनड्वाहं विमुच्य॥
॥ १० ॥ १० ॥ ३१ ॥ २९९४ ॥

'वारुणमसि' इति वासोऽपादाय 'वरुणोऽसि धृतव्रत' इति राजानमादाय 'अच्छिद्रपत्रः प्रजा उपावरोहन्नुशतीः स्योनस्स्योनाः सोम राजन्

---

[1] विष्णुवदेवेत्यस्य मन्त्रस्य निषेध; उपसा—ग.

विश्वस्त्वं प्रजा उपावरोह विश्वास्त्वां प्रजा उपावरोहन्तु' इत्युपावहृत्य 'उर्वन्तरिक्षमन्विहि' इत्यभि प्रव्रजति ॥ १० ॥ १० ॥ ३२ ॥ २९९५ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमे प्रश्ने त्रिंशी खण्डिका

———

(सू.) आसन्दीमादाय प्रतिप्रस्थाता पूर्वः प्रतिपद्यते । ॥ १० ॥ १० ॥ ३३ ॥ २९९६ ॥

'या ते धामानि' इति पूर्वया द्वारा प्राग्वंशं प्रविश्य अपरेणाऽऽहवनीयं दक्षिणाऽतिहृत्य 'वरुणस्यर्तसदसि' इति दक्षिणेनाऽऽहवनीयं राजाऽऽसन्दीं प्रतिष्ठापयति ॥१०॥१०॥३४॥२९९७॥

तस्यां शकटवत्कृष्णाजिनं राज्ञश्चासादनम् ॥ ॥ १० ॥ १० ॥ ३५ ॥ २९९८ ॥

(भा) अपरेणाऽऽहवनीयं दक्षिणाऽतिहृत्य सोमम् । 'आदित्यास्सद आसीद' इत्येतावान् मन्त्रः ॥

(वृ) प्राग्वंशमभिप्रव्रजति यदि प्राग्द्वारं[1] विद्यते तदा तेन, नोचेद्विद्यमानेनैव ॥

अपरे–सोमम्—स्वयमाहवनीयं पूर्वेण गच्छत्यध्वर्युः । पूर्वेण[2] नीत्वाऽऽस[3]न्दीमानयति प्रतिप्रस्थाता । प्रतिष्ठापनं कृष्णाजिन[4]-स्तरणं च प्रतिप्रस्थातैव ; राज्ञ आसादनं त्वध्वर्युः करोति ॥

'अदित्यास्सद आसीद' इति मन्त्रः—नास्तभ्नादिति ॥

---

[1] प्राग्वंश न विद्यते–ङ. [2] पूर्वेण त्वासन्दीं नयति–ग. [3] न्दीं प्रतिप्रस्थाता प्रतिष्ठापनं करोति। कृष्णाजिनास्तरणे च प्रतिप्रस्थातैव–क. [4] कृष्णाजिनास्तरणं–च.ग.

[आसादितसोमराज्ञोऽभिमन्त्रणादिविधिः]

(सू) 'वरुणोऽसि धृतव्रत इति' राजानमभिमन्त्रयते ॥ १० ॥ १० ॥ ३६ ॥ २९९९ ॥

'वारुणमसि' इति वाससा पर्यानह्यति ॥१०॥ ॥ १० ॥ ३७ ॥ ३००० ॥

(भा) 'वारुणमसि' इति पर्यानह्यति 'अपसश्छिथ्स्सहि' इत्येवमन्तेन ॥

(वृ) वारुण्यर्चेति पूर्वत्रैव श्रवणात्, 'शंयोर्देवानाम्' इत्यादेरन्यत्र विनियोगाभावात्, प्रकरण[1]पाठात्, स्थानाच्च ॥

(रु) प्रतिपद्यते-गच्छति—अतिहरणं व्रतप्रदाने व्याख्यातम्। अतिहृत्य राजानमन्यस्मै प्रदायाऽग्रेणाऽऽहवनीयं प्रतिप्रस्थात्राहृतामासन्दीं प्रतिष्ठापयति। शकटवादिति वचनादत्रापि यजुषा ऋचा चासादनम्। केचित्तु यजुषैवाऽऽसादयन्ति। मन्त्रसमाम्नाये त्वर्धर्चोऽभावान्नासौ सूत्रकृतो भावः, शकटवादिति वचनात्, समाम्नायेऽपि यजुषः प्रदर्शनार्थत्वोपपत्तेश्च। सत्याषाढस्त्वपठदेव पृथगुभयत्रोभयमृग्ययुषम्। वारुणमसि शंयोरित्यादिना पुनः पर्यानह्यति ॥

(सू) 'एवा वन्दस्व वरुणं बृहन्तम्। नमस्या धीरममृतस्य गोपाम्। स नश्शर्म त्रिवरूथं वियꣳसत्। पातं मा द्यावापृथिवी उपस्थे'। इत्येतया (ऋचा) राजानमासीदेत् ॥ १० ॥ १० ॥ ॥ ३८ ॥ ३००१ ॥

---

[1] प्रकरणपाठाव्यर्थत्वाय—ग.

[सम्प्रैषः, तदुत्तरमनुष्ठेयांशश्च]

(सू) अग्निँ राजानं चान्तरेण मा सञ्चारिष्टेति सम्प्रेष्यति ॥ १० ॥ १० ॥ ३९ ॥ ३००२ ॥

अवहननादि कर्म प्रतिपद्यते ॥ १० ॥ १० ॥ ॥ ४० ॥ ३००३ ॥

चतुर्गृहीतान्याज्यानि ॥ १० ॥ १० ॥ ४१ ॥ ॥ ३००४ ॥

चतुर्होत्राऽऽतिथ्यमासाद्य सम्भारयजूँषि व्याचष्टे ॥ १० ॥ १० ॥ ४२ ॥ ३००५ ॥

यजमानं वाचयतीत्येके ॥ १० ॥ १० ॥ ४३ ॥ ॥ ३००६ ॥

(भा) इहाऽऽसन्नत्वात् 'एवा वन्दस्व' इति निवर्तते। यथाऽस्माकं श्रुतिः 'वारुण्यर्चा परिचरति' इति। आद्यैरेव मन्त्रैरुपभृतिप्रयाजार्थं[1] सम्भारयजुषामाख्यानं वाक्ये स्थित्वा ॥

(वृ) इहा–र्तते—अन्यत्राप्यायना[2]दध्वर्युर्मन्त्रेणैवाऽऽसीदेत् ॥ यथा–तीति—तस्मात्तद[3]र्थगमने न मन्त्रः। कपालोपधानेऽष्टमस्याऽऽवृत्तिः ॥

[प्रयाजसङ्ख्याविधाने तात्पर्यकथनम्]

(सू) पशुवन्निर्मन्थ्यः सामिधेन्यश्च ॥ १० ॥ १० ॥ ॥ ४४ ॥ ३००७ ॥

---

[1] गृह्णाति चतुर्भिः–ग. [2] नादावध्व–ख. ग. [3] र्थमनेन मन्त्रेण–ग..

(सू) पञ्च प्रयाजाः ॥ १० ॥ १० ॥ ४५ ॥
॥ ३००८ ॥

चतुर्थे सर्वमौपभृतं समानयति ॥ १० ॥ १० ॥
॥ ४६ ॥ ३००९ ॥

(भा) ततो निर्मन्थ्योऽभिहोमान्तः। वेदं निधायेति प्रतिपद्यते पञ्च प्रयाजविधानात्। ध्रुवामभिघार्य पशुवन्नोपभृतमभिघारयति ॥

(वृ) ध्रुवामभि-यति—अस्यार्थः—पौर्णमासप्रकृतित्वादेव पञ्च-प्रयाजत्वे सिद्धे सति पुनः पञ्चप्रयाजविधानं पशुवदित्यतिदेशः प्रयाजेष्टाव[1]पि भवतीत्याभिसन्धाय कृतवान् सूत्रकारः। तस्य चात्र प्राप्ताविदं प्रयोजनं नोपभृत[2]मिति यदभिघारणप्रतिषेध इति। 'विष्णोरहं देवयज्ययाऽन्नादो भूयासम्' इति ॥

[आतिथ्याऽवधिकथनम्]

(सू) इडान्ता सन्तिष्ठते ॥ १० ॥ १० ॥ ४७ ॥
॥ ३०१० ॥

(भा) मार्जनान्ताऽऽतिथ्या ॥

इति धूर्तस्वामिभाष्ये दशमे दशमः पटलः

(वृ) इडायाः पूर्वमेव प्राशित्रमभ्यात्मन्नित्ये[3]वमन्तम् ॥
मार्जनान्ताऽऽतिथ्या—तस्यापीडाशेषत्वात् ॥

---

[1] प्रधानेष्वपि—ग. [2] भृतीति—ग. [3] मध्यात्मवित्यन्तम्—ग.

(सू) धारयति ध्रौवमाज्यमाज्यम् ॥ १० ॥ १० ॥
॥ ४८ ॥ ३०११ ॥

इत्यापस्तम्बश्रौतसूत्रे दशमप्रश्ने एकत्रिंशी खण्डिका
दशमः पटलः

---

(वृ) आवृत्तिः प्रश्नसमाप्त्यर्था ॥

इति श्रीकौशिकरामाग्निचिद्विरचितायां धूर्तस्वामिभाष्यवृत्तौ
दशमः प्रश्नः समाप्तः

---

(रु) वाचनिके राजोपसर्पणे अध्वर्योरयं मन्त्रो न यादृच्छिक इति द्रष्टव्यम् । संप्रैषवत्सर्वे कुर्वन्ति अनूयाजाभावादुपभृत्यनूयाजार्थग्रहनिवृत्त्यर्थं वचनं पञ्चगृहीतनिरासार्थं च । व्याख्यातं प्राक् । निर्मन्थ्यवत्सु पशुचातुर्मास्येषु प्रयाजविवृद्धिदर्शनात् साऽत्रापि मा शङ्कीत्यारम्भः । अथवा यतः पञ्च प्रयाजाः न चानूयाजाः । तस्माच्चतुर्थे सर्वमौपभृतं समानयतीति योज्यम् ॥

इडान्ता मार्जनान्ता ॥

इति श्रीभट्टरुद्रदत्तप्रणीतायामापस्तम्बश्रौतसूत्रवृत्तौ सूत्रदीपिकायां
दशम प्रश्ने एकत्रिंशी खण्डिका
इति दशमः पटलः
इति दशमः प्रश्नः

हरिः ओ (३) म्

---

॥ श्रीः ॥

# आपस्तम्बश्रौतसूत्राणां अकारादिवर्णक्रमसूची

## नवमदशमप्रश्नयोः

---

WD 2980—GBPM—750—17-5-60.